# रामायणम्।

## अयोध्याकाण्डम्।

म ह र्षि वा ल्मी कि प्र णी त म्।

रामानुज-कृत-टीका- समेतम्।

श्रीयुक्त द्वारकानाथभञ्जमहानुभावस्याभ्यनुज्ञया

श्रीहेमचन्द्र भट्टाचार्य्येण

संशोधितं, प्रकाशितञ्च।

कलिकाताराजधान्यां

वाल्मीकियन्त्रे

श्रीकालीकिङ्कर चक्रवर्त्तिना मुद्रितम्।

शकाब्दाः १७९४।

# रामायणम्।

## अयोध्याकाण्डम्।





### प्रथमः सर्गः।

गच्छता मातुलकुलं भरतेन तदानघः।

शत्रुघ्नो नित्यशत्रुघ्नो नीतः प्रीतिपुरस्कृतः ॥ १ ॥

अयोध्याख्ये तु गुर्वर्थे त्यक्त्वा राज्यं गिरौ वसन्।

पादुके भरतायादात् स रामः शरणं मम ॥

अथ रामस्य राज्याभिषेकार्हगुणान् प्रतिपादयितुं राज्याभिषेकादि च प्रतिपादयितुम् एतदारम्भः। मातुलकुलं मातुलगृहं, अनघः सोदरस्य भ्रातुर्भरतस्य रामाश्रयप्रयुक्तेर्ष्यारहितः नित्यशत्रुघ्नः कामादयस्तद्धन्ता। नीतः अनेन विना मातुलगृहभुज्यमानसुखमसत्कल्पमिति धिया नीत इत्यर्थः। प्रीत्या भरतविषयस्नेहेन पुरस्कृतो युक्तः तेन भरतनिर्बन्धेन गमनमस्य न वार्यते। किञ्च भरतेन प्रीत्या पुरस्कृतः अग्रेसरः कृतः तेन भरतस्य रामानुरागसूचनम् ॥ १ ॥

स तत्र न्यवसद् भ्रात्रा सह सत्कारसत्कृतः।
मातुलेनाश्वपतिना पुत्रस्नेहेन लालितः॥ २॥
तत्रापि निवसन्तौ तौ तर्प्यमाणौ च कामतः।
भ्रातरौ स्मरतां वीरौ वृद्धं दशरथं नृपम्॥ ३॥
राजापि तौ महातेजाः सस्मार प्रोषितौ सुतौ।
उभौ भरतशत्रुघ्नौ महेन्द्रवरुणोपमौ॥ ४॥

स भरतस्तत्र मातुलकुले विशिष्टवस्त्राभरणभोजनादिरूपसत्कारेण सत्कृतः पुत्रस्नेहेन पुत्रादप्यधिकस्नेहेनेत्यर्थ इत्येके॥ २॥

तत्रापि तादृशसत्कारवत्यपि मातुलगृहे कामतः कामैरभिमतविषयैः। सार्वविभक्तिकस्तसिः। तर्प्यमाणौ अनेन सार्वत्रिकी विषयसुखानिवृत्तिर्बोधिता, वृद्धम् अनेन शुश्रूषाकालात्ययेन धर्मलोपभयात्पितृस्मरणमिति सूचितम्। अस्मरताम् अस्मरतामडभाव आर्षः *॥ ३॥

प्रोषितौ विदेशगतौ †॥ ४॥

---

* दशरथो वृद्धोऽभूत् न राज्यभरणे सम्यक् क्षमते अयीदानीं रामेण यौवराज्यं कारयेदित्यचिन्तयतामिति भावः।

† महातेजा सत्पुत्रलाभकृत निरवधिकतेजस्को राजा दशरथोऽपि महेन्द्रवरुणोपमौ तद्वन्निरपाय मैत्रीसम्पन्नौ प्रोषितौ देशान्तरगतौ तौ निरवधिकप्रीतिविषयौ उभौ भरतशत्रुघ्नौ सुतौ सस्मार सम्यक्सम्पन्नस्यापि मे पुत्रयोरसन्निधानमेव न्यूनतेत्यस्मरत् इति भावः।

सर्व एव तु तस्येष्टाश्चत्वारः पुरुषर्षभाः ।
स्वशरीराद्विनिर्वृत्ताश्चत्वार इव बाहवः ॥ ५ ॥
तेषामपि महातेजा रामो रतिकरः पितुः ।
स्वयम्भूरिव भूतानां बभूव गुणवत्तरः ॥ ६ ॥
स हि देवैरुदीर्णस्य रावणस्य वधार्थिभिः ।
अर्थितो मानुषे लोके जज्ञे विष्णुः सनातनः ॥ ७ ॥
कौसल्या शुशुभे तेन पुत्रेणामिततेजसा ।
यथा वरेण देवानामदितिर्वज्रपाणिना ॥ ८ ॥
स हि रूपोपपन्नश्च वीर्यवाननसूयकः ।

विनिर्वृत्ता विनिर्गता अनेन राज्ञो विष्णुरूपकध्वनिः * ॥ ५ ॥

तत्रापि रामस्यात्यन्ताभिमतत्वमुत्कर्षश्चाह तेषाम् इति । तेषामपि मध्ये पितुः रामो रतिकरो बभूव भूतानां प्राणिनां मध्ये स्वयंभूश्चतुर्मुख इव गुणवत्तरश्च बभूव ॥ ६ ॥

गुणवत्तरत्वे हेतुः, सहीति । उदीर्णस्य दृप्तस्य, अर्थितः प्रार्थितः, जज्ञे आविर्भूतः ॥ ७ ॥

देवानां वरेणेति वज्रपाणिविशेषणं, वज्रपाणिना प्रार्थितेन देवानां वरेण वामनेनादितिरिव इत्यन्ये ॥ ८ ॥

गुणवत्तर इत्युक्तगुणानेवाह,—सहीति । रूपं लावण्यं सौन्दर्यं च

---

* स्वशरीरात् इति अभूतोपमा । लोके कस्यचित् चतुर्षु बाहुषु सत्सु यथा तस्यैकोऽपि नाप्रियो भवति तथा ।

भूमावनुपमः सूनुर्गुणैर्दशरथोपमः ॥ ९ ॥
स च नित्यं प्रशान्तात्मा मृदुपूर्वञ्च भाषते।
उच्यमानोऽपि परुषं नोत्तरं प्रतिपद्यते ॥ १० ॥
कदाचित्*उपकारेण कृतेनैकेन तुष्यति।
न स्मरत्यपकाराणां शतमप्यात्मवत्तया ॥ ११ ॥
शीलवृद्धैर्ज्ञानवृद्धैर्वयोवृद्धैश्च सज्जनैः।
कथयन्नास्त वै नित्यमस्त्रयोग्यान्तरेष्वपि ॥ १२ ॥

असूया गुणेषु दोषाविष्करणं तद्रहितः भूमावनुपम उक्तगुणविषये। सूनुः कौसल्याया इति शेषः। दशरथोपमत्वं वक्ष्यमाणगुणैर्बोध्यम् ॥ ९ ॥

मृदुपूर्वं मृदूक्तिपूर्वं स्वजनेन परुषम् उच्यमानोऽपि परुषमुत्तरम् न प्रतिपद्यते न प्रयच्छति ॥ १० ॥

शतमनन्तं आत्मवत्तया स्वाधीनान्तःकरणतया * ॥ ११ ॥

शीलं सुचरितं ज्ञानमात्मानात्मविवेकज्ञानं वेदतदर्थज्ञानञ्च। अस्त्रयोग्यान्तरेष्वपि अस्त्रशस्त्रपरिश्रमयोग्यकालस्य यदन्तरं मध्यं तेष्वपि † सज्जनैरेव शास्त्ररहस्यं कथयन्नास्त। अन्यदा तु कैमुतिकन्यायसिद्धं सज्जनैकसम्भाषणम् ॥ १२ ॥

---

* "कथञ्चित्" इति वा पाठः।

* दयार्द्रान्तःकरणेनेति वा।

† अस्त्राणां योग्यः अभ्यासः तस्य अन्तरेषु अवकाशेष्वपि।

बुद्धिमान् मधुराभाषी पूर्बभाषी प्रियंवदः ।
वीर्यवान्न च वीर्येण महता स्वेन विस्मितः ॥ १३ ॥
नचानृतकथो विद्वान् वृद्धानां प्रतिपूजकः ।
अनुरक्तः प्रजाभिश्च प्रजाश्चाप्यनुरज्यते ॥ १४ ॥
सानुक्रोशो जितक्रोधो ब्राह्मणप्रतिपूजकः ।
दीनानुकम्पी धर्मज्ञो नित्यं प्रग्रहवान् शुचिः ॥ १५ ॥
कुलोचितमतिः चात्त्रं स्वधर्मं बहुमन्यते ।

* मधुराभाषी मधुरमाभाषितुं शीलमस्य पूर्बभाषी आगतान् प्रथमभाषणेन स्वाभिमुख्यप्रदर्शकः मधुरं शब्दतः प्रियं अर्थतः न विस्मितः अप्राप्तगर्वः ॥ १३ ॥

न चानृतकथः तेन सदा सत्यवचनायोगव्यवच्छेदो बोध्यते † । अनुरक्तोऽनुरञ्जितः अन्तर्भावितण्यर्थः अनुरज्यते अनुरञ्जयति तेन परस्परानुरागः ॥ १४ ॥

अनुक्रोशो दया दुःखिषु तद्वान् दीनानुकम्पया तदभिलषितप्रापक अतो न पौनरुक्त्यं प्रग्रहो दुष्टनिग्रह इन्द्रियनिग्रहस्य ॥ १५ ॥

---

* बुद्धिमान् प्रशस्तबुद्धिः कथं सर्व्वे जनाः सुखं वसेयुरित्येवं सर्व्वदा लोकरक्षणचिन्तापर इत्यर्थः ।

† अनृता असत्या कथा प्रबन्धकल्पना यस्य न तथा असत्काथाकापवर्जित इत्यर्थः ।

मन्यते परया कीर्त्या महत् स्वर्गफलं ततः ॥ १६ ॥
नाश्रेयसि रतो यश्च * न विरुद्धकथारुचिः ।
उत्तरोत्तरयुक्तीनां † वक्ता वाचस्पतिर्यथा ॥ १७ ॥
अरोगस्तरुणो वाग्मी वपुष्मान्देशकालवित् ।
लोके पुरुषसारज्ञः साधुरेको विनिर्मितः ॥ १८ ॥
स तु श्रेष्ठैर्गुणैर्युक्तः प्रजानां पार्थिवात्मजः ।

कुलोचितमतिः स्वकुलोचितदयादाक्षिण्यशरणागतवत्सलादिधर्मैक-णबुद्धिः ; अतएव क्षात्रं धर्मं प्रजापालनादि बहु मन्यते । ततः [स्व]धर्मात् प्रजापालनजन्यया शत्रुसंहारजन्यया च कीर्त्या महत् स्वर्गरूपं [फ]लं साध्यं मन्यते, क्षात्रं धर्मं बहु मन्यतइवेत्यर्थः ॥ १६ ॥

अश्रेयसि अश्रेयस्करे निषिद्धकर्मणीत्यर्थः । धर्मविरुद्धकथारुचि-[र्न] वादादिषु बृहस्पतिरिव स्वोक्तिनिर्वाहकयुक्तिवक्ता ॥ १७ ॥

अरोग इत्यनेन सत्कर्मानुष्ठानसामर्थ्यं । वपुष्मान् विपुलांसत्वादि-[ल]क्षणवपुर्विशेषवान् देशकालविदिति तत्तत्कर्मयोग्यदेशकालज्ञाता निग्र-[हा]नुग्रहाय धर्मिष्ठत्वाधर्मिष्ठत्वरूपसारज्ञाता स एक एव रामो लोके [स]ाधुः सर्वगुणयुक्तो ब्रह्मणा कृतः ॥ १८ ॥

एवं श्रेष्ठगुणैर्युक्तत्वोपदेशेऽपि दार्ढ्याय सत्यत्वप्रत्यापनाय च पुन-

* "नित्यं" इति वा पाठः ।

† "उत्तरोत्तरयुक्तौ च" इति वा पाठः ।

बहिश्चर इव प्राणो बभूव गुणतः प्रियः ॥ १९ ॥
सर्व*विद्याव्रतस्नातो यथावत् साङ्गवेदवित् ।
इष्वस्त्रे च पितुः श्रेष्ठो बभूव भरताग्रजः ॥ २० ॥
कल्याणाभिजनः साधुरदीनः सत्यवागृजुः ।
वृद्धैरभिविनीतश्च द्विजैर्धर्मार्थदर्शिभिः ॥ २१ ॥
धर्मकामार्थतत्त्वज्ञः स्मृतिमान् प्रतिभानवान् ।
लौकिके समयाचारे कृतकल्पो विशारदः ॥ २२ ॥
निभृतः संवृताकारो गुप्तमन्त्रः सहायवान् ।

बहिश्चर इति सत्विति । श्रेष्ठगुणैरन्तैर्वक्ष्यमाणैश्च प्राणसादृश्यकथनात् प्रजानां रामाधिकमिष्टं नास्तीति सूचितं गुणतः गुणैः ॥ १९ ॥

सर्वविद्येति । तत्तद्विद्यापेक्षितब्रह्मचर्य्यव्रतानन्तरमेव स्नातः कृत-समावर्त्तनः अतएव यथावदित्यादि । इषवो मन्त्रहीनाः समन्त्राणि अस्त्राणि समाहारे द्वन्द्वः । पितुः श्रेष्ठस्तदपेक्षया श्रेष्ठः ॥ २० ॥

कल्याणानामभिजनो जन्मभूमिः अदीनः क्षोभहेतावपि अक्षुब्धा-न्तःकरणः सत्यवाक् कष्टेऽपि सत्यवक्ता अभिविनीतः शिक्षितः ॥ २१ ॥

स्मृतिप्रतिभानयोर्भेदः संक्षेपे व्याकृतः लौकिके कृतकल्पः सम्पा-दितसामर्थ्यः समयाचारे धर्मे विशारदः कुशलः ॥ २२ ॥

निभृतो विनीतः संवृताकारो गूढाभिप्रायः । गुप्तमन्त्र इति पाठे फलपर्य्यन्तमन्याविदितमन्त्रः गुप्तैर्मन्त्रैरिति पाठः प्रचुरः । गुप्तैर्मन्त्रिभिन

---

* "सम्यक्" इति वा पाठः ।

अमोघक्रोधहर्षश्च त्यागसंयमकालवित् ॥ २३ ॥
दृढभक्तिः स्थिरप्रज्ञो नासद्ग्राही न दुर्वचः ।
निस्तन्द्रीरप्रमत्तश्च स्वदोषपरदोषवित् ॥ २४ ॥
शास्त्रज्ञश्च कृतज्ञश्च पुरुषान्तरकोविदः ।
यः प्रग्रहानुग्रहयोर्यथान्यायं विचक्षणः ॥ २५ ॥
सत्संग्रहानुग्रहणे स्थानविन्निग्रहस्य च ।
आयकर्मण्युपायज्ञः सन्दृष्टव्ययकर्मवित् ॥ २६ ॥

सर्वाज्ञातैस्तादृशा हि परराष्ट्रभेदादौ मुख्यसहायाः त्यागो वित्तादेः सत्पात्रे दानं संयमो न्यायेनार्जनं तत्समयज्ञः ॥ २३ ॥

दृढभक्तिर्गुर्वादिषु स्थिरप्रज्ञः विस्मृतिहीनः नासद्ग्राही असदनुग्रहणशीलो न दुर्वचः परोद्वेजकवचनहीनः निस्तन्द्रीः निरालस्यः स्वीयानां दोषः स्वदोषः ॥ २४ ॥

कृतज्ञः परेणात्यल्पमपि कृतमुपकारं जानाति तथा पुरुषाणामन्तरं तारतम्यं तद्विवेचने कोविदः। यद्वा पुरुषाणामन्तरमभिप्रायस्तज्ज्ञः प्रग्रहो निग्रहः यथान्यायं यथोचितं कर्तुं विचक्षणः ॥ २५ ॥

उक्तमर्थमेव विवृणोति सत्संग्रहानुग्रहणे संग्रहः स्वीकारस्ततोऽनुग्रहणं सपरिवारस्य पालनं प्रग्रहणे इति पाठेऽप्ययमेवार्थः । तत्र निग्रहस्य दुष्टनिग्रहस्य च करणे स्थानवित् देशकालज्ञः आयकर्मणि उपायज्ञः पुष्पेभ्यो मधुकर इव प्रजाभ्यः करेण धनग्रहणकर्मणि चतुर इत्यर्थः। क्वचिदायस्य चार्द्धेन चतुर्भागेन वा पुनः। "पादभागैस्त्रिभिर्वापि व्ययः कार्य्यो नृपैरिह" इति शास्त्रसंदृष्टव्ययकर्मज्ञः ॥ २६ ॥

श्रेष्ठं शास्त्रसमूहेषु प्राप्तो व्यामिश्रकेषु च ।
अर्थधर्मौ च संगृह्य सुखतन्त्रो न चालसः ॥ २७ ॥
वैहारिकाणां शिल्पानां विज्ञातार्थविभागवित् ।
आरोहे विनये चैव युक्तो वारणवाजिनाम् ॥ २८ ॥
धनुर्वेदविदां श्रेष्ठो लोकेऽतिरथसम्मतः * ।
अभियाता प्रहर्त्ता च सेनानयविशारदः ॥ २९ ॥
अप्रधृष्यश्च संग्रामे क्रुद्धैरपि सुरासुरैः ।

व्यामिश्रकेषु प्राकृतादिभाषामिश्रितनाटकादिषु श्रेष्ठम् निपुणताम् अर्थधर्मौ संगृह्य तदविरोधेन सुखतन्त्रः कामसेवीत्यर्थः । कर्त्तव्येष्वालस्यरहितः ॥ २७ ॥

वैहारिकाणां क्रीडाप्रयोजनानां शिल्पानां गीतवाद्यचित्रकर्म्मादीनां विज्ञाता । अर्थविभागवित्,

"धर्माय यशसेऽर्थाय आत्मने स्वजनाय च ।
पञ्चधा विभजन् वित्तमिहामुत्र च शोभते ॥"

इत्युक्तरीत्या तद्विभजनज्ञः । विनयो विविधगत्या नयनं शिक्षणं वा ॥ २८ ॥

अभियाता परसेनाभिमुखं याता, प्रहर्त्ता, शत्रूणाम् सेनानयश्चक्रादिव्यूहेन सेनान्यासस्तत्र निपुणः ॥ २९ ॥

---

* लोके सर्व्वेषामतिरथानां सम्मतस्तैः पूजित इत्यर्थः । इति केचित् ।

अनसूयो जितक्रोधो न दृप्तो न च मत्सरी ॥ ३० ॥
नावज्ञेयश्च * भूतानां न च कालवशानुगः।
एवं श्रेष्ठैर्गुणैर्युक्तः प्रजानां पार्थिवात्मजः ॥ ३१ ॥
सम्मतस्त्रिषु लोकेषु वसुधायाः क्षमागुणैः।
बुद्ध्या बृहस्पतेस्तुल्यो वीर्ये चापि शचीपतेः ॥ ३२ ॥
तथा सर्वप्रजाकान्तैः प्रीतिसञ्जननैः पितुः।
गुणैर्विरुरुचे रामो दीप्तः सूर्य इवांशुभिः ॥ ३३ ॥

मत्सरः परसम्पद्द्वेषः ॥ ३० ॥

भूतानां प्राणिनाम्। सिद्धानामिति पाठे सिद्धा देवभेदा इति कतक-कृत्। कालवशः कालपारतन्त्र्यं प्राकृतवत् तदनुसारी न स्वायत्तसर्वपरिकर इति यावत् † ॥ ३१ ॥

एवं द्विवारं गुणश्रैष्ठ्यमुपपाद्य पुनरतिशयाय तदुपपादयति,—सम्मत इत्यादि। क्षमाप्रधानैर्गुणैर्वसुधायास्तुल्य इति परेणान्वयः ॥ ३२ ॥

तथेति। कान्तैरिष्टैः तथा पितुः प्रीतिसञ्जननैर्गुणैः करणैर्विरुरुचे इत्यन्वयः ॥ ३३ ॥

---

* "न चावमन्ता" इति वा पाठः।

† "दशवर्षसहस्राणि दशवर्षशतानि च।
वत्स्यामि मानुषे लोके पालयन् पृथिवीमिमाम् ॥"
इति भगवतैव कालनियमस्योक्तत्वात्। केनापीत्थं व्याख्यातम्।

तमेवं वृत्तसम्पन्नमप्रधृष्य * पराक्रमम् ।
लोकनाथोपमं नाथमकामयत मेदिनी ॥ ३४ ॥
एतैस्तु बहुभिर्युक्तं गुणैरनुपमैः सुतम् ।
दृष्ट्वा दशरथो राजा चक्रे चिन्तां परन्तपः ॥ ३५ ॥
अथ राज्ञो बभूवैवं वृद्धस्य चिरजीविनः ।
प्रीतिरेषा कथं रामो राजा स्यान्मयि जीवति ॥ ३६ ॥
एषा ह्यस्य परा प्रीति र्हृदि सम्परिवर्त्तते ।
कदा नाम सुतन्द्रक्ष्याम्यभिषिक्तमहं प्रियम् ॥ ३७ ॥
वृद्धिकामो हि लोकस्य सर्वभूतानुकम्पकः ।
मत्तः प्रियतरो लोके पर्जन्य इव वृष्टिमान् ॥ ३८ ॥

एवमभिषेकोपयोगि गुणश्रेष्ठमुक्त्वा राज्ञोऽभिषेकेच्छां दर्शयति,—तमेवमिति । मेदिनी तद्देवता तद्वर्त्तिप्रजाश्च ॥ ३४ ॥ ३५ ॥

चिन्ताप्रकारमाह,—अथेति । मयि जीवति रामो राजा कथं भवेत् ? तादृशस्य तस्य दर्शनजा एषा अत्युत्कटानिर्वचनीया च प्रीतिर्मे कथं स्यादिति चिन्ता बभूवेत्यन्वयः ॥ ३६ ॥

प्रीतिरभिलाषः, अभिलाषप्रकारमाह,—कदा नामेति । पूर्वपद्ये प्रीतिरानन्दः ॥ ३७ ॥

---

* "अप्रमेय" इति वा पाठः ।

यमशक्रसमो वीर्ये बृहस्पतिसमो मतौ।
महीधरसमो धृत्यां मत्तश्च गुणवत्तरः॥ ३९॥
महीमहमिमां कृत्स्नामधितिष्ठन्तमात्मजम्।
अनेन वयसा दृष्ट्वा यथास्वर्गमवाप्नुयाम्॥ ४०॥
इत्येवं विविधैस्तैस्तैरन्यपार्थिवदुर्लभैः।
शिष्टैरपरिमेयैश्च लोके लोकोत्तरैर्गुणैः॥ ४१॥

पर्जन्यो मेघः *॥ ३८॥ ३९॥

अनेन वयसा वार्द्धकेन तथाभूतमात्मजं दृष्ट्वा यथास्वर्गं यथाकालं यथायोग्यं वा स्वर्गमवाप्नुयामिति चिन्तां चक्रे इत्यनुकर्षेणान्वयः॥ ४०॥

तैस्तैरुक्तैः। एतैरिति पाठेऽप्येवमेव शिष्टैरुक्तादन्यैश्चापरिच्छिन्नैर्लोके लोकोत्तमत्वेन प्रसिद्धैर्गुणैरुपलक्षितम्॥ ४१॥

---

* परा प्रीतिरित्युक्तं प्रपञ्चयति श्लोकत्रयेण,—वृद्धिकाम इत्यनेनापूर्व्वैश्वर्य्यप्रदत्वमुक्तं, सर्व्वभूतान्यनुकम्पयतीति सर्व्वभूतानुकम्पनः। कर्त्तरि ल्युट्। अनेन भ्रष्टैश्वर्य्यसाधकत्वमुक्तं, तथा चाभिलषिताधिकप्रदातृत्वे भ्रष्टैश्वर्य्यजनितसन्तापोपशामकत्वेन च वृष्टिमान् पर्जन्यो मेघ इव। लोके मत्तः प्रियतरः अतिशयेन प्रीतिमानित्यर्थः। प्रत्येकसाम्यानर्हत्वात् वीर्य्ये यमशक्रोभयसाम्यमुक्तं, मत्तश्च गुणवत्तर इति पूर्व्वं प्रियतरत्वमुक्तम् अत्र तद्धेतुगुणवत्तरत्वमुच्यते इति बोध्यम्। इति केनापि व्याख्यातम्।

तं समीक्ष्य तदा राजा युक्तं समुदितैर्गुणैः ।
निश्चित्य सचिवैः सार्द्धं यौवराज्यममन्यत ॥ ४२ ॥
दिव्यन्तरीक्षे भूमौ च घोरमुत्पातजं भयम् ।
सञ्चचक्षेऽथ मेधावी शरीरे चात्मनो जराम् ॥ ४३ ॥
पूर्णचन्द्राननस्याथ शोकापनुदमात्मनः ।
लोके रामस्य बुबुधे संप्रियत्वं महात्मनः ॥ ४४ ॥
आत्मनश्च प्रजानाञ्च श्रेयसे च प्रियेण च ।
प्राप्ते काले स धर्मात्मा भक्त्या त्वरितवान् नृपः ॥ ४५ ॥

तम् उक्तानुक्तैः समुदितैर्गुणैर्युक्तं पुत्रं समीक्ष्य दृष्ट्वा सचिवैः सार्द्धं निश्चित्य तादृशगुणवत्वेन पुत्रस्य यौवराज्यम् अमन्यत विचारितवान् ॥ ४२ ॥

दिव्युत्पातग्रहनक्षत्रादिवैकृतं अन्तरिक्षे महावातदिग्दाहादयः भूम्युत्पाता भूकम्पादयः तज्जं तत्सूचितं भयमात्मनिष्ठं मन्त्रिभ्यः सञ्चचक्षे उक्तवान् । तथा रामाभिषेककारणान्तरमात्मनः शरीरे जराञ्चावोचत् अनेनोत्पातसूचितानिष्टयोग्यताध्वननम् ॥ ४२ ॥

अथात्मनः शोकापनुदं शोकहर्त्तृ पूर्णचन्द्रमुखस्य महात्मनो रामस्य संप्रियत्वं राज्याभिषेकेण सर्वानन्दकरत्वं बुबुधे ज्ञातवान् ॥ ४४ ॥

अत आत्मनश्च श्रेयसे प्रजानाञ्च श्रेयसे प्रियेण च प्रजानिष्ठरामविषयप्रीतिरूपहेतुना च भक्त्या च रामपालनेन प्रजा धन्या भवन्त्विति प्रजाविषयस्नेहेन च स नृपो मन्त्रिणः रामाभिषेकाय त्वरितवान् ॥ ४५ ॥

नानानगरवास्तव्यान् पृथग्जानपदानपि* ।
समानिनाय मेदिन्याः प्रधानान् पृथिवीपतिः ॥ ४६ ॥
तान् वेश्म नानाभरणैर्यथार्हं प्रतिपूजितान् ।
ददर्शालंकृतो राजा प्रजापतिरिव प्रजाः ॥ ४७ ॥
न तु केकयराजानं जनकं वा नराधिपः ।
त्वरया चानयामास पश्चात्तौ श्रोष्यतः प्रियम् ॥ ४८ ॥
अथोपविष्टे नृपतौ तस्मिन् परपुरार्दने ।
ततः प्रविविशुः शेषा राजानो लोकसम्मताः ॥ ४९ ॥
अथ राज्ञा वितीर्णेषु विविधेष्वासनेषु च ।

त्वरयित्वा नानानगरवासिनस्तत्राधिकृतान् भिन्नभिन्नजनपदस्वामिनश्च मन्त्रिद्वारा समानिनाय ॥ ४६ ॥

वेश्म नानाभरणैस्तद्दानैः । प्रजापतिर्ब्रह्मा ॥ ४७ ॥

केकयाद्यनानयने हेतुस्त्वरया चेति चस्त्वर्थेऽभिषेकविषयत्वरया त्वित्यर्थः । प्रियं रामाभिषेकम् अस्येति विचार्येति शेषः । अत्र भरत-जनकयोरागमने वनगमनविघ्नभिया देवास्तथाबुद्धिं राज्ञे दत्तवन्त इति तात्पर्यम् ॥ ४८ ॥

शेषाः कैकेयजनकव्यतिरिक्ता आसन्नाः ॥ ४९ ॥

---

* "पृथक्जनपदान्" इति पाठे भिन्नभिन्नजनपदवासिन इति चार्थः ।

राजानमेवाभिमुखा निषेदुर्नियता नृपाः ॥ ५० ॥

स लभ्यमानैर्विनयान्वितैर्नृपैः
पुरालयैर्जानपदैश्च मानवैः ।
उपोपविष्टैर्नृपतिर्वृतो बभौ
सहस्रचक्षुर्भगवानिवामरैः ॥ ५१ ॥

**इत्यार्षे रामायणे वाल्मीकीये अयोध्याकाण्डे
रामराज्याभिषेकप्रस्तावो नाम
प्रथमः सर्गः ॥ १ ॥**

राजविनीतेषु राजदर्शितेषु नियता नियतदेशाधिपत्याः यद्वा राजमुखमात्रनिरीक्षकाः ॥ ५० ॥

मानः सत्कारः, पुरालयैः राजसेवार्थं सदायोध्यास्थितैः जानपदैः स्वस्वदेशस्थैः उपोपविष्टैः सभायां स्वसमीपोपविष्टैः । सहस्रचक्षुरिन्द्रः । राज्ञोऽपि चारैस्तथा तैरेव च सर्वप्रजाराजचित्तस्थज्ञानम् ॥ ५१ ॥

**इति रामाभिरामे श्रीरामीये रामायणतिलके
अयोध्याकाण्डे प्रथमः सर्गः ।**

---

## द्वितीयः सर्गः।



ततः परिषदं सर्वामामन्त्र्य वसुधाधिपः।
हितमुद्धर्षणं चैवमुवाच प्रथितं वचः ॥ १ ॥
दुन्दुभिस्वरकल्पेन गम्भीरेणानुनादिना।
स्वरेण महता राजा जीमूत इव नादयन् ॥ २ ॥
राजलक्षणयुक्तेन कान्तेनानुपमेन च।
उवाच रसयुक्तेन स्वरेण नृपतिर्नृपान् ॥ ३ ॥
विदितं भवतामेतद् यथा मे राज्यमुत्तमम्।
पूर्वकैर्मम राजेन्द्रैः सुतवत् परिपालितम् ॥ ४ ॥

अथ राज्याभिषेकस्य सर्वप्रजार्थत्वात् तदनुमतये आह राजेत्याह,— तत इति। आमन्त्र्य अभिमुखीकृत्य। हितं श्रेयस्करम् अतएवोद्धर्षणम् उत्कृष्टहर्षजनकम्। प्रथितं सर्वजनश्राव्यं यथा भवति तथोवाच ॥ १ ॥

तदेवाह,—दुन्दुभीति। अनुनादः प्रतिध्वनिः। नादयन् दिश इति शेषः ॥ २ ॥

स्वरे राजलक्षणयुक्तत्वं स्निग्धगम्भीरत्वादियुक्तत्वं कान्तत्वं मृदुमधुरत्वादिना रसयुक्तेन अद्भुतरसयुक्तेन ॥ ३ ॥

मे राज्यं सम्प्रतिपाल्यमानं मम पूर्वैर्मन्वादिभिः पालितमिति विदितमित्यन्वयः ॥ ४ ॥

सोऽहमिक्ष्वाकुभिः सर्वैर्नरेन्द्रैः प्रतिपालितम् ।
श्रेयसा योक्तुमिच्छामि सुखार्हमखिलं जगत् ॥ ५ ॥
मयाप्याचरितं पूर्वैः पन्थानमनुगच्छता ।
प्रजा नित्यमनिद्रेण यथाशक्त्यभिरक्षिताः ॥ ६ ॥
इदं शरीरं कृत्स्नस्य लोकस्य चरता हितम् ।
पाण्डुरस्यातपत्रस्य छायायां जरितं मया ॥ ७ ॥
प्राप्य वर्षसहस्राणि बहून्यायूंषि जीवतः ।
जीर्णस्यास्य शरीरस्य विश्रान्तिमभिरोचये ॥ ८ ॥
राजप्रभावजुष्टाञ्च दुर्वहामजितेन्द्रियैः ।
परिश्रान्तोऽस्मि लोकस्य गुर्वीं धर्मधुरं वहन् ॥ ९ ॥
सोऽहं विश्राममिच्छामि पुत्रं कृत्वा प्रजाहिते ।

ततः किं तत्राह,—सोऽहमिति । श्रेयसा रामराज्याभिषेकद्वारा विशिष्टेन सुखेन, यत इक्ष्वाकुभिः प्रतिपालितमतएव सुखार्हम् ॥ ५ ॥

पूर्वैर्मन्वादिभिराचरितं पन्थानं प्रजापालनमार्गम् अनिद्रेण स्वसुख-निरपेक्षेण । यथाशक्ति इति विनयप्रदर्शनम् ॥ ६ ॥

जरितं प्रापितजरं कृतं न कदापि प्रजापालनविरोधेन विषया-सक्तिः कृतेति भावः ॥ ७ ॥

वर्षसहस्राणि षष्टिवर्षसहस्राणि बहून्यायूंषि वत्सरशतरूपानेक-पुरुषायूंषि विश्रान्तिं प्रजाचिन्ताराहित्यरूपिणीम् ॥ ८ ॥

राजप्रभावाः शौर्यादयस्तद्युक्तैर्जुष्टाम् । वहन्निति हेतौ शता ॥९॥

सन्निकृष्टानिमान् सर्वाननुमान्य द्विजर्षभान् ॥ १० ॥
अनुजातो हि मां सर्वैर्गुणैः श्रेष्ठो ममात्मजः।
पुरन्दरसमो वीर्ये रामः परपुरञ्जयः ॥ ११ ॥
तं चन्द्रमिव पुष्येण युक्तं धर्मभृतां वरम्।
यौवराज्ये नियोक्तास्मि प्रातः पुरुषपुङ्गवम् ॥ १२ ॥
अनुरूपः स वो नाथो लक्ष्मीवान् लक्ष्मणाग्रजः।
त्रैलोक्यमपि नाथेन येन स्यान्नाथवत्तरम् ॥ १३ ॥

प्रजाहितं पुत्रं कृत्वा तं नियुज्य अनुमान्य कृतानुमतिकान् कृत्वा॥१०॥

राज्यार्हत्वं पुत्रस्य दर्शयति,—अनुजात इति। मत्सम्बन्धिसर्वगुण-विशिष्टो जात इत्यर्थः। इत्थंभूताख्यानविषयेऽनुःकर्मप्रवचनीय इति मामिति द्वितीया। स्ववृत्तिगुणाधिकगुणवत्तामप्याह पुरन्दरेति ॥ ११ ॥

पुष्येण युक्तं चन्द्रमिव सर्वकार्यसिद्धिदत्वं यौवराज्ये तत्पदे प्रातः नियोक्तास्मीति लुट्। पुङ्गवं श्रेष्ठम् ॥ १२ ॥

स वो युष्माकं नाथो राजा अनुरूपो योग्यः * येन राज्ञा न केवलं यूयमेव नाथवन्तोऽपि तु त्रैलोक्यमपि नाथवत्तरम्। एवंप्रभावो राम इति भावः ॥ १३ ॥

---

* यद्वा स रामो वो युष्माकमनुरूपो नाथः अनुकूलं रूपं यस्य सः निरुपमसौन्दर्यशालिदिव्यमङ्गलविग्रह इत्यर्थः। यद्वा अनुगतं रूपं यस्य असावनुरूपः सर्वव्यापीत्यर्थः। इति केचित्।

अनेन श्रेयसा सद्यः संयोज्येऽहमिमां महीम् ।
गतक्लेशो भविष्यामि सुते तस्मिन्निवेश्य वै ॥ १४ ॥
यदिदं मेऽनुरूपार्थं मया साधु सुमन्त्रितम् ।
भवन्तो मेऽनुमन्यन्तां कथं वा करवाण्यहम् ॥ १५ ॥
यद्यप्येषा मम प्रीतिर्हितमन्यद्विचिन्त्यताम् ।
अन्या मध्यस्थचिन्ता तु विमर्दाभ्यधिकोदया ॥ १६ ॥

श्रेयसा प्रशस्ततरेण रामेण महीं संयोज्य राज्याभिषेकद्वारेणेत्यर्थः। एवं सति तस्मिन् सुते तत्पालनभारं निवेश्य गतक्लेशो भविष्यामि* ॥१४॥

मे इदम् अभिषेकरूपं कार्यं यत् यदि मया साधु सुमन्त्रितं भवतामनुरूपार्थम् अनुकूलप्रयोजनावहञ्च तदा भवन्तो मे मम अनुमन्यन्ताम् अनुमतिं प्रयच्छन्तु हर्षयुक्तत्वाद्बहुरसम्बद्धपौनरुक्त्यमदोषाय। इतोऽतिरिक्तं वा कथं केन प्रकारेण किं करवाणि तद्वदन्त्विति शेषः ॥ १५ ॥

ननु त्वदधिकः को हिताहितविचारसमर्थः ? अत आह,—यद्यपीति एषा चिन्ता यद्यपि मम प्रीतिस्तद्विषया, तथापि अन्यद्धितं यदस्ति तदा विचिन्त्यतां यतो मध्यस्थानां रागद्वेषहीनानां चिन्ता तु विचारस्तु तद्वतां चिन्तापेक्षयान्या विलक्षणा, तदेवाह,—विमर्देन पूर्वापरपक्षसङ्घर्षेणाभ्यधिकोदया अधिकार्थप्रादुर्भाववती ॥ १६ ॥

---

* तस्मिं सुते महीं निवेश्य अनेन रामकर्तृकपरिपालनरूपेण श्रेयसा महीमिमां परिदृश्यमानसर्वजनोपेतां संयोज्य गतक्लेशो भविष्यामीति सम्बन्ध इति केचित् ।

इति ब्रुवन्तं मुदिताः प्रत्यनन्दन् नृपा नृपम्।
वृष्टिमन्तं महामेघं नदन्त इव बर्हिणः॥ १७॥
स्निग्धोऽनुनादः सञ्जज्ञे ततो हर्षसमीरितः।
जनौघोद्घुष्टसन्नादो मेदिनीं कम्पयन्निव॥ १८॥
तस्य धर्मार्थविदुषो भावमाज्ञाय सर्वशः।
ब्राह्मणा बलमुख्याश्च पौरजानपदैः सह॥ १९॥
समेत्य ते मन्त्रयितुं * समतागतबुद्धयः।
ऊचुश्च मनसा ज्ञात्वा वृद्धं दशरथं नृपम्॥ २०॥
अनेकवर्षसाहस्रो वृद्धस्त्वमसि पार्थिव!।

वृष्टिमन्तं महामेघं दृष्ट्वा नदन्तो बर्हिण इव मुदिता नृपा नृपं प्रत्यनन्दन् प्रशंसापूर्वमङ्गीचक्रुः॥ १७॥

अनुनादः सामन्तकृतहर्षजवाक्यस्य प्रतिध्वनिः संजज्ञे सभायामिति शेषः। जनौघानाम् उद्घुष्टेन शब्देन सन् सम्भवन् नादः प्रतिध्वनिः पृथिवीं कम्पयन्निव सञ्जज्ञे बहिरिति शेषः विमानमिति पाठे राजास्थानमित्यर्थः॥ १८॥

भावं धर्मविषयमभिप्रायम्। बलं सेना तपोबलं वा चाम्नृपाः॥१९॥

समतामेकरूपतां गताः प्राप्ता बुद्धयो येषां ते मन्त्रयितुं प्रवृत्त इति शेषः मन्त्रणोत्तरं ज्ञात्वा पुनः पुनः पर्य्यालोचनेन निश्चित्य॥ २०॥

---

* "समेत्य मन्त्रयित्वा तु" इति वा पाठः।

स रामं युवराजानमभिषिञ्चस्व पार्थिवम् ॥ २१ ॥
इच्छामो हि महाबाहुं रघुवीरं महाबलम् ।
गजेन महता यान्तं रामं छत्रावृताननम् ॥ २२ ॥
इति तद्वचनं श्रुत्वा राजा तेषां मनःप्रियम् ।
अजानन्निव जिज्ञासुरिदं वचनमब्रवीत् ॥ २३ ॥
श्रुत्वैतद् वचनं यन्मे राघवं पतिमिच्छथ ।
राजानः ! संशयोऽयं मे तदिदं ब्रूत तत्त्वतः ॥ २४ ॥
कथन्नु मयि धर्मेण पृथिवीमनुशासति ।
भवन्तो द्रष्टुमिच्छन्ति युवराजं महाबलम् * ॥ २५ ॥

अनेकेत्यादि पदं बहुव्रीहिः । साहस्रे स्वार्थिकोऽण् युवराजानमिति समासान्तविधेरनित्यत्वादजभावः ॥ २१ ॥

इच्छामः कृताभिषेकं द्रष्टुमिति शेषः ॥ २२ ॥

अजानन्निव तदभिषेकस्य सर्वमनःप्रियत्वं जानन्नपि अजानन्निव प्रजामुखात् स्पष्टं जिज्ञासुः ॥ २३ ॥

हे राजानो ! मे वचनं श्रुत्वा तन्निर्बन्धादेव केवलं रामं पतिमिच्छथ न वस्तुत इति संशयः ॥ २४ ॥

संशयबीजमाह,—कथं न्विति । युवराजं तेन युवत्वात्तत्र नानाविधधर्माणामभिसम्भव इति भावः ॥ २५ ॥

---

* "ममात्मजम्" इति वा पाठः ।

ते तमूचुर्महात्मानः * पौरजानपदैः सह।
बहवो नृप! कल्याणगुणाः सन्ति सुतस्य ते ॥ २६ ॥
गुणान् गुणवतो देव देवकल्पस्य धीमतः।
प्रियानानन्दनान् कृत्स्नान् प्रवक्ष्यामोऽद्य तान् शृणु ॥२७॥
दिव्यैर्गुणैः शक्रसमो रामः सत्यपराक्रमः।
इक्ष्वाकुभ्योऽपि सर्वेभ्यो ह्यतिरिक्तो विशाम्पते! ॥ २८ ॥
रामः सत्पुरुषो लोके सत्यः सत्यपरायणः।
साक्षाद्रामाद्विनिर्वृत्तो धर्मश्चापि श्रिया सह ॥ २९ ॥
प्रजासुखत्वे चन्द्रस्य वसुधायाः क्षमागुणैः।
बुद्ध्या बृहस्पतेस्तुल्यो वीर्य्ये साक्षात् शचीपतेः ॥ ३० ॥

अस्मिन्नाधर्मलेशसम्भावनापीत्याशयेनोक्तरयन्ति ते इति। ते त्वयाः कल्याणगुणाः प्रजाकल्याणजनका गुणाः ॥ २६ ॥

देवकल्पस्य देवतुल्यस्य रामस्य प्रियान् शत्रूणामपि आनन्दनान् अनिष्टनिवारणपूर्वकेष्टप्रापकत्वेनानन्दजनकान् ॥ २७ ॥

दिव्यैरमानुषैः इक्ष्वाकुभ्यस्तद्वंशेभ्यः अतिरिक्तोऽधिकः ॥ २८ ॥

साक्षाद्रामाद्विनिर्वृत्तः रामेणैव प्रतिष्ठापित इत्यर्थः। श्रिया अर्थेन ॥ २९ ॥

---

* "महात्मानं" इति वा पाठः।

धर्मज्ञः सत्यसन्धश्च शीलवाननसूयकः ।
क्षान्तः सान्त्वयिता श्लक्ष्णः कृतज्ञो विजितेन्द्रियः ॥ ३१ ॥
मृदुश्च स्थिरचित्तश्च सदा भव्योऽनसूयकः ।
प्रियवादी च भूतानां सत्यवादी च राघवः ॥ ३२ ॥
बहुश्रुतानां वृद्धानां ब्राह्मणानामुपासिता ।
तेनास्येहातुला कीर्तिर्यशस्तेजश्च वर्द्धते ॥ ३३ ॥
देवासुरमनुष्याणां सर्वास्त्रेषु विशारदः ।
सम्यग्विद्याव्रतस्नातो यथावत्साङ्गवेदवित् ॥ ३४ ॥
गान्धर्वे च भुवि श्रेष्ठो बभूव भरताग्रजः ।

सुखत्वइत्यादेस्तुल्य इत्यनेनान्वयः प्रत्येकगुणेषु एकैकस्योपमानत्वदर्शनेन रामनिष्ठगुणानामन्यत्रैकत्र वासासम्भवो दर्शितः ॥ ३० ॥

सन्धा प्रतिज्ञा अनसूयकोऽन्यविषयासूयारहितः सान्त्वयिता दुःखितानां दुःखशमयिता श्लक्ष्णः प्रियवचनः ॥ ३१ ॥

मृदुः सुकरोपासनः स्थिरचित्तत्वमतिसङ्कटेऽपि अङ्गीकृतापरित्यागः अनसूयकोऽन्यनिष्ठासूयाया अविषयः भूतानां प्राणिनाम् ॥ ३२ ॥

तेनोक्तगुणसमूहेन कीर्त्तिः शौर्यादिजा यशोदानादिना प्रसिद्धिः तेजः शौर्यम् ॥ ३३ ॥

देवासुरेत्यादि निर्द्धारणे षष्ठी ॥ ३४ ॥

गान्धर्वे सङ्गीतशास्त्रे, कल्याणानामभिजनो वासस्थानम्, अदीनः क्षोभहेतावप्यक्षुभित आत्मा चित्तं यस्य ॥ ३५ ॥

कल्याणाभिजनः साधुरदीनात्मा महामतिः ॥ ३५ ॥
द्विजैरभिविनीतश्च श्रेष्ठैर्धर्मार्थनैपुणैः।
यदा व्रजति संग्रामं ग्रामार्थे नगरस्य वा ॥ ३६ ॥
गत्वा सौमित्रिसहितो नाविजित्य निवर्त्तते।
संग्रामात् पुनरागत्य कुञ्जरेण रथेन वा ॥ ३७ ॥
पौरान् स्वजनवन्नित्यं कुशलं परिपृच्छति।
पुत्रेष्वग्निषु दारेषु प्रेष्यशिष्यगणेषु च ॥ ३८ ॥
निखिलेनानुपूर्व्या च पिता पुत्रानिवौरसान्।
शुश्रूषन्ते च वः शिष्याः कच्चिद्वर्मसु दंशिताः ॥ ३९ ॥
इति वः पुरुषव्याघ्रः सदा रामोऽभिभाषते।
व्यसनेषु मनुष्याणां भृशं भवति दुःखितः ॥ ४० ॥
उत्सवेषु च सर्वेषु पितेव परितुष्यति।

अभिविनीतः शिक्षितः धर्मे अर्थे च नैपुणं येषां तैः ग्रामेति लुप्तषष्ठीकं पृथक् पदम्। ग्रामस्य नगरस्य वा रक्षार्थे संग्रामं यदा व्रजतीत्यर्थः ॥ ३६ ॥ ३७ ॥ ३८ ॥

पिता औरसान् पुत्रानिव पौरान् कुशलं पृच्छतीत्यन्वयः शुश्रूषन्ते च वः शिष्या इति ब्राह्मणान् प्रति प्रश्नः वर्मसु दंशिताः अवहिता भूत्वा वः सेवन्त इति क्षत्रियान् प्रति प्रश्नः क्वचिदिति प्रश्ने क्वचित् धर्मेषु दंशिता इति पाठः ॥ ३९ ॥

व्यसनं दुःखम् ॥ ४० ॥

सत्यवादी महेष्वासो वृद्धसेवी जितेन्द्रियः ॥ ४१ ॥
स्मितपूर्वाभिभाषी च धर्मं सर्वात्मना श्रितः ।
सम्यग्योक्ता श्रेयसाञ्च न विगृह्य कथारुचिः ॥ ४२ ॥
उत्तरोत्तरयुक्तौ च वक्ता वाचस्पतिर्यथा ।
सुभ्रूरायतताम्राक्षः साक्षाद्विष्णुरिव स्वयम् ॥ ४३ ॥
रामो लोकाभिरामोऽयं शौर्य्यवीर्यपराक्रमैः ।
प्रजापालनसंयुक्तो न रागोपहितेन्द्रियः ॥ ४४ ॥
शक्तस्त्रैलोक्यमप्येष भोक्तुं किन्नु महीमिमाम् ।
नास्य क्रोधः प्रसादश्च निरर्थोऽस्ति कदाचन ॥ ४५ ॥
हन्त्येष नियमाद्वध्यान् अवध्येषु न कुप्यति ।
युनक्त्यर्थैः प्रहृष्टश्च तमसौ यत्र तुष्यति ॥ ४६ ॥

यथा पुत्रसुखेन पिता आनन्दवान् भवति तथा प्रजासुखेन राम इति भावः ॥४१॥

न विगृह्य कथारुचिः विग्रहो वृथाकलहः तं कृत्वा जल्पवितण्डादि-कथारुचिर्यथा प्राकृतस्तथा न इत्यर्थः । नविगृह्यकथारुचिः इति पाठे निन्द्यकथारुचिः न इत्यर्थः ॥ ४२ ॥ ४३ ॥

शौर्य्यं युद्धे निर्भयप्रवेशसामर्थ्यं वीर्यं स्वस्याविकारे एव परस्य वि-कारापादनं पराक्रमो युद्धे लघुसञ्चारः । रागो विषयेच्छा ॥ ४४ ॥ ४५ ॥

क्रोधप्रसादसार्थक्यमेवोपपादयति,—हन्तीत्यादि । यत्र यस्मिन् विषये सन्तोषस्तमर्थैः पूरयतीत्यर्थः ॥ ४६ ॥

दान्तैः सर्वप्रजाकान्तैः प्रीतिसञ्जननैर्नृणाम्।
गुणैर्विरोचते * रामो दीप्तः सूर्य्य इवांशुभिः ॥ ४७ ॥
तमेवं गुणसम्पन्नं रामं सत्यपराक्रमम्।
लोकपालोपमं नाथमकामयत मेदिनी ॥ ४८ ॥
वत्सः श्रेयसि जातस्ते दिष्ट्यासौ तव राघवः।
दिष्ट्या पुत्रगुणैर्युक्तो मारीच इव कश्यपः ॥ ४९ ॥
बलमारोग्यमायुश्च रामस्य विदितात्मनः।
देवासुरमनुष्येषु सगन्धर्वोरगेषु च ॥ ५० ॥
आशंसते जनः सर्वो राष्ट्रे पुरवरे तथा।
आभ्यन्तरश्च बाह्यश्च पौरजानपदो जनः ॥ ५१ ॥
स्त्रियो वृद्धास्तरुण्यश्च सायम्प्रातः समाहिताः।

दान्तैः स्वमनोदमनैः ॥ ४७ ॥

मेदिनी तत्स्थोजनः ॥ ४८ ॥

असौ ते वत्सो दिष्ट्या अस्मद्भाग्येन श्रेयसि प्रजारक्षणरूपे समर्थो जातः किञ्चासौ राघवस्तव दिष्ट्या भाग्येन मरोचिप्रजापतेः पुत्रः कश्यप इव पुत्रगुणैर्युक्तो जात इत्यर्थः ॥ ४९ ॥

देवासुरादिषु राष्ट्रे पुरवरे च वर्तमानः सर्वोपि जनो रामस्य बलादि आशंसते। आभ्यन्तरः सेवकः ॥ ५० ॥ ५१ ॥

रामस्यार्थे रामस्यबलादिप्रयोजनार्थे ॥ ५२ ॥

* "विरुरुचे" इति वा पाठः।

सर्वान् देवान् नमस्यन्ति रामस्यार्थे मनस्विनः ॥ ५२ ॥
तेषां तद्याचितं देव ! त्वत्प्रसादात्समृध्यताम्
राममिन्दीवरश्यामं सर्वशत्रुनिवर्हणम् ॥ ५३ ॥
पश्यामो यौवराज्यस्थं तव राजोत्तमात्मजम् ॥ ५४ ॥
तं देवदेवोपममात्मजन्ते
सर्वस्य लोकस्य हिते निविष्टम् ।
हिताय नः क्षिप्रमुदारजुष्टं
मुदाभिषेक्तुं वरद ! त्वमर्हसि ॥ ५५ ॥

इत्यार्षे रामायणे वाल्मीकीये अयोध्याकाण्डे रामाभिषेकप्रस्तावे प्रजानां दशरथवाक्यानुमोदनं नाम द्वितीयः सर्गः ॥ २ ॥

याचितं अभिप्रार्थितं रामाभिषेकरूपं समृध्यताम् सम्पद्यतां ॥ ५३ ॥
राजोत्तमेति सम्बोधनम् ॥ ५४ ॥
देवदेवो विष्णुस्तत्सदृशम् अतएव सर्व्वलोकहिते निविष्टं उदारगुणैर्जुष्टं उदारैर्महद्भिश्च परिगृहीतम् ॥ ५५ ॥

इति रामाभिरामे श्रीरामीये रामायणतिलके
अयोध्याकाण्डे द्वितीयः सर्गः ।

# द्वितीयः सर्गः ।

तेषामञ्जलिपद्मानि प्रगृहीतानि सर्वशः ।
प्रतिगृह्याब्रवीद्राजा तेभ्यः प्रियहितं वचः ॥ १ ॥
अहोऽस्मि परमप्रीतः प्रभावश्चातुलो मम ।
यन्मे ज्येष्ठं प्रियं पुत्रं यौवराज्यस्थमिच्छथ ॥ २ ॥
इति प्रत्यर्चितान् * राजा ब्राह्मणानिदमब्रवीत् ।
वसिष्ठं वामदेवञ्च तेषामेवोपशृण्वताम् ॥ ३ ॥
चैत्रः श्रीमानयं मासः पुण्यः पुष्पितकाननः ।

अञ्जलिपद्मानि अञ्जलिरूपाणि पद्मानि पद्माकाराञ्जलीन् इति यावत् । प्रगृहीतानि प्रकर्षेण शिरसि बद्धानि प्रतिगृह्य वीक्षणवचनप्रत्यञ्जलिभिर्यथायोगं तासाम्प्रतिग्रहः ॥ १ ॥ २ ॥

इति प्रत्यर्चितान् पौरजानपदान् कृत्वा ब्राह्मणानिदमब्रवीत् तेषां पौरादीनां शृण्वतां पुर इत्यर्थः । चकार संग्राह्यमपेक्ष्य ब्राह्मणानिति बहुवचनं ॥ ३ ॥ ४ ॥

* "प्रत्यर्च्य तान्" इति वा पाठः ।

यौवराज्याय रामस्य सर्वमेवोपकल्प्यताम् ॥ ४ ॥
राज्ञस्तूपरते वाक्ये जनघोषो महानभूत्।
शनैस्तस्मिन् प्रशान्ते च जनघोषे जनाधिप: ॥ ५ ॥
वसिष्ठं मुनिशार्दूलं राजा वचनमब्रवीत्।
अभिषेकाय रामस्य यत् कर्म सपरिच्छदम् ॥ ६ ॥
तदद्य भगवन्! सर्वमाज्ञापयितुमर्हसि।
तच्छ्रुत्वा भूमिपालस्य वसिष्ठो मुनिसत्तम: ॥ ७ ॥
आदिदेशाग्रतो राज्ञः स्थितान्युक्तान् कृताञ्जलीन्।
सुवर्णादीनि रत्नानि बलीन् सर्वौषधीरपि ॥ ८ ॥
शुक्लमाल्यानि लाजांश्च पृथक् च मधुसर्पिषी।
अहतानि च वासांसि रथं सर्वायुधान्यपि ॥ ९ ॥
चतुरङ्गबलञ्चैव गजञ्च शुभलक्षणम्।

जनघोषः रामाभिषेकसम्भारोपकल्पनाज्ञाश्रवणजः ॥ ५ ॥

वसिष्ठमिति वामदेवोपलक्षणम्। अग्रे "एवं व्यादिश्य विप्रौ तु" इत्युक्तेः। परिच्छदः उपकरणं ॥ ६ ॥ ७ ॥

युक्तान् सावधानान् मन्त्रिण इति शेषः बलीन् पूजाद्रव्याणि विघ्नशामकबल्यर्थानि ॥ ८ ॥

पृथक्पृथक्पात्रगृहीते, अहतानि सदशानि तदानीमेव तन्तुवाययन्त्रादुद्धृतानि ॥ ९ ॥

चामरव्यजने चोभे * ध्वजं छत्त्रञ्च पाण्डुरम् ॥ १० ॥
शतञ्च शातकुम्भानां कुम्भानामग्निवर्च्चसाम् ।
हिरण्यशृङ्गं वृषभं समग्रं व्याघ्रचर्म्म च ॥ ११ ॥
यच्चान्यत् किञ्चिदेष्टव्यं तत् सर्व्वमुपकल्प्यताम् ।
उपस्थापयत प्रातरग्न्यगारे महीपतेः ॥ १२ ॥
अन्तःपुरस्य द्वाराणि सर्व्वस्य नगरस्य च ।
चन्दनस्रग्भिरर्च्यन्तां धूपैश्च घ्राणहारिभिः ॥ १३ ॥
प्रशस्तमन्नं गुणवद्दधिक्षीरोपसेचनम् ।
द्विजानां शतसाहस्रं यत्प्रकाममलं भवेत् ॥ १४ ॥
सत्कृत्य द्विजमुख्यानां श्वः प्रभाते प्रदीयताम् ।
घृतं च दधिलाजांश्च दक्षिणाश्चापि पुष्कलाः ॥ १५ ॥

चामरव्यजने चमरपुच्छनिर्म्मिते व्यजने ॥ १० ॥

शातकुम्भानां सौवर्णानाम् अग्निवर्चसामित्यनेन सुवर्णस्यात्युत्तमत्वं ध्वनितम् । समग्रं नखादिसहितमखण्डम् ॥ ११ ॥

अन्यत् अनुक्तमपि लोकप्रसिद्धं गन्धपुष्पादि एष्टव्यं अवश्यापेक्षितं तदित्यर्थः । अग्न्यगारे अग्निहोत्रगृहे उपस्थापयत प्रापयत ॥ १२ ॥

अन्तःपुरं राजवेश्म । घ्राणहारिभिरतिसुगन्धैः ॥ १३ ॥

---

* "श्वेते" इति वा पाठः ।

सूर्येऽभ्युदितमात्रे श्वो भविता स्वस्तिवाचनम्।
ब्राह्मणाश्च निमन्त्रन्तां कल्प्यन्तामासनानि च॥ १६॥
आबध्यन्तां पताकाश्च राजमार्गश्च सिच्यताम्।
सर्वे च तालापचरा गणिकाश्च स्वलंकृताः॥ १७॥
कक्ष्यां द्वितीयामासाद्य तिष्ठन्तु नृपवेश्मनः।
देवायतनचैत्येषु सान्नभक्ष्याः सदक्षिणाः॥ १८॥
उपस्थापयितव्याः स्युर्माल्ययोग्याः पृथक् पृथक्।
दीर्घासिबद्धगोधाश्च सन्नद्धा मृष्टवाससः॥ १९॥

प्रशस्तं द्रव्यं गुणवत् युक्तसंस्कारम्। दध्ना क्षीरेण चोपसेचनं संस्कारो यस्य तत्। द्विजानां शतसाहस्रं प्रति यत् प्रकाममभिमतम् अलं पर्याप्तञ्च भवेत्तत्सम्पाद्य द्विजमुख्यानां तेभ्यः सत्कृत्य प्रातर्दीयताम्॥ १४॥ १५॥ १६॥

तालापचरास्तालजीविनः॥ १६॥

कक्ष्यां द्वितीयां अन्तःकक्ष्यायामभिषेकस्थाने ब्राह्मणानामेव वासादिति भावः। चैत्या रथ्यावृक्षाः। अन्नमोदनं भक्ष्यञ्च तत्सहिताः दक्षिणाः तत्सहिताः॥ १८॥

माल्ययोग्याः मालामर्हति माल्यमर्चनं तद्योग्या गन्धपुष्पादयः। देवायतनचैत्ययोः पृथक् पृथक् उपस्थापयितव्याः। तत्तद्देवतापूजापूर्वकं तत्र तत्र ब्राह्मणतर्पणं कार्य्यमिति तात्पर्य्यः। दीर्घा असयो येषां ते बद्धगोधाचर्माणश्चेति द्वन्द्वः। "दीर्घासिबद्धा योधा" इति पाठे च बद्धदीर्घासयो योधा इत्यर्थः। मृष्टवाससइत्युपलक्षणमलङ्काराणां॥ १९॥

महाराजाज्ञया शूराः प्रविशन्तु महोदयम्।
एवं व्यादिश्य विप्रौ तौ क्रियास्तत्र विनिष्ठितौ ॥ २० ॥
चक्रतुश्चैव यच्छेषं पार्थिवाय निवेद्य च।
कृतमित्येव चाब्रूतामभिगम्य जगत्पतिम् ॥ २१ ॥
यथोक्तवचनं प्रीतौ हर्षयुक्तौ द्विजोत्तमौ।
ततः सुमन्त्रं द्युतिमान् राजा वचनमब्रवीत् ॥ २२ ॥
रामः कृतात्मा भवता शीघ्रमानीयतामिति।
स तथेति प्रतिज्ञाय सुमन्त्रो राजशासनात् ॥ २३ ॥
रामं तत्रानयांचक्रे रथेन रथिनां वरम्।
अथ तत्र समासीनास्तदा दशरथं नृपम् ॥ २४ ॥

महोदयं महोत्सवविशिष्टमङ्गणं विप्रौ वशिष्ठवामदेवौ व्यादिश्य अधिकारिण इति शेषः तत्र नृपवेश्मनि स्थितौ क्रियाः पुरोहितकर्त्तव्याश्चक्रतुरित्युत्तरेणान्वयः ॥ २० ॥

यच्चैवशेषं राजोक्तादन्यदवश्यकर्त्तव्यं तदपि पार्थिवाय निवेद्य चक्रतुः। ततो जगत्पतिमभिगम्य यथोक्तवचनं उक्तवचनमनतिक्रम्य सर्व्वं कृतं सिद्धं जातमित्यब्रूताम्। प्रीतिर्मानसश्चानन्दः तदुन्नायको मुखविकासादिर्हर्षः ॥ २१ ॥२२ ॥

कृतात्मा धर्म्मे कृतबुद्धिः प्रतिज्ञाय उक्त्वा ॥ २३ ॥

तत्र प्रासादे प्रासादस्थो ददर्शेति वक्ष्यमाणत्वात् ॥ २४ ॥

प्राच्योदीच्याः प्रतीच्याश्च दाक्षिणात्याश्च भूमिपाः।
म्लेच्छाश्चार्य्याश्च ये चान्ये वनशैलान्तवासिनः॥ २५॥
उपासांचक्रिरे सर्वे तं देवा इव वासवम्।
तेषां मध्ये स राजर्षिर्मरुतामिव वासवः॥ २६॥
प्रासादस्थो दशरथो ददर्शायान्तमात्मजम्।
गन्धर्वराजप्रतिमं लोके विख्यातपौरुषम्॥ २७॥
दीर्घबाहुं महासत्त्वं मत्तमातङ्गगामिनम्।
चन्द्रकान्ताननं राममतीवप्रियदर्शनम्॥ २८॥

आर्य्या मध्यदेशवासिनः॥ २५॥ २६॥

गन्धर्वराजप्रतिमत्वं सौन्दर्य्यवत्त्वेन सुस्वरत्वेन च, विख्यातपौरुषत्वेन वीरत्वम् *॥ २७॥

वीरानुगुणं दीर्घबाहुत्वम्। महासत्त्वं महाबलवत्त्वं च तदनुमापकं

---

* गन्धर्व्वराजेत्यादि श्लोकत्रयमेकं वाक्यं गन्धर्वराजप्रतिमं गन्धर्वश्रेष्ठ-सुन्दरं न केवलं भोगरसिकत्वमेव किन्तु वीररसाभिज्ञत्वमपीत्याह लोके विख्यातपौरुषमिति। पौरुषोपयुक्तसंहननत्वमाह दीर्घबाहुमिति। न केवलं शिरीषकुसुमसुकुमारमहाबाहुत्वमेवापितु महाबलशालित्वमपी-त्याह महासत्त्वमिति महचण्डीशस्य धनुःखण्डनेन प्रचण्डं सत्वं बलं यस्य तं तदनुगुणविशेषणमाह,—मत्तमातङ्गगामिनमिति मदालस-गजेन्द्रगमनवत् सुललितगमनशालिनम्।

रूपौदार्य्यगुणैः पुंसां दृष्टिचित्तापहारिणम्।
घर्म्माभितप्ताः पर्जन्यं ह्लादयन्तमिव प्रजाः॥ २९॥
न ततर्प समायान्तं पश्यमानो नराधिपः।
अवतार्य्य सुमन्त्रस्तु राघवं स्यन्दनोत्तमात् *॥ ३०॥
पितुः समीपं गच्छन्तं प्राञ्जलिः पृष्ठतोऽन्वगात्।
स तं कैलासशृङ्गाभं प्रासादं रघुनन्दनः॥ ३१॥

मत्तेत्यादि, तेन सगर्व्वसलीलगमनमुक्तम्। चन्द्रकान्ताननमितिवाचकमात्रलुप्तोपमा। अतएवातीवप्रियदर्शनम् रामं जनान् रमयन्तम्†॥२८॥

रूपौदार्य्यगुणैः क्रमात् दृष्टिचित्तहरं ग्रीष्मतप्ताः प्रजाः ह्लादयन्तं पर्जन्यमिव स्थितम्॥ २९॥

पश्यमान इत्यार्षम्। ततर्पेत्यनेनानुक्षणं नवनवप्रेमास्पदत्वम्॥३०॥३१॥

---

* "स्यन्दनात् तदा" इति वा पाठः।

† चन्द्रकान्ताननमिति चन्द्राननमित्यनेनाह्लादकत्वसिद्धेर्निरतिशयाह्लादकत्वं द्योतयितुं कान्तेत्युक्तं तेन प्रत्यवयवशोभावत्त्वं दर्शितं रामं निग्रहगुणैः स्वरूपगुणै रमयन्तं समुदायशोभावत्वमाह अतीवप्रियदर्शनमिति वचनागोचरपरमप्रेमास्पदमित्यर्थः रूपौदार्य्यगुणैः रूपं विग्रहः औदार्य्यमनुभवितृभ्योऽनुभवदानं गुणाः सदानुसन्धीयमानं सौशील्यं मह्यानयमस्मादृशैस्त्वतिपामरैस्त्वतिसंश्लेषेण वर्त्तत इति सदानुसन्धीयमानत्वात् पुंसामतिकठिनचित्तानां दृष्टिचित्तापहारिणं किमुत स्त्रीणामिति भावः।

आरुरोह रथं दृष्ट्वा सहसा तेन राघवः ।
स प्राञ्जलिरभिप्रेत्य प्रणतः पितुरन्तिके ॥ ३२ ॥
नाम स्वं श्रावयन् रामो ववन्दे चरणौ पितुः ।
तं दृष्ट्वा प्रणतं पार्श्वे कृताञ्जलिपुटं नृपः ॥ ३३ ॥
गृह्याञ्जलौ समाकृष्य सस्वजे प्रियमात्मजम् ।
तस्मै चाभ्युद्यतं सम्यक् मणिकाञ्चनभूषितम् ॥ ३४ ॥
दिदेश राजा रुचिरं रामाय परमासनम् ।
तदासनवरं प्राप्य व्यदीपयत राघवः ॥ ३५ ॥
स्वयैव प्रभया मेरुमुदये विमलो रविः ।
तेन विभ्राजिता तत्र सा सभापि व्यरोचत ॥ ३६ ॥

सहसा वेगेन । तेन सुमन्त्रेण सहेति शेषः । स प्राञ्जलिः साञ्जलिः अभिप्रेत्य प्राप्य प्रणतः कृतसाष्टाङ्गनमस्कारः ॥ ३२ ॥

स्वं नाम श्रावयन् रामवर्मा अहमस्मि इत्येवम् । प्रणम्य पार्श्वेऽवस्थानं पुत्रधर्मः ॥ ३३ ॥

अञ्जलौ अञ्जलिप्रदेशे रामं स्वयमेव गृह्य गृहीत्वा समाकृष्य स्व-सम्मुखमानीय अभ्युद्यतं उपस्थापितम् ॥ ३४ ॥

परम् उत्कृष्टं व्यदीपयत अशोभयत । अत्रासनं कर्म्म ॥ ३५ ॥

स्वयैव प्रभयेति दीपने करणम् । उदयकाले रविर्मेरुमिव । सा वसिष्ठदशरथादिभ्राजिता सभापि न केवलमासनमेवेत्यर्थः । व्यरोचत विशेषेण चकाशे ॥ ३६ ॥

विमलग्रहनक्षत्रा शारदी द्यौरिवेन्दुना।
तं पश्यमानो नृपतिस्तुतोष प्रियमात्मजम्॥ ३७॥
अलंकृतमिवात्मानमादर्शतलसंस्थितम्।
स तं सुस्थितमाभाष्य * पुत्रं पुत्रवतां वरः॥ ३८॥
उवाचेदं वचो राजा देवेन्द्रमिव कश्यपः।
ज्येष्ठायामसि मे पत्न्यां सदृश्यां सदृशः सुतः॥ ३९॥
उत्पन्नस्त्वं गुणैर्ज्येष्ठो मम रामात्मजः प्रियः।
त्वया यतः प्रजाश्चेमाः स्वगुणैरनुरञ्जिताः॥ ४०॥
तस्मात्त्वं पुष्ययोगेन यौवराज्यमवाप्नुहि।
कामतस्त्वं प्रकृत्यैव निर्णीतो गुणवानिति॥ ४१॥
गुणवत्यपि तु स्नेहात् पुत्र! वक्ष्यामि ते हितम्।

ग्रहनक्षत्रादियुक्तमप्याकाशमिन्दुनेव॥ ३७॥

आदर्शतलप्रतिबिम्बितमलङ्कृतमात्मानं पश्यन्निव तं पश्यन्तुतोष। तेन पितृसदृशावयवत्वं सूचितं रामस्य, आभाष्य रामेति सम्बोध्य॥३८॥

तदाह यदुवाच ज्येष्ठायामिति॥ ३९॥

गुणैर्ज्येष्ठोऽतएव मम प्रियः यतस्त्वयेत्यन्वयः॥ ४०॥

पुष्ययोगेन चन्द्रस्य पुष्ययोगोपलक्षितकाले अधिकरणस्य करणत्वविवक्षया तृतीया। प्रकृत्या स्वभावेन कामतः प्रकामं अत्यर्थमिति यावत्॥ ४१॥

---

* "सुस्मितमाभाष्य" इति वा पाठः।

भूयो विनयमास्थाय भव नित्यं जितेन्द्रियः ॥ ४२ ॥
कामक्रोधसमुत्थानि त्यजस्व व्यसनानि च ।
परोक्षया वर्त्तमानो वृत्त्या प्रत्यक्षया तथा ॥ ४३ ॥
अमात्यप्रभृतीः सर्व्वाः प्रजाश्चैवानुरञ्जय ।
कोष्ठागारायुधागारैः कृत्वा सन्निचयान् बहून् ॥ ४४ ॥
इष्टानुरक्तप्रकृतिर्यः पालयति मेदिनीम् ।
तस्य नन्दन्ति मित्राणि लब्ध्वामृतमिवामराः ॥ ४५ ॥

गुणवति सत्यपि स्नेहात्तु स्नेहादेव, विनीत एव सन् भूयोऽधिकं विनयमास्थाय ॥ ४२ ॥

कामजानि स्त्रीद्यूतमृगयामधुसेवनादीनि क्रोधजानि वाक्पारुष्योग्रदण्डत्वार्थदूषणानि व्यसनानि त्यजेथाः तत्रार्थदूषणं पित्रादिसञ्चितार्थस्य नाशनम् । परोक्षया चारमुखतः परोक्षानुभवसिद्धया वृत्त्या स्वपरराष्ट्रवृत्तान्तविचारेण प्रत्यक्षया सदा सभायां स्थित्वा स्वप्रत्यक्षया वृत्त्या प्रजान्यायादिविचारेण युक्तो भव ॥ ४३ ॥

तेनामात्यप्रभृतीरमात्यसेनापति पुरराष्ट्रादिरक्षकपौरजानपदसर्व्वप्रजा अनुरञ्जय च । अयुतनियुतादिसंख्यखर्वादिपरिच्छिन्नधान्यपूर्णानि कोष्ठरूपाण्यगाराणि शस्त्रगृहाणि आयुधागाराणि तैः सह । सम्यक् निचीयन्तेऽस्मिन्निति सन्निचया रत्नहेमाभरणरजतवस्त्रादिकोषगृहाणि बहूनि विपुलानि कृत्वा संपूर्य प्रजा अनुरञ्जयेति पूर्व्वेणान्वयः ॥ ४४ ॥

स्वस्य इष्टाः स्वस्मिन् अनुरक्ताः प्रकृतयः प्रजा यस्य तस्य मित्राणि अमृतं लब्ध्वा अमरा इव तं लब्ध्वा नन्दन्ति ॥ ४५ ॥

तस्मात् पुत्र ! त्वमात्मानं नियम्यैवं समाचर।
तच्छ्रुत्वा सुहृदस्तस्य रामस्य प्रियकारिणः ॥ ४६ ॥
त्वरिताः शीघ्रमागत्य कौशल्यायै न्यवेदयन्।
सा हिरण्यञ्च गाश्चैव रत्नानि विविधानि च ॥ ४७ ॥
व्यादिदेश प्रियाख्येभ्यः कौशल्या प्रमदोत्तमा।
अथाभिवाद्य राजानं रथमारुह्य राघवः।
ययौ स्वं द्युतिमद्वेश्म जनौघैः प्रतिपूजितः ॥ ४८ ॥
ते चापि पौरा नृपतेर्वचस्तत्
श्रुत्वा तदा लाभमिवेष्टमाशु।
नरेन्द्रमामन्त्र्य गृहाणि गत्वा
देवान् समानर्चुरभिप्रहृष्टाः ॥ ४९ ॥

## इत्यार्षे रामायणे वाल्मीकीये अयोध्याकाण्डे दशरथानुशासनं नाम तृतीयः सर्गः ॥ ३ ॥

तत् अभिषेकप्रयोजनं पितुरुपदेशम् ॥ ४६ ॥ ४७ ॥
प्रियाख्येभ्यः रामाभिषेकरूपप्रियवक्तृभ्यः ॥ ३८ ॥
इष्टं लाभमिव स्वेष्टवस्तुप्राप्तिरूपमिव आनर्चुः रामाभिषेकनिर्विघ्नतायै ॥ ४९ ॥

इति रामाभिरामे श्रीरामीये रामायणतिलके
अयोध्याकाण्डे तृतीयः सर्गः।

## चतुर्थः सर्गः।

गतेष्वथ नृपो भूयः पौरेषु सह मन्त्रिभिः।
मन्त्रयित्वा ततश्चक्रे निश्चयज्ञः स निश्चयम् ॥ १ ॥
श्वएव पुष्यो भविता श्वोऽभिषेच्यस्तु मे सुतः।
रामो राजीवपत्राक्षो युवराज * इति प्रभुः ॥ २ ॥
अथान्तर्गृहमाविश्य राजा दशरथस्तदा।
सूतमामन्त्रयामास रामं पुनरिहानय ॥ ३ ॥
प्रतिगृह्य तु तद्वाक्यं सूतः पुनरुपाययौ।
रामस्य भवनं शीघ्रं राममानयितुं पुनः ॥ ४ ॥

निश्चयज्ञः तत्तत्कार्य्यार्हदेशकालनियमज्ञः निश्चयं रामाभिषेककाल-विषयम् ॥ १ ॥

तदाह,—श्व एवेति। युवराजः इति प्रभुरिति निश्चयमिति पूर्व्वेणा-न्वयः। उभाभ्यां प्रजान्यायदर्शनदानदण्डादिषु अयमेवाधिकारीति सूचि-तम् ॥ २ ॥

आमन्त्रयामास आनयेत्याज्ञापयामास ॥ ३ ॥

पूर्व्वागमनापेक्षया पूर्व्वानयनापेक्षया पुनस्त्वम् ॥ ४ ॥

---

* "यौवराज्ये" इति वा पाठः।

द्वास्थैरावेदितं तस्य रामायागमनं पुनः ।
श्रुत्वैव चापि रामस्तं प्राप्तं शङ्कान्वितोऽभवत् ॥ ५ ॥
प्रवेश्य चैनं त्वरितो * रामो वचनमब्रवीत् ।
यदागमनकृत्यन्ते भूयस्तद् ब्रूह्यशेषतः ॥ ६ ॥
तमुवाच ततः सूतो राजा त्वां द्रष्टुमिच्छति ।
श्रुत्वा प्रमाणं तत्र त्वं गमनायेतराय वा ॥ ७ ॥
इति सूतवचः श्रुत्वा रामोपि त्वरयान्वितः ।
प्रययौ राजभवनं पुनर्द्रष्टुं नरेश्वरम् ॥ ८ ॥
तं श्रुत्वा समनुप्राप्तं रामं दशरथो नृपः ।
प्रवेशयामास गृहं विवक्षुः प्रियमुत्तमम् ॥ ९ ॥
प्रविशन्नेव च श्रीमान् राघवो भवनं पितुः ।

आवेदितं विज्ञापितं प्राप्तं पुनरागतम् शङ्कान्वितः राज्ञः आपच्छङ्कान्वितः ॥ ५ ॥ ६ ॥

ततः रामोक्तिश्रवणानन्तरं, श्रुत्वा राजोक्तार्थानुवादिनीं मदुक्तिं तत्र राजसन्निधौ इतरायागममनाय असर्वनामत्वमार्षम् । प्रमाणं निर्णेता ॥ ७ ॥ ८ ॥

प्रियं स्वप्रियम् ॥ ९ ॥

---

* "त्वरितम्" इति वा पाठः ।

ददर्श पितरं दूरात् प्रणिपत्य कृताञ्जलिः ॥ १० ॥
प्रणमन्तं समुत्थाप्य सम्परिष्वज्य भूमिपः ।
प्रदिश्य चासनं चास्मै रामञ्च पुनरब्रवीत् * ॥ ११ ॥
राम ! वृद्धोऽस्मि दीर्घायुर्भुक्ता भोगा यथेप्सिताः ।
अन्नवद्भिः क्रतुशतैर्यथेष्टं भूरिदक्षिणैः ॥ १२ ॥
जातमिष्टमपत्यं मे त्वमद्यानुपमं भुवि ।
दत्तमिष्टमधीतञ्च मया पुरुषसत्तम ! ॥ १३ ॥
अनुभूतानि चेष्टानि मया वीर ! सुखान्यपि ।
देवर्षिपितृविप्राणामनृणोऽस्मि तथात्मनः ॥ १४ ॥

दूरात्प्रणिपातः किं वदिष्यतीति भीत्या ॥ १० ॥

प्रणमन्तं समुत्थाप्य तं परिष्वज्येत्यन्वयः । प्रदिश्य हस्तेन दर्शयित्वा चात् वचसाप्युक्त्वा अस्मै रामाय चात् सुमन्त्राय रामञ्च रामन्तु ॥ ११ ॥

यथा ईप्सितास्तथा भुक्ताः । "विधिहीनमसृष्टान्नं मन्त्रहीनमदक्षिणम् । श्रद्धाविरहितं यज्ञं तामसं परिचक्षते" इत्युक्तेरन्नवदादिविशेषणम् । यथा यथावत् इष्टं देवानां पूजनं कृतम् ॥ १२ ॥

इष्टं वस्तु दत्तम् ॥ १३ ॥

यागाध्ययनपुत्रदानोपभोगैः पञ्चभिः देवर्षिपितृविप्राणामात्मनश्चेत्येवं पञ्चानामनृणोऽस्मि आत्मा सेन्द्रियग्रामो जीवः तस्य तत्तत्सुखाधि-

* "प्रदिश्य चास्मै रुचिरं आसनं पुनरब्रवीत्" इति वा पाठः।

न किञ्चिन्मम कर्त्तव्यं तवान्यत्राभिषेचनात्।
अतो यत्त्वामहं ब्रूयां तन्मे त्वं कर्त्तुमर्हसि ॥ १५ ॥
अद्य प्रकृतयः सर्व्वास्त्वामिच्छन्ति नराधिपम्।
अतस्त्वां युवराजानमभिषेक्ष्यामि पुत्रक ! ॥ १६ ॥
अपि चाद्याशुभान् पुत्र ! स्वप्नान् पश्यामि राघव ! ।
सनिर्घाता दिवोल्काश्च * पतन्ति हि महास्वनाः ॥ १७ ॥
अवष्टब्धञ्च मे राम ! नक्षत्रं दारुणग्रहैः।
आवेदयन्ति दैवज्ञाः सूर्य्याङ्गारकराहुभिः ॥ १८ ॥
प्रायेणैव निमित्तानामीदृशानां समुद्भवे।
राजा हि मृत्युमाप्नोति घोरां चापदमृच्छति ॥ १९ ॥

कारित्वात्तददाने ऋणित्वमर्थसिद्धन्तेन सर्वऋणादिनिर्मुक्तोऽस्मीति भावः। ऋणत्रयं विप्रस्य देवर्षि जीवनस्यान्तर्भावं कृत्वा ऋणानि त्रीण्यपाकृत्येति स्मृतिवादः ॥ १४ ॥

यद्ब्रूयां तन्मे वचः कर्त्तुमर्हसि अविलम्बेनेतिशेषः ॥ १५ ॥ १६ ॥

अविलम्बकरणे हेत्वन्तरमाह,—अपिचेति। अशुभान् अशुभसूचकान् सनिर्घाताः अशनिपातसहिताः दिवोल्काः दिव उल्काः सन्धिरार्षः दिवा दिवसे इत्यन्ये। उल्का ज्वालाः पतन्ति ॥ १७ ॥

नक्षत्रं जन्मर्क्षम् अवष्टब्धमाक्रान्तम् ॥ १८ ॥

---

* "महोल्काश्च" इति वा पाठः।

तत् यावदेव मे चेतो न विमुह्यति राघव ! ।
तावदेवाभिषिञ्चस्व चला हि प्राणिनां मतिः ॥ २० ॥
अद्य चन्द्रोऽभ्युपगमत् पुष्यात् पूर्वं पुनर्वसुम् ।
श्वः पुष्ययोगं नियतं वक्ष्यन्ते दैवचिन्तकाः ॥ २१ ॥
तत्र पुष्येऽभिषिञ्चस्व मनस्त्वरयतीव माम् ।
श्वस्त्वाहमभिषेक्ष्यामि यौवराज्ये परन्तप ! ॥ २२ ॥
तस्मात्त्वयाद्यप्रभृति निशेयं नियतात्मना ।
सह वध्वोपवस्तव्या दर्भप्रस्तरशायिना ॥ २३ ॥
सुहृदश्चाप्रमत्तास्त्वां रक्षन्त्वद्य समन्ततः ।

घोरामापदम् ऋच्छति पूर्वं ततो मृत्युं चाप्नोतीत्यर्थः ॥ १९ ॥

तत्तस्माद्यावन्मे चेतो न विमुह्यति त्वदभिषेकविमुखं न भवति तावत् ततः पूर्वमेवाभिषिञ्चस्व कृताभिषेकमात्मानं कुरु ननु ते चेतसः कामदभिषेकवैमुख्यचिन्ता ? तत्राह,—चला हीति । त्वद्विमातृतत्पुत्रोपजापस्य सम्भावितत्वात्तदेव वक्ष्यति,—विप्रोषितश्च भरत इत्यादिना ॥ २० ॥

पुष्ययोगं चन्द्रस्य नियतं शुद्धगणितनिश्चितं अभिषेके प्रशस्तं वा दैवचिन्तकाः ज्योतिर्विदः वक्ष्यन्ते वदन्तीत्यर्थे आर्षम् ॥ २१ ॥

अभिषिञ्चस्व अभिषिक्तो भव मे मनः चित्तं मां त्वरयतीव त्वदभिषेकार्थमिति शेषः ॥ २२ ॥

अद्यप्रभृति प्रदोषमारभ्य । अनेनाह्निर्भोजनरूपः प्रागिदननियमो दर्शितः ॥ २३ ॥

भवन्ति बहुविघ्नानि कार्य्याण्येवंविधानि हि ॥ २४ ॥
विप्रोषितश्च भरतो यावदेव पुरादितः।
तावदेवाभिषेकस्ते प्राप्तकालो मतो मम ॥ २५ ॥
कामं खलु सतां वृत्ते भ्राता ते भरतः स्थितः।
ज्येष्ठानुवर्त्ती धर्मात्मा सानुक्रोशो जितेन्द्रियः ॥ २६ ॥
किं तु चित्तं मनुष्याणामनित्यमिति मे मतम्।
सताञ्च धर्मनित्यानां कृतशोभि च राघव ! ॥ २७ ॥
इत्युक्तः सोऽभ्यनुज्ञातः श्वो भाविन्यभिषेचने।
व्रजेति रामः पितरमभिभाष्या*भ्ययात् गृहम् ॥ २८ ॥

रक्षणे हेतुर्भवन्तीत्यादि। एवंविधानि शुभोदर्काणि। बहुविघ्नानीति बहुव्रीहिः ॥ २४ ॥

इतः पुरात् अस्मात् पुरात्। यावद्विप्रोषित एव तिष्ठति तावदेव विप्रोषितस्य तस्यागमनात्पूर्वमेव प्राप्तकालः योग्यः अन्यथा भरतः प्रतिबध्नीयादिति भावः ॥ २५ ॥

ननु भरते एषा शङ्का न युक्तेत्यत आह,—काममिति। यद्यपीत्यर्थः ॥ २६ ॥

किंतु इति तथापीत्यर्थः। मनुष्याणां चित्तं स्नेहादिदमपि अनित्यं विकारनिमित्ते सति विक्रीयेतैवेत्यर्थः। यतः सतां धर्मनित्यानामपि चित्तं

* "अभिवाद्य" इति वा पाठः।

प्रविश्य चात्मनो वेश्म राज्ञा दिष्टे*ऽभिषेचने ।
तत्क्षणादेव † निष्क्रम्य मातुरन्तःपुरं ययौ ॥ २९ ॥
तत्र तां प्रवणामेव मातरं क्षौमवासिनीम् ।
वाग्यतां देवतागारे ददर्शायाचतीं श्रियम् ॥ ३० ॥
प्रागेव चागता तत्र सुमित्रा लक्ष्मणस्तथा ।
सीता चानायिता श्रुत्वा प्रियं रामाभिषेचनम् ॥ ३१ ॥
तस्मिन् कालेऽपि कौशल्या तस्थावामीलितेक्षणा ।
सुमित्रयान्वास्यमाना सीतया लक्ष्मणेन च ॥ ३२ ॥

तत् तन्निमित्तकृतेन रागद्वेषादिना शोभते युज्यते तथा । न तु सर्वथा-स्वतो नियतकिञ्चित्स्वभावमित्यर्थः ॥ २७ ॥

अभिषेचने अभिषेचनविषये इत्युक्तो प्रजेत्यभ्यनुज्ञात इति सम्बन्धः। अभिभाष्य आमन्त्र्य ॥ २८ ॥

राज्ञा दिष्टे आज्ञप्तेऽभिषेचने सीतायै तदपेक्षितराजोपदिष्टस-भार्योपवासानुष्ठाननिवेदनाय स्वगृहं प्रविश्य तत्र सीतामदृष्ट्वा तत्क्षणा-देव मातुरन्तःपुरं ययौ ॥ २९ ॥

प्रवणां देवताराधनतत्पराम् । आयाचतीमिति च्छेदः, श्रियं रामाय राज्यलक्ष्मीम् ॥ ३० ॥

आनायिता कौशल्ययेति शेषः ॥ ३१ ॥

---

* "राज्ञोद्दिष्टे" इति वा पाठः ।

† "तत्क्षणेन स" इति वा पाठः ।

श्रुत्वा पुष्येण पुत्रस्य यौवराज्याभिषेचनम्।
प्राणायामेन पुरुषं ध्यायमाना जनार्द्दनम्॥ ३३॥
तथा सनियमामेव सोऽभिगम्याभिवाद्य च।
उवाच वचनं रामो हर्षयंस्तामिदं वरम् * ॥ ३४॥
अम्ब! पित्रा नियुक्तोऽस्मि प्रजापालनकर्म्मणि।
भविता श्वोऽभिषेको मे यथा मे शासनं पितुः॥ ३५॥
सीतयाप्युपवस्तव्या रजनीयं मया सह।
एवमुक्तमुपाध्यायैः स हि † मामुक्तवान् पिता॥ ३६॥
यानि यान्यत्र योग्यानि श्वोभाविन्यभिषेचने।
तानि मे मङ्गलान्यद्य वैदेह्याश्चैव कारय॥ ३७॥

तस्मिन् कालेऽपि रामागमनविशिष्टे कालेऽपि आमीलितेक्षणा ध्यानवशात् अन्वास्यमाना उपास्यमाना॥ ३२॥

पुष्येणेति पाठे तद्युक्तकालस्याधिकरणस्यापि करणत्वविवक्षा बोध्या॥३३॥

वरं श्रेष्ठम् अतएव हर्षयन्॥ ३४॥

यथा मे पितुः स्वसम्बन्धेन राज्ञो दशरथस्यात्युत्कृष्टत्वध्वननम्। शासनमाज्ञा, तथा श्वो मेऽभिषेको भवितेति सम्बन्धः॥ ३५॥

स हीति। हिरप्यर्थे स पितापि मामेवमुक्तवान् इत्यर्थः॥ ३६॥

मङ्गलानि मङ्गलगन्धमाल्याभरणादिरूपाणि मङ्गलस्नानादीनि च॥३७॥

---

* "तदा" इति वा पाठः।

† "एवमृत्विगुपाध्यायैः सह" इति वा पाठः।

एतच्छ्रुत्वा तु कौशल्या चिरकालाभिकांक्षितम् ।
हर्षवाष्पाकुलं वाक्यमिदं राममभाषत ॥ ३८ ॥
वत्स राम ! चिरं जीव हतास्ते परिपन्थिनः ।
ज्ञातीन् मे त्वं श्रिया युक्तः सुमित्रायाश्च नन्दय ॥३९॥
कल्याणे वत नक्षत्रे मया* जातोऽसि पुत्रक ! ।
येन त्वया दशरथो गुणैराराधितः पिता ॥ ४० ॥
अमोघं वत मे क्षान्तं पुरुषे पुष्करेक्षणे ।
येयमिक्ष्वाकुराज्यश्रीः पुत्र ! त्वां संश्रयिष्यति ॥ ४१ ॥
इत्येवमुक्तो मात्रा तु † रामो भ्रातरमब्रवीत् ।

चिरकालाभिकांक्षितमेतदभिषेकरूपं हर्षजवाष्पेणाकुलमव्यक्तमधुरम् ॥ ३८ ॥

हताः भवन्त्विति शेषः । मे मम सुमित्रायाश्च ज्ञातीन् बन्धूनभिनन्दय ॥ ३९ ॥

कल्याणे नक्षत्रे । शुभयुक्ते काले जातो जनितः येन शुभकालजननेन ॥ ४० ॥

पुष्करनेत्रे पुरुषे विष्णौ यन्मे क्षान्तं कामं परित्यज्य तत्प्रीतिमात्रफलकं व्रतोपवासादिकृतं तदमोघं सफलं जायते । वतेति हर्षे, साफल्ये हेतुर्येयमित्यादि इदमभाषतेत्यन्वयः ॥ ४१ ॥

---

* "मयि" इति वा पाठः ।

† "मात्रेद" इति वा पाठः ।

प्राञ्जलिं प्रह्वमासीनमभिवीक्ष्य स्मयन्निव ॥ ४२ ॥
लक्ष्मणेमां मया सार्द्धं प्रशाधि त्वं वसुन्धराम् ।
द्वितीयं मेऽन्तरात्मानं त्वामियं श्रीरुपस्थिता ॥ ४३ ॥
सौमित्रे! भुंक्ष्व भोगांस्त्वमिष्टान् राज्यफलानि च ।
जीवितञ्चापि राज्यञ्च त्वदर्थमभिकामये ॥ ४४ ॥
इत्युक्त्वा लक्ष्मणं रामो मातरावभिवाद्य च ।
अभ्यनुज्ञाप्य सीतां च ययौ स्वं च निवेशनम् ॥ ४५ ॥

इत्यार्षे रामायणे वाल्मीकीये अयोध्याकाण्डे
रामराज्योपनिमन्त्रणं नाम
चतुर्थः सर्गः ॥४॥

स्मयन्निव । ईषद्धसन्निवेत्यर्थः ॥ ४२ ॥

स्वनिविष्टं राज्यं सौभ्रात्रेण साधारणं करोति लक्ष्मणेति ॥ ४३ ॥

राज्यफलरूपानिष्टान्मनोऽनुकूलान् भोगान् विषयान् यद्वा राज्यफलानि धर्मार्थौ तौ च प्राप्नुहि । त्वदर्थं न स्वप्रयोजनाय ॥ ४४ ॥

सीताच्च स्वच्च अभ्यनुज्ञाप्य सीतायै स्वस्मै च मातृभ्यामनुज्ञां दापयित्वा निवेशनं स्वगृहं ययौ चकारार्थे ॥ ४५ ॥

इति रामाभिरामे श्रीरामीये रामायणतिलके
अयोध्याकाण्डे चतुर्थः सर्गः ॥ ४ ॥

## पञ्चमः सर्गः ।

सन्दिश्य रामं नृपतिः श्वोभाविन्यभिषेचने ।
पुरोहितं समाहूय वसिष्ठमिदमब्रवीत् ॥ १ ॥
गच्छोपवासं काकुत्स्थं कारयाद्य तपोधन ! ।
श्रेयसे राज्यलाभाय वध्वा सह यतव्रत ! * ॥ २ ॥
तथेति च स राजानमुक्त्वा वेदविदां वरः ।
स्वयं वसिष्ठो भगवान् ययौ रामनिवेशनम् ॥ ३ ॥
उपवासयितुं वीरं मन्त्रविन्मन्त्रकोविदम् ।
ब्राह्मं रथवरं युक्तमास्थाय सुदृढव्रतः † ॥ ४ ॥
स रामभवनं प्राप्य पाण्डुराभ्रघनप्रभम् ।

सन्दिश्य रामं उपवासादि कुर्वित्युक्त्वा ॥ १ ॥

गच्छेति । उपवाससङ्कल्पादेः पुरोहितसाध्यत्वादिति भावः । श्रेयसे विघ्ननिवृत्तिरूपश्रेयोऽर्थम् ॥ २ ॥ ३ ॥

ब्राह्मं ब्राह्मणारोहणयोग्यं युक्तम् अश्वैः ययाविति पूर्वणान्वयः ॥४॥

---

* "यतव्रतम्" इति वा पाठः ।

† "सुदृढव्रतः" इति वा पाठः ।

तिस्रः कक्षा रथेनैव विवेश मुनिसत्तमः ॥ ५ ॥
तमागतमृषिं रामस्त्वरन्निव ससम्भ्रमम्।
मानयिष्यन् स मानार्हं निश्चक्राम निवेशनात् ॥ ६ ॥
अभ्येत्य त्वरमाणोऽथ रथाभ्याशं मनीषिणः।
ततोऽवतारयामास परिगृह्य रथात् स्वयम् ॥ ७ ॥
स चैनं प्रश्रितं दृष्ट्वा सम्भाष्याभिप्रसाद्य च।
प्रियार्हं हर्षयन् राममित्युवाच पुरोहितः ॥ ८ ॥
प्रसन्नस्ते पिता राम! यत्त्वं राज्यमवाप्स्यसि।
उपवासं भवानद्य करोतु सह सीतया ॥ ९ ॥
प्रातस्त्वामभिषेक्ता हि यौवराज्ये नराधिपः।
पिता दशरथः प्रीत्या ययातिं नहुषो यथा ॥ १० ॥
इत्युक्त्वा स तदा रामसुपवासं यतव्रतः * ।

पाण्डुराभ्रवत् निविड़प्रभम् कक्षाः द्वाराणि ॥ ५ ॥
त्वरन्निव त्वरन्नेव। ससंभ्रमं ससादरम् ॥ ६ ॥
परिगृह्य हस्तेन हस्ते धृत्वा ॥ ७ ॥
सम्भाष्य वत्सेत्यादि सम्बोध्य। अभिप्रसाद्य स्तुतिभिरिति शेषः।
प्रियार्हं प्रियोक्त्यर्हम् ॥ ८ ॥ ९ ॥
अभिषेक्ता लुट् ॥ १० ॥

* "यतव्रतम्" इति वा पाठः।

मन्त्रवत् *कारयामास वैदेह्या सहितं शुचिः † ॥ ११ ॥
ततो यथावद्रामेण स राज्ञो गुरुरर्च्चितः ।
अभ्यनुज्ञाप्य काकुत्स्थं ययौ रामनिवेशनात् ॥ १२ ॥
सुहृद्भिस्तत्र रामोऽपि सहासीनः प्रियंवदैः ।
सभाजितो विवेशाथताननुज्ञाप्य सर्व्वशः ॥ १३ ॥
हृष्टनारीनरयुतं ‡ रामवेश्म तदा बभौ ।
यथा मत्तद्विजगणं प्रफुल्लनलिनं सरः ॥ १४ ॥
स राजभवनप्रख्यात् तस्माद्रामनिवेशनात् ।
निर्गत्य ¶ ददृशे मार्गं वसिष्ठो जनसंवृतम् ॥ १५ ॥
वृन्दवृन्दैरयोध्यायां राजमार्गाः समन्ततः ।

राममुपवासं तत्सङ्कल्पं कारयामासेति कृञोरिति द्विकर्म्मकत्वं ॥ ११ ॥
राज्ञो दशरथस्य ॥ १२ ॥
प्रियंवदैः सुहृद्भिः सभाजितः पूजितः विवेश स्ववेश्म तान् सुहृदः ॥ १३ ॥ १४ ॥
राजभवनं मूलराजभवनम् । प्रख्यं सदृशम् ॥ १५ ॥

---

* "मन्त्रवित्" इति वा पाठः ।
† "मुनिः" इति वा पाठः ।
‡ "प्रहृष्टनरनारीकम्" इति वा पाठः ।
¶ "निःसृत्य" इति वा पाठः ।

बभूवुरभिसम्बाधाः कुतूहलजनैर्वृताः ॥ १६ ॥
जनवृन्दोर्मिसङ्घर्षहर्षस्वनवतस्तदा।
बभूव राजमार्गस्य सागरस्येव निःस्वनः ॥ १७ ॥
सिक्तसंमृष्टरथ्या हि तथा च वनमालिनी।
आसीदयोध्या तदहः समुच्छ्रितगृहध्वजा ॥ १८ ॥
तदाह्ययोध्यानिलयः सस्त्रीबालाकुलो जनः।
रामाभिषेकमाकांक्षन्नाकांक्षन्नुदयं रवेः ॥ १९ ॥
प्रजालङ्कारभूतं च जनस्यानन्दवर्द्धनम्।
उत्सुकोऽभूज्जनो द्रष्टुं तमयोध्यामहोत्सवम् * ॥ २० ॥

वृन्दानां वृन्दैः अभिसम्बाधाः संमर्दयुक्ताः कुतूहलजनैः रामाभिषेकदर्शनजकौतुकसम्पन्नैर्जनैः ॥ १६ ॥

जनवृन्दान्येवोर्मयस्तेषां सङ्घर्षोऽन्योऽन्यसङ्घर्षणं तेन हर्षेण जातो यः स्वनस्तद्वतः ॥ १७ ॥

सिक्ताः सुगन्धिजलसिक्ताः संमृष्टाः शोधिताः रथ्याः यस्याम्। तदहस्तस्मिन्नहनि तथा च तथैव वनमालिनी तोरणमालावती। समुच्छ्रिता गृहेषु ध्वजा यस्यां सा ॥ १८ ॥

स्त्रीबालैः सहितस्तासावाकुलः सन्तोषात्संभ्रान्तचित्तः "सस्त्रीबालाबलः" इति पाठे अबला वृद्धाः स्त्रीबालवृद्धसहितो जन इत्यर्थः। रामाभिषेकमाकाङ्क्षन् द्रष्टुमिच्छन् रवेरुदयमाकाङ्क्षन्नभूदिति शेषः ॥ १९ ॥

---

* "अयोध्यायां महोत्सवम्" इति वा पाठः।

एवं तु जनसम्बाधं राजमार्गं पुरोहितः ।
व्यूहन्निव जनौघं तं शनै राजकुलं ययौ ॥ २१ ॥
सिताभ्रशिखरप्रख्यं प्रासादमधिरुह्य सः ।
समीयाय नरेन्द्रेण शक्रेणेव वृहस्पतिः ॥ २२ ॥
तमागतमभिप्रेक्ष्य हित्वा राजासनं नृपः ।
पप्रच्छ स्वमतं तस्मै कृतमित्यभ्यवेदयत् ॥ २३ ॥
तेन चैव तदा तुल्यं सहासीनाः सभासदः ।
आसनेभ्यः समुत्तस्थुः पूजयन्तः पुरोहितम् ॥ २४ ॥
गुरुणात्वभ्यनुज्ञातो मनुजौघं विसृज्य तम् ।
विवेशान्तःपुरं राजा सिंहो गिरिगुहामिव ॥ २५ ॥

महोत्सवं रामाभिषेकसम्भ्रमम् ॥ २० ॥

व्यूहन्निव राजमार्गं व्याप्य स्थितानेकतः कुर्वन्निव * ॥ २१ ॥

सिताभ्रसदृशं हिमगिरिशिखरसदृशम् ॥ २२ ॥

राजासनं हित्वा प्रत्युत्थायेत्यर्थः । स्वमतं स्वानुमतं कृत्यं ,पप्रच्छ स च यदाज्ञप्तं तत्कृतमिति न्यवेदयत् ॥ २३ ॥

तुल्यं तुल्यकालम् ॥ २४ ॥

अभ्यनुज्ञातः सर्व्वस्य कर्तव्यस्य कृतत्वाद्विश्रम्यतामित्युक्तः ॥ २५ ॥

---

* "विभजन्" इति वा ।

तदग्रवेश्मप्रमदाजनाकुलं
महेन्द्रवेश्मप्रतिमं निवेशनम् ।
व्यदीपयंश्चारु विवेश पार्थिवः
शशीव तारागणसंकुलं नभः ॥ २६ ॥

इत्यार्षे रामायणे वाल्मीकीये अयोध्याकाण्डे
रामाभिषेकोपवासविधानं नाम
पञ्चमः सर्गः ॥५॥

अग्र्य उत्तमः ॥ २६ ॥

इति रामाभिरामे श्रीरामीये रामायणतिलके
अयोध्याकाण्डे पञ्चमः सर्गः ॥ ५ ॥

## षष्ठः सर्गः ।



गते पुरोहिते रामः स्नातो नियतमानसः ।
सह पत्न्या विशालाक्ष्या नारायणमुपागमत् ॥ १ ॥
प्रगृह्य शिरसा पात्रीं हविषो विधिवत् ततः * ।
महते दैवतायाज्यं जुहाव ज्वलितानले ॥ २ ॥
शेषञ्च हविषस्तस्य प्राश्याशास्यात्मनः प्रियम् ।
ध्यायन्नारायणं देवं स्वास्तीर्णे कुशसंस्तरे ॥ ३ ॥

आदरात् पुनरभिषेकसामग्रीवर्णनम् । उपागमत् उपासाञ्चक्रे नारं जीवसमूहोऽयनमन्तर्यामितया स्थानं यस्य तेनांतर्यामिणमित्यर्थः ॥ १ ॥

शिरसा पात्रीं परिगृह्य नमस्कारपूर्वमित्यर्थः । महते दैवताय नारायणाय ॥ २ ॥

आशास्य प्रार्थ्य । आत्मनः प्रियं राज्याभिषेकाविघ्नरूपं , वस्तुतो रावणवधफलकवनगमनरूपमाशास्य सङ्कल्प्येत्यर्थः । वैदेह्या सहेत्यचाप्यपक्षस्थ्यम् । नहि चतुर्दशभुवनाधिपतेरेतद्यौवराज्यं प्रियं भवति । तत्कालतद्देशमनुष्यप्रियत्वादात्मन इत्यस्य वैफल्यं चाद्य व्याख्याने प्राप्नोतीति दिक् । कुशसंस्तरे कुशमयशयनीये ॥ ३ ॥

---

* "तदा" इति वा पाठः ।

वाग्यतः सह वैदेह्या भूत्वा नियतमानसः।
श्रीमत्यायतने विष्णोः शिश्ये नरवरात्मजः॥ ४॥
एकयामावशिष्टायां रात्र्यां प्रतिविबुध्य सः।
अलङ्कारविधिं सम्यक् कारयामास वेश्मनः॥ ५॥
ततः शृण्वन् सुखा वाचः सूतमागधवन्दिनाम्।
पूर्वां सन्ध्यामुपासीनो जजाप सुसमाहितः *॥ ६॥
तुष्टाव प्रणतश्चैव शिरसा मधुसूदनम्।
विमलक्षौमसंवीतो वाचयामास स द्विजान्॥ ७॥
तेषां पुण्याहघोषोऽथ गम्भीरमधुरस्तथा।
अयोध्यां पूरयामास तूर्यघोषानुनादितः॥ ८॥
कृतोपवासं तु तदा वैदेह्या सह राघवम्।
अयोध्यानिलयः श्रुत्वा सर्वः प्रमुदितो जनः॥ ९॥

नियतमीश्वरमात्रविषयं विष्णोरायतने निजभवनवर्त्तिनि देवपूजालये॥ ४॥ ५॥

सूताः पौराणिका मागधा वंशावलीकीर्तका वन्दिनः स्तुतिपाठकाः पूर्वां सन्ध्यामुपासीनस्तदुपासनं कुर्व्वन्। जजाप गायत्रीजपस्यैव तदुपासनरूपत्वात्॥ ६॥

वाचयामास स्वस्तिवाचनं पुण्याहञ्च॥ ७॥

तूर्य्यघोषानुनादितः तूर्य्यघोषेण सञ्जातानुनादः॥ ८॥ ९॥

* "यतमानसः" इति वा पाठः।

ततः पौरजनः सर्वः श्रुत्वा रामाभिषेचनम् ।
प्रभातां रजनीं दृष्ट्वा चक्रे शोभयितुं पुरीम् ॥ १० ॥
सिताभ्र*शिखराभेषु देवतायतनेषु च ।
चतुष्पथेषु रथ्यासु चैत्येष्वट्टालकेषु च ॥ ११ ॥
नानापण्यसमृद्धेषु वणिजामापणेषु च ।
कुटुम्बिनां समृद्धेषु श्रीमत्सु भवनेषु च ॥ १२ ॥
सभासु चैव सर्वासु वृक्षेष्वालक्षितेषु च ।
ध्वजाः समुच्छ्रिताः साधु पताकाश्चाभवंस्तथा ॥ १३ ॥
नटनर्तकसङ्घानां गायकानां च गायताम् ।
मनःकर्णसुखा वाचः शुश्राव जनता ततः ॥ १४ ॥
रामाभिषेकयुक्ताश्च कथाश्चक्रुर्मिथो जनाः ।
रामाभिषेके संप्राप्ते चत्वरेषु गृहेषु च ॥ १५ ॥

शोभयितुमलंकर्तुं चक्रे बुद्धिमिति शेषः ॥ १० ॥
अट्टालकाः प्राकारोपरितनयुद्धस्थानानीति केचित् ॥ ११ ॥ १२ ॥
आलक्षितेषु सर्वतो लक्षितेषु अत्युच्चेष्विति यावत् । ध्वजाः सचि-
पताकाश्चिह्नरहिता इत्याहुः ॥ १३ ॥
नटाः सूत्रधाराः । जनता जनसमूहः । ततस्तत्रायोध्यायाम् ॥१४॥१५॥

---

* "शुभाभ्र" इति वा पाठः ।

बाला अपि क्रीड़माना गृहद्वारेषु सङ्घशः।
रामाभिषवसंयुक्ताः* चक्रुरेव कथा मिथः॥ १६॥
कृतपुष्पोपहारश्च धूपगन्धाधिवासितः।
राजमार्गः कृतः श्रीमान् पौरै रामाभिषेचने॥ १७॥
प्रकाशीकरणार्थं च निशागमनशङ्कया।
दीपवृक्षांस्तथा चक्रुरनुरथ्यासु सर्वशः॥ १८॥
अलङ्कारं पुरस्यैवं कृत्वा तत्पुरवासिनः।
आकांक्षमाणा रामस्य यौवराज्याभिषेचनम्॥ १९॥
समेत्य सङ्घशः सर्वे चत्वरेषु सभासु च।
कथयन्तो मिथस्तत्र प्रशशंसुर्जनाधिपम्॥ २०॥
अहो! महात्मा राजायमिक्ष्वाकुकुलनन्दनः।
ज्ञात्वा वृद्धं स्वमात्मानं रामं राज्येऽभिषेक्ष्यति॥ २१॥

रामाभिषवः रामाभिषेकः॥ १६॥ १७॥

अभिषेकानन्तरं गजस्कन्धाधिरूढस्य नगरालङ्कारदर्शनार्थनिर्गमनात् पूर्वं यदि निशा नयति तदा तदलङ्कारप्रदर्शनार्थं स्वयं रामन्द्रष्टुञ्च दीपवृक्षान् वृक्षवन्नानाशाखान्दीपस्तम्भान्। अनुरथ्यासु रथ्यापार्श्वयोः॥ १८॥ १९॥ २०॥ २१॥

---

* "रामाभिष्टवसंयुक्ताः" इति वङ्गीयाः।

सर्वे ह्यनुगृहीताः स्म यन्नो रामो महीपतिः।
चिराय भविता गोप्ता दृष्टलोकपरावरः॥ २२॥
अनुद्धतमना विद्वान् धर्मात्मा भ्रातृवत्सलः।
यथा च भ्रातृषु स्निग्धस्तथास्मास्वपि राघवः॥ २३॥
चिरं जीवतु धर्मात्मा राजा दशरथोऽनघः।
यत्प्रसादेनाभिषिक्तं रामं द्रक्ष्यामहे वयम्॥ २४॥
एवंविधं कथयतां पौराणां शुश्रुवुः परे।
दिग्भ्यो विश्रुतवृत्तान्ताः प्राप्ता जानपदा जनाः॥ २५॥
ते तु दिग्भ्यः पुरीं प्राप्ता द्रष्टुं रामाभिषेचनम्।
रामस्य पूरयामासुः पुरीं जानपदा जनाः॥ २६॥
जनौघैस्तैर्विसर्पद्भिः शुश्रुवे तत्र निःस्वनः।
पर्वसूदीर्णवेगस्य सागरस्येव निःस्वनः*॥ २७॥

अनुगृहीता ईश्वरेण, दृष्टलोकपरावरो भावप्रधानो निर्देशः यथावदवगतजनप्राशस्त्याप्राशस्त्यः॥ २२॥ २३॥ २४॥

शुश्रुवुः कथा इति शेषः। श्रुतवृत्तान्ताः श्रुतरामाभिषेकवृत्तान्ताः॥ २५॥

ते जानपदाः रामस्य पुरीमित्यन्वयः॥ २६॥

विसर्पद्भिः प्रवेशार्थम्॥ २७॥

---

* "सागरस्येव भिद्यतः" इति वा पाठः।

ततस्तदिन्द्रक्षयसन्निभं पुरं
दिदृक्षुभिर्जानपदैरुपाहितैः।
समन्ततः सस्वनमाकुलं बभौ
समुद्रयादोभिरिवार्णवोदकम् ॥ २८ ॥

इत्यार्षे रामायणे वाल्मीकीये अयोध्याकाण्डे रामस्य राज्याभिषेकप्रस्तावे पौराणां हर्षो नाम षष्ठः सर्गः ॥ ६ ॥

इन्द्रक्षय इन्द्रनिवासः अमरावती। आहितैः आगतैरित्यर्थः। हि गता-वित्यस्य रूपम्। समुद्रयादोभिः समुद्रतुल्यैर्महद्भिर्यादोभिरित्यर्थः ॥ २८ ॥

इति रामाभिरामे श्रीरामीये रामायणतिलके अयोध्याकाण्डे षष्ठः सर्गः।

## सप्तमः सर्गः ।

ज्ञातिदासी यतो जाता कैकेय्या तु सहोषिता ।
प्रासादं चन्द्रसङ्काशमारुरोह यदृच्छया ॥ १ ॥

अथ सीताया लङ्कापुरप्रवेशं विना रावणवधस्याशक्यतया तत्सि-द्ध्यै देवैः प्रेरितायाः कृतकुब्जावेषाया मन्थराया रामाभिषेकविघ्नप्रवृत्तिं तदाचिगतं कैकयीवृत्तान्तञ्च वक्तुमुपक्रमते,—ज्ञातीत्यादि । "ज्ञाति-दासी यतो नित्यम्" इति पाठे यतः कैकेय्या ज्ञातेः मातृकुलस्य दासी यतश्च कैकेय्या नित्यं सहोषिता, अतः जनकोलाहलं श्रुत्वा कैकेय्यै तदर्थं निवेदयितुं यदृच्छया स्वयमेव न त्वन्यप्रेरणया प्रासादमारुरोहेत्यन्वयः । यत्तु अतः "कुब्जा क्षिप्रममर्षिता" इत्यनेन द्वादशश्लोकस्थपदेनान्वयः श्रीयाभ्युदयस्य सर्वेष्टत्वात् रामाभ्युदयजदुःखेन तद्विघटकोऽमर्ष इति तदसत्, रामाभ्युदयस्याग्रे धात्रीमुखेन श्रवणस्य वक्ष्यमाणतया तस्यैव अमर्षहेतुत्वस्य च वक्ष्यमाणतया अन्यस्य तत्रान्वयानौचित्यात् । यतो जातेति पाठे यतो यत्र कुत्रचिज्जाता अविज्ञातवेश्ममातापितृकेत्यर्थः । एवञ्च कैकेयीज्ञातिदासीत्वमपि कार्य्यार्थमुदरभरणव्याजेन स्वकृतमस्या बोध्यम् इदन्तु युक्तम् ।

"मन्थरा नाम कार्य्यार्थमप्सराः प्रेषिता सुरैः ।
दासी काचन कैकेय्यै दत्ता केकयभूभृता ॥"

इति पाद्मोक्तेः ।

सिक्तराजपथां कृत्स्नां प्रकीर्णकमलोत्पलाम्।
अयोध्यां मन्थरा तस्मात् प्रासादादन्ववैक्षत ॥ २ ॥
पताकाभिर्वरार्हाभिर्ध्वजैश्च समलंकृताम्।
वृतां छन्नपथैश्चापि स्वच्छन्दकपथैर्वृताम्।
सिक्तां चन्दनतोयैश्च शिरस्नातजनैर्युताम् ॥ ३ ॥
माल्यमोदकहस्तैश्च द्विजेन्द्रैरभिनादिताम्।
शुक्लदेवगृहद्वारां सर्ववादित्रनादिताम् ॥ ४ ॥

कार्य्यार्थं रावणबधरूपकार्य्यार्थं दासी स्वयमागत्य कैकयराजस्य जातेति शेषः। नित्यमिति पाठेऽपि जातेति शेषपूरणेनैव व्याख्येयं चित पाद्मैकवाक्यत्वात् चन्द्रसङ्काशं सुधाधवलितत्वात् ॥ १ ॥

प्रकीर्णानि कमलानि उत्पलानि च यस्यां तस्मात्सर्वोत्कृष्टात्प्रासादात्। प्रासादे स्थित्वेत्यर्थः। ल्यब्लोपे पञ्चमी ॥ २ ॥

वरार्हाभिः श्रेष्ठयोग्याभिराजयोग्याभिरिति यावत् एतदुत्तरं "वृतां छन्नपथैश्चापि स्वच्छन्दकपथैर्वृताम्" इत्यर्द्धं पठन्ति छन्नपथैर्निसाम्रतप्रदेशमार्गैः कृतामलङ्कृतां स्वच्छन्दकपथैः उत्सवादिषु जनभूयस्त्वेन स्वैरप्रवेशनिर्गमार्थं प्राकारादिभङ्गेन कृतैर्मार्गैरिति व्याचक्षते च केचित्। चन्दनतोयैः सिक्तां शिरःस्नातजनैः कृताभ्यङ्गस्नानैः ॥ ३ ॥

माल्यमोदकहस्तैः दानप्राप्तमाल्यमोदकहस्तैः रामोपायनमाल्यमोदकरूपमङ्गलद्रव्यहस्तैरित्यर्थो वा। सुधाचन्दनादिलेपेन शुक्लानि देवगृहद्वाराणि यस्याम् ॥ ४ ॥

सम्प्रहृष्टजनाकीर्णां ब्रह्मघोषनिनादिताम् ।
प्रहृष्टवरहस्त्यश्वां सम्प्रणर्दितगोवृषाम् ॥ ५ ॥
हृष्टप्रमुदितैः पौरैरुच्छ्रितध्वजमालिनीम् ।
अयोध्यां मन्थरा दृष्ट्वा परं विस्मयमागता ॥ ६ ॥
सा हर्षोत्फुल्लनयनां पाण्डुरक्षौमवासिनीम् ।
अविदूरे स्थितां दृष्ट्वा धात्रीं पप्रच्छ मन्थरा ॥ ७ ॥
उत्तमेनाभिसंयुक्ता हर्षेणार्थपरा सती ।
राममाता धनं किन्नु जनेभ्यः सम्प्रयच्छति ? ॥ ८ ॥
अतिमात्रः प्रहर्षः किं जनस्यास्य च शंस मे ।
कारयिष्यति किं वापि संप्रहृष्टो महीपतिः ॥ ९ ॥
विदीर्यमाणा हर्षेण धात्री तु परया मुदा ।

ब्रह्मघोषो वेदघोषः । प्रहृष्टेत्यादिना तिरश्चामपि रामाभिषेकाद्धर्ष इति सूचितम् ॥ ५ ॥

हृष्टैर्जातरोमाञ्चादिभिः मुदितैः आनन्दयुक्तैः पौरैरुपलक्षिताम् ॥६॥

अविदूरे स्वाधिरूढहर्म्यात्यासन्नहर्म्ये धात्रीं रामस्येति शेषः । अतएव हर्षोत्फुल्लनयनत्वादि तस्याः वक्ष्यति च हर्षेण विदीर्यमाणेत्यादि ॥ ७ ॥

अर्थपरा स्वेष्टार्थपरा स्वेष्टार्थकामेवेति शेषः । किन्नु कस्मात् ॥ ८ ॥

किं कुतो जनस्य प्रहर्षः ? अभिषेकप्रागुदिनीयसायंकाले मन्थराया-दर्शनेन राजा संप्रहृष्ट इत्युक्तिः ॥ ९ ॥

विदीर्यमाणा अन्तर्गतानन्दोत्कर्षाद्देहपोषमुखविकासादिना तस्य

आचचक्षेऽथ कुब्जायै भूयसीं राघवे श्रियम्॥ १०॥
श्वः पुष्येण जितक्रोधं यौवराज्येन चानघम्।
राजा दशरथो राममभिषेक्ता हि राघवम् *॥ ११॥
धात्र्यास्तु वचनं श्रुत्वा कुब्जा क्षिप्रममर्षिता।
कैलासशिखराकारात् प्रासादादवरोहत॥ १२॥
सा दह्यमाना क्रोधेन मन्थरा पापदर्शिनी।
शयानामेव † कैकेयीमिदं वचनमब्रवीत्॥ १३॥
उत्तिष्ठ मूढ़े ! किं शेषे भयं त्वामभिवर्त्तते।

आनन्दस्य बहिःप्रसारणादिदीर्घ्यमाणत्वोत्प्रेक्षा राघवे राज्ञा न्यस्यमानां भूयसीं श्रियं राज्यलक्ष्मीम्॥ १०॥

अनघं क्वाप्यकारणेर्ष्यादिरहितम्॥ ११॥

अवरोहत अवारुहत्॥ १२॥

क्रोधेन दह्यमाना सैव पापदर्शिनी रामाभिषेके कैकेय्य भरतविषय-पापप्रदर्शिका॥ १३॥

अघौघेन दुःखसमूहेन उपप्लुतं पीड़ितं कारणकार्य्ययोः पौर्बापर्य्य-विपर्य्ययख्यातिशयोक्तिः "अघं दुरितदुःखयोः" इति कोशः॥ १४॥

* "अभिषेचयितानघम्" इति वा पाठः।
† "शयानामेत्य" इति वा पाठः।

उपप्लुतमघौघेन नात्मानमवबुध्यसे * ॥ १४ ॥
अनिष्टे सुभगाकारे सौभाग्येन विकत्थसे ।
चलं हि तव सौभाग्यं नद्याः स्रोत इवोष्णगे ॥ १५ ॥
एवमुक्ता तु कैकेयी रुष्टया परुषं वचः ।
कुब्जया पापदर्शिन्या विषादमगमत् परम् ॥ १६ ॥
कैकेयी त्वब्रवीत् कुब्जां कच्चित् क्षेमन्न मन्थरे ! ।
विषण्णवदनां हि त्वां लक्षये भृशदुःखिताम् ॥ १७ ॥
मन्थरा तु वचः श्रुत्वा कैकेय्या मधुराक्षरम् ।
उवाच क्रोधसंयुक्ता वाक्यं वाक्यविशारदा ॥ १८ ॥
सा विषण्णतरा भूत्वा कुब्जा तस्यां हितैषिणी ।

सुभगाकारे त्वद्विषये सौभाग्यद्योतकाकारवति । आकारेणैव तव
भाग्यदे, वस्तुतोऽनिष्टेऽप्रियकर्तरि किं सौभाग्येन विकत्थसे [illegible]मय्ये-
[illegible]रक्तो मे स्वामी मदाज्ञावशंवदइत्यादि प्रकारेण वृथा [illegible]घसे।
[illegible]गे ग्रीष्मगे रवौ सति नद्याः स्रोत इव सौभाग्यं चलम् । [illegible]माभि-
[illegible]त् क्षीणप्रायमित्याशयः ॥ १५ ॥
पापदर्शिन्या पापं दर्शयन्त्या । विषादमगमत् स्वस्मिन् राजवैरस्यो-
[illegible]नात् ॥ १६ ॥
कच्चित् क्षेमं न मह्यमिति शेषः ॥ १७ ॥ १८ ॥

* "किमात्मानं न बुध्यसे" इति वा पाठः ।

विषादयन्ती प्रोवाच भेदयन्ती च राघवम् ॥ १८ ॥
अक्षयं सुमहद्देवि! प्रवृत्तं त्वद्विनाशनम्।
रामन्दशरथो राजा यौवराज्येऽभिषेक्ष्यति ॥ २० ॥
सास्म्यगाधे भये मग्ना दुःखशोकसमन्विता।
दह्यमानानलेनेव त्वद्धितार्थमिहागता ॥ २१ ॥
तव दुःखेन कैकेयि! मम दुःखं महद्भवेत्।
त्वद्वृद्धौ मम वृद्धिश्च भवेदिह न संशयः ॥ २२ ॥
नराधिपकुले जाता महिषी त्वं महीपतेः।
उग्रत्वं राजधर्माणां कथं देवि! न बुध्यसे ॥ २३ ॥

विषस्ततरा भूत्वा। तदाकारेव भूत्वा अप्रस्त्वे सर्वज्ञत्वात् वास्तवविषादाभावात्। विषादयन्ती राज्यश्रियोऽन्यगामित्वरूपानिष्टप्रकाशेन कैकेय्या विषादं जनयन्ती भेदयन्ती राघवं प्रति पुत्रत्वप्रयुक्तं तस्या स्नेहं नाशयन्ती ॥ १८ ॥

अक्षयं ह्वय प्रतीकाः अशक्यप्रतीकारमित्यर्थः। त्वद्विनाशनं त्वत्सौभाग्यनाशकारणं प्रवृत्तं तदेवाह,—राममिति ॥ २० ॥

शत्रो राज्यलाभात् दुःखम्। स्वेष्टस्य तदलाभात् शोकः। शत्रुराज्यलाभ एव ततो भयम्। त्वद्धितार्थं त्वद्धितबोधनार्थम् ॥ २१ ॥

ननु दास्यास्तव कुतो भयमत आह,—तवेत्यादि ॥ २२ ॥

किं मे दुःखं तत्राह,—नराधिपेति। एतद्विशेषणद्वयमग्रेऽपि राजमातृत्वाप्रच्युतये यत्नावश्यकत्वद्योतनाय। ननु रामराज्येऽपि महिषीत्वं

धर्म्मवादी शठो भर्त्ता श्लक्ष्णवादी च दारुणः।
शुद्धभावेन जानीषे तेनैवमतिसन्धिता ॥ २४ ॥
उपस्थितः प्रयुञ्जानस्त्वयि सान्त्वमनर्थकम्।
अर्थेनैवाद्य ते भर्त्ता कौशल्यां योजयिष्यति ॥ २५ ॥
अपवाह्य तु दुष्टात्मा भरतं तव बन्धुषु।
काल्ये स्थापयिता रामं राज्ये निहतकण्टके ॥ २६ ॥

ते दुष्परिहरमित्यत आह,—उग्रत्वमिति। सापत्न्यो हि स, राज्यलाभे तां त्वत्पुत्रञ्च नाशयिष्यतीति भावः ॥ २३ ॥

ननु राज्ञो रामस्य चात्यन्तं मदनुरक्तत्वात् स मत्पुत्रस्यैव राज्यलाभेऽत आह,—धर्म्मवादीति वाङ्मात्रेण धार्म्मिकः। श्लक्ष्णवादी च सस्मितमृदुमधुरभाषी। अन्तरतस्तु शठ असूयावान्, अतएव दारुणः क्रूरहृदयः स्वान्तरक्रौर्य्यगोपनायैव सस्मितमृदुमधुरभाषी एवम्भूतं तं शुद्धभावेनोपलक्षितञ्जानीषे। सर्व्वथा तेन एवम् उक्तरीत्यातिसन्धिता वञ्चिता असीति शेषः ॥ २४ ॥

उपस्थितः कौशल्यार्थसाधने हृदयेन सावधानः त्वत्समीपे स्थितो वा। उपस्थितमिति पाठे तत्कालोचितसान्त्वमित्यर्थः। अनर्थकं फलरहितम्। सान्त्वं प्रियवचनं त्वयि प्रयुञ्जानः अर्थेन राज्यरूपेण कौशल्यामेव योजयिष्यतीत्यन्वयः ॥ २५ ॥

कौशल्यार्थप्रापणार्थमेव तेनोपायान्तरमप्यनुष्ठितमित्याह,—अपवाह्येति उद्वास्येत्यर्थः। काल्ये अन्यत्रोऽपसंक्रमणकालार्हे। कौल्य इति पाठः कुलक्रमागतइत्यर्थे आर्षः ॥ २६ ॥

शत्रुः पतिप्रवादेन मात्रेव हितकाम्यया।
आशीविष इवाङ्गेन बाले! परिहृतस्त्वया॥ २७॥

यथा हि कुर्य्याच्छत्रुर्वा सर्पो वा प्रत्युपेक्षितः।
राज्ञा दशरथेनाद्य सपुत्रा त्वं तथा कृता॥ २८॥

पापेनानृतसान्त्वेन बाले! नित्यं सुखोचिता।
रामं स्थापयता राज्ये सानुबन्धा हता ह्यसि॥ २९॥

सा प्राप्तकालं कैकेयि! क्षिप्रं कुरु हितं तव।
त्रायस्व पुत्रमात्मानं मां च विस्मयदर्शने!॥ ३०॥

मन्थराया वचः श्रुत्वा शयनात् सा शुभानना।
उत्तस्थौ हर्षसम्पूर्णा चन्द्रलेखेव शारदी॥ ३१॥

हितकाम्यया आत्मनो हितेच्छया त्वया मात्रेव भोजनदानादिना पोषितः आशीविष इव क्रूरः शत्रुः पतिप्रवादन पतिव्यपदेशेन त्वयाङ्गेन परिहृतः इत्यन्वयः॥ २७॥

तद्वशेन च तेऽनर्थः संवृत्त इत्याह,—यथेति। प्रत्युपेक्षितः उपेक्षितनाशः॥ २८॥

कथं कृतेत्यत्राह,—पापेनेति। अनुबन्धः पुत्रादिपरिकारः॥ २९॥

सा त्वं प्राप्तकालं प्राप्तानुष्ठानकालं यत्तव हितं तत्कुरु विस्मयदर्शने अतिदुःखजनकवार्त्ताश्रवणेऽपि स्मेराद्भुतवार्त्ताश्रवणेनैव विस्मयसूचकदर्शने। एवं विस्मयं हित्वा स्वेष्टं विभावयेति तात्पर्यम्॥ ३०॥

एवं मन्थरया अनर्थत्वेन प्रकाशिते रामाभिषेके महाकुलप्रसूता निसर्ग-

अतीव सा तु सन्तुष्टा कैकेयी विस्मयान्विता ।
दिव्यमाभरणं तस्यै कुब्जायै प्रददौ शुभम् ॥ ३२ ॥
दत्त्वा त्वाभरणं तस्यै कुब्जायै प्रमदोत्तमा ।
कैकेयी मन्थरां दृष्ट्वा पुनरेवाब्रवीदिदम् ॥ ३३ ॥
इदन्तु मन्थरे! मह्यमाख्यातं परमं प्रियम् ।
एतन्मे प्रियमाख्यातं किं वा भूयः करोमि ते । ३४ ॥
रामे वा भरते वाहं विशेषं नोपलक्षये ।
तस्मात्तुष्टास्मि यद्राजा रामं राज्येऽभिषेक्ष्यति । ३५ ॥

कल्याणगुणा . सर्व्वथा त्वं स्वेष्टार्थमेव मन्यते स्वेत्याह,—मन्थराया इत्यादि ॥ ३१ ॥

विस्मय अत्यद्भुतः स्वेष्टश्रवणात् कौशल्यावदेवेति भावः ॥ ३२ ॥ ३३॥

प्रियमाख्यातमित्यस्य पुनरुक्तिर्वक्तृा हर्षातिशयवर्त्तात्रा दोषावहा । भूयोऽभ्यधिकं किं प्रीतिदानं करोमि ? तच्छ्रावितप्रियसमाभ्यधिकप्रियवस्त्वभावादित्यर्थः । ननु सापत्न्यश्रेयःश्रुतिः कथन्ते प्रियम्? इत्यत्राह,—रामेवेति । विशेषं पुत्रत्वप्रयुक्तस्नेहविशेषम् ॥ ३४ ॥ ॥ ३५ ॥

प्रियार्हं प्रियदानार्हं । इत उक्तरामाभिषेकात् वरमधिकं प्रियं वचोऽमृतं परमन्यत् न सुवचं, तादृशं हि त्वमवोचः यतोऽधिकं प्रियं न सुवचम् अतः प्रियोत्तरं प्रियाख्यानोत्तरं पारितोषिकरूपं परं श्रेष्ठं वरं वृणु ते तव तं वरं प्रददामि । मया तु स्वबद्धशात्एतत्प्रिया-

न मे परं किञ्चिदितो वरं पुनः
प्रियं प्रियार्हे सुवचं वचोऽमृतम् ।
तथाब्रवीचस्त्वमतः प्रियोत्तरं
वरं परं ते प्रददामि तं वृणु ॥ ३६ ॥

इत्यार्षे रामायणे वाल्मीकीये अयोध्याकाण्डे
कैकेयीमन्थरासंवादो नाम
सप्तमः सर्गः ॥७॥

ख्यानपारितोषिकयोग्यं वस्तु न दृश्यतेऽतस्त्वं यद्वरयिष्यसे तद्दास्यामीत्यर्थः ॥ ३६ ॥

इति रामाभिरामे श्रीरामीये रामायणतिलके
अयोध्याकाण्डे सप्तमः सर्गः ॥ ७ ॥

## सप्तमः सर्गः।

मन्थरात्वभ्यसूय्यैनामुत्सृज्याभरणं हि तत्।
उवाचेदं ततो वाक्यं कोपदुःखसमन्विता ॥ १ ॥
हर्षं किमर्थमस्थाने कृतवत्यसि वालिशे!।
शोकसागरमध्यस्थं नात्मानमवबुध्यसे। २ ॥
मनसा प्रहसामि त्वां देवि! दुःखार्दिता सती।
यच्छोचितव्ये हृष्टासि प्राप्य त्वं व्यसनं महत् ॥ ३ ॥
शोचामि दुर्मतित्वं ते का हि प्राज्ञा प्रहर्षयेत्।
अरेः सपत्नीपुत्रस्य वृद्धिं मृत्योरिवागताम् ॥ ४ ॥

अथ "चलश्चित्तं मनुष्याणाम्" इति न्यायेन दिक्षिर्मन्थराया हि तव-दुपदेशात् कल्याणमतेरपि कैकेय्याश्चित्तं चलितमित्याह,—मन्थरात्विति। अभ्यसूय्य अभ्यसूयाविषयां कृत्वा हिताश्रवणात् कोपः। एतदहितं जायते इति दुःखं तत्समन्वितेव ॥ १ ॥

अस्थाने तदनुचितकाले। वालिशे मूर्खे! शोककाले हर्षोदयात् ॥२॥

मनसेति। अत इत्यादि दुःखार्दिता सती तावकदुःखेन पीड़िता सती प्रहसामीत्यन्वयः। व्यसनं विपदम् ॥ ३ ॥

मतेर्दुष्टत्वम् अनर्थकरे प्रियताविषयत्वम्। प्रहर्षयेत् प्रहृष्येत्। अरित्वे हेतुः सपत्नीपुत्रत्वं मृत्योर्वृद्धिमिव तस्य वृद्धिं दृष्ट्वेति शेषः ॥४॥

भरतादेव रामस्य राज्यसाधारणाद् भयम् ।
तद्विचिन्त्य विषण्णास्मि भयं भीताद्धि जायते ॥ ५ ॥
लक्ष्मणो हि महाबाहू रामं सर्व्वात्मना गतः ।
शत्रुघ्नश्चापि भरतं काकुत्स्थं लक्ष्मणो यथा ॥ ६ ॥
प्रत्यासन्नक्रमेणापि भरतस्यैव भामिनि ! ।
राज्यक्रमो विसृष्टस्तु * तयोस्तावद् यवीयसोः ॥ ७ ॥
विदुषः क्षत्रचारित्रे प्राज्ञस्य प्राप्तकारिणः ।

भरतादेवेति व्युत्पादयति,—रामस्य भरतादेव भयमस्ति, तत्र हेतुः, राज्यसाधारणात् राज्यरूपसाधारणभोग्याद्धेतोस्तत् भरतहेतुकं रामभयम् । हि यतो भीताद्भयं जायते । यो यस्माद्भीत तस्मात् पदस्थात्तस्य भयं भवत्येव । एवं च राज्यस्य निष्कण्टक... ...भयहेतुं भरतं राज्यं प्राप्य रामः सर्व्वथा नाशयिष्यतीति भावः ॥ ५ ॥

ननु भरतादेवेत्यवधारणमयुक्तमत आह,—लक्ष्मण इति । सर्वात्मना गतः मनोवाक्कायव्यापारैः रामेणैक्यं गतोऽतो न ततोभीप्रसङ्गः शत्रुघ्नस्यापि भरतशेषतया न ततः पृथग्भीप्रसङ्गस्तन्नाशेनैव तन्नाशादिति भावः ॥ ६ ॥

...तादेवेत्यवधारणे हेत्वन्तरमाह,—प्रत्यासन्नेति । प्रत्यासन्नो यः ... उत्पत्तिक्रमस्तेनापि हेतुना भरतस्यैव राज्यक्रमस्तदाक्रमणं प्रसक्तम् । तयोस्तु यवीयस्त्वात् स विसृष्टो दूरत्यक्त इत्यर्थः ॥ ७ ॥

* "विप्रकृष्टः" इति वा पाठः ।

भयात् प्रवेपे रामस्य चिन्तयन्ती तवात्मजम् ॥ ८ ॥
सुभगा किल कौशल्या यस्याः पुत्रोऽभिषेक्ष्यते ।
यौवराज्येन महता श्वः पुष्येण द्विजोत्तमैः ॥ ९ ॥
प्राप्तां वसुमतीं प्रीतिं प्रतीतां हतविद्विषम् ।
उपस्थास्यसि कौशल्यां दासीवत् त्वं कृताञ्जलिः ॥ १० ॥
एवं च त्वं सहास्माभिस्तस्याः प्रेष्या भविष्यसि ।
पुत्रश्च तव रामस्य प्रेष्यत्वं हि गमिष्यति ॥ ११ ॥
हृष्टाः खलु भविष्यन्ति रामस्य परमाः स्त्रियः ।
अप्रहृष्टा भविष्यन्ति स्नुषास्ते भरतक्षये ॥ १२ ॥

पुनः रामाद्भयमुपसंहरति,—विदुषः सर्वशास्त्रज्ञस्य ब्रह्मचारिणे बलसम्पाद्ये सन्धिविग्रहादिप्रयोगे च प्राज्ञस्य प्राप्तकारिणः अविलम्बेन कालोचितकर्त्तव्यार्थकारिणो रामस्य त्वदात्मजं प्रति भावि अनर्थं चिन्तयन्ती तन्निमित्ताद्भयात् प्रवेपे कम्पे ॥ ८ ॥

एवं पुत्रानर्थम्प्रदर्श्य तस्याप्यनर्थं दर्शयितुं कौशल्यावृद्धिमाह,—सुभगेति । यौवराज्येनेति हेतौ तृतीया । पुष्येण पुष्ये ॥ ९ ॥

वसुमतीं प्राप्तां तत्प्राप्तिनिमित्तां प्रीतिञ्च प्राप्तां हता युष्मदादि-सपत्नीरूपा विद्विषो यया ताम् अतएव प्रतीतां प्रसिद्धाम् उपस्थास्यसि गत्वा सेविष्यसे ॥ १० ॥

अयमनर्थो ममापीत्याह,—एवं चेति ॥ ११ ॥

तां दृष्ट्वा परमप्रीतां ब्रुवन्तीं मन्थरां ततः।
रामस्यैव गुणान् देवी कैकेयी प्रशशंस ह॥ १३॥
धर्म्मज्ञो गुणवान् दान्तः * कृतज्ञः सत्यवान् शुचिः।
रामो राजसुतो ज्येष्ठो यौवराज्यमतोऽर्हति॥ १४॥
भ्रातॄन् भृत्यांश्च † दीर्घायुः पितृवत् पालयिष्यति।
सन्तप्यसे कथं कुब्जे! श्रुत्वा रामाभिषेचनम्॥ १५॥
भरतश्चापि रामस्य ध्रुवं वर्षशतात् परम्।

परमा स्त्रिय इति बहुवचनेन सीतासख्यः। भरतक्षये भरतप्रभाव-नाशे॥ १२॥

एवं द्विः कृतोपतापापि कैकेयी निसर्गपुण्यस्वभावान्न चचाले त्याह,—तामित्यादि। परमप्रीतां परं रामे अप्रीतामित्यर्थः। देवी पुण्य-स्वभावा॥ १३॥

मन्थरोक्तयुक्तीः प्रतिक्षिपति,—धर्म्मज्ञ इति। दान्तः शिक्षितः कृतज्ञः तेन बाल्ये स्वकृतपालनाद्युपकारस्मरणेन स्वानिष्टशङ्कानिरासः। ज्येष्ठ इत्यनेन तस्यैव राज्ययोग्यतेति साधारण्यं परिहृतम्॥ १४॥

भरतानर्थोऽपि नेत्याह,—भ्रातॄनिति। कथं व्यर्थमेवेत्यर्थः॥ १५॥

पितृवत् भ्रातॄन् विभागेन पालयतो रामस्य वर्षशतात् परमपि यदा

* "गुरुभिर्द्दान्तः" इति वा पाठः।

† "अमात्यान्" इति वा पाठः।

पितृपैतामहं राज्यमवाप्स्यति * नरर्षभः ॥ १६ ॥
सा त्वमभ्युदये प्राप्ते दह्यमानेव † मन्थरे ! ।
भविष्यति च कल्याणे किमिदं परितप्यसे ॥ १७ ॥
यथा वै ‡ भरतो मान्यस्तथा भूयोऽपि राघवः ।
कौशल्यातोऽतिरिक्तं च मम शुश्रूषते ¶ बहु ॥ १८ ॥
राज्यं यदि हि रामस्य भरतस्यापि तत्तदा ।
मन्यते हि यथात्मानं तथा भ्रातॄंस्तु राघवः ॥ १९ ॥

विभागेच्छा, तदा भरतोऽपि राज्यमवाप्स्यति। ध्रुवापिशब्दाभ्यां लक्ष्मण-शत्रुघ्नयोरपि राज्यप्राप्तिरेवेति सूचितम् ॥ १६ ॥

अभ्युदये रामाभिषेकरूपे उत्सवे कल्याणे भरताभिषेकरूपे कियता कालेन भविष्यति ॥ १७ ॥

मान्यः प्रार्थनीयः श्रेयस्करः तथा तद्वत्। यद्वा भूयोऽपि अभ्यधिकमपि। तत्र हेतुः,—कौशल्यात इति। अतिरिक्तमधिकम् ॥ १८ ॥

सम्प्रत्यपि भरतस्य राज्यमस्त्येवेत्याह,—राज्यमिति ॥ १९ ॥

* "अवाप्ता पुरुषर्षभः" इति वा पाठः ।

† "वर्तमाने च" इति वा पाठः। वर्त्तमाने इदानीं प्राप्ते कल्याणे इति योजना।

‡ "मे" इति वा पाठः ।

¶ "सोऽनु शुश्रूषते हि माम्" इति वा पाठः ।

कैकेय्या वचनं श्रुत्वा मन्थरा भृशदुःखिता।
दीर्घमुष्णञ्च निःश्वस्य कैकेयीमिदमब्रवीत्॥ २०॥
अनर्थदर्शिनी मौर्ख्यान्नात्मानमवबुध्यसे।
शोकव्यसनविस्तीर्णे मज्जन्ती दुःखसागरे॥ २१॥
भविता राघवो राजा राघवस्य च यः सुतः।
राजवंशात्तु भरतः कैकेयि! परिहास्यते॥ २२॥
न हि राज्ञः सुताः सर्वे राज्ये तिष्ठन्ति भामिनि!।
स्थाप्यमानेषु सर्वेषु सुमहाननयो भवेत्। २३॥
तस्माज्ज्येष्ठे हि कैकेयि! राज्यतन्त्राणि पार्थिवाः।

एवं राज्यापहारं परिहृतवतीं कैकेयीं मन्थरा तृतीयपर्य्यायेण पुनर्भेदयति,—कैकेय्या इति॥ २०॥

अनर्थदर्शिनी अर्थस्यैवानर्थत्वेन दर्शनशीला। शोक इष्टवियोगजः। अनिष्टाप्तिजं दुःखं व्यसनम्। ताभ्यां विस्तीर्णे व्याप्ते सकलदुःखसमष्टिर्दुःखसागरस्तत्र मज्जन्ती त्वमात्मानं मम नावबुध्यसे इत्यर्थः॥ २१॥

कुत एवं वारंवारं कथयसि इत्यत्राह,—भवितेति। परिहास्यते हीनो भविष्यति। भरतस्य तत्सुतादेरपि राज्यहान्यैवं दुःखं कथयामीति भावः॥ २२॥

तत्र हेतुमाह,—नहीति। सर्वेषां राज्ये स्थितौ बाधकमाह,—स्थाप्यमानेष्विति। अनयोऽन्यायः ईर्ष्यया परस्परप्रजापीड़नरूपः॥ २३॥

राज्यतन्त्राणि राज्यनिर्वाहत्तमाधिकारप्राधान्यानि सर्वनिरूपित-

स्थापयन्त्यनवद्याङ्गि! गुणवत्स्वितरेष्वपि * ॥ २४ ॥
असावत्यन्तनिर्भग्नस्तव पुत्रो भविष्यति।
अनाथवत् सुखेभ्यश्च राजवंशाच्च वत्सले! ॥ २५ ॥
साहं त्वदर्थे संप्राप्ता त्वं तु मां नावबुध्यसे।
सपत्निवृद्धौ या मे त्वं प्रदेयं दातुमर्हसि ॥ २६ ॥
ध्रुवं तु भरतं रामः प्राप्य राज्यमकण्टकम्।
देशान्तरं नाययिता लोकान्तरमथापि वा ॥ २७ ॥
बाल एव तु मातुल्यं भरतो नायितस्त्वया।

प्राधान्याश्रयत्वमेकस्यैवेति भावः। ज्येष्ठस्यागुणवत्त्वे तु गुणवत्कनीयस्वपि ॥ २४ ॥

यदेवमतोऽसाविति। निर्भग्नो हीनः सुखेभ्यो राजवंशाच्च निर्भग्नो भविष्यतीत्यन्वयः। वत्सले सर्वत्र दयाशीले ॥ २५ ॥

त्वदर्थे त्वत्पुत्रराज्यभ्रंशे प्राप्ते तत्परिहार-कथनार्थम्। सपत्निवृद्धावित्यार्षो ह्रस्वः। प्रदेयं पारितोषिकमतो मां त्वमलब्ध्वा स्वहिते इति न बुध्यसे इत्यर्थः ॥ २६ ॥

नाययिता लुट्। लोकान्तरमिति हनिष्यतीति यावत् ॥ २७ ॥

यस्तु रामे राज्ञः पक्षपातः स भरतासन्निधानतस्तच्च त्वयैव कृत-

---

* "तेऽपि ज्येष्ठाः स्वपुत्रेषु ज्येष्ठेष्वेव न संशयः।
आसजन्त्यखिलं राज्यं न भ्रातृषु कथञ्चन ॥"
वङ्गीय पुस्तकेषु इदमधिकं दृश्यते।

सन्निकर्षाच्च सौहार्द्दं जायते स्थावरेष्वपि ॥ २८ ॥
भरतानुगतः सोऽपि शत्रुघ्नस्तत्समं गतः।
लक्ष्मणोऽपि यथा रामं तथायं भरतं गतः ॥ २९ ॥
श्रूयते हि द्रुमः कश्चिच्छेत्तव्यो वनजीवनैः।
सन्निकर्षादिषीकाभिर्मोचितः परमाद् भयात् ॥ ३० ॥
गोप्ता हि रामं सौमित्रिर्लक्ष्मणं चापि राघवः।
अश्विनोरिव सौभ्रात्रं तयोर्लोकेषु विश्रुतम् ॥ ३१ ॥

मित्याह,—बाल एवेति। मातुल्यम्मातुलगृहं ननु किं तावता, अत आह,—सन्निकर्षादिति। स्थावरेषु तृणगुल्मलतावृक्षादिषु तत्र सौहार्दम् अन्योऽन्याश्लेषरूपम्। एवञ्च भरतस्थितौ विभज्य समं राज्यलाभ स्यादिति भावः ॥ २८ ॥

शत्रुघ्नस्थितौ वा भरतकार्य्यस्य न नाशः स्यात्, सोऽपि दैववशाद्‌द्र इत्याह,—भरतानुगत इति। "शत्रुघ्नोपि समङ्गतः" इति पाठे अनुवशात् अनुरोधवशादित्यर्थः। आद्योऽपि तत्रैव योज्यः। अनुवशादपि अपिना दैववशाच्चेत्यर्थः। गतः एकहृदयतयेति शेषः ॥ २९ ॥

कस्यचित् सन्निकर्षात् कस्यचिदनर्थनिवृत्तिर्लोके दृष्टेत्याह,—श्रूयत इति। छेत्तव्यः प्राप्तच्छेदनकालः। इषीकाभिः कण्टकबहुगुल्मैः सन्निकर्षात् परितः परिवारणरूपाद्भयाच्छेदनरूपात्। तस्य सदान्तःपुरवर्त्तित्वेन श्रूयते हीत्युक्तः ॥ ३० ॥

नन्वेष दोषो लक्ष्मणस्यापि समानोऽत आह,—गोप्ता हीति ॥ ३१ ॥

तस्मात् न लक्ष्मणे रामः पापं किञ्चित् करिष्यति ।
रामस्तु भरते पापं कुर्य्यादेव न संशयः * ॥ ३२ ॥
तस्माद्राजगृहादेव वनं गच्छतु राघवः ।
एतद्धि रोचते मह्यं भृशञ्चापि हितं तव ॥ ३३ ॥
एवं ते ज्ञातिपक्षस्य श्रेयश्चैव भविष्यति ।
यदि चेद्भरतो धर्म्मात् पित्र्यं राज्यमवाप्स्यति ॥ ३४ ॥
स ते सुखोचितो बालो रामस्य सहजो रिपुः ।

पापं बधम् ॥ ३२ ॥

तस्माद् बधसम्भावनासत्त्वात् । राजगृहात् राजगृहाख्यान्मातुलनगरात् । एतदेव मह्यं रोचते त्वदिष्टत्वात् । एकपुत्रायाः पुत्रमरणापेक्षया वने पुत्रजीवनं सम्यक, तदेवाह,—भृशं तवहितमेतत् "जीवन् भद्राणि पश्यति" इति न्यायात् ॥ ३३ ॥

एवं सति मातुलगृहादेव वनगमने सति ते ज्ञातिपक्षस्य अस्मदादेः श्रेयश्च भविष्यत्येव । श्रेयो जीवनरूपं कल्याणं, चात् सुखम् । भरताद्वनस्थादपि भयशङ्कयाऽस्मदादिपीड़ायाः कर्त्तुमशक्यत्वादिति भावः । यदि चेदिति यदि वेत्यर्थः । धर्मात् पितृदीयमानत्वरूपात् । तदा वा ज्ञातिपक्षस्य श्रेय इत्यर्थः । यद्वा एवमेव ते पक्षस्य श्रेयो भविष्यति, एवमेव इत्येतदुपपादयति,—यदि चेदिति ॥ ३४ ॥

* "मातामहगृहादेव तस्माद्गच्छतु ते सुतः" इति वा पाठः ।

समृद्धार्थस्य नष्टार्थो जीविष्यति कथं वशे ॥ २५ ॥
अभिद्रुतमिवारण्ये सिंहेन गजयूथपम्।
प्रच्छाद्यमानं * रामेण भरतं त्रातुमर्हसि ॥ २६ ॥
दर्पान्निराकृता पूर्वं त्वया सौभाग्यवत्तया।
राममाता सपत्नी ते कथं वैरं न यापयेत् ॥ २७ ॥
यदा च रामः पृथिवीमवाप्स्यति
प्रभूतरत्नाकरशैलसंयुताम्।
तदा गमिष्यस्यशुभं पराभवं
सहैव दीना भरतेन भामिनि ! ॥ २८ ॥

अन्यथा दुःखमेवेत्याह,—स ते इति। समृद्धार्थस्य रामस्य वशे स्थितो नष्टार्थः कथञ्जीविष्यतीत्यर्थः ॥ २५ ॥

तस्मात् अरण्ये सिंहेन अभिद्रुतं गजयूथपमिव राज्यप्राप्तिप्रबलेन रामेण प्रच्छाद्यमानम् अभिभूयमानं भरतं तदभिषेकनिरोधेन त्रातुमर्हसि ॥ २६ ॥

अन्यथा तवाप्यनर्थ इत्याह,—दर्पादिति सौभाग्यवत्तं पतिवात्सल्यं वैरयापनं वैरसमृद्धिं त्वयि दास्यसम्पादनेन कथं न कुर्यादित्यर्थः यातयेदिति पाठेऽप्ययमेवार्थः ॥ २७ ॥

अशुभं पराभवं दास्यम् ॥ २८ ॥

* "उच्छिद्यमानम्„ इति वङ्गीयाः।

यदा हि रामः पृथिवीमवाप्स्यति
ध्रुवं प्रणष्टो भरतो भविष्यति ।
अतो हि सञ्चिन्तय धर्म्म*मात्मजे
परस्य चैवास्य विवासकारणम् ॥ २९ ॥

इत्यार्षे रामायणे वाल्मीकीये अयोध्याकाण्डे
कैकेयीमन्थरासंवादो नामो
अष्टमः सर्गः ।

एवं यतः सपुत्रायास्ते अनर्थः, अतएवात्मजे राज्यप्राप्तिकारणं चिन्तय भ्रातृपुत्रो न स्थाप्य इति न्यायेन परस्य अस्य रामस्य चात् लक्ष्मणसीतयोः विवासकारणञ्च चिन्तय ॥ ३९ ॥

इति रामाभिरामे श्रीरामीये रामायणतिलके
अयोध्याकाण्डे अष्टमः सर्गः ।

---

* "राज्यम्" इति वा पाठः ।

## नवमः सर्गः।

एवमुक्ता तु कैकेयी क्रोधेन ज्वलितानना।
दीर्घमुष्णञ्च निःश्वस्य मन्थरामिदमब्रवीत् ॥ १ ॥
अद्य राममितः क्षिप्रं वनं प्रस्थापयाम्यहम्।
यौवराज्येन भरतं क्षिप्रमेवाभिषेचये ॥ २ ॥
इदं त्विदानीं संपश्य केनोपायेन साधये *।
भरतः प्राप्नुयाद्राज्यं न तु रामः कथञ्चन ॥ ३ ॥
एवमुक्ता तु सा देव्या मन्थरा पापदर्शिनी।
रामार्थमुपहिंसन्ती कैकेयीमिदमब्रवीत् ॥ ४ ॥

एवं त्रिवारोपदेशेन दुष्टेऽसत्ये स्वार्थे उपादेयत्वसत्यत्वनिश्चयात् स्वकार्य्याय देव्याश्च क्षुभितचित्तायास्तदुपायप्रश्नमाह,—एवमिति ॥ १ ॥

प्रस्थापयामि प्रस्थापनोद्यमं करोमि एवमभिषेचये इत्यपि ॥ २ ॥
अथ तदुपायम्पृच्छति इदन्त्विति। उत्तरार्द्धार्थं केनोपायेन साधये इदमिदानीं संपश्य विचारय उत्साहमात्रेण नेदं साध्यमिति भावः ॥ ३ ॥

रामार्थं लोकदृष्ट्या रामहितमभिषेकरूपमर्थम् ॥ ४ ॥

---

* "मन्थरे!" इति वा पाठः।

हन्तेदानीं प्रपश्य त्वं कैकेयि ! श्रूयतां वचः।
यथा ते भरतो राज्यं पुत्रः प्राप्स्यति केवलम् ॥ ५ ॥
किं न स्मरसि कैकेयि ! स्मरन्ती वा निगूहसे।
यदुच्यमानमात्मार्थं मत्तस्त्वं श्रोतुमिच्छसि ॥ ६ ॥
मयोच्यमानं यदि ते श्रोतुं छन्दोविलासिनि ! ।
श्रूयतामभिधास्यामि श्रुत्वा चैतद्विधीयताम् * ॥ ७ ॥
श्रुत्वैवं वचनं तस्या मन्थरायास्तु कैकयी।
किञ्चिदुत्थाय शयनात् स्वास्तीर्णादिदमब्रवीत् ॥ ८ ॥
कथय त्वं ममोपायं केनोपायेन मन्थरे ! ।
भरतः प्राप्नुयाद्राज्यं न तु रामः कथञ्चन ॥ ९ ॥

त्वं प्रपश्य मत्सामर्थ्यमिति शेषः। प्रवक्ष्यामीति पाठान्तरम्। श्रूयतां मद्वच इति शेषः। चस्त्वर्थे केवलं भरतो न तु राम इत्यर्थः। यद्वा अहं वक्ष्याम्येवोपायं त्वमपि प्रपश्य विचारय ॥ ५ ॥

ननु मम न प्रतिभाति तदुपाय इति तत्राह,—किं न इति। स्मृत्वा वा संमतये मन्मुखात् श्रवणाय निगूहसे। यत् यतः आत्मार्थमात्मप्रयोजनोपायम् उच्यमानं वर्त्तमानसामीप्ये लट्। त्वया अनेकश उक्तमपि मत्तः श्रोतुमिच्छसि ॥ ६ ॥

छन्दः इच्छा विधीयतां विमृश्य युक्तश्चेत् क्रियताम् ॥ ७ ॥

---

* "श्रुत्वा चापि विमृश्यताम्" इति वा पाठः।

एवमुक्ता तदा देव्या मन्थरा पापदर्शिनी।
रामार्थमुपहिंसन्ती कैकेयीमिदमब्रवीत्॥ १०॥
पुरा देवासुरे युद्धे सह राजर्षिभिः पतिः।
आगच्छत् त्वामुपादाय देवराजस्य साह्यकृत्॥ ११॥
दिशमास्थाय कैकेयि! दक्षिणां दण्डकान् प्रति।
वैजयन्तमिति ख्यातं पुरं यत्र तिमिध्वजः॥१२॥
स शम्बर इति ख्यातः शतमायो महासुरः।
ददौ शक्रस्य संग्रामं देवसंघैरनिन्दितः॥ १३॥
तस्मिन् महति संग्रामे पुरुषान् क्षतविक्षतान्।
रात्रौ प्रसुप्तान् घ्नन्ति स्म तरसाऽपास्य राक्षसाः॥ १४॥
तत्राकरोन्महायुद्धं राजा दशरथस्तदा।

श्रवणे अनुष्ठाने चोत्साहं दर्शयति,—उत्थायेत्यादि॥ ८॥ ९॥ १०॥

देवासुरे देवासुरसम्बन्धिनि उपादाय गृहीत्वा साह्यं सहायत्वम्॥ ११॥

दक्षिणां दिशमास्थाय स्थितान् दण्डकान् जनपदान् प्रति तत्सम्बन्धि वैजयन्तमिति पुरं ख्यातं यत्र तिमिध्वजो नाम राजा अभवत्॥ १२॥

स एव लोके शम्बर इति ख्यातः देवसङ्घैः सहितस्य शक्रस्य॥१३॥

क्षतैरस्त्रशस्त्रवेधैर्विक्षतान् विशेषेण विद्धान् रात्रौ प्रसुप्तान् दिनकृतयुद्धश्रान्त्या अपास्य आस्तरणादाकृष्य॥ १४॥

असुरैश्च महाबाहुः शस्त्रैश्च शकलीकृतः ॥ १५ ॥
अपवाह्य त्वया देवि ! संग्रामान्नष्टचेतनः ।
तत्रापि विक्षतः शस्त्रैः पतिस्ते रक्षितस्त्वया ॥ १६ ॥
तुष्टेन तेन दत्तौ ते द्वौ वरौ शुभदर्शने ! ।
स त्वयोक्तः पतिर्देवि ! यदिच्छेयं तदा वरौ ॥ १७ ॥
गृह्णीयान्तु तदा भर्त्तस्तथेत्युक्तं महात्मना ।
अनभिज्ञा ह्यहं देवि ! त्वयैव कथिता पुरा ॥ १८ ॥
कथैषा तव तु स्नेहान्मनसा धार्य्यते मया ।
रामाभिषेकसम्भारान्निगृह्य विनिवर्त्तय ॥ १९ ॥

तत्र तद्रात्र्यां शकलीकृतः सर्वाङ्गेषु विक्षतः ॥ १५ ॥

त्वया सारथ्यं कुर्वाणया अपवाह्य संग्रामादन्यत्र नीत्वा तत्रापि तादृशापत्कालेपि शस्त्रैर्विक्षत एव नष्टचेतनो मूर्च्छितः ते पतिस्त्वया रक्षित इत्यन्वयः। केचित्तु संग्रामादपवाह्य मूर्च्छितस्तेपतिस्त्वया रक्षितः तत्रापि दूरपातिभिरासुरीयैः शस्त्रैर्विक्षतस्ततोऽप्यन्यत्रापवाह्य रक्षित एवं द्विःप्राणरक्षणतोषेण वरद्वयदानमित्याहुः ॥ १६ ॥

तेन राज्ञा। यत् यदा इच्छेयं भर्त्तः तदा वरं गृह्णीयान्तु इत्यन्वयः ॥१७॥

तदा महात्मना राज्ञा तथेति उक्तम् । अनभिज्ञायाः कथाया इति शेषः ॥ १८ ॥

निगृह्य भर्त्तारं वरबलेन निगृह्य अभिषेकसम्भारात् निवर्त्तय अभिषेकरूपफलादिति शेषः ॥ १९ ॥

तौ च याचस्व भर्त्तारं भरतस्याभिषेचनम्।
प्रव्राजनञ्च रामस्य वर्षाणि च चतुर्दश॥ २०॥
चतुर्दश हि वर्षाणि रामे प्रव्राजिते वनम्।
प्रजाभावगतस्नेहः स्थिरः पुत्रो भविष्यति॥ २१॥
क्रोधागारं प्रविश्याद्य क्रुद्धेवाश्वपतेः सुते!।
शेष्वानन्तर्हितायां त्वं भूमौ मलिनवासिनी॥२२॥
मास्मैनं प्रत्युदीक्षेथाः मा चैनमभिभाषथाः।
रुदन्ती * पार्थिवं दृष्ट्वा जगत्यां शोकलालसा॥ २३॥
दयिता त्वं सदा भर्त्तुरत्र मे नास्ति संशयः।

निवृत्तिप्रकारमाह,—ताविति। तेन च दाने अनुमते ताभ्यां क्रमशः भरताभिषेचनरामप्रव्राजने वृणु इति शेषः॥ २०॥

चतुर्दशसंख्याफलमाह,—चतुर्दशेति। प्रजानां भावेऽन्तःकरणे गतः प्राप्तः स्नेहो यस्य तादृशः पुत्रः स्थिरो राज्ये भविष्यति॥ २१॥

वरदानप्रवर्त्तनोपायमाह,—क्रोधागारमिति। क्रोधवतीनां शयनस्थानं क्रोधागारं क्रुद्धेव इवशब्दएवार्थे क्रुद्धैव सती उक्तं क्रोधहेतुं शतशोऽन्यथा तत्सान्त्वनेऽप्यविस्मरन्ती। तदेव विवृणोति। शेष्वेति अनास्तृतायां भूमौ शेष्व इत्यर्थः मलिनवासिनी मलिनवस्त्रधरा सती॥२२॥

रुदन्तीत्यस्य भवेति शेषः तं दृष्ट्वेति पूर्वार्द्धान्वयि॥ २३॥

---

* "चापि तम्" इति वा पाठः।

त्वत्कृते च महाराजो विशेदपि हुताशनम् ॥ २४ ॥
न त्वां क्रोधयितुं शक्तो न क्रुद्धां प्रत्युदीक्षितुम् ।
तव प्रियार्थं राजा तु प्राणानपि परित्यजेत् ॥ २५ ॥
न ह्यतिक्रमितुं शक्तस्तव वाक्यं महीपतिः ।
मन्दस्वभावे ! बुध्यस्व सौभाग्यबलमात्मनः ॥ २६ ॥
मणिमुक्तासुवर्णानि रत्नानि विविधानि च ।
दद्यात् दशरथो राजा मास्म तेषु मनः कथाः ॥ २७ ॥
यौ ते देवासुरे युद्धे वरौ दशरथो ददौ ।
तौ स्मारय महाभागे ! सोऽर्थो न त्वा क्रमेदति ॥ २८ ॥

एवं सति सर्वथा कार्य्यसिद्धिर्भवत्येवेत्याह,—दयितेति । त्वत्कृते त्वत्प्रीणननिमित्तं ॥ २४ ॥ २५ ॥

ननूक्तमपि वाक्यं राजा चेत् न गृह्णीयात्तदा महती हानिः स्यात्तत्राह,—नहीति । स्वसौभाग्यवैभवविस्मरणमूलिका ते एषा मन्दाशङ्केति भावः ॥ २६ ॥

वरदानातिरिक्तमनुनयं मा स्वीकुर्वित्याह,—मणीत्यादि ॥ २७ ॥

सर्वानुनयानङ्गीकारे तर्हि दासेन मया किं कर्त्तव्यमिति राजप्रश्ने उत्तरमुपदिशति,—याविति । सोऽर्थस्त्वा रामविवासनभरताभिषेकरूपोऽर्थः त्वा त्वामित्यर्थः । मा त्वेति पाठेऽतिक्रमेत्तमर्थं माविस्मरेत्यर्थः "नातिक्रामेदिति पाठे सर्वथा सिध्यत्येव राज्ञः सत्यप्रतिज्ञत्वादित्याशयः" इति कतकः ॥ २८ ॥

यदा तु ते वरं दद्यात् स्वयमुत्थाप्य राघवः।
व्यवस्थाप्य महाराजं त्वमिमं वृणुया वरम्॥ २९॥
रामं प्रव्राजयारण्ये नव वर्षाणि पञ्च च।
भरतः क्रियतां राज्ये पृथिव्यां पार्थिवर्षभः॥ ३०॥
चतुर्दश हि वर्षाणि रामे प्रव्राजिते वनम्।
रूढश्च कृतमूलश्च शेषं स्थास्यति ते सुतः॥ ३१॥
रामप्रव्राजनं चैव देवि! याचस्व तं वरम्।
एवं सेत्स्यन्ति पुत्रस्य सर्वार्थास्तव कामिनि!॥ ३२॥
एवं प्रव्राजितश्चैव रामोऽरामो भविष्यति।
भरतश्च हतामित्रस्तव राजा भविष्यति॥ ३३॥

राघवो दशरथः उत्थाप्य त्वामिति शेषः ते तुभ्यन्तदा त्वं महाराजम्। स्थास्य शपथैः सत्ये स्थापयित्वा॥ २९॥

वरमभिनयति,—रामेति॥ ३०॥

सर्वथा प्रव्राजनस्यातिघोरतया लोकविरुद्धत्वं मत्वाह,—चतुर्दशेति। : चतुर्दशवर्षं पालितः प्ररूढशाखः कृतमूलो दृढमूलो वृक्षो दुख- ो भवति एवं भरतस्तावता कालेन रूढोदृढराज्यः कृतमूलो वशी- मूलबलः चतुर्दशोत्तरशेषायुःकालं स्थास्यत्येव ननु पुनरागते- पि रामेण शक्योन्मूलनो भविष्यति न च रामस्य राज्यप्रत्याशेति र्य्यम्॥ ३१॥

त राजानम्॥ ३२॥

येन कालेन रामश्च वनात् प्रत्यागमिष्यति ।
अन्तर्वहिश्च * पुत्रस्ते कृतमूलो भविष्यति ॥ २४ ॥
संगृहीतमनुष्यश्च सुहृद्भिः साकमात्मवान् ।
प्राप्तकालन्तु मन्येऽहं राजानं वीतसाध्वसा ॥ २५ ॥
रामाभिषेकसङ्कल्पान्निगृह्य विनिवर्त्तय ।
अनर्थमर्थरूपेण ग्राहिता सा ततस्तया ॥ २६ ॥
हृष्टा प्रतीता कैकेयी मन्थरामिदमब्रवीत् ।

रामः अराम इति च्छेदः अप्रियः प्रजानां भविष्यतीत्यर्थः ॥ २३ ॥

अन्तर्वहिश्च प्रकृतीनामिति शेषः । चिरसंयोगाद्धरते स्नेहानां वृद्धिः चिरविप्रयोगतश्च रामस्नेहनाश इति भावः ॥ २४ ॥

कृतमूलत्वमेव विवृणोति,—संगृहीतेति । सम्यक्पालनेनानुरञ्जित-मनुष्य इत्यर्थः । सुहृद्भिः साकं कृतमूलो भविष्यतीति पूर्वेणान्वयः अभिषेकतो निवर्त्तनं प्राप्तकालं मन्ये इत्यर्थः । अभिषेकनिवर्त्तनस्यायमेव काल इति भावः । तस्माद्राजानं तदभिषेकात् निवर्त्तयेत्यन्वयः ॥ २५ ॥ २६ ॥

प्रतीता अङ्गीकृततदर्था कैकेयी केकयराजकन्या । किशोरी बाल-वत्सा वड़वा सा यथा स्वकिशोरार्थे उत्पथङ्गच्छति कशाहतेनाऽरूढापि तथेयं राजाधीनापि भरतार्थे उन्मार्गं गतेत्यर्थः ॥ २७ ॥

---

* "तेन कालेन" इति वा पाठः ।

सा हि वाक्येन कुब्जायाः किशोरीवोत्पथं गता ॥ ३७ ॥
कैकेयी विस्मयं प्राप्ता परं परमदर्शना।
प्रज्ञां ते नावजानामि श्रेष्ठे! श्रेष्ठाभिधायिनि ॥ ३८ ॥!
पृथिव्यामसि कुब्जानामुत्तमा बुद्धिनिश्चये।
त्वमेव तु ममार्थेषु नित्ययुक्ता हितैषिणी ॥ ३९ ॥
नाहं समवबुध्येयं कुब्जे! राज्ञश्चिकीर्षितम्।
सन्ति दुःसंस्थिताः कुब्जे! वक्राः परमपापिकाः ॥ ४० ॥
त्वं पद्ममिव वातेन सन्नता प्रियदर्शना।
उरस्तेऽभिनिविष्टं वै यावत् स्कन्धात् समुन्नतम् ॥ ४१ ॥

परं विस्मयं प्राप्ता परमदर्शना अत्यन्तविशेषदर्शनवती यद्वा पर-मत्यर्थमदर्शना विरुद्धदर्शना मन्थरामिदमब्रवीदित्यन्वयः। अत्र कैकेयी तन्नामिका। हे श्रेष्ठाभिधायिनि हितोपदेशकुशले इति यावत्। अतएव ते प्रज्ञां नावजानामीत्यर्थः। कुब्जे त्वां नाभिजानामीति पाठे श्रेष्ठा-भिधायिनीत्वादिविशिष्टां नाज्ञासिषमित्यर्थः ॥ ३८ ॥

कुब्जानां कुब्जत्वविशिष्टराजदासीनां मध्ये, बुद्धिनिश्चये बुद्धिविषय-कार्य्याकार्य्यनिश्चये उत्तमा ईदृश्य एव दास्यो राजपत्नीनामिष्टाः सुरूपासु सापत्न्यस्फूर्तेः। श्रेष्ठत्वमभिधाय श्रेष्ठाभिधायिनीत्वमुपपादयति,—त्वमे-वेति। हितैषिणी इच्छापूर्वकं हितवक्त्री ॥ ३९ ॥

समवबुध्येयं त्वत्कृत बोधनाभावे इति शेषः। चिकीर्षितं रामाभि-षेकाय भरतस्य विवासनादि। कैकेय्या एवंमतिकारणं क्वचित् पठ्यते,—

अधस्ताच्चोदरं शान्तं सुनाभमिव लज्जितम्।
परिपूर्णञ्च जघनं सुपीनौ च पयोधरौ ॥ ४२ ॥
विमलेन्दुसमं वक्त्रमहो राजसि मन्थरे!।
जघनं तव निर्घृष्टं रशनादामभूषितम् ॥ ४३ ॥

न हि तत् बुबुधे पापं शापदोषेण मोहिता।
केकयेषु हि सा बाल्ये ब्राह्मणं रूपरूपिणम् ॥
असूयितवती बाला तेन शप्ता महात्मना।
यस्मादसूयसे विप्रं त्वं रूपमददर्पिता ॥
तस्मादसूयां त्वमपि लोके प्राप्स्यसि कुत्सिताम्।
इति शापसमाच्छन्ना मन्थरावशमागता ॥

इति। असूयाम् असूयाविषयताम् अथ कुब्जां कुब्जान्तरवैलक्षण्येन स्तौति,—सन्तीत्यादि। तद्व्यतिरिक्ता इति शेषः। दुःसंस्थिताः दुःसंस्थावयवसन्निवेशाः अतएव परमपापिकाः परमपापदर्शनाः ॥ ४० ॥

नैवं त्वमित्याह,—त्वमिति। वातेन सन्नतं पद्ममिव त्वं सन्नतापि प्रियदर्शना ते उरो वक्षः अभिनिविष्टं स्थगुना व्याप्तम् अतएवयावत् स्कन्धात् स्कन्धपर्य्यन्तमुन्नतं उरः, यावत् संस्थानमुन्नतमिति पाठे स्तनावधिसमस्थानरूपसर्वसाधारणसंस्थानं यावत् समुन्नतम एतेन स्थगुमत् कुब्जत्वं प्रतिपादितं ॥ ४१ ॥

अधस्तात् वक्षसोऽधस्तात् शोभननाभिमदुदरं लज्जितमिव शान्तं उरस उन्नतिं दृष्ट्वा लज्जितमिव कृशमित्यर्थः प्रतिपूर्णं विस्तीर्णम् ॥४२॥

हर्षातिशयात् वर्णितमपि जघनं पुनर्वर्णयति,—जघनमिति।

जङ्घे भृशमुपन्यस्ते पादौ च व्यायतावुभौ।
त्वमायताभ्यां सक्थिभ्यां मन्थरे! चौमवासिनि!॥ ४४॥
अग्रतो मम गच्छन्ती राजहंसीव शोभने!।
आसन याः शम्बरे मायाः सहस्रमसुराधिपे॥ ४५॥
हृदये ते * निविष्टास्ता भूयश्चान्याः सहस्रशः।
तदेव † स्थगु यद्दीर्घं रथघोणमिवायतम्॥ ४६॥
मतयः चत्त्रविद्याश्च मायाश्चात्र वसन्ति ते।

निर्मृष्टं रोमादिकश्मलहीनं निघृष्टमिति पाठे रशनास्थचुद्रघण्टाभिः शब्दायमानं॥ ४३॥

उपन्यस्ते जान्वोरितिशेषः। यद्वा लोकैः स्तुते सुन्दरत्वेन। सक्थिनी पृष्ठफलके इति कतकः॥ ४४॥

राजहंसीव राजसे इति क्वचित्पाठः स्थगुं स्तोतुमुत्प्रेच्यते,—श्रासन्निति॥ ४५॥

यास्तास्तव हृदये निविष्टा मायास्तदेवेदं यत् दीर्घस्थगुरित्यन्वयः। रथघोणं रथचक्रपिण्डिकातद्वदायतं विस्तीर्णम्॥ ४६॥

अतोऽत्र मत्यादिकं वसति। यत एवमतोऽत्र मालां प्रमोक्ष्यामि।

* "सर्वास्त्वयि" इत्यपि पाठः।
† "तवेदम्" इति वा पाठः।

अत्र तेऽहं प्रमोक्ष्यामि मालां कुब्जे ! हिरण्मयीम् ॥४७॥
अभिषिक्ते च भरते राघवे च वनं गते ।
जात्येन च सुवर्णेन सुनिष्टप्तेन सुन्दरि ! ॥ ४८ ॥
लब्धार्था च प्रतीता च लेपयिष्यामि ते स्थगु ।
मुखे च तिलकं चित्रं जातरूपमयं शुभम् ॥ ४९ ॥
कारयिष्यामि ते कुब्जे ! शुभान्याभरणानि च ।
परिधाय शुभे वस्त्रे देवतेव चरिष्यसि ॥ ५० ॥
चन्द्रमाह्वयमानेन मुखेनाप्रतिमानना ।
गमिष्यसि गतिं मुख्यां गर्वयन्ती द्विषज्जने* ॥ ५१ ॥
तवापि कुब्जाः कुब्जायाः सर्वाभरणभूषिताः ।

मतयोमतिस्मृतिबुद्धयः । स्मृतिर्व्यतीतविषया, मतिरागामिगोचरा, बुद्धिस्तात्कालिकीत्त्येति । क्षत्त्रविद्या राजनीतिः । मायाः प्रसिद्धाः । अत्र स्थगुनि हृदिस्थविकृतोन्नतमांसास्थिपिण्डे ॥ ४७ ॥

जात्येनोत्तमेन सुनिष्टप्तेन संद्रुतेन सुवर्णेन निर्मितां हिरण्मयीं मालामिति सम्बन्धः ॥ ४८ ॥

लब्धार्था लब्धोत्कार्था अतएव प्रतीता सन्तुष्टा लेपयिष्यामि उत्तमचन्दनेनेति शेषः । यद्वा जात्यद्रुतस्वर्णकृतभूषणेन ते स्थगु लेपयिष्यामि गुप्तं करिष्यामीत्यर्थः ॥ ४९ ॥ ५० ॥

---

* "गर्हयन्ती द्विषज्जनम्" इति वा पाठः ।

पादौ परिचरिष्यन्ति यथैव त्वं सदा मम ॥ ५२ ॥
इति प्रशस्यमाना सा कैकेयीमिदमब्रवीत् ।
शयानां शयने शुभ्रे वेद्यामग्निशिखामिव ॥ ५३ ॥
गतोदके सेतुबन्धो न कल्याणि ! विधीयते ।
उत्तिष्ठ कुरु कल्याणं राजानमनुदर्शय ॥ ५४ ॥
तथा प्रोत्साहिता देवी गत्वा मन्थरया सह ।
क्रोधागारं विशालाक्षी सौभाग्यमदगर्विता ॥ ५५ ॥
अनेकशतसाहस्रं मुक्ताहारं वराङ्गना ।
अवमुच्य वरार्हाणि शुभान्याभरणानि च ॥ ५६ ॥
तदा हेमोपमा तत्र कुब्जावाक्यवशङ्गता ।
सम्विश्य भूमौ कैकेयी मन्थरामिदमब्रवीत् ॥ ५७ ॥
इह वा मां मृतां कुब्जे ! नृपायावेदयिष्यसि ।

आह्वयमानेन स्पर्धमानेन द्विषज्जने गर्वयन्ती गर्वं कुर्वन्ती मुख्याकृतिं श्रेष्ठम् ॥ ५२ ॥ ५३ ॥

एवं वृथावार्त्ताभिः कालात्ययो न कार्य्य इत्याह,—गतेत्यादि । रामाभिषेके वृत्ते वरग्रहणादि व्यर्थमिति भावः । राजानमनुदर्शय, क्रोधागारे आत्मानमिति शेषः ॥ ५४ ॥ ५५ ॥

अनेकशतसाहस्रं तावत् स्वर्णमूल्यम् । वरार्हाणि बहुमूल्यानि ॥५६॥

हेमोपमा स्वर्णवर्णा कैकेयी ॥ ५७ ॥

इह क्रोधागारे । मदभीष्टासिद्धौ मदुपेक्षकाय राज्ञे दशरथाय मां

वनन्तु राघवे प्राप्ते भरतः प्राप्स्यते क्षितिम् ॥ ५८ ॥
सुवर्णेन न मे ह्यर्थो न रत्नैर्न च भोजनैः ।
एष मे जीवितस्यान्तो रामो यद्यभिषिच्यते । ॥ ५९ ॥

अथो पुनस्तां महिषीं महीक्षितो
वचोभिरत्यर्थमहापराक्रमैः ।
उवाच कुब्जा भरतस्य मातरं
हितं वचो राममुपेत्य चाहितम् ॥ ६० ॥
प्रपत्स्यते राज्यमिदं हि राघवो
यदि ध्रुवं त्वं ससुता च तप्स्यसे ।
ततो हि कल्याणि ! यतस्व तत्तथा
यथा सुतस्ते भरतोऽभिषेक्ष्यते ॥ ६१ ॥
तथातिविद्धा महिषीति कुब्जया
समाहता वागिषुभिर्मुहुर्मुहुः ।
निधाय हस्तौ हृदयेऽतिविस्मिता
शशंस कुब्जां कुपिता पुनः पुनः ॥ ६२ ॥

मृतामावेदयिष्यसि । तुवार्थे, राघवे वनं प्राप्ते भरतः क्षितिं प्राप्स्यते वा न तु पश्चान्तरमस्तीति भावः ॥ ५८ ॥ ५९ ॥

महापराक्रमैरतिक्रूरैः भरतस्येत्यावृत्त्या हितान्यर्थ्यपि राममुपेत्य तं प्राप्य अहितं रामविषये लोकदृष्ट्या अहितमिति यावत् ॥ ६० ॥ ६१ ॥

यमस्य वा मां विषयं गतामितो
निशम्य कुब्जे ! प्रतिवेदयिष्यसि।
वनं गते वा सुचिराय राघवे
समृद्धकामो भरतो भविष्यति ॥ ६३ ॥
अहं हि नैवास्तरणानि न स्रजो
न चन्दनं नाञ्जनपानभोजनम्।
न किञ्चिदिच्छामि न चेह जीवितं
न चेदितो गच्छति राघवो वनम् ॥ ६४ ॥
अथैवमुक्त्वा वचनं सुदारुणं
निधाय सर्वाभरणानि भामिनी।
असंवृतामास्तरणेन मेदिनीं
तदाधिशिश्ये पतितेव किन्नरी ॥ ६५ ॥

कुब्जया मुहुर्मुहुरिति वागिषुभिः पूर्वोक्तैर्वचनरूपैर्बाणैः समाहता ताड़ितातिविद्धा च अतिविस्मिता राजा मामेवं प्रतारितवानितीति शेषः। शशंस उवाच ॥ ६२ ॥

निशम्य दृष्ट्वा प्रतिवेदयिष्यसि दशरथायेति शेषः ॥ ६३ ॥

नाञ्जनपानभोजनमिति समाहारद्वन्द्वः ॥ ६४ ॥

अथ क्रोधागारप्रवेशानन्तरं निधाय त्यक्त्वा पुण्यक्षयाद्भूमौ पतिता किन्नरीव ॥ ६५ ॥

उदीर्णसंरम्भतमोवृताननां
तदावमुक्तोत्तममाल्यभूषणा ।
नरेन्द्रपत्नी विमना बभूव सा
तमोवृता द्यौरिव मग्नतारका ॥ ६६ ॥

इत्यार्षे रामायणे वाल्मीकीये अयोध्याकाण्डे
कैकेय्याः क्रोधागारप्रवेशो नाम
नवमः सर्गः ।

उदीर्णः उत्कटः संरम्भः कोप एव तमस्तेन वृतं व्याप्तमाननं यस्याः, अवमुक्तानि त्यक्तानि उत्तममाल्यभूषणानि यया सा विमनाः दुर्मनाः मग्नतारका अस्तमिततारका, द्यौराकाशम् ॥ ६६ ॥

इति रामाभिरामे श्रीरामीये रामायणतिलके
अयोध्याकाण्डे नवमः सर्गः ॥ ९ ॥

———————

## दशमः सर्गः।

विदर्शिता यदा देवी कुब्जया पापया भृशम्।
तदा शेते स्म सा भूमौ दिग्धविद्धेव किन्नरी॥ १॥
निश्चित्य मनसा कृत्यं सा सम्यगिति भामिनी।
मन्थरायै शनैः सर्वमाचचक्षे विचक्षणा॥ २॥
सा दीना निश्चयं कृत्वा मन्थरावाक्यमोहिता।
नागकन्येव निःश्वस्य दीर्घमुष्णं च भामिनी॥ ३॥
मुहूर्त्तं चिन्तयामास मार्गमात्मसुखावहम्।
सा सुहृच्चार्थकामा च तं निशम्य विनिश्चयम्॥ ४॥
बभूव परमप्रीता सिद्धिं प्राप्येव मन्थरा।

अथोक्तानुवादपूर्वं राज्ञः कैकेयीदर्शनायाह,—विदर्शिता विपरीतं बोधिता दिग्धविद्धेव विषदिग्धवाणविद्धेव किन्नरी, कामरूपप्रधानो जातिविशेषः॥ १॥

मन्थरोपदिष्टं निश्चित्य युक्तमेतदिति निर्द्धार्य्य यत् त्वयोक्तं तत्सर्वं सम्यगिति मन्थरायै आविष्टदुःखत्वात् शनैः आचचक्षे॥ २॥

तदेव प्रपञ्चयति,—सा दीनेत्यादि॥ ३॥

मार्गं मन्थरोक्तमात्मसुखावहमिति चिन्तयामास। सा मन्थरा सुहृत् कैकेय्याः, तस्याः स्वार्थकामा च, कैकेय्यास्तं निश्चयं निशम्य ज्ञात्वा॥४॥

अथ सा कुपिता देवी सम्यक् कृत्वा विनिश्चयम् ॥ ५ ॥
संविवेशाबला भूमौ निवेश्य भ्रुकुटिं मुखे ।
ततश्चित्राणि माल्यानि दिव्यान्याभरणानि च ॥ ६ ॥
अपविद्धानि कैकेय्या तानि भूमिं प्रपेदिरे ।
तथा तान्यपविद्धानि माल्यान्याभरणानि च ॥ ७ ॥
अशोभयन्त वसुधां नक्षत्राणि यथा नभः ।
क्रोधागारे च पतिता सा बभौ मलिनाम्बरा ॥ ८ ॥
एकवेणीं दृढं बद्ध्वा गतसत्त्वेव किन्नरी ।
आज्ञाप्य तु महाराजो राघवस्याभिषेचनम् ॥ ९ ॥
उपस्थानमनुज्ञाप्य प्रविवेश निवेशनम् ।

सिद्धिं रसरसायनादिसिद्धिम् । निधिमिति पाठे धनं प्राप्येव परम-प्रीता बभूव वस्तुतो यद्देवकार्य्यार्थं स्वयं भूलोकमागता दासी च जाता तद्विषयां सिद्धिम्प्राप्येवेत्यर्थः रामागमनस्य सम्भावनामात्रविषयत्वात् इवेति ॥ ५ ॥

मुखे भ्रुकुटिनिवेशः क्रोधातिशयेन ॥ ६ ॥

यानि कैकेय्या अपविद्धानि उत्सृष्टानि तानि भूमिमित्यन्वयः। यान्य-पविद्धानि तानीत्यन्वयः ॥ ७ ॥ ८ ॥

एकवेणीं पुरोभागीयवेणीद्वयमुन्मुच्य पृष्ठैकवेणीम् । गतसत्त्वा क्षीण-बला । कैकेयीवृत्तान्तं प्रदोषकालिकमुपवर्ण्य राजवृत्तान्तमाह,—आज्ञा-प्येति ॥ ९ ॥

अद्य रामाभिषेको वै प्रसिद्ध इति जज्ञिवान् ॥ १० ॥
प्रियार्हां प्रियमाख्यातुं विवेशान्तःपुरं वशी।
स कैकेय्या गृहं श्रेष्ठं प्रविवेश महायशाः ॥ ११ ॥
पाण्डुराभ्रमिवाकाशं राहुयुक्तं निशाकरः।
शुकबर्हिसमायुक्तं क्रौञ्चहंसरुता युतम् ॥ १२ ॥
वादित्ररवसंघुष्टं कुब्जावामनिकायुतम्।
लतागृहैश्चित्रगृहैश्चम्पकाशोकशोभितैः ॥ १३ ॥
दान्तराजतसौवर्णवेदिकाभिः समायुतम्।

उपस्थानं कृताज्ञापनाविषयस्य मन्त्रिपुरोहितादेः स्वस्वगृहं प्रति गमनमनुज्ञाप्य स्वनिवेशनं प्रविवेश, यद्वा उपस्थानं सदः सभा तामनुज्ञाप्य स्वगृहगमने तदनुज्ञां गृहीत्वा। अद्यैव रामाभिषेकः प्रसिद्धः निश्चित इति इतः पूर्वं कैकेय्या न श्रुतिगोचर इति जज्ञिवान् ज्ञातवान् ॥ १० ॥

अतस्तत्प्रियमाख्यातुं अन्तःपुरं प्रविवेश। वशी स्वस्त्रीव्यति-रिक्तविषये इति बोध्यम् ॥ ११ ॥

अत्र गृहस्य रुष्टकैकेयीयुक्ततया सुधाधवलतया च राहुयुक्त-पाण्डुराभ्राकाशसादृश्यम्। रुता युतं रुतयुक्तम् ॥ १२ ॥

कुब्जाभिः वामनिकाभिश्च, वामनिकाः ह्रस्वाः ताभिर्युतं सुरूप-दासीनां सापत्न्यसम्भावनया आन्तःपुरे आवासात्। चित्रगृहैः चित्र-युक्तगृहैः ॥ १३ ॥

नित्यपुष्पफलैर्वृक्षैर्वापीभिरुपशोभितम् ॥ १४ ॥
दान्तराजतसौवर्णैः संवृतं परमासनैः।
विविधैरन्नपानैश्च भक्ष्यैश्च विविधैरपि ॥ १५ ॥
उपपन्नं महार्हैश्च भूषणैस्त्रिदिवोपमम्।
स प्रविश्य महाराजः स्व*मन्तःपुरमृद्धिमत् ॥ १६ ॥
न ददर्श प्रियां राजा कैकेयीं शयनोत्तमे।
स कामबलसंयुक्तो रत्यर्थी मनुजाधिपः ॥ १७ ॥
अपश्यन् दयितां भार्य्यां पप्रच्छ विषसाद च।
न हि तस्य पुरा देवी तां वेलामत्यवर्त्तत ॥ १८ ॥
न च राजा गृहं शून्यं प्रविवेश कदाचन।
ततो गृहगतो राजा कैकेयीं पर्य्यपृच्छत ॥ १९ ॥

गजदन्तरजतस्वर्णनिर्म्मितवेदिकाभिः वृक्षाणां नित्यपुष्पफलत्वं च देवराजसाहाय्यकरणेन तत्प्रसादात् ॥ १४ ॥ १५ ॥ १६ ॥

कामबलसंयुक्तः कामबलं तदुद्रेकस्तत्संयुक्तः अतएव रत्यर्थी ॥१७॥

अपश्यन् रत्यर्थमन्विष्य अपश्यन्, विषादहेतुमाह,—नहीति। तां वेलां कामवशात् स्वशयनागमवेलां नात्यवर्तत नातिक्रान्तवती, अद्य च तामतिक्रान्तेति विषादः ॥ १८ ॥

शून्यं कैकेयीरहितम् ॥ १९ ॥

---

* "तत्" इति वा पाठः।

यथा पुरमविज्ञाय स्वार्थलिप्सुमपण्डिताम्।
प्रतीहारी तथोवाच सन्त्रस्ता मुक्ताञ्जलिः॥ २०॥
देव! देवी भृशं क्रुद्धा क्रोधागारमभिद्रुता।
प्रतीहार्य्या वचः श्रुत्वा राजा परमदुर्मनाः॥ २१॥
विषसाद पुनर्भूयो लुलितव्याकुलेन्द्रियः।
तत्र तां पतितां भूमौ शयानामतथोचिताम्॥ २२॥
प्रतप्त इव दुःखेन सोऽपश्यज्जगतीपतिः।
स वृद्धस्तरुणीं भार्य्यां प्राणेभ्योऽपि गरीयसीम्॥ २३॥
अपापः पापसङ्कल्पां ददर्श धरणीतले।
लतामिव विनिष्कृत्तां पतितां देवतामिव॥ २४॥

अपण्डितां कार्य्याकार्य्यविवेकरहितां स्वार्थलिप्सुं भरताभिषेकेच्छावतीम् अविज्ञाय यथापुरं यथापूर्वं पूर्वमदर्शनकाले यथा अपृच्छत तथ अपृच्छतेत्यन्वयः। प्रतीहारी दौवारिकी॥ २०॥

अभिद्रुता इत्युवाचेति सम्बन्धः॥ २१॥

अदर्शनमात्रेण विषसस्य क्रोधादिश्रवणाद्भूयोऽधिको विषादः इष्टादर्शनजविषादेन चक्षुरादेर्लुलितत्वमतिचञ्चलत्वं चित्तस्य। किंनिमित्त क्रोधः इति शङ्कया व्याकुलत्वम्। तत्र क्रोधागारे, अतथोचितां तथाशयनानुचिताम्॥ २२॥

इवशब्द एवार्थे॥ २३॥

पापसङ्कल्पां रामाभिषेकविघातादिमनोरथां विनिष्कृत्ताम् छिन्नाम्॥ २४॥

किन्नरीमिव निर्धूतां च्युतामप्सरसं यथा ।
मायामिव परिभ्रष्टां हरिणीमिव संयताम् ॥ २५ ॥
करेणुमिव दिग्धेन विद्धां मृगयुना वने ।
महागज इवारण्ये स्नेहात् परमदुःखितः * ॥ २६ ॥
परिमृज्य च पाणिभ्यामभिसन्त्रस्तचेतनः ।
कामी कमलपत्राक्षीमुवाच वनितामिदम् ॥ २७ ॥
न तेऽहमभिजानामि क्रोधमात्मनि संश्रितम् ।
देवि ! केनाभियुक्तासि केन वासि विमानिता ॥ २८ ॥
यदिदं मम दुःखाय शेषे कल्याणि ! पांशुषु ।

निर्धूतां पुण्यक्षये स्वर्लोकात् पातिताम् । च्युतां स्वर्गात् । परिभ्रष्टां परमोहनाय प्रयुक्तां मध्ये एव स्थितां मायामिव स्थिताम् । संयतां वागुराबद्धाम् ॥ २५ ॥

मृगयुना व्याधेन दिग्धेन विषलिप्तेन बाणेन विद्धां करेणुमिव स्थितां ददर्शेति पूर्वेणान्वयः अरण्ये महागजः पूर्वोक्तां करेणुमिव स्थिताम् ॥२६॥

पाणिभ्यां परिमृज्य स्पृष्ट्वा किं वक्ष्यति किं करिष्यतीति शङ्कया त्रस्तबुद्धिः उवाच ॥ २७ ॥

आत्मनि मयि संश्रितं क्रोधं क्रोधकारणं नाभिजानामि अभियुक्ता कृतपराभवा, विमानो निन्दा ॥ २८ ॥

---

* "परिममर्ष ताम्" इति वा पाठः ।

भूमौ शेषे किमर्थं त्वं मयि कल्याणचेतसि ॥ २९ ॥
भूतोपहतचित्तेव मम चित्तप्रमाथिनि ! ।
सन्ति मे कुशला वैद्यास्त्वभितुष्टाश्च सर्वशः ॥ ३० ॥
सुखितां त्वां करिष्यन्ति व्याधिमाचक्ष्व भामिनि ! ।
कस्य वापि प्रियं कार्य्यं केन वा विप्रियं कृतम् ॥ ३१ ॥
कः प्रियं लभतामद्य को वा सुमहदप्रियम् ।
मा रौत्सीर्मां च कार्षीस्त्वं देवि ! सम्परिशोषणम् ॥ ३२ ॥
अवध्यो बध्यतां को वा बध्यः को वा विमुच्यताम् ।

यत् यतः इदं एवं प्रकारेण। कल्याणि ! मम दुःखाय पांसुषु शेषे, किञ्च कल्याणचेतसि अनपकारिणि मयि जीवति सति किमर्थं भूमौ शेषे ? ॥ २९ ॥

भूतोपहतचित्तेव ग्रहाविष्टेव। कुशलाः सर्वव्याधिनिवारणकुशलाः। अभितुष्टाः मत्कृतसत्कारैरिति शेषः ॥ ३० ॥

व्याधिमाचक्ष्व, व्याधिकृतं चेत्कथनमिति शेषः। प्रियं कार्य्यं कर्त्तव्यमिति मनसि वर्त्तते इति शेषः। विप्रियं कृतं तव कस्य अप्रियं कर्त्तव्यत्वेन तव मनसि वर्त्तते इति भावः ॥ ३१ ॥

पक्षद्वयनिमित्तोऽपि क्रोधो मास्त्वित्याह,—कः प्रियमिति। त्वत्प्रियो दरिद्र इति शेषः। अप्रियं लभतां त्वद्विप्रियकारीति शेषः। मा रौत्सीः आत्मनोऽभिप्रायं रुद्धं गुप्तं माकार्षीरित्यर्थः। संपरिशोषणं कायस्येति शेषः ॥ ३२ ॥

दरिद्रः को भवेदाढ्यो द्रव्यवान्वाप्यकिञ्चनः ॥ ३३ ॥
अहञ्च हि मदीयाश्च सर्वे तव वशानुगाः ।
न ते कञ्चिदभिप्रायं व्याहन्तुमहमुत्सहे ॥ ३४ ॥
आत्मनोजीवितेनापि ब्रूहि यन्मनसि स्थितम् ।
बलमात्मनि जानन्ती न मां शङ्कितुमर्हसि ॥ ३५ ॥
करिष्यामि तव प्रीतिं सुकृतेनापि ते शपे ।
यावदावर्त्तते चक्रं तावती मे वसुन्धरा ॥ ३६ ॥
द्राविडाः सिन्धुसौवीराः सौराष्ट्रा दक्षिणापथाः ।
वङ्गाङ्गमागधा मत्स्याः समृद्धाः काशिकोशलाः ॥ ३७ ॥
तत्र जातं बहुद्रव्यं धनधान्यमजाविकम् ।

तदेव प्रपञ्चयति,—अवध्य इत्यादि ॥ ३३ ॥

आत्मनो जीवितेन हेतुनापि ते कञ्चिदभिप्रायं तद्विषयं व्याहन्तुं नोत्सहे अतो मनसि यत् स्थितं यद्विषयेच्छास्ति तत् ब्रूहि आत्मनि स्वस्मिन्बलं मत्प्रेमरूपं जानन्ती अयं मदुक्तं करिष्यति न वेति मां शङ्कितुं नार्हसि ॥ ३५ ॥

सुकृतेनापि स्वपुण्येनापि ते तव शपे शपथं ददामि यदि त्वदुक्तं न कुर्य्यां तर्हि सर्वं सुकृतं मे व्यर्थेति शपथं ददामीत्यर्थः। अथात्मनि दुष्करसम्पादनसामर्थ्यं दर्शयति,—यावदिति। चक्रं सूर्य्यमण्डलं आवर्त्तते प्रकाशयति तावती सर्वापि वसुधा मे मदधीना ॥ ३६ ॥

द्राविड़सिन्ध्वादयो देशाः सर्वे मदधीना एव ॥ ३७ ॥

ततोऽवृणीष्व कैकेयि ! यद्यत्त्वं मनसेच्छसि ॥ ३८ ॥

किमायासेन ते भीरु ! उत्तिष्ठोत्तिष्ठ शोभने ! ।

तत्त्वं मे ब्रूहि कैकेयि ! यतस्ते भयमागतम् ॥ ३९ ॥

तत्ते व्यपनयिष्यामि नीहारमिव रश्मिवान् ।

तथोक्ता सा समाश्वस्ता वक्तुकामा तदप्रियम् ॥ ४० ॥

परिपीड़यितुं भूयो भर्त्तारमुपचक्रमे ॥ ४१ ॥

इत्यार्षे रामायणे वाल्मीकीये अयोध्याकाण्डे

कैकेय्याः क्रोधागारप्रवेशो नाम

दशमः सर्गः ।

अतस्त्वेत्यादि । तच्च जातं द्रव्यमपि मदधीनमेव ॥ ३८ ॥ ३९ ॥

रश्मिवान् सूर्य्यः ॥ ४० ॥

भूयः परिपीड़यितुं निजभूशयनादिना पूर्व्वम्पीडितमेवाप्रिय-वचनादिना पुनः पीड़यतुमित्यर्थः ॥ ४१ ॥

इति रामाभिरामे श्रीरामीये रामायणतिलके

अयोध्याकाण्डे दशमः सर्गः ।

---

## एकादशः सर्गः ।

तं मन्मथशरैर्विद्धं कामवेगवशानुगम् ।
उवाच पृथिवीपालं कैकेयी दारुणं वचः ॥ १ ॥
नास्मि विप्रकृता देव ! केनचिन्नावमानिता ।
अभिप्रायस्तु मे कश्चित्तमिच्छामि त्वया कृतम् ॥ २ ॥
प्रतिज्ञां प्रतिजानीष्व यदि त्वं कर्त्तुमिच्छसि ।
अथ ते व्याहरिष्यामि यथाभिप्रार्थितं मया ॥ ३ ॥
तामुवाच महाराजः कैकेयीमीषदुत्स्मयः ।
कामी हस्तेन संगृह्य मूर्धजेषु भुवि स्थिताम् ॥ ४ ॥

तमिति ॥ १ ॥

विप्रकृता क्रियया पराभूता अवमानशब्देन तिरस्कारः मे ममाभिप्रायोभिप्रार्थनीयोस्तित्वदेकसम्पाद्यस्तं त्वया कृतं सम्पादितमिच्छामि ॥ २ ॥

यदि त्वं कर्तुमिच्छसि मदभिप्रेतं तदा तद्विषयावश्यकर्त्तव्यतारूपां प्रतिज्ञां प्रतिजानीष्व कुरु अथानन्तरं मयाभिप्रेतं सुप्रार्थितं यथा यत् प्रकारवत्तथा वक्ष्यामीत्यर्थः ॥ ३ ॥

आज्ञाकारिणि मयि प्रपयाकाङ्क्षाविषयेत्युत्स्मयः मूर्द्धजेषु संगृह्य शिरोगृहीत्वेति यावत् ॥ ४ ॥

अवलिप्ते ! न जानासि त्वत्तः प्रियतरो मम।
मनुजो मनुजव्याघ्राद्रामादन्यो न विद्यते ॥ ५ ॥
तेनाजय्येन मुख्येन राघवेण महात्मना।
शपे ते जीवनार्हेण ब्रूहि यन्मनसेप्सितम् ॥ ६ ॥
यं मुहूर्त्तमपश्यंस्तु न जीवेयमहं ध्रुवम्।
तेन रामेण कैकेयि ! शपे ते वचनक्रियाम् ॥ ७ ॥
आत्मना चात्मजैश्चान्यैर्वृणे यं मनुजर्षभम्।
तेन रामेण कैकेयि ! शपे ते वचनक्रियाम् ॥ ८ ॥

स्त्रीणां मध्ये त्वत्तः पुंसां मध्ये रामादन्य इति योज्यं यद्वा रामादन्य-स्त्वत्तोधिक प्रियतरो नेत्यर्थः रामेऽस्याद्वेषमजानत एवमुक्तिः राम-एव त्वत्तोधिकः प्रियइत्याशयः ॥ ५ ॥

तदाह,—तेनेति त्वत्तोपि प्रियतरेणेत्यर्थः अतएव मुख्येन अजय्येन अरीणामशक्यजयेन जीवनार्हेण मज्जीवनसाधनीभूतेन अनेन परम-प्रियत्वं दर्शयति शपे शपथेन त्वदभिप्रेतकर्त्तव्यताविषयं स्वाभिप्रायं ज्ञापये। ते तुभ्यम् ॥ ६ ॥

भाव्यर्थं सूचयन् परम प्रियत्वमेव दर्शयति यमिति। अनेन तद्विष-यकदुष्टप्रार्थना न कार्य्येति सूचयति वचनक्रियां त्वद्वचनकरणं प्रति ॥ ७ ॥

आत्मना स्वेन अन्यैरात्मजैः पुत्त्रैरपि यं वृणे असमं जाने सर्वतो-धिकं प्रियं जाने इति यावत् ॥ ८ ॥

भद्रे ! हृदयमप्येतदनुमृश्योद्धरस्व मे ।
एतत् समीक्ष्य कैकेयि ! ब्रूहि यत् साधु मन्यसे ॥ ९ ॥
बलमात्मनि पश्यन्ती न विशङ्कितुमर्हसि ।
करिष्यामि तव प्रीतिं सुकृतेनापि ते शपे ॥ १० ॥
सा तदर्थमना देवी तदभिप्रायमागतम् ।
निर्माध्यस्थ्याच्च हर्षाच्च बभाषे दुर्वचं वचः ॥ ११ ॥
तेन वाक्येन संहृष्टा तमभिप्रायमात्मनः ।

यन्मनसा ध्यायति तद्वाचा वदतीत्युक्तेर्वागिव हृदयमपि त्वद्वचनानुष्ठानप्रवणं अनुमृश्य विचार्य्य स्वाभीष्टकथनेन मामस्मात् दुःखादुद्धर एतत् रामस्य प्रियतमत्वं समीक्ष्य यत् साधु मन्यसे तत् ब्रूहि त्वमेव युक्तं विचार्य्य वद । मम तु त्वद्वचनमात्रं कर्त्तव्यमेवेत्याशयः ॥ ९ ॥

अत्र शङ्का न कार्य्येत्याह,—बलमिति । बलं मत्प्रेमरूपम् । यथा त्वयि मे प्रेमास्ति येन त्वदुक्तं न कुर्य्यामिति असम्भावितम् । सर्वथा तव प्रीतिं प्रीतिविषयं करिष्यामि । यद्यन्यथेदं तदा मे धर्मो न फलदो भवेदितिभावः ॥ १० ॥

तदर्थमनाः तस्मिन्निजाभिमते अर्थे मनो यस्याः सा तदभिप्रायं स्वाभिमतार्थसम्पादनाभिप्रायमागतं प्राप्तविषयं ज्ञात्वा निर्माध्यस्थ्यात् माध्यस्थ्याभावमवलम्ब्य । ल्यवलोपेऽव्ययीभावात् पञ्चमी । स्वपुत्रपक्षपातेनेति यावत् । हर्षात् राज्ञः स्ववशत्वदर्शनजात् । दुर्वचं शत्रुभिरपि वक्तुमशक्यम् ॥ ११ ॥

तेन वाक्येन त्रिवाचा रामशपथपूर्वकस्य वचनक्रियावाक्येन ।

व्याजहार महाघोरमभ्यागतमिवान्तकम् ॥ १२ ॥
यथाक्रमेण शपसि वरं मम ददासि च ।
तत् शृण्वन्तु त्रयस्त्रिंशद्देवाः सेन्द्रपुरोगमाः ॥ १३ ॥
चन्द्रादित्यौ नभश्चैव ग्रहरात्र्यहनी दिशः ।
जगच्च पृथिवी चेयं सगन्धर्वा सराक्षसा ॥ १४ ॥
निशाचराणि भूतानि गृहेषु गृहदेवताः ।
यानि चान्यानि भूतानि जानीयुर्भाषितं तव ॥ १५ ॥
सत्यसन्धो महातेजा धर्म्मज्ञः * सत्यवाक् शुचिः ।
वरं मम ददात्येष सर्वे शृण्वन्तु दैवताः ॥ १६ ॥
इति देवी महेष्वासं परिगृह्याभिशस्य च ।

अभ्यागत मन्तकमिव घोरं राज्ञः प्राणहरन्तमात्मनोऽभिप्रायं व्याजहार व्याहर्तुं निश्चितवती ॥ १२ ॥

राजप्रतिज्ञाया दुष्करार्थविषयत्वेन वैपरीत्यमाशंक्य तां प्रतिज्ञामशेषसाक्षीकरणेन स्थिरयति यथा क्रमेणेति । अतिप्रियपुत्र सुकृतादिक्रमेण शपसि शपथं करोसि तत्पूर्वकवरञ्च मम ददासि दातुं निश्चितवानसि तत्तव वाक्यं ॥ १३ ॥

जगत्पदेन स्वर्गादिभुवनदेवता । पृथिवीशब्देन भुवनदेवता ॥१४॥१५॥
सर्वे दैवताः देवाः दैवतानिवापुंसीति कोशः ॥ १६ ॥

---

* "सुसमाहितः" इति वा पाठः ।

ततःपरमुवाचेदं वरदं काममोहितम् ॥ १७ ॥
स्मर राजन्! पुरावृत्तं तस्मिन्देवासुरे रणे।
तत्र त्वां च्यावयच्छत्रुस्तव जीवितमन्तरा ॥ १८ ॥
तत्र चापि मया देव! यत्त्वं समभिरक्षितः।
जाग्रत्या यतमानायास्ततो मे प्रददौ वरौ ॥ १९ ॥
तौ दत्तौ च वरौ देव! निक्षेपौ मृगयाम्यहम्।
तवैव पृथिवीपाल! सकाशे रघुनन्दन! ॥ २० ॥
तत् प्रतिश्रुत्य धर्मेण न चेद्दास्यसि मे वरम्।
अद्यैव हि प्रहास्यामि जीवितं त्वद्विमानिता ॥ २१ ॥
वाङ्मात्रेण तदा राजा कैकेय्या स्ववशे कृतः।

परिगृह्य परिवर्त्तनान्निवर्त्त्य अभिशस्य सत्यसन्ध इत्यादिना स्वकार्यस्थैर्य्याय स्तुत्वा च ॥ १७ ॥

तद्वाक्यमाह,—स्मरेत्यादि। तत्र रात्रियुद्धे। शत्रुः शम्बरः। तव जीवितमन्तरा प्राणं विना। त्वां च्यावयत् प्रच्युतवीर्यमकरोत् जडभावमापेत्यर्थः ॥ १८ ॥

जाग्रत्या मया यत् यतस्त्वं समभिरक्षितः ततः त्वज्जीवनाय यतमानाया मम भवान् वरौ प्रददौ ॥ १९ ॥

तौ वरौ तवैव सकाशे निक्षेपभूतौ त्वय्येव स्थापितौ इदानीन्त्वया दत्तौ स्वीकर्त्तुं मृगयामि अन्वेषयामि ॥ २० ॥

धर्मेण प्रतिश्रुत्य धर्मशपथपूर्वकं दानप्रतिज्ञां कृत्वा ॥ २१ ॥

प्रचस्कन्द विनाशाय पाशं मृग इवात्मनः ॥ २२ ॥
ततःपरमुवाचेदं वरदं काममोहितम्।
वरौ मे यौ त्वया देव! तदा दत्तौ महीपते! ॥ २३ ॥
तौ तावदहमद्यैव वक्ष्यामि शृणु मे वचः।
अभिषेकसमारम्भो राघवस्योपकल्पितः ॥ २४ ॥
अनेनैवाभिषेकेण भरतो मेऽभिषिच्यताम्।
यो द्वितीयो वरो देव! दत्तः प्रीतेन मे त्वया ॥ २५ ॥
तदा देवासुरे युद्धे तस्य कालोऽयमागतः।
नव पञ्च च वर्षाणि दण्डकारण्यमाश्रितः ॥ २६ ॥
चीराजिनधरो धीरो रामो भवतु तापसः।
भरतो भजतामद्य यौवराज्यमकण्टकम् ॥ २७ ॥
एष मे परमः कामो दत्तमेव वरं वृणे।

कैकेय्या स्वसौन्दर्य्यनिमित्तकाममोहेन स्ववशे कृतो राजा वाङ्मात्रेण पूर्वकालिकवरदानप्रतिवचनमात्रेण स्वविनाशाय मृगइव तत् प्रतिवचनदानरूपं पाशं प्रचस्कन्द प्रगतवान प्रकृत्यादित्वात् प्रातिपदिकार्थेपि तृतीया वाङ्मात्रेणेति ॥ २२ ॥ २३ ॥

वक्ष्यामि मम दातव्यौ वराविमाविति विभज्य वक्ष्यामि तद्वच आह,—अभिषेकेति ॥ २४ ॥

यः कल्पितोऽनेनेति योजना ॥ २५ ॥ २६ ॥ २७ ॥

दत्तमेव वृणे नह्युत्वपूर्वं नत्तमर्णेनाधमर्णात् स्वार्थग्रहणे तस्या

अद्य चैव हि पश्येयं प्रयान्तं राघवं वने ॥ २८ ॥

स राजराजो भव सत्यसङ्गरः
कुलञ्च शीलञ्च हि जन्म रक्ष च।
परत्रवासे हि वदन्त्यनुत्तमं
तपोधनाः सत्यवचो हितं नृणाम् ॥ २९ ॥

इत्यार्षे रामायणे वाल्मीकीये अयोध्याकाण्डे
कैकेयीवरप्रार्थनं नाम एकादशः
सर्गः ॥ ११ ॥

पीड़ा भवतीति न कश्चिद्दोषः। अद्य चैवेत्यनेन कालविलम्बो निराकृतः ॥ २८ ॥

सत्यसङ्गरः सत्यवचाः सम्पूर्वाद्गिरतेः कथनार्थात् कर्मण्यतेनैव हेतुना कुलादिकं रक्ष यन्मात्रं भावि तदेवाह,—परत्रेति ॥ २९ ॥

इति रामाभिरामे श्रीरामीये रामायणतिलके
अयोध्याकाण्डे एकादशः सर्गः ॥ ११ ॥

# द्वादशः सर्गः ।

ततः श्रुत्वा महाराजः कैकेय्या दारुणं वचः ।
चिन्तामभिसमापेदे मुहूर्त्तं प्रततापच ॥ १ ॥
किं नु मेऽयं दिवास्वप्नः चित्तमोहोऽपि वा मम ।
अनुभूतोपसर्गो वा मानसो वाप्युपद्रवः ॥ २ ॥
इति सञ्चिन्त्य तद्राजा नाध्यगच्छत्तदा सुखम् ।

दारुणं वज्रपाततुल्यं श्रुतार्थस्य वास्तवत्वासम्भावनया भ्रम इत्येव निश्चित्य किं दोषजोऽयं भ्रम इति चिन्तां प्रपेदे । युक्त्या भ्रमत्वज्ञानेऽपि तदधिष्ठानापरोक्षं यावत् अहिभ्रमादेस्तत्कार्य्यभयादिकारितायादृष्टत्वात् प्रततापच ॥ १ ॥

अथ भ्रमत्वनिश्चयात् त्यक्ततापो भ्रमहेतूंश्चिन्तयति,—स्वप्नार्थस्य स्वक्रियाकरणासामर्थ्याद्भ्रमविषयत्वम् । स्वप्नदृष्टोऽयमर्थो मिथ्यैव न कदापि भवतीति भावः । स्वप्नोऽपि कदाचित् संवादीत्यतो दिवेति । दिवास्वप्नो न कदापि संवादीति भावः । अपि वा अथ वा । मम जाग्रत्यपि दुरदृष्टजचित्तमोहो वैचित्यापरपर्य्यायः । वस्तुतत्त्वज्ञानासामर्थ्यं अनु पश्चात् जातः सभास्थितिपर्यन्तमसत्वात् भूतोपसर्गो वा ग्रहावेशज चित्ते वैकल्यं वा । यत्त्वनुभूतोपसर्गोऽनुभूतनाशः सुषुप्तिरित्यर्थः इति तन्न । सुषुप्तौ ज्ञानाभावात् । मनस उपद्रवो वा आधिव्याधिजनितोपद्रवो वा ॥ २ ॥

प्रतिलभ्य ततः संज्ञां कैकेयीवाक्यतापितः ॥ ३ ॥
व्यथितो विक्लवश्चैव व्याघ्रीं दृष्ट्वा यथा मृगः ।
असंवृतायामासीनो जगत्यां दीर्घमुच्छ्वसन् ॥ ४ ॥
मण्डले पन्नगो रुद्धो मन्त्रैरिव महाविषः ।
अहो धिगिति सामर्षो वाचमुक्त्वा नराधिपः ॥ ५ ॥
मोहमापेदिवान् भूयः शोकोपहतचेतनः ।
चिरेण तु नृपः संज्ञां प्रतिलभ्य सुदुःखितः ॥ ६ ॥
कैकेयीमब्रवीत् क्रुद्धो निर्दहन्निव तेजसा * ।
नृशंसे ! दुष्टचारित्रे ! कुलस्यास्य विनाशिनि ! ॥ ७ ॥

राजा इति सञ्चिन्त्य तत् भ्रमकारणं नाध्यगच्छत् । अतस्तदा असुखं मूर्च्छाकरं महत् दुःखं चाध्यगच्छत् । ततः संज्ञां स्मृतिं लब्ध्वा कैकेयी-वाक्यस्मरणातापितः ॥ ३ ॥

अतएव व्यथितत्वादिगुणविशिष्टः, विक्लवो दीनः ॥ ४ ॥

मण्डले यन्त्रमण्डले मन्त्ररुद्ध इति । अहो धिगिति वाचमुक्त्वा भूयः पुन-र्मोहमापेदिवान् ॥ ५ ॥ ६ ॥

तेजसा दुःखजेन निर्दहन्निव ज्वलन्निव । अनेन मृगदुःखशमनस्य व्याघ्रीदण्डेनेव कैकेयीदण्डेन स्वदुःखशमनस्याशक्यता ध्वन्यते । नृशंसे क्रूरे दुष्टचारित्रे दुष्टव्यापारे ॥ ७ ॥

---

* "चक्षुषा" इति वा पाठः ।

किं कृतं तव रामेण पापे ! पापं मयापि वा ।
सदा ते जननीतुल्यां वृत्तिं वहति राघवः ॥ ८ ॥
तस्यैवं त्वमनर्थाय किंनिमित्तमिहोद्यता ।
त्वं मयात्मविनाशाय भवनं स्वं निवेशिता ॥ ९ ॥
अविज्ञानान्नृपसुता व्याली तीक्ष्णविषा यथा ।
जीवलोको यदा सर्वो रामस्याह गुणस्तवम् ॥ १० ॥
अपराधं कमुद्दिश्य त्यक्ष्यामीष्टमहं सुतम् ।
कौशल्यां च सुमित्रां च त्यजेयमपि वा श्रियम् ॥ ११ ॥
जीवितं चात्मना रामं न त्वेव पितृवत्सलम् ।
परा भवति मे प्रीति दृष्ट्वा तनयमग्रजम् ॥ १२ ॥
अपश्यतस्तु मे रामं नष्टं भवति चेतनम् ।
तिष्ठेल्लोको विना सूर्यं शस्यं वा सलिलं विना ॥ १३ ॥

पापमनिष्टं पापे पापमते ते त्वयि वृत्तिं शुश्रूषां वहति करोति ॥८॥

तस्यानर्थचिन्तानर्हस्य एवमनर्थाय उक्तानर्थाय किं निमित्तं केन निमित्तेन अयं स्वकृतएवानर्थ इत्याह,—त्वमिति ॥ ९ ॥

अविज्ञानात् इष्टसाधनत्वभ्रान्त्या । यदा यतः ॥ १० ॥

उद्दिश्य व्याजीकृत्य त्यक्ष्यामि । श्रियं राज्यम् ॥ ११ ॥

आत्मना स्वव्यापारेण जीवितं तत्साधनं रामं नत्वेव त्यजेयम् । परा उत्कृष्टा ॥ १२ ॥

चेतनं चैतन्यम् ॥ १३ ॥

न तु रामं विना देहे तिष्ठेत्तु मम जीवितम् ।
तदलं त्यज्यतामेष निश्चयः पापनिश्चये ! ॥ १४ ॥
अपि ते चरणौ मूर्ध्ना स्पृशाम्येष प्रसीद मे ।
किमर्थं चिन्तितं पापे ! त्वया परमदारुणम् ॥ १५ ॥
अथ जिज्ञाससे मां त्वं भरतस्य प्रियाप्रिये ।
अस्तु यत्तत्त्वया पूर्वं व्याहृतं राघवं प्रति ॥ १६ ॥
स मे ज्येष्ठ सुतः श्रीमान् धर्मज्येष्ठ इतीव मे ।
तत्त्वया प्रियवादिन्या सेवार्थं कथितं भवेत् ॥ १७ ॥
तच्छ्रुत्वा शोकसन्तप्ता सन्तापयसि मां भृशम् ।

यतो मद्विनाशे वैधव्यप्राप्तिस्तस्मादेष निश्चयो रामविवासनरूप-स्त्यज्यतां ॥ १४ ॥

अपि ते चरणाविति । धर्मशास्त्रतोऽत्यनुचितमपि कामशास्त्रमर्यादया त्वत्प्रीत्यर्थमिति शेषः ॥ १५ ॥

अथेत्यादि । अथ भरतस्य प्रियाप्रियविषये मां त्वं जिज्ञाससे भरतो राज्ञः प्रियो न वेति तदास्तु । राघवं भरतं प्रति यत्त्वया व्याहृतं तत्सर्वं भरतस्य रामविवासनं स्वयोग्यमेवेति शेषः । त्वयापि पूर्वं तस्य बहुशो गुणानां कथनादित्याशयः ॥ १६ ॥

इतीव इत्येतत्प्रकारं यत्त्वया कथितं पूर्वं तत् मच्चित्तावर्जनेन सेवार्थमेव मया स्वसेवाकरणार्थमेव भवेदिति वितर्कः संप्रत्यन्यथोक्तेरिति भावः ॥ १७ ॥

आविष्टासि गृहे शून्ये मा त्वं परवशं गता ॥ १८ ॥
इक्ष्वाकूणां कुले देवि सम्प्राप्तः सुमहानयम् ।
अनयो नयसम्पन्ने यत्र ते विकृता मतिः ॥ १९ ॥
न हि किञ्चिदयुक्तं वा विप्रियं वा पुरा मम ।
अकरोस्त्वं विशालाक्षि ! तेन न श्रद्दधामि ते ॥ २० ॥
ननु ते राघवस्तुल्यो भरतेन महात्मना ।
बहुशो हि स्म बाले ! त्वं कथाः कथयसे मम ॥ २१॥
तस्य धर्मात्मनो देवि ! वने वासं यशस्विनः ।

यतस्त्वद्रामाभिषेचनं श्रुत्वा इदानीं शोकसन्तप्तासि मां च वर-निर्बन्धेन ततो निवारयन्ती भृशन्तापयसि अतो मया स्वसेवाकरणाय मद्वचनार्थ एव ते रामसाधुत्ववाद इत्याशयः। अथवा एवंविध-चिन्तापि महा कुलजायां त्वयि असम्भावितैव, किन्तर्हीदं तत्राह,—शून्ये गृहे भूतादिभिराविष्टासि तत्तुल्येन वाक्येन चिदावेशितदुष्टमतिरसि अतः परवशं गता एवं वदसीत्यर्थः ॥ १८ ॥

तदेवाह,—इक्ष्वाकूणामिति। यत इक्ष्वाकुकुले महानयमनयः ज्येष्ठा-भिषेकनिवृत्तिरूपः संप्राप्तः। हे नयसम्पन्ने यत्र अनये ते तव विकृता मतिः कारणमिति शेषः अतस्त्वं ग्रहाविष्टेति भावः ॥ १९ ॥

नन्वनाविष्टेवाहं वदामि नेत्याह,—नहीति। न श्रद्दधामि अस्य अनयनस्यानाविष्टत्वात् बुद्धिकृतत्वमिति शेषः ॥ २० ॥

तदेवोपपादयति,—नन्विति। आमन्त्रणे एतत् कथयसे वर्त्तमान-सामीप्ये लट्। अनेन यामात्पूर्वन्तथा कथनं ध्वन्यते ॥ २१ ॥

कथं रोचयसे भीरु ! नववर्षाणि पञ्च च ॥ २२ ॥
अत्यन्तसुकुमारस्य तस्य धर्मे कृतात्मनः ।
कथं रोचयसे वासमरण्ये भृशदारुणे ॥ २३ ॥
रोचयस्यभिरामस्य रामस्य शुभलोचने ! ।
तव शुश्रूषमाणस्य किमर्थं विप्रवासनम् ॥ २४ ॥
रामो हि भरताद् भूयस्तव शुश्रूषते सदा ।
विशेषं त्वयि तस्मात्तु भरतस्य न लक्षये ॥ २५ ॥
शुश्रूषां गौरवञ्चैव प्रमाणं वचनक्रियाम् ।
कस्तु भूयस्तरं कुर्यादन्यत्र पुरुषर्षभात् ॥ २६ ॥
बहूनां स्त्रीसहस्राणां बहूनां चोपजीविनाम् ।
परिवादोपवादो वा राघवेनोपपद्यते ॥ २७ ॥
सांत्वयन् सर्वभूतानि रामः शुद्धेन चेतसा ।

तस्य भरततुल्यप्रियस्य ॥ २२ ॥ २३ ॥ २४ ॥

शुश्रूषते सेवते तस्माद्रामाद्रामक्रियमाणगौरवाद्भरतस्य त्वयि विशेषम् अधिकं गौरवं न लक्षये ॥ २५ ॥

शुश्रूषां सेवां गौरवं बहुमानम् । प्रमाणं प्रतिपत्तिः, प्रामाण्यबुद्धिरित्यन्ये वचनक्रिया उक्तकरणं पुरुषर्षभात् रामात् ॥ २६ ॥

बहूनां स्त्रीसहस्राणां मध्ये एकयापि कृतः परिवादोऽकार्यकरणनिमित्तं समूलमयशः । उपजीविनां मध्ये एकेनापि कथितोऽपवादः असूयाकल्पितं निर्मूलमयशो राघवेनोपपद्यते न विद्यते ॥ २७ ॥

गृह्णाति मनुजव्याघ्रः प्रियैर्विषयवासिनः ॥ २८ ॥
सत्त्वेन लोकान् जयति द्विजान्दानेन राघवः ।
गुरून् शुश्रूषया वीरो धनुषा युधि शात्रवान् ॥ २९ ॥
सत्यं दानं तपस्त्यागो मित्रता शौचमार्जवम् ।
विद्या च गुरुशुश्रूषा ध्रुवाण्येतानि राघवे ॥ ३० ॥
तस्मिन्नार्जवसम्पन्ने देवि ! देवोपमे कथम् ।
पापमाशंससे रामे महर्षिसमतेजसि ॥ ३१ ॥
न स्मराम्यप्रियं वाक्यं लोकस्य प्रियवादिनः ।
स कथं त्वत्कृते रामं वक्ष्यामि प्रियमप्रियम् ॥ ३२ ॥
क्षमा यस्मिंस्तपस्त्यागः सत्यं धर्मः कृतज्ञता ।
अप्यहिंसा च भूतानां तमृते का गतिर्मम ॥ ३३ ॥

कुतस्तत्राह,—सान्त्वयन्निति। प्रियैरिष्टसम्पादनैर्गृह्णाति वशी-करोति ॥ २८ ॥

जयति। जयोऽत्र स्वाधीनत्वकरणम् ॥ २९ ॥

सत्यं सत्यवचः। दानं पारलौकिकं त्याग ऐहिकप्रयोजनं दानम्। मित्रता सख्यं। शौचं वाह्याभ्यन्तरशुद्धिः आर्जवं वञ्चनाराहित्यम् ॥३०॥

पापं वनवासरूपं स्वस्य पापजनकम्। आशंससे प्रार्थयसे शम-दमादिसम्पत्त्या महर्षिसमतेजस्त्वम् ॥ ३१ ॥

लोकस्य लोकं प्रति प्रियवादिनः स्वस्य कं प्रत्यप्युक्तमप्रियं वाक्यं न स्मरामि सोऽहं त्वत्कृते त्वद्वचनक्रियासम्पादननिमित्तं प्रियं रामम् अप्रियं

मम वृद्धस्य कैकेयि ! गतांतस्य तपस्विनः ।
दीनं लालप्यमानस्य कारुण्यं कर्तुमर्हसि ॥ ३४ ॥
पृथिव्यां सागरान्तायां यत् किञ्चिदधिगम्यते ।
तत् सर्वं तव दास्यामि मा च त्वं मृत्युमाविश ॥ ३५ ॥
अञ्जलिं कुर्मि कैकेयि ! पादौ चापि स्पृशामि ते ।
शरणं भव रामस्य माधर्मो मामिह स्पृशेत् ॥ ३६ ॥
इति दुःखाभिसन्तप्तं विलपन्तमचेतनम् ।
घूर्णमानं महाराजं शोकेन समभिप्लुतम् ॥ ३७ ॥
पारं शोकार्णवस्याशु प्रार्थयन्तं * पुनः पुनः ।
प्रत्युवाचाथ कैकेयी रौद्रा रौद्रतरं वचः ॥ ३८ ॥

कथं वक्ष्यामीति सम्बन्धः । "अप्रियं विवासनविषयं वाक्यं स्मर्त्तुमपि न शक्नोमि इति केचित्" ॥ ३२ ॥ ३३ ॥

गतान्तस्य प्राप्तचरमकालस्य तपस्विनः शोचनीयावस्थस्य दीनस्य । कारुण्यं दयाम् ॥ ३४ ॥

मृत्युं मन्मृत्युसम्पादकानिष्टाभिनिवेशम् ॥ ३५ ॥

कुर्मि करोमि शरणं रक्षिता अधर्मो ज्येष्ठातिक्रमेण कनीयसोऽभिषेककृतः निरपराधस्य त्यागकृतश्च ॥ ३६ ॥

अचेतनं मूर्च्छाप्राप्तं, घूर्णमानं घूर्णमानशरीरम् ॥ ३७ ॥

---

* "प्रार्थयन्तम्" इति वा पाठः ।

यदि दत्त्वा वरौ राजन्! पुनः प्रत्यनुतप्यसे।
धार्मिकत्वं कथं वीर! पृथिव्यां कथयिष्यसि? ॥ ३९ ॥
यदा समेता बहवस्त्वया राजर्षयः सह।
कथयिष्यन्ति धर्मज्ञ! तत्र किं प्रतिवक्ष्यसि? ॥ ४० ॥
यस्याः प्रसादे जीवामि या च मामभ्यपालयत्।
तस्याः कृता मया मिथ्या कैकेय्या इति वक्ष्यसि? ॥ ४१ ॥
किल्बिषं त्वं नरेन्द्राणां करिष्यसि नराधिप!।
यो दत्त्वा वर .ौव पुनरन्यानि भाषसे ॥ ४२ ॥

पारं निस्तारं प्रलपन्तं प्रार्थयन्तं रौद्रतरं दारुणतरम् ॥ ३८ ॥

प्रत्यनुतप्यसे उक्तकरणाशक्त्या कथयिष्यसि लोकैरिति शेषः स्वार्थख्यन्ताद्धेतुमण्णोरूपम् ॥ ३९ ॥

यदा बहवो मिलिता राजर्षयस्त्वया सह मद्विषयवरदानादि-विषयगोष्ठीं करिष्यन्ति, तत्र तत्प्रश्ने किं प्रतिवक्ष्यसि? किमुत्तरयि-ष्यसि ॥ ४० ॥

न किमप्युत्तरं शक्यमित्याह,—यस्या इति। प्रसादे शम्बरमाया-निवर्त्तनलक्षणानुग्रहे सति। प्रयत्ने इति पाठे रथापनयनादिप्रयत्ने इत्यर्थः। या मामभ्यपालयत् प्रीतोपचारादिना ररक्ष, मया मिथ्या-कृता प्रतिज्ञेति शेषः। इति वक्ष्यसि किम्? इति सोपहासं वाक्यम् ॥ ४१ ॥

नरेन्द्राणां स्ववंश्यानां किल्बिषमयशोरूपं मालिन्यं करिष्यसि।

शैव्यः श्येनकपोतीये स्वमांसं पक्षिणे ददौ।
अलर्कश्चक्षुषी दत्त्वा जगाम गतिमुत्तमाम्॥ ४३॥
सागरः समयं कृत्वा न वेलामतिवर्त्तते।
समयं माऽनृतं कार्षीः पूर्ववृत्तमनुस्मरन्॥ ४४॥
स त्वं धर्मं परित्यज्य रामं राज्येऽभिषिच्य च।
सह कौशल्यया नित्यं रन्तुमिच्छसि दुर्मते!॥ ४५॥
भवत्वधर्मो धर्मो वा सत्यं वा यदि वानृतम्।

तत्र हेतुर्य इत्यादि। यद्वंशस्य ईदृशः पापी, तद्वंशः सर्वोऽपीदृश एवेति वदिष्यन्ति लोका इति भावः॥ ४२॥

प्रतिज्ञाया अपालनस्याधर्मत्वं बोधयन्ती पूर्वेषां दुष्करप्रतिज्ञा-पालनं दर्शयति,—शैव्य इति। अत्रेयं कथा। इन्द्रा... श्येनकपोतरूपौ शैव्यस्यौदार्य्यजिज्ञासया भक्ष्यभक्षकभावापन्नौ शैव्यसमीपमागतौ ततः कपोतोऽभयार्थी शैव्यकं प्रविवेश, तस्मै च सोऽभयं ददौ। ततः श्येनेन मद्भक्ष्यं देवविहितं त्यजेत्युक्तेनाहं तं त्यजेयमपि तु तत्प्रतिनिधिभूतं स्वमांसमेव ददामीत्युक्त्वा सर्वं स्वमांसं श्येनाय दत्तवानिति। अलर्कश्च राजर्षिर्ब्राह्मणायान्धाय वरं प्रतिश्रुत्य तेन राजचक्षुषा स्वचक्षुःसन्धान-रूपे वरे उक्ते स्वचक्षुषी दत्तवानिति॥ ४३॥

सागरः समुद्रो वेलानतिलङ्घनाय देवैः प्रार्थितस्तेभ्यस्तत्प्रति-श्रुत्य न वेलामतिवर्त्तते। एवं पूर्वेषां शैव्यादीनां वृत्तं स्मरन्। समयं प्रतिज्ञामनृतां मा कार्षीः॥ ४४॥ ४५॥

---

* "सत्यम्" इति वा पाठः।

यत् त्वया संश्रुतं मह्यं तस्य नास्ति व्यतिक्रमः ॥ ४६ ॥
अहं हि विषमद्यैव पीत्वा बहु तवाग्रतः ।
पश्यतस्ते मरिष्यामि रामो यद्यभिषिच्यते ॥ ४७ ॥
एकाहमपि पश्येयं यद्यहं राममातरम् ।
अञ्जलिं प्रतिगृह्णन्तीं श्रेयो ननु मृतिर्मम ॥ ४८ ॥
भरतेनात्मना चाहं शपे ते मनुजाधिप ! ।
यथा नान्येन तुष्येयमृते रामविवासनात् ॥ ४९ ॥
एतावदुक्त्वा वचनं कैकेयी विरराम ह ।
विलपन्तं च राजानं न प्रतिव्याजहार सा ॥ ५० ॥

सिद्धान्तमाह,—भवत्विति। मदुक्तो रामविवासनपूर्वको भरताभिषेको धर्मो वा अधर्मो वा भवतु, नन्वियं स्वयर्थं मिथ्यैव मे प्रतिज्ञा, तत्काले मिथ्यावचनस्य शास्त्रानुमतत्वादिति चेत्? तत्राह,—त्वया यन्मह्यं सत्यमनृतं वा संश्रुतं प्रतिज्ञातं तस्य व्यतिक्रमोऽकरणं नास्ति ॥ ४६ ॥

विपक्षे बाधकमाह,—अहमित्यादि। पश्यतः पश्यन्तन्त्वामनादृत्य ॥ ४७ ॥

अञ्जलिं प्रतिगृह्णन्तीं राजमातृत्वेन सर्वलोकानामिति शेषः। नन्विति निश्चये क्रियां समुपाददे इति पाठेऽपि मरिष्यामीत्येव फलति ॥ ४८ ॥

ते तव समीपे आत्मना प्राणभूतेन भरतेन शपे। तच्छपथपूर्वकं कथयामि, रामविवासनादृतेऽन्येन रत्नादिना न तुष्ये इति ॥ ४९ ॥ ५० ॥

श्रुत्वा तु राजा कैकेय्या वाक्यं परमशोभनम्।
रामस्य च वने वासमैश्वर्य्यं भरतस्य च॥ ५१॥
नाभ्यभाषत कैकेयीं मुहूर्तं व्याकुलेन्द्रियः।
प्रैचतानिमिषो देवीं प्रियामप्रियवादिनीम्॥ ५२॥
तां हि वज्रसमां वाचमाकर्ण्य हृदयाप्रियाम्।
दुःखशोकमयीं श्रुत्वा राजा न सुखितोऽभवत्॥ ५३॥
स देव्या व्यवसायञ्च घोरञ्च शपथं कृतम्।
ध्यात्वा रामेति निःश्वस्य छिन्नस्तरुरिवापतत्॥ ५४॥
नष्टचित्तो यथोन्मत्तो विपरीतो यथातुरः।
हृततेजा यथा सर्पो बभूव जगतीपतिः॥ ५५॥
दीनयातुरया वाचा इति होवाच कैकयीम्।
अनर्थमिममर्थाभं केन त्वमुपदेशिता॥ ५६॥

अशोभनं परं रामवनवासभरतैश्वर्यविषयं वाक्यं श्रुत्वेत्यन्वयः॥ ५१॥

प्रैक्षत कोपादिति शेषः॥ ५२॥ ५३॥

व्यवसायं रामविवासनविषयं निश्चयं घोरं शपथं भरतशपथरूपं सत्कृतरामसुकृतादिशपथं वा॥ ५४॥

विपरीतः सन्निपातादिना विपरीतप्रकृतिः आतुरो व्याधिग्रस्तः हृततेजा मन्त्रेणेति शेषः॥ ५५॥

उपदेशिता उपदिष्टा॥ ५६॥

भूतोपहतचित्तेव ब्रुवन्ती मां न लज्जसे।
शीलव्यसनमेतत् ते नाभिजानाम्यहं पुरा ॥ ५७ ॥
बालायास्त्विदानीं ते लक्षये विपरीतवत्।
कुतो वा ते भयं जातं या त्वमेवंविधं वरम् ॥ ५८ ॥
राष्ट्रे भरतमासीनं वृणीषे राघवं वने।
विरमैतेन भावेन त्वमेतेनानृतेन च ॥ ५९ ॥
यदि भर्तुः प्रियं कार्य्यं लोकस्य भरतस्य च।
नृशंसे! पापसङ्कल्पे! क्षुद्रे! दुष्कृतकारिणि! ॥ ६० ॥
किन्नु दुःखमलीकं वा मयि रामे च पश्यसि।

मां न लज्जसे पतिसमक्षमीदृशलोकव्यवहारस्य लोकविगीतत्वात् एतत्तु इदानीमुत्पन्नशीलव्यसनं सद्वृत्तस्य विशेषेणासनं त्यागः। पुरा बालाया अपि नाभिजानामि, अतएवेदानीं भूतोपघातोत्प्रेक्षा ॥ ५७ ॥

बालाया इति। बालाया अपीत्यर्थकं पूर्वान्वयि, तत्तु शीलं ते इदानीं प्रौढ़ावस्थायां विपरीतवत् विपरीतं लक्षये। कुतो निमित्तात् केन निमित्तेन रामादीदृशं भयं जातं? यत् त्वमेवं वरं वृणीषे ॥ ५८ ॥

एतेन निर्धूतपातिव्रत्यलक्षणेन भावेनोपलक्षिता। किञ्च एतेनाप्राक्यवरदारकेण अनृतेन ममानृततासम्पादकेन कर्मणोपलक्षिता त्वमेवंवराद्विरम ॥ ५९ ॥

यदि भर्तुर्मम लोकस्य भरतस्य च प्रियं कार्यं कर्त्तव्यम्, तदा विरमेति सम्बन्धः ॥ ६० ॥

न कथंचिद्दृते रामाद्भरतो राज्यमावसेत् ॥ ६१ ॥
रामादपि हि तं मन्ये धर्मतो बलवत्तरम् ।
कथं वक्ष्यसि * रामस्य वनं गच्छेति भाषिते ॥ ६२ ॥
मुखवर्णं विवर्णन्तु यथैवेन्दुमुपप्लुतम् ।
तां तु मे सुकृतां बुद्धिं सुहृद्भिः सह निश्चिताम् ॥ ६३ ॥
कथं द्रक्ष्याम्यपावृत्तां परैरिव हताञ्चमूम् ।
किं मां वक्ष्यन्ति राजानो नानादिग्भ्यः समागताः ॥६४॥

त्वदिष्टस्य भरताभिषेकस्यासिद्धेरित्याह,—नेति। रामं विना राज्यं नावसेत्। अनेन चतुर्णामपि यथाभागं राज्यमनुमन्यस्व। यद्वास्तु भरत एव राजा रामस्तु वृद्धस्य मम समीपे तिष्ठत्विति मन्यस्व, नान्यथा त्वदिष्टासिद्धिरित्युपदेशः ॥ ६१ ॥

तत्र हेतुः,—रामादपीति। हि यतस्तं भरतं रामादपि धर्मतो बलवत्तरम् अतिशयेन धर्मवन्तं मन्ये। भाषिते मयोक्ते सत्यपि त्वं कथं वक्ष्यसि तव तस्यातिप्रियत्वादिति भावः † ॥ ६२ ॥

उपप्लुतम् इन्दुं यथा तमिव विवर्णं मुखवर्णमादर्शादौ कथं द्रक्ष्यामि इति सम्बन्धः। किञ्च सुकृतां सम्यक् प्रवर्त्तितां तां बुद्धिं रामाभिषेकविषयां तत्र हेतुः,—सुहृद्भिः सह निश्चिताम् ॥ ६३ ॥

---

* "द्रक्ष्यामि" इति वा पाठः।

† वनं गच्छेति भाषिते मयोक्ते सति उपप्लुतं राहुग्रस्तं इन्दुमिव विवर्णं कथं द्रक्ष्यामीति सम्बन्धः।

बालो बतायमैक्ष्वाकश्चिरं राज्यमकारयत्।
यदा हि बहवो वृद्धा गुणवन्तो बहुश्रुताः ॥ ६५ ॥
परिप्रक्ष्यन्ति काकुत्स्थं वक्ष्यामि किमहं तदा।
कैकेय्या क्लिश्यमानेन रामः प्रव्राजितो मया ॥ ६६ ॥
यदि सत्यं ब्रवीम्येतत्तदसत्यं भविष्यति।
किं मां वक्ष्यति कौशल्या राघवे वनमास्थिते ॥ ६७ ॥
किञ्चैनां प्रतिवक्ष्यामि कृत्वा विप्रियमीदृशम्।
यदा यदा च कौशल्या दासीवच्च सखीव च ॥ ६८ ॥
भार्यावद्भगिनीवच्च मातृवच्चोपतिष्ठते।
सततं प्रियकामा मे प्रियपुत्रा प्रियंवदा ॥ ६९ ॥

अपावृत्तां पराभूतां नानादिग्भ्यः समागता राजानः ॥ ६४ ॥

अयं बाल ऐक्ष्वाकः किं कथं राज्यमकारयत् अपालयदिति मां वक्ष्यन्तीति योजना। वतेति खेदः ॥ ६५ ॥

परिप्रक्ष्यन्ति क्व राम इति प्रातरिति शेषः। कैकेय्या वरार्थं क्लिश्यमानेन क्लेश्यमानेन तां प्रति कृतप्रतिज्ञायाः सत्यत्वरक्षणाय प्रव्राजित इत्युत्तरं लोको न ग्रहीष्यतीत्याह,—कैकेय्येति। पूर्वदत्तेनेदानीं रामप्रव्राजनपरतया तया प्रकटीकृतेन वरेणेति शेषः ॥ ६६ ॥

यदि यद्यपि तत्तथापि एतत् असत्यं भविष्यति। तस्यां कामहतः तद्वचसा प्रव्राजितवानिति लोको वदिष्यतीति भावः ॥ ६७ ॥

किञ्चैनामिति। मया मत्पुत्रेण वा ते किमपराद्धमिति यदा वक्ष्यति तदैनां प्रति निरुत्तर एवेत्यर्थः। यदा यदा च यतो यतश्चेत्यर्थः।

न मया सत्कृता देवी सत्कारार्हा कृते तव ।
इदानीं तत् तपति मां यन्मया सुकृतं त्वयि ॥ ७० ॥
अपथ्यव्यञ्जनोपेतं भुक्तमन्नमिवातुरम् ।
विप्रकारञ्च रामस्य संप्रयाणं वनस्य च ॥ ७१ ॥
सुमित्रा प्रेक्ष्य वै भीता कथं मे विश्वसिष्यति ।
कृपणं बत वैदेही श्रोष्यति द्वयमप्रियम् ॥ ७२ ॥
मां च पञ्चत्वमापन्नं रामञ्च वनमाश्रितम् ।
वैदेही बत मे प्राणान् शोचन्ती क्षपयिष्यति ॥ ७३ ॥

दासीवद्रतिव्यवहारे, सखीवद्रहस्यकथने, भार्य्यावत् धर्माचरणे, भगिनीवत् हिताशंसने, मातृवत् भोजनदाने उपतिष्ठते सेवते। केचित्तु दासीवत् गृहकार्य्यकरणे, सखीवत् क्रीड़ायां, भार्य्यावदुक्तेरव, भगिनीवत् ज्ञानयोगानुष्ठाने, मातृवत् तत्त्वकथने इत्याहुः। अत उत्तरमशक्यदानमिति बोध्यम्। प्रियः पुत्रो यस्यां मम सा उक्तप्रकारैः सत्कारार्हापि तव कृते त्वद्दैमनस्यपरिहाराय न सत्कृता; तत् इदानीं रामविवासनवरे त्वयोक्ते सति यत् त्वयि मया सुकृतं शोभनं कर्म त्वदनुसरणरूपं कृतं, तन्मां तपति पीड़यति ॥ ६८ ॥ ६९ ॥ ७० ॥

किमिव। आतुरं रुग्णं अपथ्यव्यञ्जनोपेतं भुक्तमन्नं यथा तपति पीड़यति, रामस्य विप्रकारमभिषेकनिवृत्तिं, वनस्य तदुद्देश्यकं सम्प्रयाणञ्च प्रेक्ष्येत्यन्वयः ॥ ७१ ॥

राज्ञो न किञ्चिदकर्त्तव्यमस्तीति विचार्य्य स्वपुत्रविषये मम विश्वासं न करिष्यति। कृपणं कष्टम् ॥ ७२ ॥

हीना हिमवतः पार्श्वे किन्नरेणेव किन्नरी।
न हि राममहं दृष्ट्वा प्रवसन्तं महावने।
चिरञ्जीवितुमाशंसे रुदन्तीं चापि मैथिलीम् * ॥ ७४ ॥
सा नूनं विधवा राज्यं सपुत्रा कारयिष्यसि ॥ ७५ ॥
सतीं त्वामहमत्यन्तं व्यवस्याम्यसतीं सतीम्।
रूपिणीं विषसंयुक्तां पीत्वेव मदिरां नरः ॥ ७६ ॥
अनृतैर्वत मां सान्त्वैः सान्त्वयन्तीव भाषसे।
गीतशब्देन संरुद्य लुब्धो मृगमिवावधीः ॥ ७७ ॥

अप्रियद्वयमेवाह,—मां चेति। मे मदर्थं उपलक्षणमेतत् रामार्थं च शोचन्ती स्वस्य प्राणान् क्षपयिष्यति ॥ ७३ ॥

किन्नरेण श्वशुरभूतेन भर्तृभूतेन च। तव मरणं कुतस्तत्राह,—नहीति ॥ ७४ ॥

नूनं ध्रुवम् ॥ ७५ ॥

असतीमेव सतीं पतिमारिकात्वेन असतीत्ववतीमेव सतीं सर्वदा विद्यमानां सतीम्। आपाततः सतीं व्यवस्यामि निश्चिनोमि, रूपिणीं दृष्टिप्रियां मदिरां पीत्वा पश्चाद्विकारेण विषसंयुक्तां यथा जानाति तथेत्यर्थः ॥ ७६ ॥

---

* "रामे प्रव्राजिते देवि! नाहं जीवितुमुत्सहे।" इत्यपि पाठः।

अनार्य इति मामार्य्याः पुत्रविक्रायकं ध्रुवम् ।
विकरिष्यन्ति रथ्यासु सुरापं ब्राह्मणं यथा ॥ ७८ ॥
अहो दुःखमहो कृच्छ्रं यत्र वाचः क्षमे तव ।
दुःखमेवंविधं प्राप्तं पुरा कृतमिवाशुभम् ॥ ७९ ॥
चिरं खलु मया पापे ! त्वं पापेनाभिरक्षिता ।
अज्ञानादुपसम्पन्ना रज्जुरुद्बन्धनी यथा ॥ ८० ॥
रममाणस्त्वया सार्द्धं मृत्युं त्वां नाभिलक्षये ।
बालो रहसि हस्तेन कृष्णसर्पमिवास्पृशम् ॥ ८१ ॥
तं तु मां जीवलोकोऽयं नूनमाक्रोष्टुमर्हति ।

यच्च त्वं अनृतैः सान्त्वैरिष्टवचनैः सान्त्वयन्ती यत् मां भाषसे तत् । गीतशब्देन मृगं संरुध्य लुब्ध इव मामबधीः ॥ ७७ ॥

पुत्रविक्रायकं पुत्रेण मूल्येन स्त्रीसुखक्रेतारम् । अनार्य्यः पापीति, रथ्यासु विकरिष्यन्ति विगर्हिष्यन्ति ॥ ७८ ॥

दुःखं कष्टं कृच्छ्रं कष्टम् । अहो कष्टमहो कष्टमिति यावत् । यत्र वरविषये रामविवासनवरविषयास्तव वाचः क्षमे यतोऽतः पुराकृतमशुभमिव तत्फलमिव । इवशब्द एवार्थे । एवंविधं अपरिहार्य्यत्वेनावश्यानुभाव्यं दुःखं प्राप्तमिति सम्बन्धः ॥ ७९ ॥

पापेन मया उपसम्पन्ना कण्ठसंलग्ना सौख्याय कृतं तद्रक्षणं स्वनाशाय परिणतमित्याशयः ॥ ८० ॥

बाल इवेति योजना ॥ ८१ ॥

मया ह्यपितृकः पुत्रः स महात्मा दुरात्मना ॥ ८२ ॥
बालिशो बत कामात्मा राजा दशरथो भृशम्।
स्त्रीकृते यः प्रियं पुत्रं वनं प्रस्थापयिष्यति ॥ ८३ ॥
वेदैश्च * ब्रह्मचर्य्यैश्च गुरुभिश्चोपकर्शितः।
भोगकाले महत् कृच्छ्रं पुनरेव प्रपत्स्यते ॥ ८४ ॥
नालं द्वितीयं वचनं पुत्रो मां प्रतिभाषितुम्।
स वनं प्रव्रजेत्युक्तो वाढ़मित्येव वक्ष्यति ॥ ८५ ॥
यदि मे राघवः कुर्य्याद् वनं गच्छेति चोदितः।
प्रतिकूलं प्रियं मे स्यान्न तु वत्सः करिष्यति * ॥ ८६ ॥

तं त्वय्यनुरक्तम्। जीवतापि मया स महात्मा पुत्रोऽपितृकः पितृ-प्रयुक्तराज्यरहितः कृतो यतोऽत आक्रोष्टुं निन्दितुम् ‡ ॥ ८२ ॥

निन्दाप्रकारमाह,—बालिश इति। प्रस्थापयिष्यतीति उपलक्षणं त्रिकालनिन्दायाः ॥ ८३ ॥

उपकर्शितः कार्श्यं प्रापितः। कृच्छ्रं जटाभ्युपेततया वने वास-क्लेशम् ॥ ८४ ॥

द्वितीयं वचनं परिहाररूपं वचनम्। अलं समर्थः। अहमिव धर्मयन्त्रितत्वात् ॥ ८५ ॥

---

* "व्रतैश्च" इत्यपि पाठः।

† "शुद्धभावो हि भावं मे न तु ज्ञास्यति राघवः।
वनं पुत्र व्रजेत्युक्ते नैवान्यत् प्रतिवक्ष्यति ॥" इति वा पाठः।

‡ "अपितृकः पितृरहितः कृतः" इति वा।

राघवे हि वनं प्राप्ते सर्वलोकस्य धिक्कृतम् ।
मृत्युरक्षमणीयं मां नयिष्यति यमक्षयम् ॥ ८७ ॥
मृते मयि गते रामे वनं मनुजपुङ्गवे ।
इष्टे मम जने शेषे किं पापं प्रतिपत्स्यसे ॥ ८८ ॥
कौशल्या मां च रामं च पुत्रौ च यदि हास्यति ।
दुःखान्यसहती देवी मामेवानुगमिष्यति ॥ ८९ ॥
कौशल्याञ्च सुमित्राञ्च मां च पुत्रैस्त्रिभिः सह ।
प्रक्षिप्य नरके सा त्वं कैकेयि ! सुखिता भव ॥ ९० ॥
मया रामेण च त्यक्तं शाश्वतं सत्कृतं गुणैः ।

यदि मे राघवः प्रतिकूलं कुर्यात्, तन्मे प्रियं स्यादिति सम्बन्धः ॥८६॥

ततः किमत आह,—राघवे हीति । अक्षमणीयं दुःसहरक्षमतएव सर्वलोकस्य धिक्कृतम् ॥ ८७ ॥

शेषेऽवशिष्टे ममेष्टे कौशल्यादिरूपे जने किं पापं मनोवागगोचरं दुःखसाधनं प्रतिपत्स्यसे करिष्यसि ॥ ८८ ॥

यदि कौशल्या मां रामञ्च हास्यति, एताभ्यां हीना भविष्यति । चात् सुमित्रा यदि पुत्रौ च चाद्रामं मां च । एतैर्यदि हीना भविष्यति तदा दुःखान्यसहती देवी कौशल्या सुमित्रा च मामेवानुमरिष्यति । लक्ष्मणस्य रामेण सह नियतं गमनात् शत्रुघ्नस्य भरतानुयायित्वेऽपि अतीव त्वद्‌ऽञ्जनं कुर्वतो रामस्येव तस्यापि त्वया क्रूरतया निराकरणसम्भवात् पुत्रौ हास्यतीत्युक्तम् । तेन तस्याः क्रौर्यातिशयो व्यक्तः राज्ञः शोकातिशयवत्त्वाद्विसंष्ठुलवाक्यप्रयोगो न दोषाय ॥ ८९ ॥

इक्ष्वाकुकुलमक्षोभ्यमाकुलं पालयिष्यसि ॥ ८१ ॥
प्रियं चेद्भरतस्यैतद्रामप्रव्राजनं भवेत्।
मास्म मे भरतः कार्षीत् प्रेतकृत्यं गतायुषः * ॥ ८२ ॥
मृते मयि गते रामे वनं पुरुषपुङ्गवे।
सेदानीं विधवा राज्यं सपुत्रा कारयिष्यसि ॥ ८३ ॥
त्वं राजपुत्रि! दैवेन न्यवसो मम वेश्मनि।
अकीर्तिश्चातुला लोके ध्रुवः परिभवश्च मे।

पुत्राणां नरकवासो † राज्यहान्या, राज्ञोः राज्ञश्च शोकरूपपापमरणादित्याकूतः ॥ ८० ॥

मया रामेणेत्यादि व्यंग्योक्तिः। आकुलं क्षुभितम् ॥ ८१ ॥

रामप्रव्रजनस्य भरतसम्मतत्वे स मे पुत्र एव न, इत्याशयेनाह,—प्रियं चेत्यादि ॥ ८२ ॥ ८३ ॥

राजपुत्रि! दैवेन मामकदुरदृष्टवशेन मम वेश्मनि न्यवसः। राजपुत्रीवादेनेति पाठे राजपुत्रीव्यपदेशमात्रेणेत्यर्थः। मे अकीर्त्तिः परोक्षापयशोऽत्राकीर्त्तिः महाजनसमक्षन्धिक्कारः परिभवः सर्वभूतेष्ववज्ञा क्षुद्रत्वेन प्रतिपत्तिः। यतो न्यवसोऽत एतत्सर्वं भविष्यतीति शेषः ॥ ८४ ॥

---

* "हन्तानार्ये! ममामित्रे! सकामा भव कैकयि!।" कुत्रापि इत्यधिकं दृश्यते।

† नरके दुःखे। इति केनचित् व्याख्यातम्।

सर्वभूतेषु चावज्ञा यथा पापकृतस्तथा ॥ ९४ ॥
कथं रथैर्विभुर्यात्वा गजाश्वैश्च मुहुर्मुहुः ।
पद्भ्यां रामो महारण्ये वत्सो मे विचरिष्यति ॥ ९५ ॥
यस्य चाहारसमये सूदाः कुण्डलधारिणः ।
अहंपूर्वाः पचन्ति स्म प्रशस्तं पानभोजनम् ॥ ९६ ॥
स कथं नु कषायाणि तिक्तानि कटुकानि च ।
भक्षयन्वन्यमाहारं सुतो मे वर्त्तयिष्यति ॥ ९७ ॥
महार्हवस्त्रसंवीतो भूत्वा चिरसुखोचितः ।
काषायपरिधानस्तु कथं भूमौ निवत्स्यति ॥ ९८ ॥
कस्यैतद्दारुणं वाक्यमेवंविधमचिन्तितम् ।
रामस्यारण्यगमनं भरतस्याभिषेचनम् ॥ ९९ ॥
धिगस्तु योषितो नाम शठाः स्वार्थपरायणाः ।

कथमिति ॥ ९५ ॥

यस्य चेति ॥ ९६ ॥

स कथमिति । कषायादीनि कन्दमूलानीत्यध्याहारः । तद्रूपं न्यमाहारं वर्त्तयिष्यति जीविष्यति ॥ ९७ ॥

महार्हेति ॥ ९८ ॥

कस्येति । इदं एवंविधम् अचिन्तितं दारुणम् एतदुत्तरार्धरूप मस्यारण्यगमनमित्यादि वाक्यं वाक्यश्रवणं कस्य कीदृग्विध दुष्कर्मणः लमित्यर्थः ॥ ९९ ॥

न ब्रवीमि स्त्रियः सर्वा भरतस्यैव मातरम् ॥ १०० ॥

अनर्थभावेऽर्थपरे नृशंसे !
ममानुतापाय निवेशितासि * ।
किमप्रियं पश्यसि मन्निमित्तं
हितानुकारिण्यथवापि रामे ॥ १०१॥

परित्यजेयुः पितरोऽपि पुत्रान्
भार्याः पतींश्चापि कृतानुरागाः ।
कृत्स्नं हि सर्वं कुपितं जगत् स्यात्
दृष्ट्वैव रामं व्यसने निमग्नम् ॥ १०२ ॥

कैकेयीदौर्जन्यं दृष्ट्वा राजा शोकेन स्त्रीमात्रं निन्दति,—धिगिति निन्द्यत्वमस्त्वित्यर्थः। पुनः स्वाभाविकविवेकमाह,—नेति कौशल्यादीनां निन्द्यानर्हत्वादिति भावः ॥ १०० ॥

अनर्थे जगदनर्थसाधने भावो यस्याः, अर्थपरे स्वार्थसाधनपरे ममानुतापाय मदनुतापार्थं निवेशितासि निवेशितदुर्भावासि ईश्वरेणेति शेषः। मन्निमित्तमिति बहुव्रीहिः। रामे वा जगद्धितानुकारिणि किमप्रियं तत्साधनं पश्यसीत्यर्थः ॥ १०१ ॥

राममरण्यवासरूपे व्यसने निमग्नं दृष्ट्वा कृत्स्नं जगत् कुपितं स्यात् विपरीतं स्यात्। कोपप्रकारमाह,—कृतानुरागाः पितरः पुत्रान् तादृशान्निर्भक्तिविपरिणामेनात्रापि तत्सम्बधात् बालानपि त्यजेयुः

* "निविष्टभावे" इत्यपि पाठः।

अहं पुनर्देवकुमाररूप-
मलंकृतं तं सुतमाव्रजन्तम्।
नन्दामि पश्यन्निव दर्शनेन
भवामि दृष्ट्वैव पुनर्युवेव ॥ १०३ ॥

विना हि सूर्येण भवेत् प्रवृत्ति-
रवर्षता वज्रधरेण वापि।
रामन्तु गच्छन्तमितः समीक्ष्य
जीवेन्न कश्चित्त्विति चेतना मे ॥ १०४ ॥

रामेण सह गमनार्थं अपिना तादृशा पुत्रास्तादृशान् वृद्धान् तादृश्यो भार्यास्तादृशान् पतीन्। अपिना तादृशाः पतयस्तादृशी भार्या अपि त्यजेयुः। एतेन जगदनर्थसाधनभाववत्तोपपादिता ॥ १०२ ॥

स्वस्य रामं विना जीवनव्यतिरेकं दर्शयिष्यन् तदन्वये स्वजीवनान्वयं दर्शयति,—अहमिति। आव्रजन्तं मत्समीपे आगच्छन्तमस्य श्रुत्वेति शेषः। आगच्छन्तं श्रुत्वा दर्शनेन चक्षुषा पश्यन्निव नन्दामि श्रवणमात्रेण दर्शनजन्यं सुखमुक्तं दृष्ट्वेव दृष्ट्वा तु पुनः चिरवृद्धोऽपि पुनर्युवेव हृष्टपुष्टान्तर्बहिःपरिकरो भवामि ॥ १०३ ॥

हिरपीत्यर्थे। सूर्येण विनापि लोकस्य प्रवृत्तिर्व्यवहारः स्यात् वज्रधरेण अवर्षतापि प्रवृत्तिर्लोकस्य जीवनं स्यात्। वा इत्यथवा। इन्द्रेण स्वरूपसत्तां विनापि प्रवृत्तिर्भवेत्। रामन्तु विना न कस्यापि *

विनाशकामामहितामभित्रा-
मावासयं मृत्युमिवात्मनस्त्वाम्।
चिरं वताङ्केन धृतासि सर्पी
महाविषा तेन हतोऽस्मि मोहात्॥ १०५॥
मया च रामेण सलक्ष्मणेन
प्रशास्तु हीनो भरतस्त्वया सह।
पुरञ्च राष्ट्रञ्च निहत्य बान्धवान्
ममाहितानाञ्च भवाभिभाषिणी॥ १०६॥
नृशंसवृत्ते! व्यसनप्रहारिणि!
प्रसह्य वाक्यं यदिहाद्य भाषसे।

जीवनमिति मे मतिः। अन्तर्यामिणं विना कस्यापि व्यवहारस्या-सिद्धेः एवं च स्वाजीवनं कैमुतिकन्यायसिद्धमिति भावः॥ १०४॥

किञ्च त्वामात्मनो मृत्युमिव स्वगृहेऽहमावासयं किञ्च त्वं महा-विषा सर्पी मयाङ्केन मोहात्तत्त्वेनाज्ञानात् धृतासि तेनाङ्कधरणेनाहं हतोऽस्मि॥ १०५॥

पुरञ्च राष्ट्रञ्चेत्यस्य प्रशास्त्वित्यनेन सहान्वयः। त्वं च बान्धवान् पतिपुत्रादीन् निहत्य ममाहितानां शत्रूणामभिभाषणशीला भव। वार्त्ताकरणयोग्यबान्धवाभावादिति भावः। अभिहर्षिणीति पाठे तेषां हर्षदा भव॥ १०६॥

न नाम ते केन मुखात् पतन्त्यधो
विशीर्यमाणा दशनाः सहस्रधा ॥ १०७ ॥
न किञ्चिदाहाहितमप्रियं वचो
न वेत्ति रामः परुषाणि भाषितुम् ।
कथं तु रामे ह्यभिरामवादिनि
ब्रवीषि दोषान् गुणनित्यसम्मते ॥ १०८ ॥
प्रताम्य वा प्रज्वल वा प्रणश्य वा
सहस्रशो वा स्फुटितां महीं व्रज ।
न ते करिष्यामि वचः सुदारुणं
ममाहितं केकयराजपांसने ! ॥ १०९ ॥

व्यसनप्रहारिणि वार्धकरूपार्दि पुत्रवियोगरूपप्रहारकारिणि प्रसह्य पतिपत्नीभावं तिरस्कृत्य इह देशे अद्यकाले यत् भाषसे क्रूरम् अतस्ते मुखादवश्यपाता दन्ताः केन नाम हेतुना सहस्रधा विशीर्यमाणाः सन्तो न पतन्तीति न जाने इति शेषः ॥ १०७ ॥

अप्रियवचोऽकथने हेतुर्न वेत्तीत्यादि । दोषान् जटाचीरधारण-वनवासादीनात्मनो दोषजनकान् गुणैर्नित्यं सर्वेषां सम्मते ॥ १०८ ॥

प्रताम्य ग्लायस्व । प्रज्वल अग्निप्रवेशेन । प्रणश्य विषेण । कुद्दाल-प्रहारैः सहस्रशः स्फुटितां क्षतगर्तां वा महीं व्रज । अथापि ते वचो न करिष्ये इति सम्बन्धः ॥ १०९ ॥

क्षुरोपमां नित्यमसत्प्रियंवदां
प्रदुष्टभावां स्वकुलोपघातिनीम्।
न जीवितुं त्वां विषहेऽमनोरमां
दिधक्षमाणां हृदयं सबन्धनम्॥ ११०॥
न जीवितं मेऽस्ति कुतः पुनः सुखं
विनात्मजेनात्मवतां कुतो रतिः।
ममाहितं देवि! न कर्त्तुमर्हसि
स्पृशामि पादावपि ते प्रसीद मे॥ १११॥
स भूमिपालो विलपन्ननाथवत्
स्त्रिया गृहीतो हृदयेऽतिमात्रया।

असत्प्रियंवदां मिथ्याप्रियभाषिणीं प्रदुष्टभावां दुष्टान्तःकरणाम् अतएव अमनोरमां सबन्धनं सप्राणं हृदयं दिधक्षमाणां त्वां जीवितुं जीवयितुं न विषहे नोत्सहे। तव नाशमेवाशासे इत्यर्थः। प्राणबन्धनं हि सोम्यमन इति छान्दोग्यश्रुतिः॥ ११०॥

दण्डवाक्यमुक्त्वा पुनः सामाह,—नेति। आत्मवताम् आत्मज्ञानां अत्रापिः पूरणीयः यदेवमतो ममेत्यादिः॥ १११॥

अतिमात्रया अतिक्रान्तसौन्दर्य्यपरिच्छेदया। यद्वातिक्रान्तमर्य्यादया हृदये मर्म्मणि गृहीतः। प्रसारितावित्यनेन पत्नावप्यधमर्म्म-दृष्टिर्द्योत्यते। असम्प्राप्येत्यनेन प्रियस्पृष्टोरपि विसमूर्च्छाजनितवैवश्यं

पपात देव्याश्चरणौ प्रसारिता-

वुभावसंप्राप्य * यथातुरस्तथा ॥ ११२ ॥

इत्यार्षे रामायणे वाल्मीकीये अयोध्याकाण्डे
दशरथकैकेयीसंवादो नाम
द्वादशः सर्गः। १२।

द्योतितम्। तदेवाह,—यथातुर इति। आतुरो यथा किञ्चित् स्पृष्टु-कामोऽस्पृष्ट्वैव मध्ये यथा मूर्च्छया पतति तथेत्यर्थः॥ ११२॥

इति रामाभिरामे श्रीरामीये रामायणतिलके
अयोध्याकाण्डे द्वादशः सर्गः।

---

* "उभावसंस्पृश्य" इति वा पाठः।

## त्रयोदशः सर्गः ।

अतदर्हं महाराजं शयानमतथोचितम् ।
ययातिमिव पुण्यान्ते देवलोकात् परिच्युतम् ॥ १ ॥
अनर्थरूपा सिद्धार्था ह्यभीता भयदर्शिनी ।
पुनराकारयामास तमेव वरमङ्गना ॥ २ ॥
त्वं कत्थसे * महाराज ! सत्यवादी दृढव्रतः ।
मम चेदं वरं कस्माद्विधारयितुमिच्छसि ॥ ३ ॥
एवमुक्तस्तु कैकेय्या राजा दशरथस्तदा ।
प्रत्युवाच ततः क्रुद्धो मुहूर्त्तं विक्लवन्निव ॥ ४ ॥
मृते मयि गते रामे वनं मनुजपुङ्गवे ।
हन्तानार्य्ये ! ममामित्रे ! सकामा सुखिनी भव ॥ ५ ॥

अथ सत्यपाशबद्धतया प्रणामवाक्येन च न ते वचः करिष्यामि इति वचसि दार्ढ्याभावं निश्चित्य पुनरप्याह,—अतदर्हं स्त्रीप्रणामानर्हं अतथोचितं भूशयनानर्हम् ॥ १ ॥

अनर्थरूपा कुलस्येति शेषः। असिद्धोऽर्थः प्रयोजनं यस्याः। अभीता जनापवादादभीता भयदर्शिनी रामाद्भरतस्येति शेषः। तमेव वरं पूर्वदत्तमेव वरम् उद्दिश्य राजानमाकारयामास सम्बोधयामास ॥२॥

स्वर्गेऽपि खलु रामस्य कुशलं दैवतैरहम्।
प्रत्यादेशादभिहितं धारयिष्ये कथं वत॥ ६॥
कैकेय्याः प्रियकामेन रामः प्रव्राजितो वनम्।
यदि सत्यं ब्रवीम्येतत्तदसत्यं भविष्यति॥ ७॥
अपुत्रेण मया पुत्रः श्रमेण महता महान्।
रामो लब्धो महातेजाः स कथं त्यज्यते मया॥ ८॥
शूरस्य कृतविद्यस्य जितक्रोधः क्षमापरः।
कथं कमलपत्राक्षो मया रामो विवास्यते॥ ९॥

कत्थसे श्लाघसे पूर्वार्धान्ते इति रध्याहार्य्यः विधारयितुम् अशक्त्वे नेति शेषः॥ ३॥ ४॥ ५॥

रामप्रवासदुःखेन मृत्वा स्वर्गं गतस्यापि मे सुखं नास्तीत्याह,—स्वर्ग इति। रामस्य कुशलं दैवतैः पृष्टोऽहं किमुत्तरं वदिष्ये इति शेषः। वनं प्रत्यादिष्ट इत्युत्तरं देयं चेत् प्रत्यादेशात् तद्रूपादुत्तरादूर्ध्वं यद्दैवैरभिहितं भविष्यति ज्येष्ठं श्रेष्ठगुणैर्युक्तं कथं प्रत्याख्यातवानसीत्येवंरूपं वाक्यं तत्कथं धारयिष्ये हृदये इति शेषः। अतस्तदप्रत्याख्यानमेव वरमिति भावः॥ ६॥

ननु सत्यवशात् प्रत्यादिष्ट इत्युत्तरं तत्राह,—कैकेय्या इति। प्रियकामेन प्रियेण वरेण एतत् सत्यं यदि यद्यपि ब्रवीमि तत्तथापि एतत् मे वाक्यम् असत्यं भविष्यति। असत्यं मंस्यन्तीत्यर्थः। कामुकतया प्रत्याख्यात इत्येवं मंस्यन्तइत्याशयः॥ ७॥

त्यज्यते त्यक्ष्यते॥ ८॥ ९॥

कथमिन्दीवरश्यामं दीर्घबाहुं महाबलम् ।
अभिराममहं रामं स्थापयिष्यामि * दण्डकान् ॥ १० ॥
सुखानामुचितस्यैव दुःखैरनुचितस्य च ।
दुःखं नामानुपश्येयं कथं रामस्य धीमतः ॥ ११ ॥
यदि दुःखमकृत्वा तु मम संक्रमणं भवेत् ।
अदुःखार्हस्य रामस्य ततः सुखमवाप्नुयाम् ॥ १२ ॥
नृशंसे पापसङ्कल्पे ! रामं सत्यपराक्रमम् ।
किं विप्रियेण कैकेयि ! प्रियं योजयसे मम ॥ १३ ॥
अकीर्त्तिरतुला लोके ध्रुवं परिभविष्यति † ।
तथा विलपतस्तस्य परिभ्रमितचेतसः ॥ १४ ॥

स्थापयिष्यामि प्रस्थापयिष्यामि ॥ १० ॥

दुःखैरिति षष्ठ्यर्थे तृतीया दुःखं वनगमनरूपं दुःखसाधनम् ॥ ११ ॥

सर्वथा रामस्यादुःखकरणमेव मे श्रेय इत्याह,—यदीति। अदुःखार्हस्य रामस्य दुःखमकृत्वा यदि मम संक्रमणं स्वर्गं प्रति गमनं भवेत् तदा स्वर्गे सुखमाप्नुयामित्यन्वयः। मरणे वराप्रदानजन्यदोषोऽपि न जीवतो हि सा प्रतिज्ञेति भावः ॥ १२ ॥

मम प्रियं रामं विप्रियेण किं योजयसे इत्यन्वयः ॥ १३ ॥

---

* "प्रेषयिष्यामि" इति वा पाठः ।

† "ध्रुवं परिभवश्च मे" इति वा पाठः ।

अस्तमभ्यगमत् सूर्य्यो रजनी चाभ्यवर्त्तत ।
सा त्रियामा तदार्त्तस्य * चन्द्रमण्डलमण्डिता ॥ १५ ॥
राज्ञो विलपमानस्य न व्यभासत शर्वरी ।
सदैवोष्णं विनिःश्वस्य वृद्धो दशरथो नृपः ॥ १६ ॥
विललापार्त्तवद्दुःखं गगनासक्तलोचनः ।
न प्रभातं त्वयेच्छामि निशे ! नक्षत्रभूषिते ॥ १७ ॥

अकीर्त्तिः स्त्रीजित इत्यकीर्त्तिर्जन्मसम्पादितां कीर्त्तिं परिभविष्यतीत्यर्थः ॥ १४ ॥

यत्सम्बन्धि प्रदोषे स्वनिवेशप्रवेशात् पूर्वं सूर्य्योऽस्तमगमत् रजनी चाभ्यवर्त्तत सा त्रियामा चन्द्रमण्डलमण्डितापि आर्त्तस्य दुःखवतः विलपमानस्य च न व्यभासत न प्रकाशेन सुखदाभूत् विलापेनैव रात्रिकालो व्यतीत इति भावः । यतः सा शर्वरी हिंसिका तस्येति शेषः । शृणातीति योगात् ॥ १५ ॥ १६ ॥

आर्त्तवत् रोगपीड़ितवत् । यद्वा स्वार्थे वतिः । शृणुवतां दुःखं यथा भवति तथा विललाप । यद्वा दुःखं प्राप्येति शेषः । अथ दुःखवशाद्रात्र्या अव्युष्टिं प्रार्थयते न प्रभातमिति । त्वयेति पाठे त्वया गतया जायमानं प्रातःकालमित्यर्थः । तवेति पाठे त्वत्सम्बन्धिप्रातःकालमित्यर्थः ॥ १७ ॥

---

* "तथार्त्तस्य" इति वा पाठः ।

क्रियतां मे दया भद्रे ! मयायं रचितोऽञ्जलिः ।
अथवा गम्यतां शीघ्रं नाहमिच्छामि निर्घृणाम् ॥ १८ ॥
नृशंसां कैकयीं द्रष्टुं यत्कृते व्यसनं मम * ।
एवमुक्त्वा ततो राजा कैकेयीं संयताञ्जलिः ॥ १९ ॥
प्रसादयामास पुनः कैकेयीं राजधर्मवित् † ।
साधुवृत्तस्य दीनस्य त्वद्गतस्य गतायुषः ॥ २० ॥
प्रसादः क्रियतां भद्रे ! देवि ! राज्ञो विशेषतः ।
शून्येन खलु सुश्रोणि ! मयेदं समुपाहृतम् ॥ २१ ॥

मे मह्यं भद्रे निशे ! एवं हि तस्याः कल्याणदत्वम्। प्रभाते रामविवासनभयमिति भावः। गम्यतां त्रियामया त्वया। रात्र्यपगमे प्रजासन्निधानेनैतद्दर्शनाभाव इति भावः। यद्वा प्रभाते रामगमनेन झटिति मरणे सत्यस्या अदर्शनमिति भावः। नाहमिच्छामि द्रष्टुमित्यन्वयः॥ १८ ॥ १९ ॥

त्वद्गतस्य सत्यवशत्वात्त्वद्वशं गतस्येत्यर्थः। गतायुषः अल्पावशिष्टायुषः ॥ २० ॥

राज्ञो विशेषतः राजत्वाद्विशेषेण प्रसाद उचितः। इदं पूर्वोक्तकटुकवाक्यं शून्येन दुःखवशाद्वक्तव्यावक्तव्यविवेकरहितेन । यद्वा

* "महत्" इति वा पाठः ।
† "चेदमब्रवीत्" इति वा पाठः ।

कुरु साधुप्रसादं मे बाले ! सहृदया ह्यसि ।
प्रसीद देवि ! रामो मे त्वद्दत्तं राज्यमव्ययम् ॥ २२ ॥
लभतामसितापाङ्गि ! यशः परमवाप्स्यसि ।
मम रामस्य लोकस्य गुरूणां भरतस्य च ।
प्रियमेतद्गुरुश्रोणि ! कुरु चारुमुखेक्षणे ! ॥ २३ ॥

विशुद्धभावस्य हि दुष्टभावा
दीनस्य ताम्राश्रुकलस्य * राज्ञः ।
श्रुत्वा विचित्रं करुणं विलापं
भर्त्तुर्नृशंसा न चकार वाक्यम् ॥ २४ ॥
ततः स राजा पुनरेव मूर्च्छितः
प्रियामतुष्टां प्रतिकूलभाषिणीम् ।

इदं रामाभिषेचनं शून्ये एकान्ते निर्जने नोक्तं किन्तु सभायामतः प्रसादं कुरु सभ्योपहासो यथा न भवति तथेत्यर्थः ॥ २१ ॥

सहृदया मद्वचनशून्यहृदया तदेवाह,—प्रसीदेति । त्वया वरबलात् गृहीतमेव राज्यं मत्प्रीतये रामाय देहीत्याशयः ॥ २२ ॥

गुरूणां वशिष्ठादीनां गुरुश्रोणीति पाठे उर्वीति पाठान्तरे च उर्वी महती श्रोणिर्यस्यास्तत्सम्बुद्धौ ॥ २३ ॥

रोदनेनाक्ष्णोस्ताम्रत्वात्ताम्रस्य । अश्रुकलस्य अश्रुपूर्णस्य इत्यर्थः ॥ २४ ॥

---

* "ताम्रेक्षणस्याश्रुकलस्य" इति वा पाठः ।

समीक्ष्य पुत्रस्य विवासनं प्रति
क्षितौ विसंज्ञो निपपात दुःखितः ॥ २५ ॥
इतीव राज्ञो व्यथितस्य सा निशा
जगाम घोरं श्वसतो मनस्विनः ।
विबोध्यमानः प्रतिबोधनं तदा
निवारयामास स राजसत्तमः ॥ २६ ॥

इत्यार्षे रामायणे वाल्मीकीये अयोध्याकाण्डे
दशरथकैकेयीसंवादो नाम त्रयोदशः
सर्गः ॥ १३ ॥

तन्नात्रेः प्राक् सदा प्रियाम् अतुष्टाम् एवंविधविनयवाक्येनापि सन्तोषमप्राप्ताम् । विवासनं प्रति याच्यमानं वरं समीक्ष्य दुःखितः चिरपरिचितप्रेमत्वात्तां धिक्कर्त्तुमशक्नुवन् प्रयासलब्धपुत्रञ्च त्यक्तुमशक्नुवन् कर्त्तव्यमूढ़तया दुःखितो विसंज्ञो मूर्च्छितः क्षितौ पपात ॥ २५ ॥

दीर्घं घोरमुष्णञ्च श्वसतः सा निशा जगाम । प्रतिबोधनं तत्साधनमङ्गलगीतादिकम् दुःखवशादिति भावः ॥ २६ ॥

इति रामाभिरामे श्रीरामीये रामायणतिलके
अयोध्याकाण्डे त्रयोदशः सर्गः ।

# चतुर्दशः सर्गः ।

पुत्रशोकार्दितं पापा विसंज्ञं पतितं भुवि ।
विचेष्टमानमुत्प्रेक्ष्य ऐक्ष्वाकमिदमब्रवीत् ॥ १ ॥
पापं कृत्वेव किमिदं मम संश्रुत्य संश्रवम् ।
शेषे क्षितितले सन्नः स्थित्यां स्थातुं त्वमर्हसि ॥ २ ॥
आहुः सत्यं हि परमं धर्मं धर्मविदो जनाः ।
सत्यमाश्रित्य च मया त्वं धर्मं प्रति चोदितः ॥ ३ ॥

एवं दशां प्राप्तेऽपि राजनि कैकेयी मन्निमित्ततो राजा म्रियते चेत् म्रियतां वृद्धो न तु मयोक्तमन्यथा कार्य्यमिति निश्चित्याह,—पुत्रेत्यादि । पापा कैकेयी विचेष्टमानं मरणकालइव विकृतमुत्प्रेक्ष्य सम्यक् दृष्ट्वापीत्यर्थः ॥ १ ॥

मम संश्रवं वरदानरूपं संश्रुत्य प्रतिश्रुत्य अङ्गीकृत्य पापं कृत्वेव सन्नः पीड़ितः सन् शेषे इदं किं इदं नोचितमित्यर्थः । अतः स्थित्यां सत्यपालनरूपायां सतां मर्य्यादायाम् ॥ २ ॥

सत्यरूपं धर्म्ममाश्रित्य उद्दिश्य त्वञ्च त्वं तु मया प्रतिचोदितः वरदानविषये प्रेरितः । तव सत्यं रक्षितुमेषा मे प्रेरणा अन्यथा प्रतिज्ञातवरदानं विनैव मरणे तवाधर्म्मः स्यादिति भावः ॥ ३ ॥

संश्रुत्य शैब्यः श्येनाय स्वां तनुं जगतीपतिः।
प्रदाय पक्षिणे राजा जगाम गतिमुत्तमाम्॥ ४॥
तथा ह्यलर्कस्तेजस्वी ब्राह्मणे वेदपारगे।
याचमाने स्वके नेत्रे उद्धृत्याविमना ददौ॥ ५॥
सरितान्तु पतिः स्वल्पां मर्य्यादां सत्यमन्वितः।
सत्यानुरोधात् समये वेलां स्वान्नातिवर्त्तते॥ ६॥
सत्यमेकपदं ब्रह्म सत्ये धर्म्मः प्रतिष्ठितः।
सत्यमेवाक्षया वेदाः सत्येनावाप्यते परम्॥ ७॥
सत्यं समनुवर्त्तस्व यदि धर्म्मे धृता मतिः।
स वरः सफलो मेऽस्तु वरदो ह्यसि सत्तम!॥ ८॥
धर्म्मस्यैवाभिकामार्थं मम चैवाभिचोदनात्।

यद्यपि सत्यपालने प्राणसंशयस्तथापि तमङ्गीकृत्य सत्यरक्षणमेव न्याय इत्याह,—संश्रुत्येत्यादि॥ ४॥ ५॥

सरिताम्पतिः सत्यमन्वितः सत्यं प्राप्तः। सत्यानुरोधात् सत्यत्याग-भयात्। स्वल्पां मर्य्यादां सुलङ्घ्यामपि वेलां समये चन्द्रोदयरूपे वृद्धि-समयेऽपि नातिवर्त्तते॥ ६॥

प्रणवरूपैकपदवाच्यत्वाद्वाच्यवाचकयोश्चाभेदात् यत्प्रणवरूपं ब्रह्मशास्त्रं तत् सत्यवाक्यमेव। अक्षया वेदाः अक्षयं तज्ज्ञानफलं सत्येनैव परं पदं ब्रह्मस्वरूपं प्राप्यते चित्तशुद्धिद्वारेति भावः॥ ७॥

तस्मात् सत्यमिति॥ ८॥

प्रव्राजय सुतं रामं त्रिः खलु त्वां ब्रवीम्यहम् ॥ ९ ॥
समयञ्च ममार्य्येमं यदि त्वं न करिष्यसि ।
अग्रतस्ते परित्यक्ता परित्यक्ष्यामि जीवितम् ॥ १० ॥
एवं प्रचोदितो राजा कैकेय्या निर्विशङ्कया ।
नाशकत् पाशमुन्मोक्तुं बलिरिन्द्रकृतं यथा ॥ ११ ॥
उद्भ्रान्तहृदयश्चापि विवर्णवदनोऽभवत् ।
स धुर्य्यो वै परिष्पन्दन् युगचक्रान्तरं यथा ॥ १२ ॥
विकलाभ्याञ्च * नेत्राभ्यामपश्यन्निव भूमिपः ।
कृच्छ्राद्धैर्य्येण संस्तभ्य कैकेयीमिदमब्रवीत् ॥ १३ ॥

धर्मस्य परलोकसिद्धिफलकस्य अभिकामार्थं प्रार्थनीयफलसिद्ध्यर्थं क्रियमाणान्मम अभिचोदनात् प्रेरणाच्च त्वं सुतं रामं प्रव्राजय एवं त्वां त्रिर्ब्रवीमि अतो नाहमस्मादरग्रहणान्निवर्त्तयितुं शक्येति भावः ॥ ९ ॥

विपक्षे स्त्रीबधदोषस्याधिकस्ते इत्याह,—समयञ्चेति । मद्वरविषयमर्थं परित्यक्ता त्वयोपेक्षिता ते अग्रतो जीवितं त्यक्ष्यामि ॥ १० ॥

एवं न्यायोपेतप्रकारेण पाशं सत्यपाशबन्धनम् इन्द्रकृतं इन्द्रप्रेरितोपेन्द्रकृतं पदत्रयमितदेशप्रतिश्रवरूपं पाशम् ॥ ११ ॥

युगचक्रयोरन्तरं मध्यं प्राप्य परिष्पन्दन् तिर्यक् चेष्टमानो धुर्य इव उद्भ्रान्तहृदयत्वादिविशिष्टोऽभवत् ॥ १२ ॥

संस्तभ्य विकलञ्चित्तमिति शेषः ॥ १३ ॥

---

* "विक्लवाभ्याम्" इति वा पाठः ।

यस्ते मन्त्रकृतः पाणिरग्नौ पापे ! मया धृतः ।
संत्यजामि * स्वजञ्चैव तव पुत्रं सह त्वया ॥ १४ ॥
प्रयाता रजनी देवि सूर्य्यस्योदयनं प्रति ।
अभिषेकं गुरुजनास्त्वरयिष्यति मां ध्रुवम् ॥ १५ ॥
रामाभिषेकसंभारैस्तदर्थमुपकल्पितैः ।
रामः कारयितव्यो मे मृतस्य सलिलक्रियाम् ॥ १६ ॥
सपुत्रया त्वया नैव कर्त्तव्या सलिलक्रिया ।
व्याहन्तास्य शुभाचारे ! यदि रामाभिषेचनम् ॥ १७ ॥

ईदृश्याः सपुत्रायास्त्याग एवोचित इत्याशयेनाह,—यस्ते इति । मन्त्रकृतः गृह्णामीति मन्त्रेण संस्कृतः संत्यजामि तत्प्रयुक्तं व्यवहारं त्यजामि । स्वजं स्वस्माज्जातं तव पुत्रञ्च त्वया सह त्यजामि ॥ १४ ॥

किञ्च रामाभिषेको मया अशक्यनिवारण इत्याह,—प्रयातेत्यादि । उदयनं प्रति उदयं प्रतिलभ्य । तदर्थम् अभिषेकार्थं कल्पितै रामाभिषेकसम्भारैरभिषेकं कर्त्तुं गुरुजनो मां त्वरयिष्यति । अतो गुरुजनानुरोधेन मया रामः कारयितव्यः कृताभिषेकः कारयितव्यः एवं सति दुष्टया मत्सलिलक्रिया न कार्य्येत्याह,—मृतस्येत्यादि । मा कुर्विति शेषः ॥ १५ ॥ १६ ॥

---

* "तं त्यजामि" इति वा पाठः ।
† "अभिषेकाय हि जनः" इति वा पाठः ।

न शक्तोऽद्यास्म्यहं द्रष्टुं दृष्ट्वापूर्वं तथामुखम् ।
हृतहर्षं तथानन्दं * पुनर्जनमवाङ्मुखम् ॥ १८ ॥
तां तथा ब्रुवतस्तस्य भूमिपस्य महात्मनः ।
प्रभाता शर्वरी पुण्या चन्द्रनक्षत्रमालिनी ॥ १९ ॥

क्रोधातिशयेनोक्तमेवार्थं पुनराह,—सपुत्रयेति इति कतकतीर्थौ । मम तु प्रतिभाति सूर्योदयं प्रलभ्याभिषेकं कर्त्तुं त्वरयिष्यति अतः स एव मया कर्त्तव्य इत्याद्यर्थः । त्वन्तु त्याज्यैवेति भावः । ननु मयि जीवन्त्यां कथं रामाभिषेको भविष्यति तत्राह,—यदि गुरूनप्यवज्ञाय रामाभिषेचनं व्याहन्तासि तद्विघातं करिष्यसि तदाभिषेकार्थं कल्पितै रामाभिषेकसम्भारैः मृतस्य मे सलिलक्रियां मया रामः कारयितव्यः । क्रोधादाह सपुत्रयेति । ननु किमनेनात्मवैधव्यव्यवसायेन, पुत्रादप्यात्म . प्रियत्वादात्मनः कामाय सर्वं प्रियं भवतीति श्रुतेरत आह,— न शक्त इति । तथामुखं तादृशमुखवन्तं ऊर्द्धविकसितमुखं दृष्ट्वा पुनरिदानीम् अवाङ्मुखं म्लानं द्रष्टुं न शक्नोमि । एवञ्च तादृशजीवनापेक्षया मरणं मे श्रेय इति सर्वथा मया मर्त्तव्यमिति भावः ॥ १७ ॥ १८ ॥

तां कैकेयीं पुण्या प्रभाता पुण्यसाधनप्रभातकालावच्छिन्ना जातेत्यर्थः । यद्वा निरन्तररामचिन्तासमेतत्वात् पुण्या शर्वरी तस्य जातेत्यर्थः ॥ १९ ॥

* "निरानन्दम्" इति वा पाठः ।

ततः पापसमाचारा कैकेयी पार्थिवं पुनः।
उवाच परुषं वाक्यं वाक्यज्ञा रोषमूर्च्छिता॥ २०॥
किमिदं भाषसे राजन्! वाक्यं गररुजोपमम्।
आनाययितुमक्लिष्टं पुत्रं राममिहार्हसि॥ २१॥
स्थाप्य राज्ये मम सुतं कृत्वा रामं वनेचरम्।
निःसपत्नाञ्च मां कृत्वा कृतकृत्यो भविष्यसि॥ २२॥
स तुन्न इव तीक्ष्णेन प्रतोदेन हयोत्तमः।
राजा प्रचोदितोऽभीक्ष्णं कैकेय्या वाक्यमब्रवीत् *॥२३॥
धर्म्मबन्धेन बद्धोऽस्मि नष्टा च मम चेतना।

रोषमूर्च्छिता क्रोधव्याप्ता परुषं मदीयं ऋणं दत्त्वा इत उत्तिष्ठेत्येवं-रूपम्॥ २०॥

गरो विषं रुजा शूलादि तद्वद्दुःखदं किं भाषसे व्यर्थमेवेति भावः। वाक्यमङ्गरुजोपममिति पाठे। अङ्गेति राजामन्त्रणम्। इहानाययितुं मदृणादानं विना इतो वहिर्गमनमशक्यमिति तात्पर्य्यम्॥ २१॥

कृतकृत्यः कृतशौचादिकृत्यः। कृत्य इत्यावश्यके कृत्यप्रत्ययः॥ २२॥

तुन्नः व्यथां प्रापितः। नुन्न इति पाठे प्रेरितः। तीक्ष्णप्रतोदप्रेरितो हयो यथा आरोहाधीनस्तथा तद्वाक्यप्रेरितो राजा तदधीनो भूत्वा इत्यर्थः॥ २३॥

---

* "कैकेयीमिदमब्रवीत्" इति वा पाठः।

ज्येष्ठं पुत्रं प्रियं रामं द्रष्टुमिच्छामि धार्मिकम् ॥ २४ ॥
ततः प्रभातां रजनीम् उदिते च दिवाकरे ।
पुष्ये नक्षत्रयोगे च मुहूर्त्ते च समागते ॥ २५ ॥
वशिष्ठो गुणसम्पन्नः शिष्यैः परिवृतस्तदा ।
उपगृह्याशु सम्भारान् प्रविवेश पुरोत्तमम् ॥ २६ ॥
सिक्तसम्मार्जितपथां पताकोत्तमभूषिताम् ।
संहृष्टमनुजोपेतां समृद्धविपणापणाम् ॥ २७ ॥
महोत्सवसमायुक्तां राघवार्थे समुत्सुकाम् ।
चन्दनागुरुधूपैश्च सर्वतः परिधूपिताम् ॥ २८ ॥
तां पुरीं समतिक्रम्य पुरन्दरपुरोपमाम् ।

तदाह,—धर्मेति । एवञ्च ममाचेतनत्वात्त्वमेव स्वाभीष्टं यथा सिध्यति तथा कुरु । अहं न किमपि वक्ष्यामीति भावः । सर्वथा चेतनानाशात् प्राक् रामं द्रष्टुं परमिच्छामि । तद्यथा सम्पद्यते तथा कुरु एतावद्वा मदिष्टं कुर्विति भावः ॥ २४ ॥

प्रभातां रजनीं दृष्ट्वा सरय्वां कृतस्नानादिनित्यक्रिय इति शेषः । वशिष्ठः पुरोत्तमं प्रविवेशेति उत्तरश्लोकेनान्वयः । कवेरपि वर्णनीयमर्थोभावेन शोकाविष्टत्वात् न्यूनपदादिकमदोषः ॥ २५ ॥

सम्भारान् कुशादीन् ॥ २६ ॥

सम्मार्जनं मार्जन्या धूलिनिराकरणम् । समृद्धा विपणाः क्रेयपदार्था येषु तादृशा आपणा यस्यां सा ॥ २७ ॥

ददर्शान्तःपुरं श्रीमान्नानाध्वजगणायुतम् ॥ २९ ॥
पौरजानपदाकीर्णं ब्राह्मणैरुपशोभितम्।
यष्टिमद्भिः * सुसम्पूर्णं सदश्वैः परमार्चितैः ॥ ३० ॥
तदन्तःपुरमासाद्य व्यतिचक्राम तं जनम्।
वशिष्ठः परमप्रीतः परमर्षिभिरावृतः ॥ ३१ ॥
स त्वपश्यद्विनिष्क्रान्तं सुमन्त्रं नाम सारथिम्।
द्वारे मनुजसिंहस्य सचिवं प्रियदर्शनम् ॥ ३२ ॥
तमुवाच महातेजाः सूतपुत्रं विशारदम्।
वसिष्ठः क्षिप्रमाचक्ष्व नृपतेर्मामिहागतम् ॥ ३३ ॥
इमे गङ्गोदकघटाः सागरेभ्यश्च काञ्चनाः।
औदुम्बरं भद्रपीठमभिषेकार्थमाहृतम् ॥ ३४ ॥

समुत्सुकं समुत्सुकजनाम् ॥ २८ ॥ २९ ॥

यष्टिमद्भिरिति ब्राह्मणविशेषणम्। धारयेद्वैणवीं यष्टिमिति स्नातकधर्मप्रकरणोक्तेः। यद्वा यष्टिमद्भिरित्यस्य तद्धरै राजसेवकैरित्यर्थः ॥ ३० ॥ ३१ ॥

विनिष्क्रान्तं अन्तःपुरात्। द्वारेऽन्तःपुरद्वारे ॥ ३२ ॥

वशिष्ठः सूतपुत्रमुवाच। किमुवाचेत्याह,—क्षिप्रमित्यादि ॥ ३३ ॥

काञ्चनाः सौवर्णाः गङ्गोदकघटाः तदुदकपूर्णा घटाः सागरेभ्यश्च

* "यज्ञविद्भिः" इति वा पाठः।

सर्व्वबीजानि गन्धाश्च रत्नानि विविधानि च ।
क्षौद्रं दधिघृतं लाजा दर्भाः सुमनसः पयः ॥ ३५ ॥
अष्टौ च कन्या रुचिरा मत्तश्च वरवारणः ।
चतुरश्वो रथः श्रीमान् निस्त्रिंशो धनुरुत्तमम् ॥ ३६ ॥
वाहनं नरसंयुक्तं छत्रञ्च शशिसन्निभम् ।
श्वेते च बालव्यजने भृङ्गारञ्च हिरण्मयम् ॥ ३७ ॥
हेमदामपिनद्धश्च ककुद्मान् पाण्डुरो वृषः ।
केसरी च चतुर्दंष्ट्रो हरिश्रेष्ठो महाबलः ॥ ३८ ॥
सिंहासनं व्याघ्रतनुः समिधश्च हुताशनः ।
सर्व्वे वादित्रसंघाश्च वेश्याश्चालङ्कृता स्त्रियः ॥ ३९ ॥
आचार्या ब्राह्मणा गावः पुण्याश्च मृगपक्षिणः ।

तज्जलपूर्णा घटा आहृता इति शेषः । औदुम्बरं भद्रपीठम् । औदुम्बर्य्यासन्दीतस्यै प्रादेशमात्राः पादा इति बह्वृचब्राह्मणप्रसिद्धम् ॥ ३४ ॥

क्षौद्रं मधु । सुमनसः पुष्पाणि ॥ ३५ ॥

कन्याः कुमार्य्यः । निस्त्रिंशः खड्गः ॥ ३६ ॥

नरसंयुक्तं वाहनं शिविका । भृङ्गारं कनकालुका स्वर्णकरकपात्रम् * ॥ ३७ ॥

चतुर्दंष्ट्रत्वादेव हरिश्रेष्ठः । यद्वा हरिश्रेष्ठ उत्तमाश्वः ॥ ३८ ॥

व्याघ्रतनुर्व्याघ्रचर्म ॥ ३९ ॥

---

* भृङ्गारकुसुमाकार हिरण्मयपात्रम् ।

पौरजानपदश्रेष्ठा नैगमाश्च गणैः सह ॥ ४० ॥
एते चान्ये च बहवः प्रीयमाणा प्रियंवदाः।
अभिषेकाय रामस्य सह तिष्ठन्ति पार्थिवैः ॥ ४१ ॥
त्वरयस्व महाराजं यथा समुदितेऽहनि।
पुष्ये नक्षत्रयोगे च रामो राज्यमवाप्नुयात् ॥ ४२ ॥
इति तस्य वचः श्रुत्वा सूतपुत्रो महाबलः *।
स्तुवन् नृपतिशार्दूलं प्रविवेश निवेशनम् ॥ ४३ ॥
तन्तु पूर्वोदितं वृद्धं द्वारस्था राजसम्मताः।
न शेकुरभिसंरोद्धुं राज्ञः प्रियचिकीर्षवः ॥ ४४ ॥
स समीपस्थितो राज्ञस्तामवस्थामजज्ञिवान्।
वाग्भिः परमतुष्टाभिरभिष्टोतुं प्रचक्रमे ॥ ४५ ॥

नैगमाः वणिजः गणैः स्वस्वगणैः ॥ ४० ॥

प्रीयमाणाः प्रीतियुक्ताः पार्थिवैः सहेत्यन्वयः ॥ ४१ ॥

समुदिते मुहूर्त्तगुणैः। यथा रामो राज्यमवाप्नुयात्तथा राजानं त्वरयस्वेति सम्बन्धः ॥ ४२ ॥ ४३ ॥

पूर्वोदितं अयं कदापि न निवारणीय इति पूर्वमेव राज्ञा ज्ञापितम्। एवमाज्ञायां हेतुर्वृद्धमिति ॥ ४४ ॥

तामवस्थां कैकेयीकृतां घोरामवस्थां अजज्ञिवान् न ज्ञातवान्।

---

* "महात्मनः" इति वा पाठः।

ततः सूतो यथापूर्वं * पार्थिवस्य निवेशने ।
सुमन्त्रः प्राञ्जलिर्भूत्वा तुष्टाव जगतीपतिम् ॥ ४६ ॥
यथा नन्दति तेजस्वी सागरो भास्करोदये ।
प्रीतः प्रीतेन मनसा तथा नन्दय नस्ततः ॥ ४७ ॥
इन्द्रमस्यान्तु वेलायामभितुष्टाव मातलिः ।
सोऽजयद्दानवान् सर्वांस्तथा त्वां बोधयाम्यहम् ॥ ४८ ॥
वेदाः सहाङ्गा विद्याश्च यथा ह्यात्मभुवं प्रभुम् ।

गता अतो वाग्भिरित्यादि । परमतुष्टाभिः तोषयुक्ताभिः तोषजनकाभि-श्चेति यावत् ॥ ४५ ॥ ४६ ॥

भास्करोदये तत्काले प्रत्यूर्मिप्रतिफलितरवितेजसा तेजस्वी सागरो यथा स्नातुकामान् नन्दति नन्दयति तथा नोऽस्मान् प्रीतेन तुष्टेन मनसा प्रीतोऽस्मद्विषयकप्रीत्याश्रयः सन् नन्दय । यत्तु भास्करश्चन्द्र इति तत्प्रसिद्धिविरुद्धम् । तथानन्दघन इति पाठे आनन्दघनः आनन्द-पूर्णस्त्वं नन्द नन्दय प्रजा इति शेषः । नन्दानन्देति च तत्त्वेन बो-ध्यम् ॥ ४७ ॥

अस्यां वेलायां उदयवेलायाम् । तया स्तुत्या चोत्साहयुक्तः सन् यथा दानवान् सोऽजयत् तथा रिपुजयफलकं बोधनं ते करोमी-त्यर्थः ॥ ४८ ॥

अङ्गैः सहिता वेदा विद्याश्च मीमांसादयः यथा ब्रह्माणं स्वष्टौ

* "यथाकालम्" इति वा पाठः ।

ब्रह्माणं बोधयन्त्यद्य तथा त्वां बोधयाम्यहम् ॥ ४८ ॥
आदित्यः सह चन्द्रेण यथा भूतधरां शुभाम्।
बोधयत्यद्य पृथिवीं तथा त्वां बोधयाम्यहम् ॥ ५० ॥
उत्तिष्ठ सुमहाराज! कृतकौतुकमङ्गलः।
विराजमानो वपुषा मेरोरिव दिवाकरः * ॥ ५१ ॥
उदतिष्ठत रामस्य समग्रमभिषेचनम्।

बोधयन्ति एवं त्वां बोधयामि वेदेभ्य एव भूरादीन् पदार्थान् ज्ञात्वा वेधास्तान् सृजतीति श्रुतिस्मृतिप्रसिद्धम्। यथा चन्द्रसहितो रविरुदयास्तमयाभ्यां पृथिवीं तत्स्थं जनं बोधयति तद्वच्च ॥ ४९ ॥ ५० ॥

कृतकौतुकमङ्गलः कृतानि कौतुके अभिषेकोत्सवे मङ्गलानि विचित्रवस्त्राभरणधारणादिरूपाणि येन कौतुकं त्वभिलाषे स्यादुत्सवे नर्महर्षयोः। अतएव वपुषा विराजमानस्त्वं मेरोर्दिवाकर इवोत्तिष्ठ ॥५१॥

कर्त्तव्यं यद्यदाज्ञप्तं तत् सर्वं कृतमित्याह,—उदतिष्ठतेति। उत्थितं

---

* "सोमसूर्य्यौ च काकुत्स्थ! शिववैश्रवणावपि।
वरुणश्चाग्निरिन्द्रश्च विजयं प्रदिशन्तु ते।
गता भगवती रात्रिरहः शिवमुपस्थितम्।
प्रतिबुद्धस्व राजर्षे! कार्य्यं महदुपस्थितम् ॥"
इत्यधिकः पाठः।

पौरजानपदाश्चापि नैगमश्च कृताञ्जलिः * ॥ ५२ ॥
अयं वशिष्ठो भगवान् ब्राह्मणैः सह तिष्ठति ।
क्षिप्रमाज्ञाप्यतां राजन् राघवस्याभिषेचनम् ॥ ५३ ॥
यथा ह्यपालाः पशवो यथा सेना ह्यनायका ।
यथा चन्द्रं विना रात्रिर्यथा गावो विना वृषम् ॥ ५४ ॥
एवं हि भविता राष्ट्रं यत्र राजा न दृश्यते ।
एवं तस्य वचः श्रुत्वा सान्त्वपूर्वमिवार्थवत् ॥ ५५ ॥
अभ्यकीर्यत शोकेन भूय एव महीपतिः ।
ततस्तु राजा तं सूतं सन्नहर्षः सुतं प्रति ॥ ५६ ॥
शोकरक्तेक्षणः श्रीमानुद्वीक्ष्योवाच धार्मिकः ।

सम्पन्नमभूदित्यर्थः । अभिषेचनं तदुपकरणम् । नैगमो वणिग्वर्गः ॥ ५२ ॥
॥ ५३ ॥ ५४ ॥

भविता लुट् । तस्माच्छीघ्रमुत्तिष्ठेति भावः । इवशब्द एवार्थे ॥५५॥

अभ्यकीर्यत व्याप्तोऽभवत् । सन्नहर्षः नष्टहर्षः ॥ ५६ ॥

शोकरक्तेक्षणः शोकजरोदनेन रक्तनेत्रः । भूयः कैकेयीवाक्यैः कृत्तानि मर्माणि पुनरधिकं स्तुतिवाक्यैरित्यर्थः । अनुचितकालप्रबुध्यमानत्वादिति भावः ॥ ५७ ॥

---

* "पौरजानपदैश्चापि नैगमैश्च कृतात्मभिः ।"
इति वा पाठः ।

वाक्यैस्तु खलु मर्माणि मम भूयो निकृन्तसि ॥ ५७ ॥
सुमन्त्रः करुणं श्रुत्वा दृष्ट्वा दीनञ्च पार्थिवम् ।
प्रगृहीताञ्जलिः किञ्चित्तस्माद्देशादपाक्रमत् ॥ ५८ ॥
यदा वक्तुं स्वयं दैन्यान्न शशाक महीपतिः ।
तदा सुमन्त्रं मन्त्रज्ञा कैकेयी प्रत्युवाच ह ॥ ५९ ॥
सुमन्त्र ! राजा रजनीं रामहर्षसमुत्सुकः ।
प्रजागरपरिश्रान्तो निद्रावशमुपागतः ॥ ६० ॥
तद्गच्छ त्वरितं सूत ! राजपुत्रं यशस्विनम् ।
राममानय भद्रं ते नात्र कार्य्या विचारणा ॥ ६१ ॥
अश्रुत्वा राजवचनं कथं गच्छामि भामिनि ! ।
तच्छ्रुत्वा मन्त्रिणो वाक्यं राजा मन्त्रिणमब्रवीत् ॥ ६२
सुमन्त्र ! रामं द्रक्ष्यामि शीघ्रमानय सुन्दरम् ।
स मन्यमानः कल्याणं हृदयेन ननन्द च ॥ ६३ ॥

अपाक्रमत् बद्धाञ्जलिः सन् भीतोऽपाक्रमत् ॥ ५८ ॥

दैन्यं सत्यपाशबन्धनजम्। मन्त्रज्ञा स्वकार्य्ये वक्तव्यज्ञा ॥ ५९ ॥

अतएव मिथ्याप्याह,—रामहर्षेति। रामाभिषेकहर्षेत्यर्थः ॥ ६० ॥ ६१ ॥ ६२ ॥

कल्याणं मन्यमानः कदाचिद्रामं दृष्ट्वा तस्मिन् प्रीतिं करिष्यतीति मन्यमानः। यदा अस्मिन्नवसरे रामदर्शनमेव कल्याणं मन्यमा

निर्जगाम च स प्रीत्या त्वरितो राजशासनात् ।
सुमन्त्रश्चिन्तयामास त्वरितं चोदितस्तया ॥ ६४ ॥
व्यक्तं रामाभिषेकार्थे इहायस्यति धर्मराट् ।
इति सूतो मतिं कृत्वा हर्षेण महता पुनः * ॥ ६५ ॥
निर्जगाम महातेजा राघवस्य दिदृक्षया ।
सागरह्रदसङ्काशात् सुमन्त्रोऽन्तःपुराच्छुभात् ॥ ६६ ॥
ततः पुरस्तात्सहसा विनिःसृतो
महीपतेर्द्वारगतान्विलोकयन् ।

म्रतिसमयत्वात् । यद्वा देवानां ऋषीणाञ्च कल्याणं मन्यमानः अत एव हृदयेन ननन्द । नतु बहिस्तच्चिह्नमिति भावः ॥ ६३ ॥

निर्गमनकाले पुनस्त्वरितमानयेति तया कैकेय्या प्रेरितः । चिन्तयामास किमित्येषा भूयस्त्वरयतीति चिन्ता ॥ ६४ ॥

व्यक्तं रामाभिषेकार्थ एव एषा त्वरयति । इह धर्मराट् दशरथः आयस्यति आयासवान् भवति । प्रयासबाहुल्येन प्रायो बहिर्नागमिष्यतीति मतिं कृत्वेत्यन्वयः ॥ ६५ ॥

पुरान्तर्वर्त्तित्वादन्तःपुरस्य सागरान्तर्वर्त्तिह्रदतुल्यत्वम् ॥ ६६ ॥

---

* "सूतः" इति वा पाठः ।

ददर्श पौरान्विविधान्महाजनान्
उपस्थितान् द्वारमुपेत्य विष्ठितान्॥ ६७॥

इत्यार्षे रामायणे वाल्मीकीये अयोध्याकाण्डे
रामानयने सुमन्त्रगमनं नाम
चतुर्दशः सर्गः। १४।

तत इति। महीपतेर्द्वारगतानधिकारिणो विलोकयन् पौरान् महाजनान् पुरस्तादग्रे ददर्श ततः निर्गमनोत्तरम्॥ ६७॥

इति रामाभिरामे श्रीरामीये रामायणतिलके
अयोध्याकाण्डे चतुर्दशः सर्गः।

---

## पञ्चदशः सर्गः ।

ते तु तां रजनीमुष्य ब्राह्मणा वेदपारगाः ।
उपतस्थुरुपस्थानं सहराजपुरोहिताः ॥ १ ॥
अमात्या बलमुख्याश्च मुख्या ये निगमस्य च ।
राघवस्याभिषेकार्थे प्रीयमाणाः सुसङ्गताः ॥ २ ॥
उदिते विमले सूर्य्ये पुष्ये चाभ्यागतेऽहनि ।
लग्ने कर्कटके प्राप्ते जन्म रामस्य च स्थिते ॥ ३ ॥
अभिषेकाय रामस्य द्विजेन्द्रैरुपकल्पितम् ।
काञ्चना जलकुम्भाश्च भद्रपीठं स्वलङ्कृतम् ॥ ४ ॥

अथ कैकेय्या राज्ञा च गुप्तहृदयतया प्रवर्त्तितस्य सुमन्त्रस्य यथापूर्व्वं प्रवृत्तिं वदन् राजाज्ञया राजद्वारि मिलितानां जनानां परस्परसम्भाषणप्रकारमाह,—ते त्वित्यादि । ते राजप्रेरिताः उष्य उषित्वा । उपस्थानं राजद्वारम् । अधिकरणे ल्युट् ॥ १ ॥

निगमो वणिक्समूहः ॥ २ ॥

अहनि पुष्यनक्षत्रे आगते रामस्य जन्म जन्मनि स्थिते । जन्मलग्ने कर्कटलग्ने च प्राप्ते भाविनि इति शेषः ॥ ३ ॥

रथश्च सम्यगास्तीर्णो भास्वता व्याघ्रचर्मणा।
गङ्गायमुनयोः पुण्यात्सङ्गमादाहृतं जलम् ॥ ५ ॥
याश्चान्याः सरितः पुण्या ह्रदाः कूपाः सरांसि च।
प्राग्वहाश्चोर्ध्ववाहाश्च तिर्य्यग्वाहाश्च क्षीरिणः * ॥ ६ ॥
ताभ्यश्चैवाहृतं तोयं समुद्रेभ्यश्च सर्वशः।
क्षौद्रं दधि घृतं लाजा दर्भाः सुमनसः पयः ॥ ७ ॥
अष्टौ च कन्या रुचिरा मत्तश्च वरवारणः।
सजलाः क्षीरिभिश्छन्ना घटाः काञ्चनराजताः ॥ ८ ॥
पद्मोत्पलयुता भान्ति पूर्णाः परमवारिणा।
चन्द्रांशुविकचप्रख्यं पाण्डुरं रत्नभूषितम् ॥ ९ ॥
सज्जन्तिष्ठति रामस्य बालव्यजनमुत्तमम्।
चन्द्रमण्डलसङ्काशमातपत्रञ्च पाण्डुरम् ॥ १० ॥

अभिषेकाय अभिषेकार्थमुपकरणमुपकल्पितं सिद्धं कृतमित्यर्थः। काञ्चना जलकुम्भा आनीताः अलङ्कृतं भद्रपीठं स्थापितम् ॥ ४ ॥ ५ ॥

प्राग्वहा इत्यादेर्नद्य इति शेषः। पर्वतघटनादिनोर्ध्वप्रवाहवत्प्रदेशवत्य ऊर्द्धवाहाः। क्षीरिणः तिर्य्यग्वाहाः दक्षिणोत्तरप्रवाहाः। क्षीरपूर्णाः क्षीरमत्र जलम्। क्लीबभाव आर्षः ॥ ६ ॥ ७ ॥

क्षीरिभिः क्षीरिवृक्षपल्लवैः ॥ ८ ॥ ९ ॥ १० ॥

---

* "समाहिताः" इति वा पाठः।

सज्जं द्युतिकरं श्रीमदभिषेकपुरःसरम्।
पाण्डुरश्च वृषः सज्जः पाण्डुराश्वश्च संस्थितः * ॥ ११ ॥
वादित्राणि च सर्वाणि वन्दिनश्च तथापरे।
इक्ष्वाकूणां यथा राज्ये संभ्रियेताभिषेचनम् ॥ १२ ॥
तथाजातीयमादाय राजपुत्राभिषेचनम्।
ते राजवचनात्तत्र समवेता महीपतिम् ॥ १३ ॥
अपश्यन्तोऽब्रुवन् कोऽनु राज्ञो नः प्रतिवेदयेत्।
न पश्यामश्च राजानमुदितश्च दिवाकरः ॥ १४ ॥
यौवराज्याभिषेकश्च सज्जो रामस्य धीमतः।
इति तेषु ब्रुवाणेषु सर्वांस्तांश्च महीपतीन् ॥ १५ ॥

अभिषेकपुरःसरं अभिषेकसामग्रीमुख्यम् ॥ ११ ॥

इक्ष्वाकूणां राज्येऽभिषेचनमुद्दिश्य यथा वस्तुजातं सम्भ्रियेत सम्भ्रियते ॥ १२ ॥

तथाजातीयं वस्तुजातं रामाभिषेकमुद्दिश्यादाय गृहीत्वा राजवचनात् राजद्वारे समवेता मिलिता ब्राह्मणादयो महीपतिमपश्यन्तो नोऽस्मान् राज्ञः कः प्रतिवेदयेदित्यब्रुवन् ॥ १३ ॥ १४ ॥

---

* "प्रस्तुतश्च गजः श्रीमानौपवाह्यः प्रतीक्षते।
अष्टौ च कन्या मङ्गल्याः सर्वाभरणभूषिताः।"
प्रक्षिप्तमेतत्।

अब्रवीत्तानिदं वाक्यं सुमन्त्रो राजसत्कृतः।
रामं राज्ञो नियोगेन त्वरया प्रस्थितोऽस्म्यहम् ॥ १६ ॥
पूज्या राज्ञो भवन्तश्च रामस्य तु विशेषतः।
अयं पृच्छामि वचनात् सुखमायुष्मतामहम्।
राज्ञः संप्रतिबुद्धस्य चानागमनकारणम् ॥ १७ ॥
इत्युक्त्वान्तःपुरद्वारमाजगाम पुराणवित् ॥ १८ ॥
सदासक्तञ्च तद्वेश्म सुमन्त्रः प्रविवेश ह।
तुष्टावास्य तदा वंशं प्रविश्य स विशाम्पतेः ॥ १९ ॥
शयनीयं नरेन्द्रस्य तदासाद्य व्यतिष्ठत।
सोऽत्यासाद्य तु तद्वेश्म तिरस्करणिमन्तरा ॥ २० ॥

यौवराज्याभिषेकस्तत्सामग्री। सर्वान् जनान् महीपतींश्च अब्रवीदित्यन्वयः ॥ १५ ॥

रामं आनेतुमिति शेषः ॥ १६ ॥

यद्यपि प्रस्थितस्तथापि भवन्तो राज्ञो रामस्य च पूज्या इति कृत्वा आयुष्मतां युष्माकं वचनात् सर्वे राजानो ब्राह्मणादयश्च महाराजं सुखं सुखशयनं पृच्छन्तीति विज्ञापयामि जाग्रतोऽपि बहिरनागमनकारणं किमिति च पृच्छन्तीति विज्ञापयामि ॥ १७ ॥

पुराणवित् चिरकालकथाभिज्ञोऽतिवृद्ध इति यावत् ॥ १८ ॥

सदा असक्तं अवारितद्वारम् ॥ १९ ॥

शयनीयं शयनगृहम्। तिरस्करणिं जवनिकामन्तरा कृत्वेति

आशीर्भिर्गुणयुक्ताभिरभितुष्टाव राघवम् ।
सोमसूर्य्यौ च काकुत्स्थ ! शिववैश्रवणावपि ॥ २१ ॥
वरुणश्चाग्निरिन्द्रश्च विजयं प्रदिशन्तु ते * ।
गता भगवती रात्रिरहः शिवमुपस्थितम् ॥ २२ ॥
बुध्यस्व राजशार्दूल ! कुरु कार्य्यमनन्तरम् ।
ब्राह्मणा बलमुख्याश्च नैगमाश्चागतास्त्विह ॥ २३ ॥
दर्शनं तेऽभिकाङ्क्षन्ते प्रतिबुध्यस्व राघव ! ।
स्तुवन्तं तं तदा सूतं सुमन्त्रं मन्त्रकोविदम् ॥ २४ ॥
प्रतिबुध्य ततो राजा इदं वचनमब्रवीत् ।
राममानय सूतेति यदस्यभिहितो मया ॥ २५ ॥

शेषः । एतेन तावत्पर्य्यन्तं गमनं सूचितम् । अत्यासाद्य अतिसमीपं गत्वा ॥ २० ॥

राजविज्ञापनस्य स्तुतिपूर्वकत्वात् पुनःस्तुतिप्रवृत्तिः ॥ २१ ॥ २२ ॥

निगमो वाणिज्यं तत्सम्बन्धिनो नैगमाः ॥ २३ ॥ २४ ॥

प्रतिबुध्य जवनिकान्तर्हितमपि सुमन्त्रं ध्वनिना ज्ञात्वा । यदस्यभिहितोऽनयेति पाठे अनयेत्युपलक्षणं मया चेत्यर्थः । अतएव ममा-

---

* "यथा साङ्गाश्च वेदा वै ब्रह्माणं बोधयन्ति ते ।
तथा त्वां बोधयिष्यामि उत्तिष्ठ पुरुषर्षभ ! ॥"
इति वा पाठः ।

किमिदं कारणं येन ममाज्ञा प्रतिहन्यते * ।
न चैव संप्रसुप्तोऽहमानयेहाशु राघवम् ॥ २६ ॥
इति राजा दशरथः सूतं तत्रान्वशात् पुनः ।
स राजवचनं श्रुत्वा शिरसा प्रतिपूज्य तम् ॥ २७ ॥
निर्जगाम नृपावासान्मन्यमानः प्रियं महत् ।
प्रपन्नो राजमार्गञ्च पताकाध्वजशोभितम् ॥ २८ ॥
हृष्टः प्रमुदितः सूतो जगामाशु विलोकयन् ।
स सूतस्तत्र शुश्राव रामाधिकरणाः कथाः ॥ २९ ॥
अभिषेचनसंयुक्ताः सर्वलोकस्य हृष्टवत् ।
ततो ददर्श रुचिरं कैलाससदृशप्रभम् ॥ ३० ॥

श्चेति संगच्छते। पूर्वं राज्ञा स्वयमप्युक्तेः। कतकादयस्तु कैकेय्याश्चैव अप्रतिसिद्धमनुमतमिति न्यायेन ममाज्ञा। ननु निद्रापरवशत्वेन राज्ञोऽनुमतं न वेति मे सन्देहस्तत्राह,—न चेति। तेषामिति राजेति श्लोके पुनःप्रदासङ्गतिः स्पष्टैव पूर्वसर्गान्ते अश्रुत्वा राजवचनमित्यादि ननन्द चेत्यन्तश्लोकद्वयस्य सर्वपुस्तकेषूपलम्भाच्च तद्व्याख्यानमसङ्गतमिति ध्येयम् ॥ २५ ॥ ॥ २६ ॥ २७ ॥

प्रियं मन्यमानः हार्दाभिप्रायज्ञानात् ॥ २८ ॥

हृष्टः पुलकितगात्रः प्रमुदित आनन्दचित्तः राजमार्गं विलोकयन्निति सम्बन्धः। रामाधिकरणाः रामविषयाः ॥ २९ ॥

* "प्रतिवाह्यते" इति वा पाठः।

रामवेश्म सुमन्त्रस्तु शक्रवेश्मसमप्रभम् ।
महाकपाटपिहितं वितर्दिशतशोभितम् ॥ ३१ ॥
काञ्चनप्रतिमैकाग्रं मणिविद्रुमतोरणम् ।
शारदाभ्रघनप्रख्यं दीप्तं मेरुगुहासमम् ॥ ३२ ॥
मणिभिर्वरमाल्यानां सुमहद्भिरलङ्कृतम् ।
मुक्तामणिभिराकीर्णं चन्दनागुरुभूषितम् ॥ ३३ ॥
गन्धान्मनोज्ञान्विसृजद्-*-दार्दुरं शिखरं यथा ।
सारसैश्च मयूरैश्च विनदद्भिर्विराजितम् ॥ ३४ ॥
सुकृतेहामृगाकीर्णं सूत्कीर्णं भक्तिभिस्तथा ।
मनश्चक्षुश्च भूतानां आददत्तिग्मतेजसा ॥ ३५ ॥

हृष्टवत् हृष्टानां जनानाम् । स्वार्थे वति आर्षः ॥ ३० ॥

प्रातःसमयत्वान्महाकपाटेन पिहितं स्वल्पद्वारस्यैवोद्घाटितत्वात् । वितर्दिर्वेदिका ॥ ३१ ॥

काञ्चनीभिः प्रतिमाभिर्युक्तं एकं प्रधानमग्रं पुरो भागो यस्य तत् । मणिविद्रुमयुक्तं तोरणं बहिर्द्वारं यस्य तत् । शारदाभ्रवत् घनप्रख्यं निबिड़प्रभम् ॥ ३२ ॥

वरमाल्यानां स्वर्णपुष्पमालानामन्तरालवर्त्तिभिर्महद्भिर्महादीप्तिमद्भिर्मणिभिरलङ्कृतम् ॥ ३३ ॥

दार्दुरं दर्दुरो मलयसन्निकृष्टश्चन्दनगिरिः ॥ ३४ ॥

---

* "विदधत्" इति वा पाठः ।

चन्द्रभास्करसङ्काशं कुवेरभवनोपमम्।
महेन्द्रधामप्रतिमं नानापक्षिसमाकुलम्॥ ३६॥
मेरुशृङ्गसमं सूतो रामवेश्म ददर्श ह।
उपस्थितैः समाकीर्णं जनैरञ्जलिकारिभिः॥ ३७॥
उपादाय समाक्रान्तैस्तदा जानपदैर्जनैः।
रामाभिषेकसुमुखैरुन्मुखैः समलङ्कृतम्॥ ३८॥
महामेघसमप्रख्यमुदग्रं सुविराजितम्।
नानारत्नसमाकीर्णं कुब्जकैरपि चावृतम्॥ ३९॥

स वाजियुक्तेन रथेन सारथिः
समाकुलं राजकुलं विराजयन्।
वरूथिना रामगृहाभिपातिना
पुरस्य सर्वस्य मनांसि हर्षयन्॥ ४०॥

सुकृतैः स्वर्णादिना सुष्ठुनिर्म्मितैरीहामृगैर्वृकैराकीर्णं व्याप्तम्। कोकस्त्वीहामृगो वृकः। भक्तिभिः वर्धकीनां सूक्ष्मचित्रशिल्पैरुत्कीर्णं चित्रवत् तिग्मतेजसा अतिशयितशोभया। यद्वा प्रतिविम्बितसूर्य्यकिरणैः॥ ३५॥ ३६॥

उपस्थितैरागतैः। अञ्जलिकारिभिः नमस्कारार्थम्॥ ३७॥

उपादाय उपायनानि गृहीत्वा आगतैरिति शेषः। समाक्रान्तैर्द्वारपालनिरुद्धैः उन्मुखैरुत्सुकैः॥ ३८॥

उदग्रं प्रशस्तम्। कुब्जकैर्दासैः॥ ३९॥

ततः समासाद्य महाधनं महत्
प्रहृष्टरोमा स बभूव सारथिः ।
मृगैर्मयूरैश्च समाकुलोल्बणं
गृहं वरार्हस्य शचीपतेरिव ॥ ४१ ॥

स तत्र कैलासनिभाः स्वलङ्कृताः
प्रविश्य कक्ष्यास्त्रिदशालयोपमाः ।
प्रियान्वरान् राममते स्थितान् बहून्
व्यपोह्य शुद्धान्तमुपस्थितो रथी ॥ ४२ ॥

स तत्र शुश्राव च हर्षयुक्तो
रामाभिषेकार्थकृतां जनानाम् ।
नरेन्द्रसूनोरभिमङ्गलार्थाः
सर्वस्य लोकस्य गिरः प्रहृष्टाः ॥ ४३ ॥

महेन्द्रसद्मप्रतिमञ्च वेश्म
रामस्य रम्यं मृगपक्षिजुष्टम् ।

राजकुलं राजमार्गं विराजयन् शोभयन् तथा हृदयगुप्तिसंयुतेन रामगृहं समासददिति शेषः ॥ ४० ॥

महाधनं महता धनेन यत्नम् । समाकुलैरितस्ततः प्रवृत्तैरुल्बणां अधिकशोभावत् । वरार्हस्य उत्तमवस्त्वर्हस्य ॥ ४१ ॥

व्यपोह्य अतिक्रम्य । शुद्धान्तमन्तःपुरम् ॥ ४२ ॥

रामस्याभिषेकार्थं अभिषेकप्रयोजनकं कर्म कुर्वतां जनानां गिरो

ददर्श मेरोरिव शृङ्गमुच्चं
विभ्राजमानं प्रभया सुमन्त्रः ॥ ४४ ॥
उपस्थितैरञ्जलिकारिभिश्च
सोपायनैर्जानपदैर्जनैश्च ।
कोट्या परार्धैश्च विमुक्तयानैः
समाकुलं द्वारपथं ददर्श ॥ ४५ ॥
ततो महामेघमहीधराभं
प्रभिन्नमत्यङ्कुशमत्यसह्यम् ।
रामोपवाह्यं रुचिरं ददर्श
शत्रुञ्जयं नागमुदग्रकायम् ॥ ४६ ॥
स्वलङ्कृतान् साश्वरथान् सकुञ्जरान्
अमात्यमुख्यांश्च ददर्श वल्लभान् ।
व्यपोह्य सूतः स हि तान् समन्ततः
समृद्धमन्तःपुरमाविवेश ह ॥ ४७ ॥

नरेन्द्रसूनोः रामस्याभितो मङ्गलं तत्प्रतिपादनसमर्था यासां ताः शुश्राव स तथा लोकस्य च गिरस्ताट्टशीः शुश्राव ॥ ४३ ॥ ४४ ॥

कोट्या तत्संख्यया परार्धैः तत्संख्ययोपलक्षितैर्जनैः । तेनातिसम्मर्दो दर्शितः ॥ ४५ ॥

महामेघाधिरूढपर्वतसदृशम् । प्रभिन्नं मत्तम् । शत्रुञ्जयं तद्‌गार्कं तन्नामानमित्यर्थः । राम उपवाह्यो यस्य तम् ॥ ४६ ॥

ततोऽद्रिकूटाचलमेघसन्निभं
महाविमानोपमवेश्मसंयुतम् ।
अवार्यमाणः प्रविवेश सारथिः
प्रभूतरत्नं मकरो यथार्णवम् ॥ ४८ ॥

इत्यार्षे रामायणे वाल्मीकीये अयोध्याकाण्डे
सुमन्त्रस्य रामान्तःपुरप्रवेशो नाम
पञ्चदशः सर्गः ॥ १५ ॥

वल्लभान् राज्ञ इति शेषः । व्यपोह्य रथागमनेन मार्गादेकदेशे कृत्वा ॥ ४७ ॥

अद्रिकूटे अद्रिशृङ्गे आरूढोऽचलो यो महामेघस्तत्सदृशमौन्नत्येन । तदेन्द्रकूटेति पाठे तन्नामा पर्वतविशेषस्तदारूढेत्यादि प्राग्वत् । महाविमानोपमवेश्मभिः संयुतम् । महाविमानानां तत्संज्ञकानामुत्तमवेश्मनां सङ्घो यत्र महाविमानेभ्य उत्तमानां वेश्मनां सङ्घो यत्रेति वा विमानोत्तमवेश्मसङ्घवदिति पाठान्तरेऽर्थः । विमानोऽस्त्री देवयाने सप्तभूमौ च सद्मनि ॥ ४८ ॥

इति रामाभिरामे श्रीरामीये रामायणतिलके
अयोध्याकाण्डे पञ्चदशः सर्गः ॥ १५ ॥

## षोड़शः सर्गः ।

स तदन्तःपुरद्वारं समतीत्य जनाकुलम् ।
प्रविविक्तां ततः कक्ष्यामाससाद पुराणवित् ॥ १ ॥
प्रासकार्मुकबिभ्रद्भिर्युवभिर्मृष्टकुण्डलैः ।
अप्रमादिभिरेकाग्रैः स्वानुरक्तैरधिष्ठिताम् ॥ २ ॥
तत्र काषायिणो वृद्धान् वेत्रपाणीन् स्वलङ्कृतान् ।
ददर्श विष्ठितान् द्वारि स्त्र्यध्यक्षान् सुसमाहितान् ॥ ३ ॥
ते समीक्ष्य समायान्तं रामप्रियचिकीर्षवः ।
सहसोत्पतिताः सर्वे ह्यासनेभ्यः ससम्भ्रमाः ॥ ४ ॥
तानुवाच विनीतात्मा सूतपुत्रः प्रदक्षिणः ।
क्षिप्रमाख्यात रामाय सुमन्त्रो द्वारि तिष्ठति ॥ ५ ॥
ते राममुपसङ्गम्य भर्त्तुः प्रियचिकीर्षवः ।
सहभार्य्याय रामाय क्षिप्रमेवाचचक्षिरे ॥ ६ ॥

प्रविविक्तां जनासम्बाधाम् ॥ १ ॥

प्रासकार्मुकानां बिभ्रद्भिः तेषां धारकैरित्यर्थः । एकाग्रैरेकाग्रचित्तैः ॥ २ ॥

काषायिणः कौसुम्भादिकषायरक्तवस्त्रधारिण इत्यर्थः ॥ ३ ॥ ४ ॥

प्रतिवेदितमाज्ञाय सूतमभ्यन्तरं पितुः ।
तत्रैवानाययामास राघवः प्रियकाम्यया ॥ ७ ॥
तं वैश्रवणसङ्काशमुपविष्टं स्वलङ्कृतम् ।
ददर्श सूतः पर्य्यङ्के सौवर्णे सोत्तरच्छदे ॥ ८ ॥
वराहरुधिराभेण शुचिना च सुगन्धिना ।
अनुलिप्तं परार्द्ध्येन चन्दनेन परन्तपम् ॥ ९ ॥
स्थितया पार्श्वतश्चापि बालव्यजनहस्तया ।
उपेतं सीतया भूयश्चित्रया शशिनं यथा ॥ १० ॥
तं तपन्तमिवादित्यमुपपन्नं स्वतेजसा ।
ववन्दे वरदं बन्दी विनयज्ञो विनीतवत् ॥ ११ ॥
प्राञ्जलिः सुमुखं दृष्ट्वा विहारशयनासने ।

प्रदक्षिणाः प्रकर्षेण सेवादौ निपुणाः आख्यात कथयत ॥ ५ ॥ ६ ॥

प्रतिवेदितं द्वास्थैः विज्ञापितं पितुरभ्यन्तरं अत्यन्तमन्तरङ्गम् । तत्रैव सीतावस्थितिदेश एव प्रियकाम्यया पितुरिति शेषः ॥ ७ ॥ ८ ॥

वराहरुधिरवदतिरक्तेन परार्द्ध्येन श्रेष्ठेन ॥ ९ ॥

भूयो वारंवारं ददर्शेत्यन्वयः । तथाभूतस्य दर्शने तृप्त्यभावात् । चित्रया सहितं शशिनं यथा लोको भूयो भूयः पश्यति तथेत्यर्थः ॥ १० ॥

बन्दी सुमन्त्रः विनीतवद्विनीतः सन् ॥ ११ ॥

सुमुखं प्रसन्नवदनम् । विहारशयनस्थानञ्च आसन विद्यमानं

राजपुत्रमुवाचेदं सुमन्त्रो राजसत्कृतः ॥ १२ ॥
कौशल्यासुप्रजा राम ! पिता त्वां द्रष्टुमिच्छति।
महिष्यापि हि कैकेय्या गम्यतां तत्र मा चिरम् ॥ १३ ॥
एवमुक्तस्तु संहृष्टो नरसिंहो महाद्युतिः।
ततः सम्मानयामास सीतामिदमुवाच ह ॥ १४ ॥
देवि ! देवश्च देवी च समागम्य मदन्तरे।
मन्त्रयेते ध्रुवं किञ्चिदभिषेचनसंहितम् ॥ १५ ॥
लक्षयित्वा ह्यभिप्रायं प्रियकामा सुदक्षिणा।
संचोदयति राजानं मदर्थमसितेक्षणा ॥ १६ ॥

राजपुत्रमित्यन्वयः। यद्वा विहारशयनासने समाहारद्वन्द्वः। तेषु राज्ञा सत्कृतः सुमन्त्र इत्यन्वयः ॥ १२ ॥

सुप्रजाः सुपुत्रेण त्वयेति शेषः ॥ १३ ॥

सम्मानयामास सुमन्त्रवचोऽङ्गीचकारेत्यर्थः ॥ १४ ॥

देवश्च देवी च मातापितरौ मदन्तरे मदर्थं समागम्य मिलित्वा। अभिषेचनस्य सम्यक् हितं किञ्चित् ध्रुवं निश्चयेन मन्त्रयेते विचारयतः। अत्राभिषेचनसंहितम् तत्सम्बद्धम् अभिषेकद्वारकमिति यावत्। किञ्चिदनगमनरूपं तद्विरुद्धं सम्भत्येवास्माभिश्चिन्त्यमानं मन्त्रयेत इत्यप्यर्थो गर्भितो ज्ञेयः ॥ १५ ॥

तत्र तर्कयति। लक्षयित्वेति। राज्ञोऽभिप्रायं मदभिषेकविषयं लक्षयित्वा ज्ञात्वा सुदक्षिणा समर्था अतएव राज्ञः प्रियकामा।

सा प्रहृष्टा महाराजं हितकामानुवर्त्तिनी ।
जननी चार्थकामा मे केकयाधिपतेः सुता ॥ १७ ॥
दिष्ट्या खलु महाराजो महिष्या प्रियया सह ।
सुमन्त्रं प्राहिणोद्दूतं अर्थकामकरं मम ॥ १८ ॥
यादृशी परिषत्तत्र तादृशो दूत आगतः ।
ध्रुवमद्यैव मां राजा यौवराज्येऽभिषेक्ष्यति ॥ १९ ॥
हन्त शीघ्रमितो गत्वा द्रक्ष्यामि च महीपतिम् ।
सह त्वं परिवारेण सुखमास्व रमस्व च ॥ २० ॥
पतिसम्मानिता सीता भर्त्तारमसितेक्षणा ।

अतएव प्रहृष्टा हितवचनेन कामेन च राजानमनुवर्त्तितुं शीलं यस्या-स्तादृशी मे जननी मदर्थकामा, महाराजं राजानं इति हर्षवशात् पुनरुक्तिरदोषाय, मदर्थं मदभिषेकार्थं राजानं संचोदयति त्वरयति । भरतासन्निधौ रामाभिषेकस्त्वत्सम्मतो न वेति राज्ञा पृष्टे सर्व्वथा मत्सम्मतस्त्वरया क्रियतां भरतः पश्चात् श्रोष्यतीति मन्ये इत्या-शयः ॥ १६ ॥ १७ ॥

कुतः एवं ज्ञायते तत्राह,—दिष्ट्येति । मम कामविषयमर्थं करोति । ..दृशं सुमन्त्रं यतो दूतं प्राहिणोदत एवं ज्ञायत इति भावः ॥ १८ ॥

तदेव विवृणोति । यादृशी मदर्थपरा तत्र राजान्तःपुरे परि-षत् सभा ॥ १९ ॥

परिवारेण सखीसमूहेन ॥ २० ॥

आद्वारमनुवव्राज मङ्गलान्यभिदध्युषी ॥ २१ ॥
राज्यं द्विजातिभिर्जुष्टं राजसूयाभिषेचनम्।
कर्त्तुमर्हति ते राजा वासवस्येव लोककृत्॥ २२ ॥
दीक्षितं व्रतसम्पन्नं वराजिनधरं शुचिम्।
कुरङ्गशृङ्गपाणिञ्च पश्यन्ती त्वां भजाम्यहम्॥ २३ ॥
पूर्व्वान्दिशं वज्रधरो दक्षिणां पातु ते यमः।
वरुणः पश्चिमामाशान्धनेशस्तूत्तरान्दिशम्॥ २४ ॥

अभिदध्युषी अभिध्यायन्तीत्यर्थे आर्षमिदम्॥ २१ ॥

द्विजातिभिर्जुष्टं राज्यं यौवराज्याभिषेकं कृत्वा कालान्तरेण राजसूयार्हं महाराज्याभिषेचनं कर्तुमर्हति। लोककृत् इन्द्रस्येव लक्षयित्वेत्यादिभिरष्टभिश्लोकैरर्थान्तरमपि गर्भितम्। तथाहि अभिप्रायं मम रावणबधरूपमभिप्रायमन्तर्यामिप्रेरणया लक्षयित्वा अनेन मत्प्रेरणयैव तस्या एवं प्रवृत्तिरिति सूचितम् मम। देवानां जगतश्च प्रियकामा राज्ञश्चान्तकाले निरन्तरं मद्ध्यानसम्पादनेन प्रियकामा अतएव सुदक्षिणा समर्था राज्ञ आपाततो विपरीतत्वेपि जगतः प्रियत्वेन राज्ञोपि पर्यन्तसुखदत्वेन तद्वाक्यकथने समर्था, अतएव प्रहृष्टा मम हितकामे तदर्थमवतारग्रहणाद्धितकाम्यश्च तदनुवर्त्तनशीला अतएव मेऽर्थकामा मदवतारप्रयोजनसिद्धिकामा महाराजं राजानं मदर्थं मदवतारप्रयोजनरावणबधफलकवनगमनार्थं त्वरयति इत्यर्थः। अर्थकामकरं मत्कामविषयार्थकरं यथा भवति तथा प्राक्षिणात् तादृशः हर्षोद्धिग्नचित्तः। एतदीयेनैव हर्षोद्विग्नचित्तत्वेन तत्परि-

अथ सीतामनुज्ञाप्य कृतकौतुकमङ्गलः ।
निश्चक्राम सुमन्त्रेण सह रामोनिवेशनात् ॥ २५ ॥
पर्व्वतादिव निष्क्रम्य सिंहोगिरिगुहाशयः ।
लक्ष्मणं द्वारि सोऽपश्यत् प्रह्वाञ्जलिपुटं स्थितम् ॥ २६ ॥
अथ मध्यमकक्ष्यायां समागच्छत्सुहृज्जनैः ।
स सर्व्वानर्थिनोदृष्ट्वा समेत्य प्रतिनन्द्य च ॥ २७ ॥

सदस्तत्त्वानुमानम् । यौवराज्ये देवर्षिपरिपालनफलके मङ्गलान्यभिदध्युषी प्रस्थानमङ्गलानि अभिध्यायन्ती तदेवाह,—राज्यमिति । द्विजातिभिराश्रमस्थैर्ऋषिभिर्युष्टम् । राज्यं वने राज्यं तथा राजसूयाभिषेचनम् । सर्व्वतो बलवान् सर्व्वपीड़को राजा सूयते काण्ड्यते यत्र तादृशकर्म्मणि अभिषेकं कर्त्तुमर्हति तदेव मनसाभिलषति दीक्षितमित्यादि । तत्र राजसूये दीक्षितत्वादि धर्म्मकं त्वां पश्यन्ती अहं त्वां भजिष्ये इत्यर्थः अनेनाहमपि त्वया सह वनं यास्यामीति सूचितम् । अत्र राजसूयाभिषेचनं कर्त्तुमर्हतीत्यनेन सङ्कल्पेन दीक्षितमित्यादि सङ्कल्पेन मदुक्तार्थगर्भितत्वमेषां श्लोकानां सूचितम् । अन्यथा सत्यसङ्कल्पाया भगवत्या अग्रे कदापि रामेण राजसूयाननुष्ठानात् । ईदृशसङ्कल्पविषयार्थो मिथ्यास्तत्त्वं भज्येत । वक्तृश्रोत्रोः सीतारामयोर्वैमिश्च्याच्चेदृशार्थावगतिर्बोध्या ॥ २२ ॥ २३ ॥ २४ ॥

कृतकौतुकमङ्गलः अनुष्ठिताभिषेकोत्सवार्थमङ्गलः ॥ २५ ॥

प्रह्वाञ्जलिपुटं प्रह्वत्वसूचकाञ्जलिपुटवन्तम् ॥ २६ ॥

अर्थिनः स्वदर्शनस्वाभिषेकाद्यर्थिनः ॥ २७ ॥

ततः पावकसङ्काशमारुरोह रथोत्तमम्।
वैयाघ्रं पुरुषव्याघ्रो राजितं * राजनन्दनः॥ २८॥
मेघनादमसम्बाधं मणिहेमविभूषितम्।
मुष्णन्तमिव चक्षूंषि प्रभया मेरुवर्चसम्॥ २९॥
करेणुशिशुकल्पैश्च युक्तं परमवाजिभिः।
हरियुक्तं सहस्राक्षो रथमिन्द्र इवाशुगम्॥ ३०॥
प्रययौ तूर्णमास्थाय राघवोज्ज्वलितश्रिया।
स पर्जन्य इवाकाशे स्वनवानभिनादयन्॥ ३१॥
निकेतान्निर्ययौ श्रीमान्महाभ्रादिव चन्द्रमाः।
चित्रचामरपाणिस्तु लक्ष्मणो राघवानुजः॥ ३२॥

वैयाघ्रं व्याघ्रचर्म्मपरिवृतं अतएवराजितं शोभावन्तम्॥ २८॥

मेघनादसदृशनादं असम्बाधं विपुलम्। प्रभया रविकिरण-संयुक्तत्वप्रभया। मेरुवर्चसमित्यनेन रथस्य सौवर्णत्वं ध्वन्यते॥ २९॥

करेणुशिशवः कलभाः। अनेन हृष्टपुष्टोन्नतमहाबलत्वं सूचितम्। इन्द्रः परमैश्वर्य्यवान् सहस्राक्ष इव। नानाविधदेहवर्णा-भरणस्थरत्नसमूहैः रामस्य सहस्राक्षत्वं बोध्यम्॥ ३०॥

ज्वलितः दीपितः उज्ज्वलित इति वा तदा सन्धिरार्षः। आकाशे स्वनवान् नादवान् पर्जन्यो मेघइव रथस्वनेन दिशो नादयन् प्रययावित्यन्वयः॥ ३१॥

* "राजतं" इति वा पाठः।

जगोप भ्रातरं भ्राता रथमास्थाय पृष्ठतः ।
ततो हलहलाशब्दस्तुमुलः समजायत ॥ ३३ ॥
तस्य निष्क्रममाणस्य जनौघस्य समन्ततः ।
ततो हयवरा मुख्या नागाश्च गिरिसन्निभाः ॥ ३४ ॥
अनुजग्मुस्तथा रामं शतशोथ सहस्रशः ।
अग्रतश्चास्य सन्नद्धाश्चन्दनागुरुभूषिताः ॥ ३५ ॥
खड्गचापधराः शूरा जग्मुराशंसवो जनाः ।
ततो वादित्रशब्दाश्च स्तुतिशब्दाश्च वन्दिनाम् ॥ ३६ ॥
सिंहनादाश्च शूराणां ततः शुश्रुविरे पथि ।
हर्म्यवातायनस्थाभिर्भूषिताभिः समन्ततः ॥ ३७ ॥
कीर्य्यमाणः सुपुष्पौघैर्य्ययौ स्त्रीभिररिन्दमः ।
रामं सर्व्वानवद्याङ्ग्यो रामपिप्रीषया ततः ॥ ३८ ॥

चन्द्रचामरेति पाठे चन्द्रवच्छ्वेतचामरेत्यर्थः । चित्रचामरेति पाठे चित्रदण्डयुतचामरेत्यर्थः ॥ ३२ ॥

हलहलेत्यनुकरणम् ॥ ३३ ॥

तस्य निष्क्रममाणस्य पुरत इति शेषः । तस्मिन्निष्क्रममाणे इति यावत् । जनौघस्य हलहलाशब्द इत्यन्वयः ॥ ३४ ॥ ३५ ॥

आशंसवः भद्रमिति शेषः ॥ ३६ ॥

तत इत्यावर्त्तते । ततस्ततः तत्र तत्र देशे शुश्रुविरे । वातायनं बहिरवलोकनयोग्यानि सूक्ष्मद्वाराणि ॥ ३७ ॥

वचोभिरग्र्यैर्हर्म्यस्थाः क्षितिस्थाश्च ववन्दिरे।
नूनं नन्दति ते माता कौसल्या मातृनन्दन! ॥ ३९ ॥
पश्यन्ती सिद्धयात्रं त्वां पित्र्यं राज्यमुपस्थितम्।
सर्वसीमन्तिनीभ्यश्च सीतां सीमन्तिनीवराम् ॥ ४० ॥
अमन्यन्त हि ता नार्य्यो रामस्य हृदयप्रियाम्।
तया सुचरितं देव्या पुरा नूनं महत्तपः ॥ ४१ ॥
रोहिणीव शशाङ्केन रामसंयोगमाप या *।
इति प्रासादशृङ्गेषु प्रमदाभिर्नरोत्तमः।
शुश्राव राजमार्गस्थः प्रिया वाच उदाहृताः ॥ ४२ ॥

स राघवस्तत्र तदा प्रलापान्
शुश्राव लोकस्य समागतस्य।
आत्माधिकारा विविधाश्च वाचः
प्रहृष्टरूपस्य पुरे जनस्य ॥ ४३ ॥

पिप्रोषा प्रीणनेच्छा ॥ ३८ ॥

ववन्दिरे अस्तुवन्। स्तुतिप्रकारमाह,—नूनमिति ॥ ३९ ॥

सिद्धयात्रं सफलगमनं उपस्थितं प्राप्तवन्तं। सीतां सीमन्तिनीषु वरां श्रेष्ठां इति अमन्यन्तेत्यन्वयः ॥ ४० ॥

हि यत एवं अमन्यन्त अतस्तयेत्यादि तदुच्चरिता वाचः शुश्रावेत्यन्वयः ॥ ४१ ॥ ४२ ॥

* "आगतेति" वा पाठः।

एष श्रियं गच्छति राघवोऽद्य
राजप्रसादाद्विपुलां गमिष्यन् ।
एते वयं सर्वसमृद्धकामा
येषामयं नो भविता प्रशास्ता ॥ ४४ ॥
लाभो जनस्यास्य यदेष सर्वं
प्रपत्स्यते राष्ट्रमिदं चिराय ।
नह्यप्रियं किञ्चन जातु कश्चित्
पश्येन्न दुःखं मनुजाधिपेऽस्मिन् ॥ ४५ ॥
स घोषवद्भिश्च हयैः सनागैः
पुरःसरैः स्वस्तिकसूतमागधैः ।
महीयमानः प्रवरैश्च वादकै-
रभिष्टुतो वैश्रवणो यथा ययौ ॥ ४६ ॥
करेणुमातङ्गरथाश्वसंकुलं
महाजनौघैः परिपूर्णचत्वरम् ।

आत्माधिकारा आत्मानमधिकृत्य प्रवृत्ताः ॥ ४३ ॥

श्रियं गमिष्यन् प्राप्स्यन् । गच्छति पितृगृहमिति शेषः । सर्व्व-समृद्धकामाः समृद्धसर्व्वकामा इत्यर्थः । प्रशास्ता राजा ॥ ४४ ॥

सर्व्वं राष्ट्रं एषः प्रपत्स्यत इति यत् अयमेव लाभः । अस्मिन् रामे मनुजाधिपे सति कश्चित् कश्चिदपि किञ्चन स्वल्पमपि अप्रियं प्रियाभावः दुःखमनिष्टप्राप्तिं जातु कदापि न पश्येत् न प्राप्नुयात् ॥ ४५ ॥

प्रभूतरत्नं बहुपण्यसञ्चयं
दर्दश रामो विमलं महापथम् ॥ ४७ ॥

इत्यार्षे रामायणे वाल्मीकीये अयोध्याकाण्डे
रामस्य बहिरागमनं नाम
षोडशः सर्गः ॥ १६ ॥

स्वस्तिका, जयजयेति वादिनो बन्दिनः सूता इतरस्तुतिपाठकाः मागधाः वंशपाठका एतैर्वादिकैस्तत्तच्छब्दप्रयोक्तृभिः ॥ ४६ ॥ ४७ ॥

इति रामाभिरामे श्रीरामीये रामायणतिलके
अयोध्याकाण्डे षोडशः सर्गः ॥ १६ ॥

## सप्तदशः सर्गः।

स रामो रथमास्थाय संप्रहृष्टसुहृज्जनः।
पताकाध्वजसम्पन्नं महार्हागुरुधूपितम् ॥ १ ॥

अपश्यन्नगरं श्रीमान्नानाजनसमन्वितम्।
सगृहैरभ्रसङ्काशैः पाण्डुरैरुपशोभितम् ॥ २ ॥

राजमार्गं ययौ रामो मध्येनागुरुधूपितम्।
चन्दनानाञ्च मुख्यानामगुरूणाञ्च सञ्चयैः ॥ ३ ॥

उत्तमानाञ्च गन्धानां चौमकौशाम्बरस्य च।
आविद्धाभिश्च मुक्ताभिरुत्तमैः स्फाटिकैरपि ॥ ४ ॥

शोभमानमसम्बाधन्तं राजपथमुत्तमम्।
संवृतं विविधैः पुष्पै-* र्भक्ष्यैरुच्चावचैरपि ॥ ५ ॥

स राम इति। मध्येन उभयश्रेणीमध्येन ॥ १ ॥ २ ॥ ३ ॥

उत्तमानां गन्धवद्द्रव्याणां सञ्चयैः। चौमकौशाम्बरस्य च सञ्चयैरित्यन्वयः। चौममतसीजम्। कौशं पट्टवस्त्रम्। आविद्धाभिः कृतच्छिद्राभिः। अविद्धाभिरिति पाठे अकृतच्छिद्राभिः ॥ ४ ॥

असम्बाधं विस्तीर्णं संवृतं व्याप्तम्। अत्रत्य राजपथमित्यस्य ददर्शेत्यनेनान्वयः ॥ ५ ॥

---

* "पर्णैः" इति वा पाठः।

ददर्श तं राजपथं दिवि देवपतिर्यथा।
दध्यक्षतहविर्लाजैः धूपैरगुरुचन्दनैः॥ ६॥
नानामाल्योपगन्धैश्च सदाभ्यर्चितचत्वरम्।
आशीर्वादान् बहून् शृण्वन् बहुभिः * समुदीरितान्॥७॥
यथार्हञ्चापि संपूज्य सर्वानेव नरान् ययौ।
पितामहैराचरितं तथैव प्रपितामहैः॥ ८॥
अद्योपादाय तं मार्गमभिषिक्तोऽनुपालय।
यथा स्म पोषिताः † पित्रा यथा सर्वैः पितामहैः।
ततः सुखतरं सर्वे रामे वत्स्याम राजनि॥ ९॥
अलमद्य हि भुक्तेन परमार्थैरलञ्च नः।
यदि पश्याम निर्यान्तं रामं राज्ये प्रतिष्ठितम्॥ १०॥

एवं दृष्टवान् तं राजपथं ययाविति सम्बन्धः॥ ६॥ ७॥

यथार्हं दर्शनभ्रूक्षेपवचनादिभिर्यथोचितमित्यर्थः। आचरितमनुष्ठितम्॥ ८॥

अनुपालयेत्यादिर्वृद्धानां वादः॥ ९॥

यदि राज्ये प्रतिष्ठितं प्राप्तराज्याभिषेकं रामं यथागतं पितुर्गेहान्निर्यान्तं निःसरन्तं पश्यामः तर्हि नोऽस्माकं भुक्तेन ऐहिकविषयभोगजसुखेन तथा परमार्थैः परमार्थस्वर्गसाधनैश्च कर्म्मभिरलम्। न किञ्चि-

---

* "सुहृद्भिः" इति वा पाठः।

† "लालिताः" इति वा पाठः।

ततो हि नः प्रियतरं नान्यत् किञ्चिद्भविष्यति ।
यथाभिषेको रामस्य राज्येनामिततेजसः ॥ ११ ॥
एताश्चान्याश्च सुहृदामुदासीनः शुभाः कथाः ।
आत्मसंपूजनीः शृण्वन् ययौ रामो महापथम् ॥ १२ ॥
न हि तस्मान्मनः कश्चिच्चक्षुषी वा नरोत्तमात् ।
नरः शक्नोत्यपाक्रष्टुमतिक्रान्तेऽपि राघवे ॥ १३ ॥
यश्च रामं न पश्येत्तु यं च रामो न पश्यति ।
निन्दितः सर्वलोकेषु स्वात्माप्येनं विगर्हते ॥ १४ ॥

कैः फलं सर्वसुखस्यैतेनैव लब्धत्वात् । अत्र यद्यन्तर्भावेन विपरीतस-म्भावनासूचनम् ॥ १० ॥

तदेवाह,—ततोहीति । अमिततेजसो रामस्य राज्येन राज्यफल-कोभिषेको यथा प्रियतरस्तथा ततोन्यन्नकिञ्चित्प्रियतरं प्रेमास्पदमित्य-न्वयः । सद्राजमूलकत्वात्सर्वसुखस्येति भावः ॥ ११ ॥

उदासीनः स्तुतिजहर्षविकाररहितः ॥ १२ ॥

अतिक्रान्ते दृष्टिपथमिति शेषः । अत्यन्तासक्त्या पुरइव परि-स्फुरणात् ॥ १३ ॥

एवं लोकानुरागे कविर्हेतुं दर्शयति । यश्चेति । रामं न पश्येत् आत्मस्वरूपत्वेनान्तर्यामित्वेन वा न पश्येत् । यथास्थितवेषधारिणं वा तद्देशस्थं न पश्येत् । रामो यं न पश्येत् यन्निष्ठज्ञानविषयतां न प्राप्नु-यात् । ज्ञानविषयत्वप्राप्तिरत्र दृश्यत इत्यर्थः । अत्यन्तं तद्विषयज्ञानाय यतमानोपि यस्तं न लभेदित्यर्थः । यथा स्थितवेषधारी वा यं स्वदेश-

सर्वेषां स हि धर्मात्मा वर्णानां कुरुते दयाम्।
चतुर्णां हि वयस्थानां तेन ते तमनुव्रताः ॥ १५ ॥
चतुष्पथान्देवपथांश्चैत्यांश्चायतनानि च।
प्रदक्षिणं परिहरन् जगाम नृपतेः सुतः ॥ १६ ॥
स राजकुलमासाद्य मेघसङ्घोपमैः शुभैः।
प्रासादशृङ्गैर्विविधैः कैलासशिखरोपमैः ॥ १७ ॥
आवारयद्भिर्गगनं विमानैरिव पाण्डुरैः।
वर्धमानगृहैश्चापि रत्नजालपरिष्कृतैः ॥ १८ ॥

स्वं न पश्येत्। यद्विषयकज्ञानवान् न भवेत्। स सर्वलोकनिन्दास्पदम्। स्वात्मा स्वान्तःकरणमपि एनं विगर्हते धिग्मामभगवत्ज्ञानायोग्यमिति। रामज्ञानं विना सर्वोपि निन्द्य इति विनोक्तिरलङ्कारोऽत्र व्यङ्ग्यः। अनेन भगवद्विषयकज्ञानवानेव धन्यः इति वस्तु व्यज्यते ॥ १४ ॥

किञ्च हि यतः स धर्मात्मा चतुर्णां हि चतुर्णामपि वर्णानां सर्वेष्व्याश्रमेषु। वयस्थानां वयोरूपं स्थानं यस्या स्तां वयोनुरूपां दयां कुरुते इत्यर्थः। तेन ते सर्वलोकास्तं रामं कायवाङ्मनोभिरनुव्रतास्तत्परा इत्यर्थः ॥ १५ ॥

प्रदक्षिणं परिहरन्निति चतुष्पथाद्यपेक्षया स्वस्य दक्षिणभागगमनं परिहरन्नित्यर्थः ॥ १६ ॥

प्रासादशृङ्गैः प्रासादस्थशृङ्गैः ॥ १७ ॥

आवारयद्भिः आक्रमद्भिः वर्धमानगृहैः क्रीडागृहैः। रत्नसमूहालङ्कृतैः एतैः परिवृतम् ॥ १८ ॥

तत् पृथिव्यां गृहवरं महेन्द्रसदनोपमम्।
राजपुत्रः पितुर्वेश्म प्रविवेश श्रिया ज्वलन् ॥ १९ ॥
स कक्ष्या धन्विभिर्गुप्तास्तिस्रोऽतिक्रम्य वाजिभिः।
पदातिरपरे कक्ष्ये द्वे जगाम नरोत्तमः ॥ २० ॥
स सर्वाः समतिक्रम्य कक्ष्या दशरथात्मजः।
सन्निवर्त्य जनं सर्वं शुद्धान्तःपुरमत्यगात् ॥ २१ ॥

तस्मिन् प्रविष्टे पितुरन्तिकं तदा
जनः स सर्वो मुदितो नृपात्मजे।
प्रतीक्षते तस्य पुनः स्म निर्गमं
यथोदयं चन्द्रमसः सरित्पतिः ॥ २२ ॥

इत्यार्षे रामायणे वाल्मीकीये अयोध्याकाण्डे
रामस्य पितृगृहप्रवेशो नाम
सप्तदशः सर्गः ॥ १७ ॥

पितुर्वेश्म पृथिव्यां सर्वगृहेषु श्रेष्ठं प्रविवेशेत्यन्वयः ॥ १९ ॥
वाजिभिः रथयुक्तैः ॥ २० ॥
सर्वा उक्तापरकक्ष्याः ॥ २१ ॥
अन्तिकं समीपदेशम् ॥ २२ ॥

इति रामाभिरामे श्रीरामीये रामायणतिलके
अयोध्याकाण्डे सप्तदशः सर्गः ॥ १७ ॥

## अष्टादशः सर्गः ।

स ददर्शासने रामो विषण्णं पितरं शुभे ।
कैकेय्या सहितं दीनं मुखेन परिशुष्यता ॥ १ ॥

स पितुश्चरणौ पूर्वमभिवाद्य विनीतवत् ।
ततो ववन्दे चरणौ कैकेय्याः सुसमाहितः ॥ २ ॥

रामेत्युक्त्वा तु वचनं वाष्पपर्य्याकुलेक्षणः ।
शशाक नृपतिर्दीनो नेक्षितुं नाभिभाषितुम् ॥ ३ ॥

तदपूर्वं नरपतेर्दृष्ट्वा रूपं भयावहम् ।
रामोऽपि भयमापन्नः पदा स्पृष्ट्वेव पन्नगम् ॥ ४ ॥

इन्द्रियैरप्रहृष्टैस्तं शोकसन्तापकर्शितम् ।
निश्वसन्तं महाराजं व्यथिताकुलचेतसम् ॥ ५ ॥

शुभे आसने पर्य्यङ्के परिशुष्यता मुखेनोपलक्षितम् ॥ १ ॥

विनीतवत् विनीतः सन्निति यावत् । सुसमाहितः तस्या अतिस्नेह-करत्वेन जगद्धितकरत्वेन च तस्यां प्रसन्नचित्तः ॥ २ ॥

नाभिभाषितुं रामेत्यक्षरद्वयाधिकमिति शेषः ॥ ३ ॥

रामोऽपि भयमापन्नः दशरथविषादस्य स्वापराधजन्यत्वशङ्कया ॥ ४ ॥

इन्द्रियैरित्यादिश्लोकद्वये दृष्ट्वा भयमापन्न इत्यनुकृष्यते । अप्रहृष्टैः

ऊर्म्मिमालिनमक्षोभ्यं क्षुभ्यन्तमिव सागरम्।
उपप्लुतमिवादित्यमुक्तानृतमृषिं यथा॥ ६॥
अचिन्त्यकल्पं नृपतेस्तं शोकमुपधारयन्।
बभूव संरब्धतरः समुद्र इव पर्व्वणि॥ ७॥
चिन्तयामास चतुरो रामः पितृहिते रतः।
किंस्विदद्यैव नृपतिर्न मां प्रत्यभिनन्दति॥ ८॥
अन्यदा मां पिता दृष्ट्वा कुपितोऽपि प्रसीदति।
तस्य मामद्य संप्रेक्ष्य किमायासः प्रवर्त्तते॥ ९॥
स दीन इव शोकार्त्तो विषण्णवदनद्युतिः।
कैकेयीमभिवाद्यैव रामो वचनमब्रवीत्॥ १०॥

खिन्नैः उपलक्षितम्। व्यथितं खिन्नम् आकुलं सम्भ्रान्तं चेतो यस्य तम्॥ ५॥

ऊर्म्मिमालायुतमक्षोभ्यमपि क्षुभ्यन्तं सागरमिव स्थितम्। उपप्लुतं राहुग्रस्तम्। उक्तमनृतं येन तद्वन्निस्तेजस्कम्॥ ६॥

अचिन्त्यकल्पमत्यन्तमसम्भावितम्। उपधारयन् किंहेतुकोऽयं शोक इति चिन्तयन्। संरब्धतरोऽत्यन्तं क्षुभितः। यद्यपि पर्व्वणि समुद्रस्य चन्द्रोदयात् क्षोभस्तथापि क्षोभमात्रे दृष्टान्तः॥ ७॥

किंस्वित् किं नु॥ ८॥

अद्यैवेत्येवकारव्यवच्छेद्यमाह,—अन्यदेत्यादि। तस्य मद्दर्शनेऽतिप्रीतिमतः। आयासः खेदः॥ ९॥

कच्चिन्मया नापराद्धम् अज्ञानाद् येन मे पिता।
कुपितस्तन्ममाचक्ष्व त्वमेवैनं प्रसादय॥ ११॥
अप्रसन्नमनाः किन्नु सदा मां प्रति वत्सलः।
विषण्णवदनो दीनो सदा मां प्रतिभाषते॥ १२॥
शारीरो मानसो वापि कच्चिदेनं न बाधते।
सन्तापो वाभितापो वा दुर्लभं हि सदा सुखम्॥ २३॥
कच्चिन्न किञ्चिद्भरते कुमारे प्रियदर्शने।
शत्रुघ्ने वा महासत्त्वे मातॄणां वा ममाशुभम्॥ १४॥
अतोषयन्महाराजमकुर्वन् वा पितुर्वचः।

दीन इव विषसवदनद्युतिरिव स रामः शोकार्त्त इव वचनमब्रवीदिति सम्बन्धः॥ १०॥

नापराद्धम्, काकुः अपराद्धम्। अज्ञानात् प्रमादात् प्रसादय मत्कृतापराधशान्त्यै इति शेषः॥ ११॥

सदा मां प्रति वत्सलोऽपि अद्य किमप्रसन्नमनाः हि यतो मां न भाषतेऽतोऽप्रसन्नमनस्त्वनिर्णयः॥ १२॥

शारीरः शरीरव्याधिजः सन्तापः मानसो मनोनिष्ठाधिजोऽभितापः। न बाधत इत्यत्र काकुः। कुत एतत्तत्राह,—दुर्लभं हीति। मनुष्यशरीरस्य पापपुण्यारब्धत्वादिति भावः॥ १३॥

भरते शत्रुघ्ने वा मातॄणां मम मातृषु वा किञ्चिदशुभं न पश्यति कच्चिदित्यन्वयः॥ १४॥

मुहूर्त्तमपि नेच्छेयं जीवितुं कुपिते नृपे ॥ १५ ॥
यतोमूलं नरः पश्येत् प्रादुर्भावमिहात्मनः ।
कथं तस्मिन्न वर्त्तेत प्रत्यक्षे सति दैवते * ॥ १६ ॥
कच्चित्ते परुषं किञ्चिदभिमानात् पिता मम ।
उक्तो भवत्या कोपेन येनास्य लुलितं मनः ॥ १७ ॥
एतदाचक्ष्व मे देवि ! तत्त्वेन परिपृच्छतः ।
किंनिमित्तमपूर्वोऽयं विकारो मनुजाधिपे ॥ १८ ॥
एवमुक्ता तु कैकेयी राघवेण महात्मना ।
उवाचेदं सुनिर्लज्जा धृष्टमात्महितं वचः ॥ १९ ॥

कुपिते असोषेण वचनाकरणाद्वा ॥ १५ ॥

यतोमूलं यन्मूलमित्यर्थे आर्षमेतत् । प्रादुर्भावं जन्म यत्कारणकं पश्येत् जानीयात् तस्मिन् प्रत्यक्षे दैवते सति तस्मिन् कथमानुकूल्येन न वर्त्ततेत्यर्थः ॥ १६ ॥

ते सम्बन्धसामान्ये षष्ठी । त्वयाभिमानात् गर्वान्मम पिता परुष-मुक्तोऽथवा भवत्या कोपेन किञ्चिन्निमित्तकोपेन परुषमुक्तो, येनास्य मनो लुलितं कलुषितं दुःखितोक्तित्वादधिकपदत्वादि न दोषः ॥ १७ ॥ १८ ॥

---

* "आयुर्यशो बलं वित्तमाकाङ्क्षद्भिः प्रियाणि च ।
पितैवाराधनीयोऽग्रे दैवतं हि पिता महत् ॥"

इति वङ्गीयाः ।

न राजा कुपितो राम ! व्यसनं नास्य किञ्चन।
किञ्चिन्मनोगतन्त्वस्य त्वद्भयान्नानुभाषते ॥ २० ॥
प्रियं त्वामप्रियं वक्तुं वाणी नास्य प्रवर्त्तते।
तदवश्यं त्वया कार्य्यं यदनेन श्रुतं मम ॥ २१ ॥
एष मह्यं वरं दत्त्वा पुरा मामभिपूज्य च।
स पश्चात्तप्यते राजा यथान्यः प्राकृतस्तथा ॥ २२ ॥
अतिसृज्य ददामीति वरं मम विशाम्पतिः।
स निरर्थं गतजले सेतुं बन्धितुमिच्छति ॥ २३ ॥
धर्म्ममूलमिदं राम ! विदितञ्च सतामपि।
तत्सत्यं न त्यजेद्राजा कुपितस्त्वत् कृते यथा ॥ २४ ॥

सुनिर्लज्जा पत्युरेवम्विधक्लेशकरणलज्जारहिता। धृष्टं प्रत्युक्तौ वनं गच्छेत्येवंरूपम् ॥ १९ ॥

मनोगतं त्वदप्रियकरमिति शेषः ॥ २० ॥

तदेवाह,—प्रियमिति। श्रुतं प्रतिज्ञातम्। तदप्रियमपि त्वयावश्यं कार्य्यम् यदि पितृभक्तोऽसीति शेषः ॥ २१ ॥

किं तत्राह,—एष इति। अभिपूज्य तेनैव वरदानेन पश्चात् प्रतिज्ञातवरदानकाले ॥ २२ ॥

अतिसृज्य प्रतिज्ञाय गतजले नद्यादौ। दानस्य पूर्वमेव वृत्तत्वात्तद्विषयव्यवहारपरिहारचिन्ता व्यर्थेत्यर्थः ॥ २३ ॥

इदं सत्यं धर्मस्य मूलम् अपिच सतामपि सत्यं धर्ममूलमित्येतद्विदितं त्वत्कृते त्वत्प्रयोजनान्तरायत्वेन मयि कुपितो राजा कोप-

यदि तद्वक्ष्यते राजा शुभं वा यदि वाशुभम् ।
करिष्यसि ततः सर्वमाख्यास्यामि पुनस्त्वहम् ॥ २५ ॥
यदि त्वभिहितं राज्ञा त्वयि तन्न विपत्स्यते ।
ततोऽहमभिधास्यामि न ह्येषस्त्वयि वक्ष्यति ॥ २६ ॥
एतत्तु वचनं श्रुत्वा कैकेय्या समुदाहृतम् ।
उवाच व्यथितो रामस्तां देवीं नृपसन्निधौ ॥ २७ ॥
अहो धिङ्नार्हसे देवि ! वक्तुं मामीदृशं वचः ।
अहं हि वचनाद्राज्ञः पतेयमपि पावके ॥ २८ ॥
भक्षयेयं विषं तीक्ष्णमज्जेयमपि चार्णवे ।

दोषेण यथा न त्यजेत्तथा कुर्विति शेषः । एतेन पितुरधर्मात्त्राणं पित्राज्ञापरिपालनञ्च पुत्रस्य महान् धर्म इति सूचितम् ॥ २४ ॥

दशरथमिव राममपि निर्बध्नाति । यदीति । राजा यद्वक्ष्यते तद्यदि करिष्यसि ततोऽहं सर्वं पुनर्विशिष्याख्यास्यामि ॥ २५ ॥

राज्ञा राजानुमत्या मया यदभिहितं तत्त्वयि न विपत्स्यते व्यर्थं न भविष्यति तदाहं वक्ष्यामि । राजैव वदतु तत्राह,—नह्यीत्यादि । त्वदप्रियत्वात्त्वत्समक्षं साक्षादिति शेषः ॥ २६ ॥

रामोऽपि दशरथवदेव घोरत्वं ज्ञात्वापि महापुरुषत्वाद्धीरोदात्तत्वात् सर्वथैव करिष्यामीति प्रतिजानीते एतदिति । व्यथितः गुरुवचनोल्लङ्घनमनयापि शङ्कितमिति सन्तापः ॥ २७ ॥

ईदृशम् अकारणशङ्कावचनं यदि तद्वक्ष्यत इत्यादिकमित्यर्थः ॥२८॥

नियुक्तो गुरुणा पित्रा नृपेण च विशेषतः॥ २९॥
तद् ब्रूहि वचनं देवि! राज्ञो यदभिकांक्षितम्।
करिष्ये प्रतिजाने च रामो द्विर्नाभिभाषते॥ ३०॥
तमार्जवसमायुक्तमनार्या सत्यवादिनम्।
उवाच रामं कैकेयी वचनं भृशदारुणम्॥ ३१॥
पुरा देवासुरे युद्धे पित्रा ते मम राघव!।
रक्षितेन वरौ दत्तौ सशल्येन महारणे॥ ३२॥
तत्र मे याचितो राजा भरतस्याभिषेचनम्।
गमनं दण्डकारण्ये तव चैवाद्य राघव!॥ ३३॥
यदि सत्यप्रतिज्ञं त्वं पितरं कर्त्तुमिच्छसि।
आत्मानञ्च नरश्रेष्ठ! मम वाक्यमिदं शृणु॥ ३४॥
सन्निदेशे पितुस्तिष्ठ यथानेन प्रतिश्रुतम्।

गुरुणा इहामुत्र हितोपदेष्ट्रा॥ २९॥

प्रतिजाने सुकृतसुकृतादिसाक्षितयेति शेषः। तदेव स्थिरयति,— रामो द्विरिति यदुक्तं तदुक्तमेव तद्विरुद्धं न पुनर्वदतीत्यर्थः। तत्तद्भावविषयतया द्विरावृत्तं भाषणं न करोतीति यावत्॥ ३०॥ ३१॥

पूर्वं सशल्येन पश्चाच्छल्यापाकरणपूर्वं मया रक्षितेन॥ ३२॥

तत्र तयोर्वरयोरेकेन। अद्यैव एतत्क्षणएव॥ ३३॥

यदीति। राज्ञा त्वया च मदुक्तकृतेः सशपथं प्रतिज्ञातत्वादिति भावः॥ ३४॥

त्वयारण्यं प्रवेष्टव्यं नव वर्षाणि पञ्च च ॥ ३५ ॥
भरतश्चाभिषिच्येत यदेतदभिषेचनम् ।
त्वदर्थे विहितं राज्ञा तेन सर्वेण राघव ! ॥ ३६ ॥
सप्त सप्त च वर्षाणि दण्डकारण्यमाश्रितः ।
अभिषेकमिदं त्यक्त्वा जटाचीरधरो भव ॥ ३७ ॥
भरतः कोसलपुरे प्रशास्तु वसुधामिमाम् ।
नानारत्नसमाकीर्णां सवाजिरथकुञ्जराम् ॥ ३८ ॥
एतेन त्वां नरेन्द्रोऽयं कारुण्येन समाप्लुतः ।
शोकैः संक्लिष्टवदनो न शक्नोति निरीक्षितुम् ॥ ३९ ॥
एतत्कुरु नरेन्द्रस्य वचनं रघुनन्दन ! ।
सत्येन महता राम ! तारयस्व नरेश्वरम् ॥ ४० ॥

इतीव तस्यां परुषं वदन्त्यां
न चैव रामः प्रविवेश शोकम् ।

सन्निदेशे पितृप्रतिज्ञासम्पादने ॥ ३५ ॥
अभिषेचनं अभिषेकोपकरणम् ॥ ३६ ॥
अभिषेकं तदुपकरणम् ॥ ३७ ॥ ३८ ॥
एतेन वरद्वयप्रदानेन निमित्तेन ॥ ३९ ॥
सत्येन सत्यप्रतिपालनेन ॥ ४० ॥
शोकं तत्सूचकं विकारं न प्रविव्यथे च मनसेति शेषः । राजा च ।

प्रविव्यथे चापि महानुभावो
राजा च पुत्रव्यसनाभितप्तः ॥ ४१ ॥

इत्यार्षे रामायणे वाल्मीकीये अयोध्याकाण्डे राम-
समक्षं कैकेय्या स्ववरकीर्त्तनं नाम
अष्टादशः सर्गः ॥ १८ ॥

राजा तु पुत्रव्यसनाभितप्तः। भावितद्वियोगव्यसनेनाभिसन्तप्तो बभूवेति शेषः ॥ ४१ ॥

इति रामाभिरामे श्रीरामीये रामायणतिलके
अयोध्याकाण्डे अष्टादशः सर्गः ॥ १८ ॥

## एकोनविंशः सर्गः ।

तदप्रियममित्रघ्नो वचनं मरणोपमम् ।
श्रुत्वा न विव्यथे रामः कैकेयीं चेदमब्रवीत् ॥ १ ॥

एवमस्तु गमिष्यामि वनं वस्तुमहं त्वितः ।
जटाचीरधरो राज्ञः प्रतिज्ञामनुपालयन् ॥ २ ॥

इदन्तु ज्ञातुमिच्छामि किमर्थं मां महीपतिः ।
नाभिनन्दति दुर्धर्षो यथापूर्वमरिन्दमः ॥ ३ ॥

मन्युर्न च त्वया कार्य्यो देवि ! ब्रूमि तवाग्रतः ।
यास्यामि भव सुप्रीता वनञ्चीरजटाधरः ॥ ४ ॥

हितेन गुरुणा पित्रा कृतज्ञेन नृपेण च ।
नियुज्यमानो विश्रब्धः किं न कुर्य्यामहं प्रियम् ॥ ५ ॥

अथाभिषेकवनवासयोः समचित्ततया धीरोदात्तमहापुरुषत्वं रामस्याह,—तदिति । मरणोपमं लोकदृष्ट्या ॥ १ ॥

न द्विर्भाषत इत्युक्तादेवमस्त्वित्येव केवलमाह,—यद्वा एवमस्तु भरताभिषेकोऽस्तु ॥ २ ॥ ३ ॥

मन्युर्नेति । राजाभिप्रायज्ञानेच्छया प्रश्नेति शेषः । ब्रूमि ब्रवीमि । एतावत् ज्ञात्वा । सर्वथा यास्यामेव न त्वन्यथा शङ्कितव्यमिति भावः ॥४॥

अलीकं मानसन्त्वेकं हृदयं दहतीव मे।
स्वयं यन्नाह मां राजा भरतस्याभिषेचनम्॥ ६॥
अहं हि सीतां राज्यञ्च प्राणानिष्टान् धनानि च।
हृष्टो भ्रात्रे स्वयं दद्यां भरताय प्रचोदितः॥ ७॥
किं पुनर्मनुजेन्द्रेण स्वयं पित्रा प्रचोदितः।
तव च प्रियकामार्थं प्रतिज्ञामनुपालयन्॥ ८॥
तदाश्वासय ह्रीमन्तं किञ्चिदं यन्महीपतिः।
वसुधासक्तनयनो मन्दमश्रूणि मुञ्चति॥ ९॥
गच्छन्तु चैवानयितुं दूताः शीघ्रजवैर्हयैः।
भरतं मातुलकुलादद्यैव नृपशासनात्॥ १०॥

कृतज्ञेन त्वत्कृतस्यापत्राणज्ञेन विश्रब्धः निर्विशङ्कः॥ ५॥

किञ्चिदं मानसं मनसि वर्त्तमानम्। अलीकं दुःखं किं तत्राह,—स्वयमित्यादि॥ ६॥

अयमर्थस्त्वदुःखावहत्वाद्राज्ञा तव साक्षादवक्तुमशक्य इति चेत्तत्राह,—अहं हीति। प्रचोदितः त्वयापीति शेषः। प्रतिज्ञाकारणं विनापि त्वदुक्तिमात्रेण राज्यादि दद्याम्॥ ७॥

तत्र किं वक्तव्यम् त्वत्प्रियार्थं राज्ञा प्रेरितः स्वकृतप्रतिज्ञामनुपालयन्। हेतौ शता तत्पालनाद्धेतो राज्यं दद्यामित्यर्थः॥ ८॥

मद्विषयकनियोगसंकोचेन ह्रीमन्तं राजानमाश्वासय। इदं किम्। किंहेतुकं तदेवाह,—यदित्यादि॥ ९॥

दण्डकारण्यमेषोऽहं गच्छाम्येव हि सत्वरः।
अविचार्य्य पितुर्वाक्यं समा वस्तुं चतुर्दश ॥ ११ ॥
सा हृष्टा तस्य तद्वाक्यं श्रुत्वा रामस्य कैकयी।
प्रस्थानं श्रद्दधाना सा त्वरयामास राघवम् ॥ १२ ॥
एवं भवतु यास्यन्ति दूताः शीघ्रजवैर्हयैः।
भरतं मातुलकुलादिहावर्त्तयितुं नराः ॥ १३ ॥
तव त्वहं क्षमं मन्ये नोत्सुकस्य विलम्बनम्।
राम! तस्मादितः शीघ्रं वनं त्वं गन्तुमर्हसि ॥ १४ ॥
व्रीडान्वितः स्वयं यच्च नृपस्त्वां नाभिभाषते।
नैतत्किञ्चिन्नरश्रेष्ठ! मन्युरेषोऽपनीयताम् ॥ १५ ॥

अनिर्वृत्तत्वत्सकार्य्या कथमाश्वासयामीत्यत आह,—गच्छन्त्वित्यादि ॥ १० ॥

अविचार्य्य युक्तायुक्तविचारमकृत्वैवेत्यर्थः ॥ ११ ॥

प्रस्थानं वनगमनम्। श्रद्दधाना अवश्यमयं प्रस्थानं करिष्यतीति निश्चयवती ॥ १२ ॥ १३ ॥

उत्सुकस्य वनगमनोत्सुकस्य क्षमं युक्तम् ॥ १४ ॥

राजानभिनन्दनहेतुमाह,—व्रीडेति। सत्यस्य पारप्राप्त्यदर्शनजलज्जायुक्तः यो हेतो अतस्त्वां नाभिभाषते। एतदनभिभाषणं न किञ्चित् नान्यकारणकम्। त्वदविलम्बगमनाभाव एवास्य कारणमतएवमन्युः राज्ञो दैन्यं त्वाविलम्बगमनेनापनीयतां त्वयेति शेषः ॥ १५ ॥

याबत् त्वं न वनं यातः पुरादस्मादतित्वरन्।
पिता तावन्न ते राम! स्नास्यते भोक्ष्यतेऽपि वा॥ १६॥
धिक्कष्टमिति निःश्वस्य राजा शोकपरिप्लुतः।
मूर्च्छितो न्यपतत्तस्मिन् पर्य्यङ्के हेमभूषिते॥ १७॥
रामोऽप्युत्थाप्य राजानं कैकेय्याभिप्रचोदितः।
कशयेऽवहतो वाजी वनं गन्तुं कृतत्वरः॥ १८॥
तदप्रियमनार्य्याया वचनं दारुणोदयम्।
श्रुत्वा गतव्यथो रामः कैकेयीं वाक्यमब्रवीत्॥ १९॥
नाहमर्थपरो देवि! लोकमावस्तुमुत्सहे।
विद्धि मामृषिभिस्तुल्यं विमलं * धर्ममास्थितम्॥ २०॥

इतोऽपि न युक्तो विलम्ब इत्याह,—यावदिति। मया दरिद्राधमशील्वेन तथा प्रयत्नैः प्रतिबन्धादिति भावः॥ १६॥ १७॥

कृतत्वरोऽभूदिति शेषः॥ १८॥

दारुणोदयं दारुणार्थकं प्रश्नोत्तरम्॥ १९॥

लोकमावस्तुं लोके वस्तुं नोत्सहे। अर्थपरो धनपरः। विमलं धर्ममास्थितं तत्वज्ञानरूपं धर्ममाश्रितं ऋषयोऽत्र तत्वज्ञा एतेन स्वस्य सुखदुःखयोः समता निवृत्तिमार्गस्थता च स्वाभाविकीति ध्वनितम्॥ २०॥

---

* "केवलम्" इति वा पाठः।

यत्तत्रभवतः किञ्चिच्छक्यं कर्त्तुं प्रियं मया।
प्राणानपि परित्यज्य सर्वथा कृतमेव तत् ॥ २१ ॥
नह्यतो धर्मचरणं किञ्चिदस्ति महत्तरम्।
यथा पितरि शुश्रूषा तस्य वा वचनक्रिया ॥ २२ ॥
अनुक्तोऽप्यत्रभवता भवत्या वचनादहम्।
वने वत्स्यामि विजने वर्षाणीह चतुर्दश ॥ २३ ॥
न नूनं मयि कैकेयि! मुख्यानाशंससे गुणान्।
यद्राजानमवोचस्त्वं ममेश्वरतरा सती ॥ २४ ॥
यावन्मातरमापृच्छे सीताञ्चानुनयाम्यहम्।

तत्रभवतः पूज्यस्य पितुः। वनगमनं कियत् यत्किञ्चिदतोऽधिकमपि प्रियं कर्त्तुं शक्यं तत्कृतमेव विद्धीति शेषः ॥ २१ ॥

तथानिश्चये हेतुमाह,—नहीति। हि हेता। शुश्रूषा पादसंवाहनादिरूपा। वचनक्रिया आज्ञाकरणम् ॥ २२ ॥

अत्रभवता पूज्येन पित्रा भवत्या वचनात् पितृवचनवत् तत्पत्नीवचनस्याप्यवश्यकर्त्तव्यत्वात्। अनेन सापत्नमातुरप्यनिष्टनिष्ठमपि वचनमेव परिपाल्यं किमुत मातापित्रोरिति सूचितम् ॥ २३ ॥

हे कैकेयि! नूनं मयि किञ्चित् कमपि गुणं नाशंससे न जानासि। तत्र हेतुर्यदित्यादि। मुख्यानिति पाठे पितृपत्न्याद्याज्ञापरिपालनादिरूपानित्यर्थः ॥ २४ ॥

यावदिति पूर्वार्धे तावत् क्षमां कुर्विति शेषः। ततस्तदनन्तरम्।

ततोऽद्यैव गमिष्यामि दण्डकानां महद्वनम् ॥ २५ ॥
भरतः पालयेद्राज्यं शुश्रूषेच्च पितुर्यथा ।
तथा भवत्या कर्त्तव्यं स हि धर्मः सनातन ॥ २६ ॥
रामस्य तु वचः श्रुत्वा भृशं दुःखगतः पिता ।
शोकादशक्नुवन् वक्तुं प्ररुरोद महास्वनम् ॥ २७ ॥
वन्दित्वा चरणौ राज्ञो विसंज्ञस्य पितुस्तदा ।
कैकेय्याश्चाप्यनार्य्याया निष्पपात महाद्युतिः ॥ २८ ॥
स रामः पितरं कृत्वा कैकेयीञ्च प्रदक्षिणम् ।
निष्क्रम्यान्तःपुरात् तस्मात् स्वं ददर्श सुहृज्जनम् ॥ २९ ॥
तं वाष्पपरिपूर्णाक्षः पृष्ठतोऽनुजगाम ह ।
लक्ष्मणः परमक्रुद्धः सुमित्रानन्दवर्धनः ॥ ३० ॥

दण्डकानां तन्नामकक्षत्त्रियाणां तन्नामकजनपदरूपं शापवशाद्वनत्वं प्राप्तम् ॥ २५ ॥

स हि पितृशुश्रूषारूपः ॥ २६ ॥

बाष्पं रोद्धुमशक्नुवन् ॥ २७ ॥

अनार्य्यायाः लोकदृष्ट्या तादृश्या अपि स्वयं तद्दोषमगणयन्निति शेषः । निष्पपात निश्चक्राम ॥ २८ ॥

कैकेयीप्रदक्षिणं सम्यगाचरितं मदिष्टं त्वयेत्थं तत्सन्तोषात् शिष्टाचाराच्चेति बोध्यम् ॥ २९ ॥

बाष्पपरिपूर्णाक्षः समीपस्थित्यावगतवृत्तान्तत्वात् । परमक्रुद्ध

अभिषेचनिकं भाण्डं कृत्वा रामः प्रदक्षिणम् ।
शनैर्जगाम सापेक्षो दृष्टिं तत्राविचालयन् ३१ ॥
न चास्य महतीं लक्ष्मीं राज्यनाशोऽपकर्षति ।
लोककान्तस्य कान्तत्वाच्छीतरश्मेरिव क्षयः ॥ ३२ ॥
न वनं गन्तुकामस्य त्यजतश्च वसुन्धराम् ।
सर्वलोकातिगस्येव लक्ष्यते चित्तविक्रिया ॥ ३३ ॥
प्रतिषिध्य शुभं छत्रं व्यजने च स्वलङ्कृते ।
विसर्जयित्वा स्वजनं रथं पौरांस्तथा जनान् ॥ ३४ ॥

इत्यनेन लक्ष्मणेऽविद्याविक्षेपशक्तिमती दर्शिता। रामे च न सा इति ध्वनितम् ॥ ३० ॥

अभिषेचनिकं अभिषेकप्रयोजनकम्। भाण्डमुपकरणजातं तद्युक्ताभिषेकशालामिति यावत्। सन्निहितगङ्गादिपुण्यतीर्थकत्वात्। तत्र अभिषेकशालायां दृष्टिमविचालयन् अप्रवर्त्तयन् सापेक्षः वनं प्रतीति शेषः। यद्वा लोकसमाधानाय तदनुग्रहाय नटवत् आत्मगोपनाय। लोकव्यवहारात्यागाय च सापेक्षः स इव तत्र दृष्टिमविचालयन् अत्यजन् अतएव शनैर्जगाम ॥ ३१ ॥

धीरोदात्तत्वाच्च न तद्विघातप्रयुक्तक्रोधदुःखादीत्याह,— न चेति। लक्ष्मीं सहजां शोभां कान्तत्वात् अविनाशिकान्तियुक्तत्वात् लोककान्तस्य शीतरश्मेः इन्दोः क्षयो यथा लक्ष्मीं नापकर्षति तद्वत् ॥ ३२ ॥

सर्वलोकातिगस्येव जीवन्मुक्तस्येव ॥ ३३ ॥

धारयन् मनसा दुःखमिन्द्रियाणि निगृह्य च।
प्रविवेशात्मवान्वेश्म मातुरप्रियशंसिवान्॥ ३५॥
सर्वोऽप्यभिजनः श्रीमान् श्रीमतः सत्यवादिनः।
नालक्षयत रामस्य कञ्चिदाकारमानने॥ ३६॥
उचितञ्च महाबाहुर्न जहौ हर्षमात्मवान्।
शारदः समुदीर्णांशुश्चन्द्रस्तेज इवात्मजम्॥ ३७॥
वाचा मधुरया रामः सर्वं सम्मानयन् जनम्।
मातुः समीपं धर्मात्मा प्रविवेश महायशाः॥ ३८॥

छत्रादिप्रतिषेधः स्वप्रतिज्ञाविरोधात्। व्यजने चामरे॥ ३४॥

मनसा दुःखं धारयन्। इन्द्रियाणि निगृह्य मनस्थदुःखाभिव्यञ्जक-चेष्टारहितानि कृत्वा। आत्मवान् धीरोदात्तः। मनसा दुःखं परम-सुखम्। दुःखलेशेनापि रहितं वनगमनजं धारयन् इन्द्रियाणि निगृह्य। तस्य सुखस्य लोकदृष्ट्या राज्यभङ्गजदुःखस्य वा यथा यथा-भिव्यक्तिर्न भवति तथा मध्यस्थतया स्थापयित्वा आत्मवान् साक्षात्कृत-नित्यनिर्दुःखस्वतत्त्व इत्यप्यर्थान्तरमत्र व्यंग्यं बोध्यम्। दुःखमित्यस्य कैकेय्या लोकापवादजमित्यर्थ इति कश्चित्। अप्रियशंसिवान् अप्रियं शंसिष्यन्। क्वसुः आर्षः॥ ३५॥

अभिजनोऽभितो वर्त्तमानो जनः श्रीमान् रामाभिषेकप्रसङ्गेन कृतैरलङ्करणैः शोभावान्। आकारं विकृताकारं नालक्षयत असत्त्वा-देवेत्यर्थः॥ ३६॥

तं गुणैः समतां प्राप्तो भ्राता विपुलविक्रमः ।
सौमित्रिरनुवव्राज धारयन् दुःखमात्मजम् ॥ ३९ ॥

प्रविश्य वेश्मातिभृशं मुदायुतं
समीक्ष्य तां चार्थविपत्तिमागताम् ।
न चैव रामोऽत्र जगाम विक्रियां
सुहृज्जनस्यात्मविपत्तिशङ्कया ॥ ४० ॥

इत्यार्षे रामायणे वाल्मीकीये अयोध्याकाण्डे
रामस्य मातृगृहप्रवेशो नाम एकोनविंशः
सर्गः ॥ १९ ॥

उचितं सहजसत्त्वगुणोचितं वनगमनलाभोचितञ्च । आत्मजं दुःखं आत्मनि शरीरे जातं स्वभावसिद्धं हर्षचिह्नम् ॥ ३७ ॥ ३८ ॥ ३९ ॥

लोकदृष्ट्या अर्थविपत्तिमर्थभ्रंशं वीक्ष्यापि रामो विक्रियां न जगाम । किन्तु सुहृज्जनस्य कौशल्यादशरथादिरूपस्यात्मनां प्राणानां विपत्तिशङ्कया चिन्तां जगामेति शेषः ॥ ४० ॥

इति रामाभिरामे श्रीरामीये रामायणतिलके
अयोध्याकाण्डे एकोनविंशः सर्गः ॥ १९ ॥

## विंशः सर्गः।



तस्मिंस्तु पुरुषव्याघ्रे निष्क्रामति कृताञ्जलौ।
आर्त्तशब्दो महान् जज्ञे स्त्रीणामन्तःपुरे तदा॥ १॥
कृत्येष्वचोदितः पित्रा सर्व्वस्यान्तःपुरस्य च।
गतिर्यः शरणञ्चासीत् स रामोऽद्य प्रवत्स्यति॥ २॥
कौशल्यायां यथा युक्तो जनन्यां वर्त्तते सदा।
तथैव वर्त्ततेऽस्मासु जन्मप्रभृति राघवः॥ ३॥
न क्रुध्यत्यभिशप्तोऽपि क्रोधनीयानि वर्जयन्।
क्रुद्धान् प्रसादयन् सर्व्वान् स इतोऽद्य प्रवत्स्यति॥ ४॥

तस्मिन्निति॥ १॥

यः पित्राऽचोदितोऽपि सर्वस्य जनस्यान्तःपुरस्य च कृत्येषु प्रवर्त्तत इति शेषः। यो गतिः प्राप्यस्य वस्तुनः प्राप्तिमार्गः शरणं रक्षणम्॥ २॥

युक्तः सेवातत्परः॥ ३॥

अभिशप्तोऽपि अन्येन कृतवाक्पारुष्योऽपि न क्रुध्यति। क्रोधनीयानि अन्यस्य क्रोधोत्पादकानि अनुकम्पया वर्जयन्। अनेन क्रोधक्रिया-

अबुद्धिर्बत नो राजा जीवलोकञ्चरत्ययम् ।
यो गतिं सर्वभूतानां परित्यजति राघवम् ॥ ५ ॥
इति सर्व्वा महिष्यस्ता विवत्सा इव धेनवः ।
पतिमाचुक्रुशुश्चापि सस्वनञ्चापि चुक्रुशुः ॥ ६ ॥
स हि चान्तःपुरे घोरमार्त्तशब्दं महीपतिः ।
पुत्रशोकाभिसन्तप्तः श्रुत्वा व्यालीयतासने ॥ ७ ॥
रामस्तु भृशमायस्तो निःश्वसन्निव कुञ्जरः ।
जगाम सहितो भ्रात्रा मातुरन्तःपुरं वशी ॥ ८ ॥
सोऽपश्यत् पुरुषं तत्र वृद्धं परमपूजितम् ।
उपविष्टं गृहद्वारि तिष्ठतश्चापरान् बहून् ॥ ९ ॥
दृष्ट्वैव तु तदा रामं ते सर्वे समुपस्थिताः ।

कर्त्तृकत्वकर्मत्वयोः प्रतिषेधः। यत्र कुत्रापि क्रुद्धान् स्वयं प्रसादयन् तिष्ठतीति शेषः ॥ ४ ॥

जीवलोकं सर्वप्रजारूपं चरति भक्षयति नाशयतीति यावत् ॥ ५ ॥

पतिमाचुक्रुशुः निनिन्दुः सस्वरं चुक्रुशुः रुरुदुः ॥ ६ ॥

व्यालीयत देहमवगुण्ठ्यावाङ्मुखो विलीन इवाभूदित्यर्थः ॥ ७ ॥

आयस्तः स्वजनदुःखतः प्राप्तखेदः कुञ्जर इव निःश्वसन्। आयत्त इति पाठे आयत्तः पराधीनो यः कुञ्जरः स यथा निःश्वसिति तद्वदित्यर्थः ॥ ८ ॥

पुरुषं द्वाराध्यक्षम् ॥ ९ ॥

जयेन जयतां श्रेष्ठं बर्धयन्ति स्म राघवम् ॥ १० ॥
प्रविश्य प्रथमां कच्यां द्वितीयायां ददर्श सः।
ब्राह्मणान् वेदसम्पन्नान् वृद्धान् राज्ञाभिसत्कृतान् ॥ ११॥
प्रणम्य रामस्तान् वृद्धान् तृतीयायां ददर्श सः।
स्त्रियो बालाश्च वृद्धाश्च द्वाररचणतत्पराः ॥ १२ ॥
बर्धयित्वा प्रहृष्टास्ताः प्रविश्य च गृहं स्त्रियः।
न्यवेदयन्यस्त्वरिता राममातुः प्रियं तदा ॥ १३ ॥
कौशल्यापि तदा देवी रात्रिं स्थित्वा समाहिता।
प्रभाते त्वकरोत्पूजां विष्णोः पुत्रहितैषिणी ॥ १४ ॥
सा चौमवसना हृष्टा नित्यं व्रतपरायणा।
अग्निं जुहोति स्म तदा मन्त्रवत्कृतमङ्गला ॥ १५ ॥
प्रविश्य तु तदा रामो मातुरन्तःपुरं शुभम्।
ददर्श मातरं तत्र ह्वावयन्तीं हुताशनम् ॥ १६ ॥

जयेन विजयी भवेति शब्देनेत्यर्थः। जयेति पाठे जयेतिशब्देनेत्यर्थः ॥ १० ॥ ११ ॥

स रामः तृणीकृतराज्यो रामः ॥ १२ ॥

वर्धयित्वा जयशब्देनेत्यर्थः। प्रियं रामागमनम् ॥ १३ ॥ १४ ॥

अग्निम् अग्निहोत्रं मन्त्रवत् जुहोतिस्म ज्येष्ठपत्नीत्वादृत्त्विजेति शेषः ॥ १५ ॥

सदाह,—ह्वावयन्तीमिति ॥ १६ ॥

देवकार्य्यनिमित्तञ्च तत्रापश्यत्समुद्यतम् ।
दध्यक्षतघृतञ्चैव मोदकान् हविषस्तथा ॥ १७ ॥
लाजान् माल्यानि शुक्लानि पायसं कृसरं तथा ।
समिधः पूर्णकुम्भांश्च ददर्श रघुनन्दनः ॥ १८ ॥
तां शुक्लक्षौमसंवीतां व्रतयोगेन कर्षिताम् ।
तर्पयन्तीं ददर्शाद्भिर्देवतां वरवर्णिनीम् ॥ १९ ॥
सा चिरस्यात्मजं दृष्ट्वा मातृनन्दनमागतम् ।
अभिचक्राम संहृष्टा किशोरं वडवा यथा ॥ २० ॥
स मातरमुपक्रान्तामुपसंगृह्य राघवः ।
परिष्वक्तश्च बाहुभ्यामवघ्रातश्च मूर्द्धनि ॥ २१ ॥
तमुवाच दुराधर्षं राघवं सुतमात्मनः ।
कौशल्या पुत्रवात्सल्यादिदं प्रियहितं वचः ॥ २२ ॥
वृद्धानां धर्मशीलानां राजर्षीणां महात्मनाम् ।
प्राप्नुह्यायुश्च कीर्त्तिञ्च धर्मञ्चाप्युचितं कुले ॥ २३ ॥

हविषः हवींषि ॥ १७ ॥

कृसरं तिलमुद्गतंदुलौदनम् ॥ १८ ॥

व्रतयोगेन पुत्राभ्युदयकामनया तद्देवोपवासव्रतयोगेनेत्यर्थः । देवतां तर्पयन्तीम् । वरवर्णिनीं तां ददर्शेत्यन्वयः ॥ १९ ॥

अभिचक्राम अभिमुखं जगाम किशोरोऽश्वबालकः ॥ २० ॥

उपसंगृह्य अभिवाद्य स्थितस्तया परिष्वक्त इत्यन्वयः ॥ २१ ॥ २२ ॥

सत्यप्रतिज्ञं पितरं राजानं पश्य राघव! ।
अद्यैव त्वां स धर्मात्मा यौवराज्येऽभिषेक्ष्यति ॥ २४ ॥
दत्तमासनमालभ्य भोजनेन निमन्त्रितः ।
मातरं राघवः किञ्चित्प्रसार्य्याञ्जलिमब्रवीत् ॥ २५ ॥
स स्वभावविनीतश्च गौरवाच्च तदानतः ।
प्रस्थितो दण्डकारण्यमाप्रष्टुमुपचक्रमे ॥ २६ ॥
देवि! नूनं न जानीषे महद्भयमुपस्थितम् ।
इदं तव च दुःखाय वैदेह्या लक्ष्मणस्य च ॥ २७ ॥
गमिष्ये दण्डकारण्यं किमनेनासनेन मे ।

कुले उचितं कुलस्योचितमिति यावत् ॥ २३ ॥

राजानं पश्य गत्वेति शेषः । कौशल्याया राजगृहगमनादिव्यापारापरिज्ञानादेवमुक्तिः ॥ २४ ॥

अत्रोपविश्य भुक्त्वा राजानं द्रष्टुं गच्छेति भोजनेन फलेन निमन्त्रितो राघवः केवलमासनमालभ्य स्पृष्ट्वा नतूपविष्टो व्रीड़या किञ्चिदञ्जलिं प्रसार्य्यावाङ्मुखएवाब्रवीत्। प्रसाद्याञ्जलिरिति पाठे प्रकर्षेण सन्नाञ्जलिर्विशीर्णाञ्जलिरित्यर्थ इति कश्चित्। मातुः प्रसादनयोग्याञ्जलिरित्यर्थ उचितः। किञ्चिदित्यस्य चावाङ्मुख इति शेषः ॥ २५ ॥

गौरवाच्च मातृत्वप्रयुक्त गौरवाच्च। आनतः सन्। प्रस्थितः प्रस्थातुमुपक्रान्तः आप्रष्टुम् अनुज्ञां कारयितुम् उपचक्रमे ॥ २६ ॥

तव च तवैव अज्ञत्वात्। लोकदृष्ट्याह,—वैदेह्या इत्यादि ॥ २७ ॥

विष्टरासनयोग्यो हि कालोऽयं मामुपस्थितः ॥ २८ ॥
चतुर्दश हि वर्षाणि वत्स्यामि विजने वने।
कन्दमूलफलैर्जीवन् हित्वा मुनिवदामिषम् ॥ २९ ॥
भरताय महाराजो यौवराज्यं प्रयच्छति।
मां पुनर्दण्डकारण्यं विवासयति तापसम् ॥ ३० ॥
स षट् चाष्टौ च वर्षाणि वत्स्यामि विजने वने।
आसेवमानो वन्यानि फलमूलैश्च वर्तयन् ॥ ३१ ॥
सा निकृत्तेव शालस्य यष्टिः परशुना वने।
पपात सहसा देवी देवतेव दिवश्च्युता ॥ ३२ ॥
तामदुःखोचितां दृष्ट्वा पतितां कदलीमिव।
रामस्तूत्थापयामास मातरं गतचेतसम् ॥ ३३ ॥
उपावृत्योत्थितां दीनां वडवामिव वाहिताम्।

विष्टरस्तपस्विनामासनविशेषः। पश्चाशङ्किर्भवेत् ब्रह्मा तदर्थेन तु विष्टर इत्युक्तेः ॥ २८ ॥

मुनिवदामिषं सूदैर्विशिष्टसंस्कारसंस्कृतं मांसम्। 'तेनेदं मेध्यमिदं स्वादुनिष्टमिदमग्निनेति वक्ष्यमाणेन न विरोधः तस्य शुद्धमांसपरत्वात्। मुनिवदित्युक्त्या आज्ञीयादिमांसपरत्वाच्च ॥ २९ ॥ ३० ॥

वन्यानि वानप्रस्थयोग्यकर्माणि। आसेवमानः आचरन्। यद्वा वन्यानि वल्कलानि दधानः वर्त्तयन्। जीवयन् ॥ ३१ ॥

यष्टिः शाखा ॥ ३२ ॥ ३३ ॥

पांशुगुण्ठितसर्वाङ्गीं विममर्ष च पाणिना ॥ ३४ ॥
सा राघवमुपासीनमसुखार्त्ता सुखोचिता।
उवाच पुरुषव्याघ्रमुपश्शृण्वति लक्ष्मणे ॥ ३५ ॥
यदि पुत्र! न जायेथा मम शोकाय राघव!।
नस्म दुःखमतो भूयः पश्येयमहमप्रजाः ॥ ३६ ॥
एक एव हि वन्ध्यायाः शोको भवति मानसः।
अप्रजास्मीति सन्तापो नह्यन्यः पुत्र! विद्यते ॥ ३७ ॥
न दृष्टपूर्वं कल्याणं सुखं वा पतिपौरुषे।
अपि पुत्रे विपश्येयमिति रामास्थितं मया ॥ ३८ ॥

वाहितां पूर्वं वाहितभारां ततः श्रमनिवृत्तये उपावृत्य भुवि लुण्ठनं कृत्वोत्थितां वड़वामिव ॥ ३४ ॥

असुखेन सुखनाशेनार्त्ता। उपासीनं समीपे स्थितम् ॥ ३५ ॥

अप्रजाः बन्ध्या। अतः बन्ध्यात्वात् भूयः बन्ध्याधिकं पुत्रवियोगदुःखं न पश्येयम् ॥ ३६ ॥

बन्ध्यात्वदुःखमितः सुसहमित्याह,—एक एवेति। अप्रजास्मीति मानसशोकाभिनयः समासान्ताभावोऽनित्यत्वात्। सन्धिर्वार्षत्वात् ॥ ३७ ॥

स्वस्य सदा दुःखित्वमिति शोचति नेति। पत्युः पौरुषं अनुरागकृतं रञ्जनं तस्मिन् यत् प्राप्यं कल्याणं प्रशस्तवस्त्राभरणादिजसौभाग्याधिक्यं सुखं वा पतिसम्भोगजं तन्मया न दृष्टपूर्वम्। अपीति लोकोक्तौ पुत्रे जाते तदुभयम् उक्तकल्याणं पुत्रदर्शनजं सुखञ्च पश्येयमित्याशया राम मया आस्थितं जीवनं स्थापितम् ॥ ३८ ॥

सा बह्वन्यमनोज्ञानि वाक्यानि हृदयच्छिदाम् ।
अहं श्रोष्ये सपत्नीनामवराणां परा सती ॥ ३९ ॥
अतो दुःखतरं किन्नु प्रमदानां भविष्यति ।
मम शोको विलापश्च यादृशोऽयमनन्तकः ॥ ४० ॥
त्वयि सन्निहितेऽप्येवमहमासं निराकृता ।
किं पुनः प्रोषिते तात ! ध्रुवं मरणमेव मे ॥ ४१ ॥
अत्यन्तं निगृहीतास्मि भर्त्तुर्नित्यमसम्मता ।
परिवारेण कैकेय्याः समावाप्यथवावरा ॥ ४२ ॥

साहं अवराणां कनिष्ठानां सपत्नीनां त्वद्बलादिदानीं परा सती * । हृदयच्छिदां हृदयविदारिकाणां तासाममनोज्ञानि वाक्यान्येवं जीर्णापि श्रोष्ये ॥ ३९ ॥

अतः सपत्नीधिक्कारवाक्यश्रवणजात् परं दुःखं स्त्रीणां नास्ति । ममायमनन्तकोऽपारः शोको यादृशस्तादृशो वाचापि वक्तुमशक्य इति शेषः ॥ ४० ॥

निराकृता सपत्नैरिति शेषः । ध्रुवं प्राप्तमिति शेषः । शोकाश्रयत्वान्नूय-मपदता न दोषः ॥ ४१ ॥

निगृहीता, भर्त्तृकृतनिग्रहप्रकारमाह,—परिवारेणेति । कैकेय्या दासीजनेन समा अथवा अवरा । ततोऽपि निकृष्टा कृतास्मीति शेषः ।

---

* साहं सपत्नीनां परा ज्येष्ठा सती इति वा ।

यो हि मां सेवते कश्चिदपि वाप्यनुवर्त्तते।
कैकेय्याः पुत्रमन्वीक्ष्य स जनो नाभिभाषते॥ ४३॥
नित्यक्रोधतया तस्याः कथं नु खरवादिनम्।
कैकेय्या वदनं द्रष्टुं पुत्र! शक्ष्यामि दुर्गता॥ ४४॥
दश सप्त च वर्षाणि जातस्य तव राघव!।
अतीतानि प्रकाङ्क्षन्त्या मया दुःखपरिक्षयम्॥ ४५॥

प्यधरा वरेति पाठे वरा श्रेष्ठा अपि अधरा निकृष्टा कृतास्मी-त्यर्थः॥ ४२॥

स सर्वोऽपि इष्टः जनः कदाचिदागतं कैकेय्याः पुत्रमवलोक्य मां नाभिभाषते। इदनीमप्येवमवस्था मम वर्त्तते। त्वयि गते तु किं वक्तव्यमिति भावः॥ ४३॥

खरवादिनं लुगभाव आर्षः। परुषवदनशीलम्। तस्या वदनं कथं द्रष्टुं शक्ष्यामि। दुर्गता त्वद्वियोगेन दुर्दशामापन्ना॥ ४४॥

जातस्य उपनयनाख्यद्वितीयजन्मनेति शेषः। ऊनषोड़शवर्षो मे रामो राजीवलोचन इति विश्वामित्रमुद्दिश्य दशरथोक्त्या विवाह-काले पञ्चदशवर्षत्वोक्तेः।

"तत्र द्वादशवर्षाणि राघवः सह सीतया।
रमयामास धर्मात्मा नारायण इव श्रिया॥
तस्मिन् काले महाराजः प्रीतो रामस्य सद्गुणैः।
ज्येष्ठं राज्येन संयोक्तुमैच्छत् सर्वन्पाज्ञया"॥

इति पाद्मोक्तेश्च। उपनयनञ्च गर्भैकादशे एकादशे वा राजन्यमिति

स्मृतेः दशमे वर्षे इति बोध्यम् । एवमुपनयनोत्तरं सप्तदशवर्षाणि अतीतानि जातस्य तव । अतःपरं यौवराज्येन दुःखपरिक्षयं प्रकाङ्क्षन्त्या मया तद्विघाते तस्या वदनं कथं नु द्रष्टव्यमित्यनुकर्षः । वस्तुतस्तु इग्यणः संप्रसारणमिति सूत्रस्थभाष्योक्तरीत्या प्रविश्यपिण्डीमित्यादौ यथा प्रविश्य गृहं पिण्डीं भक्षयेति वाक्यार्थे प्रविश्येति पिण्डीमिति च वाक्यैकदेशस्य प्रयोगस्तथा द्विर्दशेति वाक्यस्यार्थे वाक्यैकदेश प्रयोगोयं द्विरावृत्ता दशविंशतिः सप्तचेत्यर्थः । अत्र तात्पर्य्यग्राहिका विश्वामित्रम्प्रति दशरथोक्तिः पाद्मोक्तिश्च । तादृशप्रयोगश्च कौशल्यायाः पुत्रवियोगदुःखार्त्ततया वाल्मीकेश्च वर्णनीयमयीभावेन न दोषायेति ध्येयम् * ॥ ४५ ॥

---

* ननु ऊनषोड़शवर्षो मे इति विश्वामित्रमुद्दिश्य दशरथेनोक्तत्वात् विवाहानन्तरं उषित्वा द्वादशसमा इति सीतया अनसूयां प्रतिवक्ष्यमाणत्वाच्च रामस्याष्टाविंशति वर्षाणि वर्त्तन्ते तत्कथं सप्तदशवर्षाणीत्युच्यतइति चेत् न अत्र जातस्येत्युक्तिर्गर्भैकादशेषु राजन्यमित्युक्तोपनयनप्राप्त द्वितीयजन्मविवक्षया । द्वितीयजन्मत्वञ्च याज्ञवल्क्येनोक्तं मातुर्यदग्रे जायन्ते द्वितीयं मौञ्जिबन्धनात् अत्रास्य माता सावित्री पितात्वाचार्य उच्यते । ब्राह्मण क्षत्रियविशस्तस्मादेते द्विजातय इति उपनयनेतु गर्भैकादशेषु राजन्यमिति सूत्रव्याख्याने गर्भैकादशेष्विति बहुवचनेन गर्भनवम गर्भदशमगर्भैकादशानि वर्षाणि गृहीतानि । राजवर्यस्य रघुनाथस्य तु गर्भनवमेशुद्धाष्टमे वर्षे उपनयनं कृतं तदनन्तरं सप्तदशवर्षाणि जातानि अत्र विवाहात्पूर्वं द्वादश विवाहानन्तरं द्वादश पञ्चविंशे वनप्रवेश इति विवेकः, तथाहि विश्वा-

तदक्षयं महत् दुःखं नोत्सहे सहितुं चिरम्।
विप्रकारं सपत्नीनामेवं जीर्णापि राघव! ॥ ४६ ॥
अपश्यन्ती तव मुखं परिपूर्णशशिप्रभम्।
कृपणा वर्तयिष्यामि कथं कृपणजीविका * ॥ ४७ ॥
उपवासैश्च योगैश्च बहुभिश्च परिश्रमैः।
दुःखं सम्बर्द्धितो मोघं त्वं हि दुर्गतया मया ॥ ४८ ॥

दुःखं त्वद्वियोगजं अक्षयं तव राज्यनाशात् क्षयसम्भावनारहित-मपि। अपिच एवं जीर्णा सपत्नीनां विप्रकारं सहितुं सोढुं नोत्सहे ॥ ४६ ॥

कृपणजीविका शोच्यजीवना ॥ ४७ ॥

दुर्गतया भाग्यहीनया मया बहुपरिश्रमजनकैरुपवासैर्योगैर्देवता-

---

* "कृपणजीविकां" इति वा पाठः।

---

मित्रं प्रति ऊनषोड़षवर्षोमे इत्युक्तस्योनषोड़शवर्षत्वस्य द्वादशवर्ष पर्यवसानम्। बालो द्वादशवर्षोऽयमकृतास्त्रश्च राघव इत्येतदनुरूपेण रावणं प्रति मारीचोक्तेः। सीतयापि रावणसन्नासिनं प्रति उषित्वा द्वादश समा इत्युक्तत्वाद्वनवासारम्भसमयमभिप्रेत्य मम भर्त्ता महातेजा वयसा पञ्चविंशक इत्युक्तत्वात्च रामस्य वनप्रवेशः पञ्च-विंशे इति सिद्धं एवमुपनयनोत्तरं सप्तदशवर्षाण्यतीतानि जातस्य तव अतःपरं यौवराज्येन दुःखपरिक्षयं प्रकाङ्क्षन्त्या मया तद्विघाते तस्या वदनं कथं नु द्रष्टव्यमित्यनुकर्षः।

स्थिरं नु हृदयं मन्ये ममेदं यन्न दीर्यते ।
प्रावृषीव महानद्याः स्पृष्टं कूलं नवाम्भसा ॥ ४९ ॥

ममैव नूनं मरणं न विद्यते
न चावकाशोऽस्ति यमक्षये मम ।
यदन्तकोऽद्यैव न मां जिहीर्षति
प्रसह्य सिंहो रुदतीं मृगीमिव ॥ ५० ॥

स्थिरं हि नूनं हृदयं ममायसं
न भिद्यते यद्भुवि नावदीर्यते ।
अनेन दुःखेन च देहमर्पितं
ध्रुवं ह्यकाले मरणं न विद्यते ॥ ५१ ॥

ध्यानैर्दुःखं यथा तथा मोघं वर्धितोऽसि यदि विप्रवत्स्यसीति शेषः । त्वद्वर्धनजफलालाभादिति भावः ॥ ४८ ॥

न दीर्यते त्वद्विप्रयोग श्रवणेऽपीति शेषः ॥ ४९ ॥

ममैवेति । लौकिक्यतिवृद्धोक्तिजातिरियं मरणं न विद्यतएव । न जिहीर्षत्येवेत्यन्वयः । अवकाशः अवस्थितये स्थलम् ॥ ५० ॥

आयसं अयसा निर्मितम् । यत् यतो न भिद्यते । भुवि पतित्वा नो विदीर्यते । भेदो द्विधाभवनं । विदारणं अनेकच्छिद्ररेखावत्त्वम् । अनेन दुःखेनार्पितं व्याप्तं देहं देहो न भिद्यत इत्याद्यन्वयः । अर्धचौदि-देहशब्दः हि यतो न भिद्यतेऽतोऽकाले मरणं न विद्यत इति जाने इति शेषः ॥ ५१ ॥

ददन्तु दुःखं यदनर्थकानि मे
व्रतानि दानानि च संयमाश्च हि।
तपश्च तप्तं यदपत्यकाम्यया
सुनिष्फलं वीजमिवोप्तमूषरे ॥ ५२ ॥
यदिह्यकाले मरणं यदृच्छया
लभेत कश्चिद्गुरुदुःखकर्षितः।
गताहमद्यैव परेतसंसदं
विना त्वया धेनुरिवात्मजेन वै ॥ ५३ ॥
अथापि किं जीवितमद्य मे वृथा
त्वया विना चन्द्रनिभाननप्रभ!।
अनुव्रजिष्यामि वनं त्वयैव गौः
सुदुर्वला वत्समिवाभिकांक्षया ॥ ५४ ॥

यद्व्रतादीन्यनर्थकानि तदिदं महद्दुःखम्। ऊषरे उप्तमतएव निष्फलं वीजमिव ॥ ५२ ॥

गुरुदुःखेन कर्षितः पीड़ितः परेतसंसदं यमसभाम्। अहं गतास्यां तत्तु न लभ्यत इति शेषः ॥ ५३ ॥

अथापि मरणाभावेऽपि त्वया विना त्वत्सन्निधिं विना किं जीवितं कुत्सितं जीवितं वृथा व्यर्थमतोऽनुव्रजिष्यामि। अभिकाङ्क्षया वात्सल्येन ॥ ५४ ॥

भृशमसुखममर्षिता यदा
बहु विललाप समीक्ष्य राघवम् ।
व्यसनमुपनिशाम्य सा महत्
सुतमिव बद्धमवेक्ष्य किन्नरी ॥ ५५ ॥

इत्यार्षे रामायणे वाल्मीकीये अयोध्याकाण्डे
कौशल्याविलापो नाम अष्टा-
दशः सर्गः ॥ १८ ॥

भृशमसुखं दुःखममर्षिता असहमाना राम वियोगमूलं सपत्नीशादि-
कृतं महद्व्यसनं दुःखं निशाम्य पर्यालोच्य सत्यपाशबद्धं सुतमवेक्ष्य यथो-
क्तनिमित्तवती किन्नरीव विललाप ॥ ५५ ॥

इति रामाभिरामे श्रीरामीये रामायणतिलके
अयोध्याकाण्डे विंशः सर्गः ॥ २० ॥

## एकविंशः सर्गः।



तदा तु विलपन्तीं तां कौशल्यां राममातरम्।
उवाच लक्ष्मणो दीनस्तत्कालसदृशं वचः॥ १॥
न रोचते ममाप्येतदार्ये! यद्राघवो वनम्।
त्यक्त्वा राज्यश्रियं गच्छेत्स्त्रिया वाक्यवशङ्गतः॥ २॥
विपरीतश्च वृद्धश्च विषयैश्च प्रधर्षितः।
नृपः किमिव न ब्रूयाच्चोद्यमानः समन्मथः॥ ३॥
नास्यापराधं पश्यामि नापि दोषं तथाविधम्।
येन निर्वास्यते राष्ट्राद्वनवासाय राघवः॥ ४॥

तत्कालसदृशं रामवियोगहेतुककौशल्यादुःखप्रवृत्तिकालोचितम्॥१॥

आर्ये कौशल्ये गच्छेदिति यत्तन्ममापि न रोचते॥ २॥

स्त्रियाइत्याद्युत्तरान्वयि। अतएव विपरीतः प्राप्तप्रकृति वैपरीत्यः। चोद्यमानः स्त्रियाक्रोधवशात् पुनरुक्तिर्न दोषाय। किमिव न ब्रूयादनुचित शतमपि ब्रूयात् अतस्तद्वचो न श्रद्धेयमिति। एतेन राजाज्ञाभङ्गः कथं कार्य इति शङ्कासमाहिता॥ ३॥

ननु रामदोषप्रयुक्तं विवासनं स्यात्तत्राह,—नास्येति। रामस्ये-

न तं पश्याम्यहं लोके परोक्षमपि यो नरः।
स्वमित्रोऽपि निरस्तोऽपि योऽस्य दोषमुदाहरेत् * ॥ ५ ॥
देवकल्पमृजुं दान्तं रिपूणामपि वत्सलम्।
अवेक्षमाणः को धर्मं त्यजेत्पुत्रमकारणात् ॥ ६ ॥
तदिदं वचनं राज्ञः पुनर्बाल्यमुपेयुषः।
पुत्रः को हृदये कुर्याद्राजवृत्तमनुस्मरन् ॥ ७ ॥
यावदेव न जानाति कश्चिदर्थमिमं नरः।
तावदेव मया सार्द्धमात्मस्थं कुरु शासनम् ॥ ८ ॥

त्यर्थः। अपराधं पितृविषयकं दोषमसमञ्जादेरिव प्रजाबधादिपातकम् ॥ ४ ॥

सुतरामभित्रोऽपि शत्रुरपि। निरस्तोऽपि महापातकादिवशङ्कृत्वा त्यक्तोऽपि। परोक्षमपि रामस्य दोषं यो वदेत्तं न पश्यामि ॥ ५ ॥

यदेवमतो देवक ं दान्तं गुरुभिः शिक्षितम्। एवमुक्तगुणं पुत्रं धर्ममवेक्षमाणः कस्त्यजेदित्यन्वयः। रिपूणां कैकेय्यादीनां विषयेऽपि वत्सलं स्निग्धम् ॥ ६ ॥

बाल्यं बालभावमविमृश्यकारित्वं कामपरवशत्वं वोपेयुषः प्राप्तस्य राजवृत्तं पूर्वराजाचरितम् ॥ ७ ॥

अतो यावत् इममर्थं त्वत्प्रवासनरूपं कश्चिदपि न जानाति ताव-

* "अमित्रोऽप्यनभिस्निग्धो निरमित्रस्य धीमतः।" इतिवा पाठः।

मया पार्श्वे सधनुषा तव गुप्तस्य राघव !
कः समर्थोऽधिकं कर्त्तुं कृतान्तस्येव तिष्ठतः ॥ ९ ॥
निर्मनुष्यामिमां सर्वामयोध्यां मनुजर्षभ ! ।
करिष्यामि शरैस्तीक्ष्णैर्यदि स्थास्यति विप्रिये ॥ १० ॥
भरतस्याथ पक्ष्यो वा यो वास्य हितमिच्छति ।
सर्वांस्तांश्च वधिष्यामि मृदुर्हि परिभूयते ॥ ११ ॥
प्रोत्साहितोऽयं कैकेय्या सन्तुष्टो * यदि नः पिता ।
अमित्रभूतो निःसङ्गं † बध्यतां बध्यतामपि ॥ १२ ॥

ततः पूर्वमेव शासनं राज्यमभिषेकेनात्मस्थं आत्माधीनं कुरु। शोभन-मिति पाठे राज्यफलकमभिषेकम् ॥ ८ ॥

कथमेवं शक्यं तत्राह,—मयेति। अधिकं त्वदाज्ञोल्लङ्घनपूर्वमभि-षेकविघ्नम् ॥ ९ ॥

विप्रिये तव विपक्षभावे ॥ १० ॥

पक्ष्यो मातुलादिः यो वान्यः कश्चिदस्य हितमिच्छति। मृदुर्हीति। अतो मार्दवं न युक्तम्। मार्दवानुचितकाल इति भावः ॥ ११ ॥

ननु राज्ञा राज्यस्य भरताय दीयमानत्वादपरिहार्योऽयमर्थस्त-त्राह,—प्रेति। कैकेय्या प्रोत्साहितस्तस्यां सन्तुष्टो यदि पिता नोऽस्माकं अमित्रभूतो जायते। तदाऽसौ बन्धनं प्राप्यतां अथवास्य बध एव

* "स दुष्टः" इति वा पाठः।
† "निःशङ्कम्" इति वा पाठः।

गुरोरप्यवलिप्तस्य कार्य्याकार्य्यमजानतः।
उत्पथं प्रतिपन्नस्य कार्य्यं भवति शासनम् ॥ १३ ॥
बलमेष: किमाश्रित्य हेतुं वा पुरुषोत्तम !।
दातुमिच्छति कैकेय्यै उपस्थितमिदं तव * ॥ १४ ॥
त्वया चैव मया चैव कृत्वा वैरमनुत्तमम्।
कास्य शक्तिः श्रियं दातुं भरतायारिशासन ! ॥ १५ ॥
अनुरक्तोऽस्मि भावेन भ्रातरं देवि ! तत्त्वत:।
सत्येन धनुषा चैव दत्तेनेष्टेन ते शपे ॥ १६ ॥

क्रियताम् †। त्रेताद्वापरयोः संधावयमवतारस्तदा च किञ्चिदधिकपादेनाधर्मप्रवेश इति। तदनुसारेण लक्ष्मणस्यैवमुक्तिः कैकेय्याश्च परोपदेशेनैवंमतिः, छलेन वालिबधे प्रवृत्तिश्च भगवत इति बोध्यम् ॥ १२ ॥

ननु एवं दोषः स्यात्तत्राह,—गुरोरिति। एवञ्च शास्त्रसम्मतत्वान्नात्र दोष इति भावः ॥ १३ ॥

ननु राज्ञो बलवत्त्वात् बन्धनाद्यशक्यमत आह,—बलमिति। उपस्थितं ज्येष्ठत्वेन न्यायतस्तवैव प्राप्तम् इदं राज्यम्। एवञ्च बलहेत्वोरभावात् बन्धनादिशक्यमेवेति भावः ॥ १४ ॥

बलाभावमेवाह,—त्वयेत्यादि ॥ १५ ॥

---

* "राज्यमेतदुपस्थितम्" इति वा पाठः।

† निःसङ्कं निर्विचारम्।

दीप्तमग्निमरण्यं वा यदि रामः प्रवेक्ष्यति।
प्रविष्टं तत्र मान्देवि! त्वं पूर्वमवधारय॥ १७॥
हरामि वीर्य्याद्दुःखन्ते तमः सूर्य्य इवोदितः।
देवी पश्यतु मे वीर्य्यं राघवश्चैव पश्यतु॥ १८॥
हनिष्ये पितरं वृद्धं कैकेय्यासक्तमानसम्।
कृपणञ्च स्थितं बाल्ये वृद्धभावेन गर्हितम्॥ १९॥
एतत्तु वचनं श्रुत्वा लक्ष्मणस्य महात्मनः।
उवाच रामं कौशल्या रुदती शोकलालसा॥ २०॥
भ्रातुस्ते वदतः पुत्र! लक्ष्मणस्य श्रुतं त्वया
यदत्रानन्तरं तत्त्वं कुरुष्व यदि रोचते॥ २१॥

ननु तवाप्येवं वदतो न विश्वासो ज्ञातित्वाविशेषादत आह,—अनुरक्त इति। भाव आन्तरोऽभिप्रायः॥ १६॥

सम्प्रत्येवानुरागनिर्णय इत्याह,—दीप्तमग्निं क्रोधमित्यर्थः। अरण्यं वा पित्राज्ञया॥ १७॥

राघवश्चेति चात्सर्वो जनश्च॥ १८॥

कैकेय्यासक्तमानसमतएव कृपणम्। वृद्धभावेन वृद्धत्वेन गर्हितं यथा भवति तथा बाल्ये कामुकत्वे स्थितम्॥ १९॥ २०॥

अनन्तरं युक्तं कार्य्यं तत्त्वं कुरुष्व यदि रोचते तर्हि लक्ष्मणवाक्यं कुरुष्वेति शेषः। अनेन कौशल्याया गूढं स्वाभिमतत्वं लक्ष्मणोक्तस्य सूचितम्॥ २१॥

न चाधर्म्यं वचः श्रुत्वा सपत्न्या मम भाषितम्।
विहाय शोकसन्तप्तां गन्तुमर्हसि मामितः॥ २२॥
धर्मज्ञ इति धर्मिष्ठ! धर्मं चरितुमिच्छसि।
शुश्रूष मामिहस्थस्त्वञ्चर धर्ममनुत्तमम्॥ २३॥
शुश्रूषुर्जननीं पुत्र! स्वगृहे नियतो वसन्।
परेण तपसा युक्तः काश्यपस्त्रिदिवं गतः॥ २४॥
यथैव राजा पूज्यस्ते गौरवेण तथा ह्यहम्।
त्वां साहं नानुजानामि न गन्तव्यमितो वनम्॥ २५॥
त्वद्वियोगान्न मे कार्य्यं जीवितेन सुखेन वा।

पुनः रामाभिप्रायनिर्णयाय लक्ष्मणवाक्यमेवोपोद्बलयितुमेतद्राजवाक्यमपि न येन तव दोषः स्यात् किन्तु मत्सपत्न्या इत्याह,—न चेति। अधर्म्यं कनिष्ठस्य राज्यरूपम्। मम सपत्न्या भाषितं वचः श्रुत्वा। मां विहायेतो वनं गन्तुं नार्हसि॥ २२॥

अथ सापत्न्यमातृवाक्योल्लङ्घनेऽप्यधर्मबुद्ध्या तत्राप्यादरस्तर्हि राज्यं परित्यज्यैवेह तिष्ठेत्याह,—धर्मज्ञेति॥ २३॥

शुश्रूषः शुश्रूषां कुर्वन्। पुत्रेति रामसम्बोधनम्। त्रिदिवं गतः मातृसेवया प्राजापत्यपदं प्राप्त इति भावः॥ २४॥

तथाहि ततोऽपि गौरवेणाहं पूज्येत्यर्थः। पितुर्दशगुणं माता गौरवेणातिरिच्यत इति स्मृतेः। नानुजानामि वनं गन्तुमिति शेषः। किञ्च प्रतिषेधामीत्याह,—न गन्तव्यमित्यादि॥ २५॥

अथ वनगमनपर्यन्तं तदाज्ञासत्वादत्र सर्वथा स्थातुमशक्यमिति

त्वया सह मम श्रेयस्तृणानामपि भक्षणम् ॥ २६ ॥
यदि त्वं यास्यसि वनं त्यक्त्वा मां शोकलालसाम्।
अहं प्रायमिहासिष्ये न च शक्ष्यामि जीवितुम् ॥ २७ ॥
ततस्त्वं प्राप्स्यसे पुत्र! निरयं लोकविश्रुतम्।
ब्रह्महत्यामिवाधर्मात् समुद्रः सरितांपतिः ॥ २८ ॥
विलपन्तीं तथा दीनां कौशल्यां जननीं ततः।
उवाच रामो धर्मात्मा वचनं धर्मसंहितम् ॥ २९ ॥
नास्ति शक्तिः पितुर्वाक्यं समतिक्रमितुं मम।
प्रसादये त्वां शिरसा गन्तुमिच्छाम्यहं वनम् ॥ ३० ॥
ऋषिणा च पितुर्वाक्यं कुर्वता वनचारिणा।

चेत्तत्राप्याह,—त्वद्वियोगादिति। त्वद्वियोगात् परं जीवितादिना मे न किञ्चित् कार्य्यम्। अतस्त्वयेत्यादि एवञ्च मामपि सह नयेति भावः ॥ २६ ॥

प्रायं अनशनदीक्षाम्। चोहेतौ यतो जीवितुं न शक्ष्यामि ॥ २७ ॥

ततः मातुर्मरणात्तद्दुःखदानात्। समुद्रो हि कस्मिंश्चित् कल्पे मातुर्दुःखजननरूपाधर्मात् पिप्पलादब्रह्मर्षिकृतां हत्यां प्राप्य नरकवासतुल्यं दुःखं प्राप्तवानिति क्वचित् पुराणे प्रसिद्धमित्याहुः ॥ २८ ॥ २९ ॥

तद्वचनस्य कर्त्तव्यत्वेऽपि युगपदनुष्ठानासम्भवात् पितृवचसः प्रथमप्राप्तत्वेन प्राबल्यात्तदतिक्रमोऽशक्य इत्याह,—नास्तीति ॥ ३० ॥

किञ्च पितृवाक्येन गोमातृबधोऽपि पूर्वैर्महात्मभिः कृतः मया तु

गौर्हता जानता धर्मं कण्डुना च विपश्चिता ॥ ३१ ॥
अस्माकं तु कुले पूर्वं सगरस्याज्ञया पितुः।
खनद्भिः सागरैर्भूमिमवाप्तः सुमहान्वधः ॥ ३२ ॥
जामदग्न्येन रामेण रेणुका जननी स्वयम्।
कृत्ता परशुनाऽरण्ये पितुर्वचनकारणात् ॥ ३३ ॥
एतैरन्यैश्च बहुभिर्देवि ! देवसमैः कृतम्।
पितुर्वचनमक्लीवं करिष्यामि पितुर्हितम् ॥ ३४ ॥
न खल्वेतन्मयैकेन क्रियते पितृशासनम्।
एतैरपि कृतं देवि ! ये मया परिकीर्त्तिताः ॥ ३५ ॥
नाहं धर्ममपूर्वन्ते प्रतिकूलं प्रवर्त्तये।
पूर्वैरयमभिप्रेतो गतो मार्गोऽनुगम्यते ॥ ३६ ॥

दुःखमात्रं मातुः सम्पाद्यत इति न किञ्चिदेतदित्याह,—ऋषिणेति। अधर्मं जानतापि ऋषिणापि मन्त्रद्रष्ट्रापि पितृवाक्यतो गौर्हता। तस्मात्पितृवाक्याकरणे महानधर्म इति सूचितम् ॥ ३१ ॥

महान् वधः ब्राह्मणसकाशादतिनिन्द्यो वधः। अनेन प्राणत्यागेनापि पितृवाक्यं पालनीयमिति सूचितम् ॥ ३२ ॥

परशुना स्वयं स्वहस्तेन छिन्ना। अरण्ये तपोवने। एवं पित्राज्ञया मातृबधोऽपि यद्यधर्मो न तदा दुःखमात्रं न तथेति किं वक्तव्यम् ॥ ३३ ॥

अक्लीवं कातर्यरहितम्। अतः पितुर्हितं करिष्यामि ॥ ३४ ॥ ३५ ॥

ते प्रतिकूलमपूर्वं पूर्वानाचरितं धर्मं नाहं प्रवर्त्तये। उक्तस्यैवार्थ-

तदेतत्तु मया कार्य्यं क्रियते भुवि नान्यथा।
पितुर्हि वचनं कुर्वन्न कश्चिन्नाम हीयते॥ ३७॥
तामेवमुक्त्वा जननीं लक्ष्मणं पुनरब्रवीत्।
वाक्यं वाक्यविदां श्रेष्ठः श्रेष्ठः सर्वधनुष्मताम्॥ ३८॥
तव लक्ष्मण! जानामि मयि स्नेहमनुत्तमम्।
विक्रमञ्चैव सत्त्वञ्च तेजश्च सुदुरासदम्॥ ३९॥
मम मातुर्महद्दुःखमतुलं शुभलक्षण!।
अभिप्रायं न विज्ञाय सत्यस्य च शमस्य च॥ ४०॥
धर्मो हि परमो लोके धर्मे सत्यं प्रतिष्ठितम्।
धर्मसंश्रितमप्येतत्पितुर्वचनमुत्तमम्॥ ४१॥

स्यान्वयन प्रतिपादनम्। पूर्वैरिति। अयमभिप्रेतः धर्मजनकत्वेनेष्टः पितृवाक्यपालनरूपः पूर्वैरयं मार्गो गतः प्राप्तो मयापि तेषामनु पश्चात् गम्यते॥ ३६॥

तस्माद्धेतोः भुवि भूलोके कार्य्यं कर्त्तुं योग्यमेव तत्। एतत्पितृवाक्यं मया क्रियते नान्यथा अकृतं न क्रियत इत्यर्थः। नाम प्रसिद्धं कश्चिन्न हीयते मातुः किञ्चिद्दुःखोत्पादनेऽपि धर्मेणेति शेषः॥ ३७॥

पुनः अनन्तरम्॥ ३८॥ ३९॥

मम मातुर्यन्महतदुःखं तत् सत्यशमयोरभिप्रायं तद्विषयमदभिप्रायमज्ञात्वेत्यतस्त्वदीदृशं वाक्यं तत्त्वज्ञस्यानुचितमिति भावः॥ ४०॥

तदेवाह, --धर्म इति। धर्मः सर्वपुरुषार्थेषु उत्तमः श्रेष्ठः। प्रति-

संश्रुत्य च पितुर्वाक्यं मातुर्वा ब्राह्मणस्य वा ।
न कर्त्तव्यं वृथा वीर ! धर्ममाश्रित्य तिष्ठता ॥ ४२ ॥
सोऽहं न शक्ष्यामि पुनर्नियोगमतिवर्त्तितुम् ।
पितुर्हि वचनाद्वीर ! कैकेय्याहं प्रचोदितः ॥ ४३ ॥
तदेतां विसृजानार्यां चत्रधर्माश्रितां मतिम् ।
धर्ममाश्रय मा तैक्ष्ण्यं मद्बुद्धिरनुगम्यताम् ॥ ४४ ॥
तमेवमुक्त्वा सौहार्द्दाद्भ्रातरं लक्ष्मणाग्रजः ।
उवाच भूयः कौशल्यां प्राञ्जलिः शिरसा नतः ॥ ४५ ॥
अनुमन्यस्व मां देवि ! गमिष्यन्तमितो वनम् ।
शापितासि मम प्राणैः कुरु स्वस्त्ययनानि मे ॥ ४६ ॥

स्थितं धर्मं सत्यम् । प्रशस्तकारणम् एतदुत्तमं पितुर्वचनं धर्मसंश्रितमपि वने तपस्यया तपस्विरक्षणेन च धर्मलाभात् । अतोऽवश्यं कर्त्तव्यं तदच इति भावः । अत्रोत्तममित्यस्य त्रैलोक्यसुखदत्वेनोत्तममिति व्याख्यम् ॥ ४१ ॥

पितृवाक्यकरणस्य प्रतिज्ञातत्वादपि तदुल्लङ्घनमनुचितमित्याह,—संश्रुत्येति, प्रतिज्ञाय । वृथा मोघम् ॥ ४२ ॥

इदं सपत्न्याः कैकेय्या वचनं न पितुस्तत्राह,—सोऽहमित्यादि ॥४३॥

अनार्यां मतिं पितरं बध्वा हत्वा वा राज्यं कर्त्तव्यमित्येवमधर्मविषयां मतिम् । मद्बुद्धिः पितृवाक्यकरणरूपा अनुगम्यताम् अनुवर्त्यताम् ॥ ४४ ॥ ४५ ॥

तीर्णप्रतिज्ञश्च वनात् पुनरेष्याम्यहं पुरीम्।
ययातिरिव राजर्षिः पुरा हित्वा पुनर्दिवम् ॥ ४७ ॥
शोकः सन्धार्यतां मातर्हृदये साधु मा शुचः।
वनवासादिहैष्यामि पुनः कृत्वा पितुर्वचः ॥ ४८ ॥
त्वया मया च वैदेह्या लक्ष्मणेन सुमित्रया।
पितुर्नियोगे स्थातव्यमेष धर्मः सनातनः ॥ ४९ ॥
अम्ब ! संहृत्य सम्भारान् दुःखं हृदि निगृह्य च।
अनवासकृता बुद्धिर्मम धर्म्यानुवर्त्यताम् ॥ ५० ॥

एतद्वचस्तस्य निशम्य माता
सुधर्म्यमव्यग्रमविक्लवञ्च।
मृतेव संज्ञां प्रतिलभ्य देवी
समीक्ष्य रामं पुनरित्युवाच ॥ ५१ ॥

श्रापितासि शपथं प्रापितासि। गमननिरोधं मा कुर्व्विति शेषः ॥४६॥
दिवं हित्वा भूमौ पतितः पुनर्दिवं यथा गतस्तथेत्यर्थः ॥ ४७ ॥
पुनरेष्यामीत्यन्वयः ॥ ४८ ॥
पितुः राज्ञो दशरथस्य ॥ ४९ ॥
सम्भारानभिषेकसम्भारान् निगृह्य निवार्य्य अनुवर्त्यतां त्वयानुमन्यतामित्यर्थः ॥ ५० ॥
सुधर्म्यं धर्मयुक्तम्। अव्यग्रं धैर्य्ययुक्तम्। अविक्लवं अकातरम्। मृतेव मूर्च्छितेति यावत् ॥ ५१ ॥

यथैव ते पुत्र! पिता तथाहं
गुरुः स्वधर्मेण सुहृत्तया च।
न त्वानुजानामि न मां विहाय
सुदुःखितामर्हसि गन्तुमेव ॥ ५२ ॥
किं जीवितेनेह विना त्वया मे
लोकेन वा किं स्वधयाऽमृतेन।
श्रेयो मुहूर्त्तं तव सन्निधानं
ममैव कृत्स्नादपि जीवलोकात् ॥ ५३ ॥
नरैरिवोल्काभिरपोह्यमानो
महागजो ध्वान्तमभिप्रविष्टः।
भूयः प्रजज्वाल विलापमेवं
निशम्य रामः करुणं जनन्याः ॥ ५४ ॥

स्वधर्मेण पालनादिरूपमातृधर्मेण। सुहृत्तया पितुरिव स्नेहवत्तया ॥५२॥

लोकेन इतरबन्धुजनेन स्वधया पितृपूजनेन। इदमुपलक्षणं देव-पूजादेरपि। अमृतेन अमृतत्वसाधनेन तत्त्वज्ञानेनापि किम्। कृत-स्नादपि जीवलोकात् कृत्स्नलोकसान्निध्यात् मुहूर्त्तमपि तव सन्निधान-मेव श्रेयः ॥ ५३ ॥

नरैरुल्काभिरलातैरपोह्यमानस्तुद्यमानो निशि ध्वान्तमभिप्रविष्टो गज इव भूयः प्रजज्वाल। किमिदं यन्मामधर्मे प्रवर्त्तयितुं विलपतीति कोपः ॥ ५४ ॥

स मातरञ्चैव विसंज्ञकल्पा-
मार्त्तञ्च सौमित्रिमभिप्रतप्तम्।
धर्मे स्थितो धर्म्यमुवाच वाक्यं
यथा स एवार्हति तत्र वक्तुम्॥ ५५॥

अहं हि ते लक्ष्मण! नित्यमेव
जानामि भक्तिञ्च पराक्रमञ्च।
मम त्वभिप्रायमसंनिरीक्ष्य
मात्रा सहाभ्यर्दसि मा सुदुःखम्॥ ५६॥

धर्मार्थकामाः खलु जीवलोके
समीक्षिता धर्मफलोदयेषु।
ये तत्र सर्वे स्युरसंशयं मे
भार्येव वश्याभिमता सपुत्रा॥ ५७॥

तत्र रामस्य धर्मनिष्ठां वाल्मीकिः श्लाघते,—यथा स एवेति। तत्र तथाविधघोरदशायां अनन्वयालङ्कारोऽत्र॥ ५५॥

ममाभिप्रायं धर्मैकनिष्ठत्वरूपम्। अभ्यर्दसि पीड़यसि। अभ्यर्थसीति पाठे प्रेरयसीत्यर्थः। सर्वथान्तर्भावितणर्थता। एवं सुतरां दुःखं मा माकुर्वित्यर्थः॥ ५६॥

धर्मफलोदयेषु पूर्वकृतधर्मफलोत्पत्तिकालेषु ये धर्मार्थकामास्त्रयोऽपि लोके समीक्षिताः दृष्टाः मन्वादिभिर्धर्मफलकारणत्वेन ये त्रयोऽपि दृष्टास्ते सर्वे तत्र धर्मे सति अवश्यं भवेयुरिति मे मतिः। ननु तत्र मे कश्चित्सन्देह

यस्मिंस्तु सर्वे स्युरसन्निविष्टा
धर्मो यतः स्यात्तदुपक्रमेत ।
द्वेष्यो भवत्यर्थपरो हि लोके
कामात्मता खल्वपि न प्रशस्ता ॥ ५८ ॥

गुरुश्च राजा च पिता च वृद्धः
क्रोधात् प्रहर्षादथवापि कामात् ।
यत् व्यादिशेत्कार्यमवेक्ष्य धर्मं
कस्तं न कुर्यादनृशंसवृत्तिः ॥ ५९ ॥

इति भावः । एकतोऽनेककार्यलाभे दृष्टान्तमाह,—भार्य्येवेति । वश्या अनुकूला अतिथिपूजादिधर्मसाधनम् । अभिमता प्रिया कामसाधनम् । सपुत्रा परमलोकगमनरूपार्थसाधनञ्च भवति तद्वत् । तस्मात् धर्म एव मुख्य इति स एव रक्ष्य इति भावः ॥ ५७ ॥

अमुमेवार्थं भङ्गान्तरेण द्रढयति,—यस्मिन्निति । यस्मिन् कर्मणि सर्वे धर्मादयोऽसन्निविष्टा असम्बद्धास्तन्नोपक्रमेत नारभेतैवेति शेषः । एकैकफलकानेककर्मसम्भवेऽपि यतो धर्मः स्यात्तदुपक्रमेत तदेव कुर्य्यान्नापरं कुतस्तत्राह,—द्वेष्य इति । अर्थपरः धर्मविरुद्धकेवलार्थपरः कामात्मता धर्मविरुद्धकामपरता न प्रशस्ता गर्हिता राज्ञ इव ॥ ५८ ॥

यदेवमतो गुरुश्चेत्यादि । गुरुरुपनेता धनुर्वेदाद्युपदेष्टा च । स यत्कार्यं व्यादिशेत् तद्धर्ममवेक्ष्य पितृवचनकरणं धर्म इति ज्ञात्वा को न कुर्यात् ॥ ५९ ॥

न तेन शक्नोमि पितुः प्रतिज्ञा-
मिमां न कर्त्तुं सकलां यथावत्।
स ह्यावयोस्तात! गुरुर्नियोगे
देव्याश्च भर्त्ता स गतिश्च धर्मः॥ ६०॥

तस्मिन् पुनर्जीवति धर्मराजे
विशेषतः स्वे पथि वर्त्तमाने।
देवी मया सार्द्धमितोऽभिगच्छेत्
कथंस्विदन्या विधवेव नारी॥ ६१॥

मा मानुमन्यस्व वनं व्रजन्तं
कुरुष्व नः स्वस्त्ययनानि देवि!।
यथा समाप्ते पुनराव्रजेयं
यथा हि सत्येन पुनर्ययातिः॥ ६२॥

इमां सकलां सम्पूर्णां न कर्त्तुं न शक्नोमि। नियोगे प्रभुरिति शेषः। मातुः स्वेन सह गमननिषेधायाह,—देव्याश्चेति। भर्त्तृत्वात् स एवास्या गतिर्न तु पुत्रः। सगतिः सधर्म इति पाठे, तेन सगतिः समानगतिरेषा। सः तच्छब्दस्य बुद्धिस्थपरामर्शकत्वात्तेन सहवास एवास्या धर्मः न तु मया सहवास इत्यर्थः॥ ६०॥

तदेवाह,—तस्मिन्निति। स्वे पथि इष्टपुत्रं परित्यज्यापि सत्यं रक्षणीयमित्येवंरूपे सत्यमार्गे। अन्येत्यस्य विवरणं विधवेति॥ ६१॥

मा मामित्यर्थः। पुनर्ययातिः स्वर्गमापेति शेषः॥ ६२॥

यशो ह्यहं केवलराज्यकारणात्
न पृष्ठतः कर्त्तुमलं महोदयम् ।
अदीर्घकाले न तु देवि ! जीविते
वृणेऽवरामद्य महीमधर्मतः ॥ ६३ ॥
प्रसादयन् नरवृषभः स मातरं
पराक्रमाज्जिगमिषुरेव दण्डकान् ।
अथानुजं भृशमनुशास्य दर्शनं
चकार तां हृदि जननीं प्रदक्षिणम् ॥ ६४ ॥

## इत्यार्षे रामायणे वाल्मीकीये अयोध्याकाण्डे राम-कौशल्यासंवादो नाम एकविंशः सर्गः ॥ २१ ॥

केवलराज्यकारणात् धर्महीनराज्यहेतोः महोदयं महाफलम् यशः प्राप्तमपि राज्यं त्यक्त्वा पितृवाक्यपालनं कृतवानित्येवं यशः पृष्ठतः कर्त्तुं नालम् । जीविते मनुष्यजीवने अदीर्घकालेऽल्पकालतया निश्चिते सति । तदर्थमवरां अवरप्रयोजनिकां महीमधर्मतः परमपुरुषार्थ-त्यागेन नतु वृणे इति सम्बन्धः ॥ ६३ ॥

पराक्रमात् धैर्यात् दर्शनं स्वसम्मतं धर्मरहस्यम् अनुशास्य उपदिश्य तां जननीं प्रदक्षिणं कृत्वा हृदि चकार गन्तुं मनस्कारेत्यर्थः ॥ ६४ ॥

इति रामाभिरामे श्रीरामीये रामायणतिलके
अयोध्याकाण्डे एकविंशः सर्गः ॥ २१ ॥

## द्वाविंशः सर्गः ।



अथ तं व्यथया दीनं सविशेषममर्षितम् ।
सरोषमिव नागेन्द्रं * रोषविस्फारितेक्षणम् ॥ १ ॥
आसाद्य रामः सौमित्रिं सुहृदं भ्रातरं प्रियम् ।
उवाचेदं स धैर्य्येण धारयन् सत्वमात्मवान् ॥ २ ॥
निगृह्य रोषं शोकञ्च धैर्य्यमाक्रम्य केवलम् ।
अवमानं निरस्यैनं गृहीत्वा हर्षमुत्तमम् ॥ ३ ॥
उपक्लृप्तं यदेतन्मे अभिषेकार्थमुत्तमम् ।

अथ रामः सौमित्रेः कैकेयीविषयं रोषं शमयतीत्याह,—अथेति । व्यथया रामस्य राज्यहानिजन्यया सविशेषं रामेष्टजनान्तरापेक्षयेति शेषः । अमर्षितं प्राप्तासहनम् । विस्फारणं विस्तारः ॥ १ ॥

आसाद्य अभिमुखीकृत्य धैर्य्येण सत्वं चित्तं अविकारितया धारयन् प्रकटयन् ॥ २ ॥

किमुवाचेत्यत्राह,—निगृह्येति । रोषं पित्रादिवधहेतुम् । अवमानं वनप्रवासनरूपं निरस्य शत्रुकृतत्वाभावात् उत्तमं हर्षं सत्यपालनेन पितुः पुण्यलोकसिद्धिजं हर्षम् ॥ ३ ॥

* "अमत्तमिव नागेन्द्रम्" इति वा पाठः ।

सर्वं निवर्त्तय क्षिप्रं कुरु कार्यं निरव्ययम् ॥ ४ ॥
सौमित्रे ! योऽभिषेकार्थे मम सम्भारसंभ्रमः ।
अभिषेकनिवृत्त्यर्थे सोऽस्तु सम्भारसम्भ्रमः ॥ ५ ॥
यस्या मदभिषेकार्थे मानसं परितप्यते ।
माता नः सा यथा न स्यात् सविशङ्का तथा कुरु ॥ ६ ॥
तस्याः शङ्कामयं दुःखं मुहूर्त्तमपि नोत्सहे ।
मनसि प्रतिसञ्जातं सौमित्रे ! ऽहमुदीक्षितुम् ॥ ७ ॥
न बुद्धिपूर्वं नाबुद्धं स्मरामीह कदाचन ।
मातॄणां वा पितुर्वाहं कृतमल्पञ्च विप्रियम् ॥ ८ ॥

तादृशहर्षसिद्धार्थमेव हे लक्ष्मण ! अभिषेकप्रयोजनकं निवर्त्तय । कार्यं वनगमनोपयुक्तम् ॥ ४ ॥

तदेवाह,—सौमित्रे इति । सम्भारसम्पादनाय यः सम्भ्रमस्त्वरा सा अभिषेकनिवृत्त्यर्थेऽस्तु वनगमनपरिकरसम्पादनायास्त्विति यावत् ॥ ५ ॥

किञ्च यस्या मदभिषेकार्थे मदभिषेकनिवृत्तौ । अर्थशब्दो निवृत्तिवचने इह । "अर्थोऽभिधेयरैवस्तुप्रयोजननिवृत्तिषु" इत्यमरः । सविशङ्का कथमयं वने स्थास्यतीति शङ्कया सदुःखा । तथा कुरु । अल्पेनैव कालेन रामं द्रक्ष्यसि पित्राज्ञाभङ्गस्यातिनिन्द्य इत्यादिवाक्यैरिति शेषः । यद्वा यस्याः कैकेय्याः । नो माता कैकेयी सशङ्का अयं वनं न गमिष्यतीति शङ्कासहिता ॥ ६ ॥

कुत एवं तत्राह,—तस्या इति । तस्या मनसि प्रतिसञ्जातं शङ्का-

सत्यः सत्याभिसन्धश्च नित्यं सत्यपराक्रमः।
परलोकभयाद्भीतो निर्भयोऽस्तु पिता मम ॥ ९ ॥
तस्यापि हि भवेदस्मिन् कर्मण्यप्रतिसंहृते।
सत्यं नेति मनस्तापस्तस्य तापस्तपेच्च माम् ॥ १० ॥
अभिषेकविधानन्तु तस्मात् संहृत्य लक्ष्मण!।
अन्वगेवाहमिच्छामि वनं गन्तुमितः पुरः ॥ ११ ॥
मम प्रव्राजनादद्य कृतकृत्या नृपात्मजा।
सुतं भरतमव्यग्रमभिषेचयतां ततः ॥ १२ ॥

मयं दुःखं मुहूर्त्तमपि उपेक्षितुं नोत्सहे। उदीक्षितुमिति पाठे द्रष्टुमित्यर्थः ॥ ७ ॥

तदेवोपपादयति,—न बुद्धीति। अबुद्धं अज्ञानपूर्वं वा। अल्पश्च अल्पमपि विप्रियं विप्रियकरं कदाचन कदापि कृतं न स्मरामीत्यन्वयः। समारब्धमिति पाठे नारब्धवानस्मीत्यर्थः ॥ ८ ॥

सत्यः सत्यवचनस्वभावः सत्याभिसन्धः सत्यप्रतिज्ञः परलोकभयात परलोकभयहेतोरसत्याद्भीतः पिता निर्भयोऽस्तु मया तत्कृतसत्यपरिपालनात् ॥ ९ ॥

अस्मिन् कर्मणि अभिषेकविषये कर्मणि अप्रतिसंहृते अनिवर्त्तिते मम वचः सत्यं न वृत्तमिति मनस्तापो भवेत्। तस्य च मनस्तापो मामपि तपेत् पितृहितमकुर्वतो मम जन्मव्यर्थमिति पीड़येत् ॥ १० ॥

यत एवमतोऽभिषेकेति। संहृत्य त्यक्त्वा अन्वगेव शीघ्रमेव। इतः पुरः अस्मान्नगरात् ॥ ११ ॥

मयि चीराजिनधरे जटामण्डलधारिणि ।
गतेऽरण्यञ्च कैकेय्या भविष्यति मनःसुखम् ॥ १३ ॥
बुद्धिः प्रणीता येनेयं मनश्च सुसमाहितम् ।
तं तु नार्हामि संक्लेष्टुं प्रव्रजिष्यामि माचिरम् ॥ १४ ॥
कृतान्त एव सौमित्रे ! द्रष्टव्यो मत्प्रवासने ।
राज्यस्य च वितीर्णस्य पुनरेव निवर्त्तने ॥ १५ ॥

नृपात्मजा कैकेयी अव्यग्रं अव्याकुलम् ॥ १२ ॥

गते गते एव ॥ १३ ॥

कैकेय्या अत्र नापराधः । अन्यप्रेरितत्वात्तर्हि स एव दण्ड्यस्तत्राह,—येनेश्वरेण विधात्रेयं बुद्धिः कैकेय्याः प्रणीता मन्थरा द्वारा दत्ता मनश्च तत्बुद्धिविषयेऽर्थे सुसमाहितं स्थिरीकृतं तं संक्लेष्टुं मत्कृतमन्यथा जातमिति क्लेशयितुं नार्हामि । तस्य मदधिकारित्वान्मद्रूपत्वादेति गूढ़ आशयः । मत्सङ्कल्पकृतमेव तदिति गूढ़ं व्यङ्ग्यं अशक्यत्वादित्यापाततोऽर्थः । अतो वनं प्रव्रजिष्यामि चिरं विलम्बो मा मास्त्वित्यर्थः ॥ १४ ॥

तत्प्रेरयितारमाह,—कृतान्त इत्यादि । मद्विवासने मद्विवासनप्रेरणायां एवमभिषेकनिवर्त्तनप्रेरणायां कृतान्तो दैवमेवेन्द्रादीनां दुःखनिवर्त्तकादृष्टमेवेति गूढ़म् । मत्प्रजानां मत्कृतपरिपालनलाभाभावजनकमदृष्टमिति स्फुटम् । द्रष्टव्यः कारणत्वेन द्रष्टव्यः * । यत्तु रामस्य प्राक्कृतदुरदृष्टं दैवमिति तन्न भगवतस्तस्याभावात् ॥ १५ ॥

---

* वितीर्णस्य प्रामस्येत्यर्थः ।

कैकेय्याः प्रतिपत्तिर्हि कथं स्यान्मम वेदने * ।
यदि तस्या न भावोऽयं कृतान्तविहितो भवेत् ॥ १६ ॥
जानासि हि यथा सौम्य ! न मातृषु ममान्तरम् ।
भूतपूर्वं विशेषो वा तस्या मयि सुतेऽपि वा ॥ १७ ॥
सोऽभिषेकनिवृत्त्यर्थैः प्रवासार्थैश्च दुर्वचैः ।
उग्रैर्वाक्यैरहं तस्या नान्यद्दैवात् समर्थये ॥ १८ ॥
कथं प्रकृतिसम्पन्ना राजपुत्री तथागुणा ।
ब्रूयात् सा प्राकृतेव स्त्री मत्पीडां भर्तृसन्निधौ ॥ १९ ॥

तदुपपादयति,—कैकेय्या इति। प्रतिपत्तिरध्यवसायः यदि कृतान्त-विहितस्तत्प्रेरितोऽयं भावोऽभिप्रायो न भवेत् ॥ १६ ॥

ईदृशस्य कैकेय्या भावस्य दैवकारणकत्वसिद्धये तस्याः सहजभाव-माह,—जानासीत्यादि। अन्तरं वैषम्यं भूतपूर्वम्। तस्या वा मयि सुते भरतेऽपि वा न विशेषो भूतपूर्वस्तस्माद्दैवकृतमेव वैषम्यमिति भावः ॥ १७ ॥

तस्मात् स इति। सोऽहं रामः दुर्वचैः सामान्येनापि न वक्तुं शक्यैः किं पुनर्वाच्यं दशरथपत्न्या केकयकन्यया। तादृशैर्वाक्यै राज्ञः कैकेय्याप्रेरणे दैवादन्यत्कारणं सोऽहं रामो न समर्थये इत्यन्वयः ॥ १८ ॥

तदेव दृढयति,—कथमिति। प्रकृतिसम्पन्ना सत्त्वप्रकृतियुक्ता तथा-गुणा प्रागनुभूततादृककल्याणगुणा। तत्रापि भर्तृसन्निधौ मत्पीडां

* "पीडने" इति वा पाठः।

यदचिन्त्यन्तु तद्दैवं भूतेष्वपि न हन्यते ।
व्यक्तं मयि च तस्याञ्च पतितो हि विपर्य्ययः ॥ २० ॥
कश्च दैवेन सौमित्रे ! योद्धुमुत्सहते पुमान् ।
यस्य न ग्रहणं किञ्चित् कर्मणोऽन्यत्र दृश्यते ॥ २१ ॥
सुखदुःखे भयक्रोधौ लाभालाभौ भवाभवौ ।
यच्च किञ्चित्तथाभूतं ननु दैवस्य कर्म तत् ॥ २२ ॥

मत्पीड़ाजनकं तदेव । मदघमिति पाठेऽप्ययमेवार्थः । वाक्यं ब्रूयात् यदि न दैवप्रेरितेति भावः ॥ १९ ॥

ननु तद्दैवं क्वास्ति कीदृक् चेत्यत आह,—यदिति । देशकालवृत्तितया यदचिन्त्यं ईदृग्विधमिति चिन्तयितुमशक्यं तद्दैवं यद्भूतेषु भूताधिष्ठातृषु ब्रह्मादिष्वपि न हन्यते न प्रतिहतं भवति । हि अतस्तत्कृत एव तस्यां मयि च विपर्य्ययः पूर्वस्थितवात्सल्यापगमरूपः हस्तगतराज्यभ्रंशरूपश्च पतितः ॥ २० ॥

ननु शौर्य्येण दैवं हनिष्यामीति चेत्तत्राह,—कश्चेति । यस्य दैवस्य ग्रहणं ज्ञानं ज्ञानजनकं कर्मणः फलादन्यत्र दृश्यते ।' एवञ्च नित्यं कार्य्यानुमेयतया प्रागज्ञातत्वात् योद्धुमशक्यं जाते तु फले विफलं युद्धम् । फलेन तस्य नाशाचेति भावः ॥ २१ ॥

सर्वतो दैवमेव प्रबलम् । पौरुषन्तु काकतालीयमित्याह,— सुखेत्यादि । भवाभवौ बन्धमोक्षौ । एषां मध्ये यत् किञ्चित् तथाभूतं अचिन्त्यकारणकं कार्य्यं तत् ननु निश्चयेन दैवस्य कर्म फलम् ॥ २२ ॥

ऋषयोऽप्युग्रतपसो दैवेनाभिप्रचोदिताः * ।
उत्सृज्य नियमान् तीव्रान् भ्रश्यन्ते काममन्युभिः ॥ २३ ॥
असङ्कल्पितमेवेह यदकस्मात् प्रवर्त्तते ।
निवर्त्यारब्धमारम्भैः † ननु दैवस्य कर्म तत् ॥ २४ ॥
एतया तत्त्वया बुद्ध्या संस्तभ्यात्मानमात्मना ।
व्याहतेऽप्यभिषेके मे परितापो न विद्यते ॥ २५ ॥
तस्मादपरितापः सन् त्वमप्यनुविधाय माम् ।
प्रतिसंहारय क्षिप्रमाभिषेचनिकीं क्रियाम् ॥ २६ ॥

दैवप्राबल्यमेव द्रढयति। ऋषय इति। विश्वामित्रादयः। मन्युः क्रोधः। बहुवचनं व्यक्तिबहुत्वात्। तैर्भ्रश्यन्ते अभिभूयन्ते ॥ २३ ॥

पुनरपि स्ववनवासस्य दैवजत्वं द्रढयितुं दैवकार्य्यलक्षणमाह,—असंकल्पितमिति। आरम्भैर्यत्नैः आरब्धमुपक्रान्तं कार्य्यं निवर्त्य यदसंकल्पितमेवाचिन्तितमेवाकस्मात् दृष्टहेतुं विना प्रवर्त्तते तद्दैवस्य कर्म ननु ॥ २४ ॥

उपसंहरति, एतयेति। तत्त्वया यथार्थया बुद्ध्या बुद्धियोगेन आत्मनान्तःकरणाख्येनात्मानमन्तःकरणं संस्तभ्य [स्वेनैव नियम्य] यदि तिष्ठसीति शेषः। तदा मेऽभिषेके व्याहतेऽपि तव परितापो न विद्यते न भवति ॥२५॥

अथ तत्कालकर्त्तव्यं नियुङ्क्ते। तस्मादिति। उपदिष्टबुद्धियोग-

---

* "प्रपीड़िताः" इति वा पाठः।
† "निवर्त्यारम्भमारब्धम्" इति वा पाठः।

एभिरेव घटैः सर्वैरभिषेचनसंभृतैः ।
मम लक्ष्मण ! तापस्ये व्रतस्नानं भविष्यति ॥ २७ ॥
अथवा किं ममैतेन राज्यद्रव्यमयेन तु ।
उद्धृतं मे स्वयं तोयं व्रतादेशं करिष्यति ॥ २८ ॥
मा च लक्ष्मण ! सन्तापं कार्षीर्लक्ष्म्या विपर्य्यये ।
राज्यं वा वनवासो वा वनवासो महोदयः ॥ २९ ॥

न लक्ष्मणास्मिन् मम राज्यविघ्ने
माता यवीयस्यभिशङ्कितव्या ।

बलादित्यर्थः । अपरितापः परितापहीनः सन् त्वमपि मामनुविधाय मामनुसृत्याभिषेचनिकीं तत्प्रयोजनिकां क्रियामलङ्कारं प्रतिसंहारय निवर्त्तय । अनेन गूढं लक्ष्मणस्यापि वनगमनं सूचितम् ॥ २६ ॥

तापस्ये तद्रूपव्रतस्य सङ्कल्पे व्रतस्नानं व्रतसङ्कल्पायापेक्षितं स्नानं व्रतस्नानम् तदेभिर्भविष्यतीति योजना ॥ २७ ॥

तापस्यव्रतस्नानेऽप्येभिः क्रियमाणे राज्यलिप्सया स्नानं कृतवानिति कैकेय्याः शङ्का मा भूदिति तन्निषेधति,—अथवेति । राज्यद्रव्यमयेन राज्याभिषेकसाधनमङ्गलद्रव्यप्रचुरेण स्वयं स्वहस्तेनोद्धृतं तोयं मे व्रतादेशं व्रतसङ्कल्पाधिकारम् ॥ २८ ॥

राज्यवनवासयोर्वनवासो महोदयः महाफलः प्रजानां कृत्याकृत्यचिन्ताव्याक्षेपराहित्येन सततं तपःप्रवृत्त्या पितृवाक्यपरिपालनेन चेति भावः ॥ २९ ॥

दैवाभिपन्ना न पिता कथञ्चि- *
ज्जानासि दैवं हि तथाप्रभावम् ॥ ३० ॥

इत्यार्षे रामायणे वाल्मीकीये अयोध्याकाण्डे
रामलक्ष्मणसंवादो नाम द्वाविंशः
सर्गः ॥ २२ ॥

उपदेशस्य परमप्रयोजनमाह,—नेति। न माताभिशङ्कितव्या न पिताभिशंङ्कितव्यो यतो दैवाभिपन्नाः दैवग्रस्ता एवमभिशङ्कन्त इति शेषः। यद्वा दैवाभिपन्नत्वं मातापित्रोर्विशेषणम्। त्वञ्च दैवं तथा-प्रभावमिति जानासि अतो नातिशङ्कनीया ॥ ३० ॥

---

* "दैवाभिपन्ना हि वदन्त्यनिष्टम्" इति वा पाठः।

इति रामाभिरामे श्रीरामीये रामायणतिलके
अयोध्याकाण्डे द्वाविंशः सर्गः ॥ २२ ॥

## त्रयोविंशः सर्गः ।

इति ब्रुवति रामे तु लक्ष्मणोऽवाक्शिरा इव ।
ध्यात्वा * मध्यं जगामाशु सहसा दैन्यहर्षयोः ॥ १ ॥
तथा तु बध्वा भ्रुकुटीं भ्रुवोर्मध्ये नरर्षभः ।
निशश्वास महासर्पो बिलस्थ इव रोषितः ॥ २ ॥
तस्य दुष्प्रतिवीक्ष्यं तद् भ्रुकुटीसहितं तदा ।
बभौ क्रुद्धस्य सिंहस्य मुखस्य सदृशं मुखम् ॥ ३ ॥

दुःखहर्षयोर्मध्यं जगाम । रामस्य धर्मे धैर्य्यं दृष्ट्वा हर्षः तस्य राज्यभ्रंशात् दुःखमित्येषा मध्यगतिः । लक्ष्मणस्य शेषावतारत्वेन तमोगुणप्रधानता, ज्येष्ठस्य विवेकवाक्यश्रवणेन सत्वोदयस्येति भावः । अधःशिरस्त्वेनोक्तार्थस्यार्धाङ्गीकारध्वननम् । इवेन तमसः स्वाभाविकत्वात्तस्य स्थिरता ध्वन्यते ॥ १ ॥

तामेव दर्शयति,—तथात्विति । तथा भयङ्करामित्यर्थः । बिलमत्र परबिलम् ॥ २ ॥

दुष्प्रतिवीक्ष्यं सम्मुखतया द्रष्टुमशक्यं, सादृश्यं दुर्दर्शत्वेन ॥ ३ ॥

---

* "श्रुत्वा मध्यं जगामेव" इति वा पाठः ।

अग्रहस्तं विधुन्वंस्तु हस्ती हस्तमिवात्मनः ।
तिर्यगूर्ध्वं शरीरे च पातयित्वा शिरोधराम् ॥ ४ ॥
अग्राक्ष्णा वीक्षमाणस्तु तिर्यक् भ्रातरमब्रवीत् ।
अस्थाने संभ्रमो यस्य जातो वै सुमहानयम् ॥ ५ ॥
धर्मदोषप्रसङ्गेन लोकस्यानतिशङ्कया ।
कथं ह्येतदसम्भ्रान्तस्त्वद्विधो वक्तुमर्हति ॥ ६ ॥
यथा ह्येवमशौण्डीरं शौण्डीरः क्षत्रियर्षभः ।
किं नाम कृपणं दैवमशक्तमभिशंससि ॥ ७ ॥

अग्रहस्तं हस्ताग्रं रामेण क्रोधापनयनाय गृहीतमित्यर्थः । तिर्यगि-त्यादिक्रोधातिशयेन विविधं शिरोधूननं कृत्वेत्यर्थः चादध इत्यपि ॥४॥

अग्राक्ष्णा कटाक्षेण । तिर्यक् वक्रं भ्रातरमीक्षमाणः । धर्मदोषो धर्मविरोधस्तत्प्रसङ्गेन तत्परिहारशेषतया । पितृवचनमकुर्वन् कथमस्मान् धर्मेण पालयिष्यतीति या लोकस्यातिशङ्का तदभावसम्पादनहेतुना मयापि पितृवचसोऽकरणेऽन्योऽपि पितृवचो न करिष्यतीति लोकनाश-शङ्काहेतुना च यस्य ते सुमहान् अयं वनगमनं प्रति सम्भ्रमो जातः सोऽस्थाने युक्तो भ्रान्तिमूल एव । भ्रान्तिमूलत्वमेवाह,—कथं हीति अशौण्डीरं असमर्थं दैवमिति किञ्चिदस्तु प्रबलमिति एवंजातीयकं यथाहि यथैव त्वं वदसि । एतत् एतज्जातीयं त्वद्विधः शौण्डीरः दैवनिराकरणेऽपि समर्थः क्षत्रियर्षभो यद्यसम्भ्रान्तः स्यात् कथमेतद्वक्तु-मर्हति न कथमपि । अतः कृपणं असमर्थैकपरिग्राह्यतया शोच्यम्,

पापयोस्ते कथं नाम तयोः शङ्का न विद्यते ।
सन्ति धर्मोपधासक्ता * धर्मात्मन्! किं न बुध्यसे ॥ ८ ॥
तयोः सुचरितं स्वार्थं शाठ्यात्परिजिहीर्षतोः ।
यदि नैवं व्यवसितं स्याद्धि प्रागेव राघव! ॥ ९ ॥
तयोः प्रागेव दत्तश्च स्याद्वरः प्रकृतश्च सः ।
लोकविद्विष्टमारब्धं त्वदन्यस्याभिषेचनम् ॥ १० ॥

अशक्तं पौरुषसन्निधौ कार्यासमर्थं दैवपदार्थं प्राकृतवत् किमभिप्रशंससि अभिष्टौषि ॥ ५ ॥ ६ ॥ ७ ॥

एवं दैवालम्बनं प्रतिक्षिप्य धर्मदोषप्रसङ्गं परिहरति,—पापयोरिति । पापात्मनोस्तयोः कैकेयीदशरथयोर्विषये ते कथं नाम शङ्का पापात्मत्वशङ्का न विद्यते न जायते । ननु धर्मव्यवहारवतोः कथमेषा शङ्का तत्राह,—सन्तीति । हे धर्मात्मन्! धर्मैकस्वभाव । धर्म उपधा छलं तत्रासक्तामासक्तिर्लोकप्रतारणाय येषां तादृशा बहिर्धर्मपराः अन्तःपापासक्ताः सन्ति तान् किं कथं न बुध्यसे ॥ ८ ॥

तयोर्धर्मोपधात्वं दर्शयति,—तयोरिति । स्वार्थं स्वकार्यसिद्ध्यर्थम् । सुचरितं त्वां शाठ्यात् मृषाकृतधर्मव्यवहारात् । परिजिहीर्षतोस्त्यक्तुमिच्छतोस्तयोः छलं किं न बुध्यसे इत्यनुकर्षः । अमुमर्थमर्थापत्त्या साधयति,—यदीति । यदि तयोरेवं शाठ्येन त्वदर्थप्रव्रावनं व्यवसितमभिप्रेतं न स्यात् तदाभिषेकारम्भं कृत्वा तद्विघ्नकरणं न स्यादिति

---

* "सन्ति धर्मोपधाः श्लक्ष्णा" इति वा पाठः । श्लक्ष्णा इति बहिर्धर्मपराः

नोत्सहे सहितुं वीर ! तत्र मे चन्तुमर्हसि ॥ ११ ॥
येनैवमागता द्वैधं तव बुद्धिर्महामते ! ।
सोऽपि धर्मो मम द्वेष्यो यत्प्रसङ्गाद्विमुह्यसि ॥ १२ ॥
कथं त्वं कर्मणा शक्तः कैकेयीवशवर्त्तिनः ।
करिष्यसि पितुर्वाक्यमधर्मिष्ठं विगर्हितम् ॥ १३ ॥

शेषः। हि यस्मात्प्रागेव पूर्वकालएव तयोः दातृप्रतिग्रहीतृभावेन सम्बद्धः स वरः प्रकृतः प्रवृत्तप्रसङ्गस्तथ्यः स्यात्तदा प्रागेवाभिषेकारम्भात् पूर्वमेव दत्तः स्यात्। त्वदभिषेकारम्भं विनैव भरताभिषेकत्वद्वनवासौ कृतौ स्याताम्। तस्माद्वरप्रदानकथामिथ्यैवेति भावः। यद्यपि दत्तोऽपि वरो राज्ञा विस्मृत इति तेन मदभिषेकारम्भः कृत इत्यादि समाधानं शक्यं तथापि इष्टशवरदानस्य लोकविद्विष्टत्वेनानौचित्यादनुचितकर्त्तृत्वेन राजा त्याज्य एवेत्याह,—लोकेति। ज्येष्ठे श्रेष्ठगुणे जाग्रति कनिष्ठविषयकत्वात्तदभिषेचनस्य लोकविद्विष्टत्वं प्रत्यक्षव्यवहारविरोधाच्छास्त्रविरोधाच्चेति भावः ॥ ९ ॥ १० ॥

मे अपराधं इति शेषः। त्वद्विषये प्रतिवचनदानरूपं ममापराधं चन्तुमर्हसि ॥ ११ ॥

प्रतिवचनमेवाह,—येनेत्यादि। यत् प्रसङ्गात् यस्य पितृवचनस्य प्रसङ्गात् धर्मत्वप्रसङ्गकल्पनाद्धेतोर्विमुह्यसि तदकरणे प्रत्यवायः स्यादिति मोहं प्राप्नोऽसि। येन च मोहेन तव बुद्धिरेवं द्वैधमागता पूर्वं राज्यग्रहणविषयत्वमधुना तत्त्यागविषयत्वरूपं प्रकारद्वयं प्राप्ता। स धर्मोऽपि मम द्वेष्यः धर्माभासत्वादिति भावः ॥ १२ ॥

यदयं किल् विषाद्भेदः कृतोऽप्येवं न गृह्यते ।
जायते तत्र मे दुःखं धर्मसङ्गस्य गर्हितः ॥ १४ ॥
तवायं धर्मसंयोगो लोकस्यास्य विगर्हितः ।
मनसापि कथं कामं कुर्य्यात्त्वां कामवृत्तयोः ।
तयोस्त्वहितयोर्नित्यं शत्रोः पित्रभिधानयोः ॥ १५ ॥
यद्यपि प्रतिपत्तिस्ते दैवी चापि तयोर्मतम् ।
तथाप्युपेक्षणीयन्ते न मे तदपि रोचते ॥ १६ ॥

तस्य धर्माभासत्वमेवाह,—कथमिति । कर्मणा अचिन्त्यवैभवस्य क्रियाशक्तया कर्त्तुमकर्त्तुमन्यथाकर्त्तुञ्च शक्तः समर्थस्त्वं कैकेयीवशवर्त्तिनः स्त्रीजितस्य अतएव गर्हितं लोकनिन्द्यं अधर्मिष्ठञ्च वचः करिष्यसि ॥ १३ ॥

एवं स्पष्टेऽप्यधर्मे तवाधर्मबुद्धिर्न जायत इति मे दुःखमित्याह,—यदिति । अयं भेदोऽभिषेकविघटनात्मा किल विषात् मृषावरप्रकल्पनात्कृतोऽपि यत् यतस्त्वया एवं मृषा वरप्रकल्पितत्वेन न गृह्यते अतो मे तत्र तद्विषये दुःखं जायते कपटकृतमप्यधर्मं सा साधुतया गृह्णातीति मम व्यथेति भावः । किञ्चैवम्विधधर्मसङ्ग एवम्विधधर्मासक्तिर्निन्द्या ॥ १४ ॥

तदेवाह,—तवेत्यादिना । अयं वनवासरूपः । दोषस्य दोषत्वाग्रहमेव शोचति । त्वां त्वां विना । तत्कृते कर्मणि दैवकृतत्वबुद्धिं त्वां विना अन्यः कामवृत्तयोरहितयोर्नित्यं पितृनामकशत्र्वोः कामं मनोरथं मनसापि कथं कुर्य्यात् । अनुष्ठानन्तु दूरत इति भावः ॥ १५ ॥

विक्लवो वीर्यहीनो यः स दैवमनुवर्त्तते।
वीराः सम्भावितात्मानो न दैवं पर्य्युपासते ॥ १७ ॥
दैवं पुरुषकारेण यः समर्थः प्रबाधितुम्।
न दैवेन विपन्नार्थः पुरुषः सोऽवसीदति ॥ १८ ॥
द्रक्ष्यन्ति त्वद्य दैवस्य पौरुषं पुरुषस्य च।
दैवमानुषयोरद्य व्यक्ताव्यक्तिर्भविष्यति ॥ १९ ॥
अद्य मत्पौरुषहतं दैवं द्रक्ष्यन्ति वै जनाः।
यैर्दैवादाहतं तेऽद्य दृष्टं राज्याभिषेचनम् ॥ २० ॥

वरस्य वास्तवं दैवकृतत्वमभ्युपेत्याप्याह,—यद्यपीति। तयोः पित्रोः प्रतिपत्तिस्त्वदभिषेकविघटनविषया बुद्धिरपि दैवी च दैव्येवेति. यद्यपि ते मतं तथापि ते त्वया स्वमतमप्येतदुपेक्षणीयं यतस्तदपि ईदृशं विरुद्धकारि दैवमपि न रोचते। एवञ्च प्रियभ्रातुर्ममासम्मतत्वादिदं त्वया त्याज्यमिति भावः ॥ १६ ॥

किञ्च त्वादृशस्य दैवालम्बनवादोऽप्ययुक्त इत्याह,—विक्लव इति। लोकाप्रसिद्ध इत्यर्थः सम्भावितात्मानः सर्वलोकश्लाघ्यशौर्य्यादिमन्तः ॥ १७ ॥

समर्थः त्वादृशः विपन्नार्थः हतप्रयोजनः त्वादृशः ॥ १८ ॥

ननु दैवबाधनसामर्थ्यं न कस्यापि इति चेत्तत्राह,—द्रक्ष्यन्तीति। पौरुषं बलं द्रक्ष्यन्ति लोका इति शेषः। व्यक्तिः प्रबलदुर्बलत्वविवेकः। अद्य मत्पौरुषेणेति शेषः ॥ १९ ॥

तदेवाह,—अद्येति। यैर्दैवादाहतं राज्याभिषेचनं ते दृष्टं ते

अत्यङ्कुशमिवोद्दामं गजं मदजलोद्धतम् ।
प्रधावितमहं दैवं पौरुषेण निवर्त्तये ॥ २१ ॥

लोकपालाः समस्तास्ते नाद्य रामाभिषेचनम् ।
न च कृत्स्नास्त्रयो लोका विहन्युः किं पुनः पिता ॥ २२ ॥

यैर्विवासस्तवारण्ये मिथो राजन्! समर्थितः ।
अरण्ये ते विवत्स्यन्ति चतुर्दश समास्तथा ॥ २३ ॥

अहं तदाशां छेत्स्यामि पितुस्तस्याश्च या तव ।
अभिषेकविघातेन पुत्रराज्याय वर्त्तते ॥ २४ ॥

मद्बलेन विरुद्धाय न स्याद्दैवबलं तथा ।

जना अद्य मत्पौरुषहतं दैवं द्रक्ष्यन्ति । यद्दैवादिति पाठे यस्माद्दै-वादाहतं येन दैवेनाहतमिति यावत् । दृष्टं यैर्जनैर्दृष्टं ते जनास्तद्दैवं मत्पौरुषहतं द्रक्ष्यन्तीत्यर्थः ॥ २० ॥

अत्यङ्कुशं अतिक्रान्ताङ्कुशव्यापारम् उद्दामम् उत्कृष्टदामं निःशृङ्खल-मिति यावत् । प्रधावितम् अभिमुखं धावितं पौरुषेण स्वगात्रबलेन निव-र्त्तये ॥ २१ ॥

दैवनिवर्त्तनं स्वबलस्यैषत्करमित्याह,—लोकेत्यादि ॥ २२ ॥

मिथः परस्परैकवाक्यतया स्वपौरुषेण । राजत्वं सिद्धवत् कृ-त्याह,—राजन्निति ॥ २३ ॥

तदाशां तामाशां, तां कां या तवाभिषेकविघातेन पुत्रराज्यप्राप-णार्थं वर्त्तते तामित्यर्थः ॥ २४ ॥

प्रभविष्यति दुःखाय यथोग्रं पौरुषं मम ॥ २५ ॥
ऊर्द्ध्वं वर्षसहस्रान्ते प्रजापाल्यमनन्तरम्।
आर्यपुत्राः करिष्यन्ति वनवासं गते त्वयि ॥ २६ ॥
पूर्वराजर्षिवृत्त्या हि वनवासोऽभिधीयते।
प्रजा निक्षिप्य पुत्रेषु पुत्रवत्परिपालने ॥ २७ ॥
स चेद्राजन्यनेकाग्रे राज्यविभ्रमशङ्कया।
नैवमिच्छसि धर्मात्मन्! राज्यं राम! त्वमात्मनि ॥ २८ ॥

मद्बलत्वपक्षभूतेन मया विरुद्धाय जनाय यथा ममोग्रं पौरुषं दुःखाय प्रभविष्यति तथा दैवबलं न स्यात्तन्निरासमसमर्थमिति शेषः ॥ २५ ॥

अथ वनवासोचितं कालं स्वयमेवाह,—ऊर्ध्वमिति। एतद्दिवसाम् वर्षसहस्रान्ते इति तस्मिन्नतीते। त्वयि वनवासं गतेऽनन्तरं आर्यपुत्राः आर्यस्य तव पुत्राः प्रजापाल्यं प्रजापालनरूपं राज्यं करिष्यन्ति। तदानीमप्यन्येषां नावकाश इति भावः ॥ २६ ॥

इदमेव युक्तमित्याह,—पूर्वेति। हि यतः पुत्रवत्परिपालननिमित्तं पुत्रेषु प्रजा निक्षिप्य पश्चाद्वनवासः। पूर्वराजर्षिवृत्त्या तदाचारेण अभिधीयते। विधीयत इत्येव क्वचित्पाठः ॥ २७ ॥

राजनि दशरथे अनेकाग्रे कामवशादुक्तावानप्रस्थधर्मानुष्ठानैकाग्रताराहित्येन चलचित्ततया प्रतिकूले सति। राज्यविभ्रमशङ्कया तद्वचोविरोधेन राज्यग्रहणे सकललोकक्षोभेण स्वस्मिन् राज्यस्य विभ्रमशङ्कयाचलनशङ्कया अस्थैर्यशङ्कया स वनवासधर्मस्त्वया चेद-

प्रतिजाने च ते वीर ! माभूवं वीरलोकभाक् ।
राज्यञ्च तव रक्षेयमहं वेलेव सागरम् ॥ २९ ॥
मङ्गलैरभिषिञ्चस्व तत्र त्वं व्यापृतो भव ।
अहमेको महीपालानलं वारयितुं बलात् ॥ ३० ॥
न शोभार्थाविमौ बाहू न धनुर्भूषणाय मे ।
नासिराबन्धनार्थाय न शराः स्तम्भहेतवः ।
अमित्रमथनार्थं मे सर्वमेतच्चतुष्टयम् ॥ ३१ ॥
न चाहं कामयेऽत्यर्थं यः स्याच्छत्रुर्मतो मम ।

ङ्गीक्रियते इति शेषः । किञ्च हे राम ! एवं श्रेष्ठत्वात् धर्मतः प्राप्तं राज्यं तथैव शङ्कया यद्यात्मनि नेच्छसि तदा तां शङ्कां त्यजेति शेषः । राज्यकामत्वमिति पाठे एवं प्राप्तं राज्यभोक्तृत्वं राज्यरूपभोग्यसम्बन्धं वा यदि नेच्छसीत्यादि प्राग्वत् ॥ २८ ॥

तत्र हेतुः प्रतिजाने इत्यादि । अहं वेला सागरमिव तव राज्यञ्च त्वाञ्च रक्षेयम् । अन्यथा वीरलोकभाक् माभूवमिति ते त्वत्राग्रे प्रतिजाने ॥ २९ ॥

तस्मात्त्वं मङ्गलैरभिषेकसाधनैरात्मानमभिषिञ्चस्व वसिष्ठादिभिरिति शेषः । तत्राभिषेकव्यापारे व्यापृतो व्यापृतचित्तो भव । तत्प्रतिबन्धकानहं वारयिष्यामीत्याह,—अहमिति । अलं समर्थः ॥ ३० ॥

तदेव दर्शयति,—नेति । आबन्धनार्थाय काष्ठानां परस्परं बन्धनहेतुच्छिद्रादिकरणाय । स्तम्भः कस्यचित्काष्ठादेरधःपतनप्रतिबन्धः ॥३१॥

असिना तीक्ष्णधारेण विद्युच्चलितवर्चसा ॥ ३२ ॥
प्रगृहीतेन वै शत्रुं वज्रिणं वा न कल्पये ॥ ३३ ॥
खड्गनिष्पेषनिष्पिष्टैर्गहना दुश्चरा च मे।
हस्त्यश्वरथि * हस्तोरुशिरोभिर्भविता मही ॥ ३४ ॥
खड्गधाराहता मेऽद्य दीप्यमाना इवाग्नयः।
पतिष्यन्ति द्विषो भूमौ मेघा इव सविद्युतः ॥ ३५ ॥
बद्धगोधाङ्गुलित्राणे प्रगृहीतशरासने।
कथं पुरुषमानी स्यात् पुरुषाणां मयि स्थिते ॥ ३६ ॥

न चेत्यादिसार्धश्लोक एकं वाक्यम्। येऽत्यर्थं मम मतः सम्मतः शत्रुः स्यात्तं यं कञ्चिच्छत्रुं वज्रिणं वा इन्द्ररूपं वा प्रगृहीतेन तीक्ष्णधारत्वादिविशिष्टेनासिना न कल्पये न खण्डशः कल्पये एवमहं न कामये च एवंकामनामपि न करोमि सर्वथा खण्डयाम्येवेति भावः ॥ ३२ ॥ ३३ ॥

खड्गनिष्पेषनिष्पिष्टैः खड्गक्षताघातेन खण्डितैः मही गहना निरन्तरत्वात्। अतएव दुश्चरा हस्त्यादीनां हस्त्यादिभिः क्रमात्सम्बन्धः। भवितेति लुट् ॥ ३४ ॥

हताः त्रिच्छिन्नाः अग्नय इव दीप्यमानाः रक्तधारया अतएव सविद्युतो मेघा इव ॥ ३५ ॥

उक्तधर्मविशिष्टे मयि स्थिते सति। पुरुषाणां मध्ये कश्चिदपि

* "रथ" इति वा पाठः।

बहुभिश्चैकमत्यस्यन्नेकेन च बहून् जनान् ।
विनियोक्ष्याम्यहं बाणान्नृवाजिगजमर्मसु ॥ ३७ ॥
अद्य मेऽस्त्रप्रभावस्य प्रभावः प्रभविष्यति ।
राज्ञश्चाप्रभुतां कर्त्तुं प्रभुत्वञ्च तव प्रभो ! ॥ ३८ ॥
अद्य चन्दनसारस्य केयूरामोक्षणस्य च ।
वसूनाञ्च विमोक्षस्य सुहृदां पालनस्य च ॥ ३९ ॥
अनुरूपाविमौ बाहू राम ! कर्म करिष्यतः ।
अभिषेचनविघ्नस्य कर्त्तॄणान्ते निवारणे ॥ ४० ॥
ब्रवीहि कोऽद्यैव मया वियुज्यतां
तवासुहृत्प्राणयशः सुहृज्जनैः ।

कथं पुरुषमानी आत्मानं पुरुषं मन्यमानः शूराभिमानी कथं स्यादित्यर्थः ॥ ३६ ॥

अत्यस्यन् पातयन् । बहुभिः बाणैः एकेन बाणेन विनियोक्ष्यामि त्यक्ष्यामि ॥ ३७ ॥

अस्त्रप्रभावस्य अस्त्रसामर्थ्यस्य प्रभावः प्रतापः । राज्ञो दशरथस्य प्रभविष्यति उज्जृम्भितो भविष्यति ॥ ३८ ॥

चन्दनसारस्य चन्दनसारानुलेपनस्य । केयूरामोक्षणस्य अङ्गदधारणस्य । वसूनां मोक्षणस्य दानस्य । सुहृज्जनपालनस्य अनुरूपौ अर्हौ मे बाहू इमौ पीनप्रलम्बौ तेऽभिषेचनविघ्नस्य कर्त्तॄणां निवारणे कर्म स्वानुरूपं कर्म करिष्यतः ॥ ३९ ॥ ४० ॥

यथा तवेयं वसुधा वशा भवेत्
तथैव मां शाधि तवास्मि किङ्करः॥ ४१॥
विसृज्य वाष्पं परिसान्त्व्य चासकृत्
स लक्ष्मणं राघववंशवर्द्धनः।
उवाच पित्रोर्वचने व्यवस्थितं
निबोध मामेष हि सौम्य! सत्पथः॥ ४२॥

इत्यार्षे रामायणे वाल्मीकीये अयोध्याकाण्डे लक्ष्मणस्य वीरदर्पो नाम त्रयोविंशः सर्गः॥ २३॥

ब्रवीहीत्यार्षे इट्। विजुज्यतां वियोज्यताम्॥ ४१॥

एवंवादिनं लक्ष्मणं रामो नायमेतस्य काल इत्याह,—विसृज्येति। बाष्पं लक्ष्मणनयनजं विसृज्य परिमृज्य। विसृज्येति पाठे अन्तर्भावितण्यर्थतया विसर्जयित्वा चक्षुषी परिमृज्येति यावदिति कतकः। पित्रोर्वचने व्यवस्थितं प्रतिष्ठितं मां निबोध हे सौम्य एष हि सत्पथः। जीवतोर्वाक्यकरणात्प्रत्यब्दं भूरिभोजनात्। गयायां पिण्डदानाच्च त्रिभिः पुत्रस्य पुत्रतेति न्यायादिति भावः। निबोधेत्यस्य नितरामतिशयेनावतरणकालिकवृत्तान्तस्मरणपूर्बकं जानीहि। एष हि एष एव सत्पथः सतां रक्षकः पन्था इत्यप्यर्थोऽत्र गूढः॥ ४२॥

इति रामाभिरामे श्रीरामीये रामायणतिलके
अयोध्याकाण्डे त्रयोविंशः सर्गः॥ २३॥

## चतुर्विंशः सर्गः।

तं समीक्ष्य व्यवसितं * पितुर्निर्देशपालने।
कौशल्या बाष्पसंरुद्धा वचो धर्मिष्ठमब्रवीत्॥ १॥
अदृष्टदुःखो धर्मात्मा सर्वभूतप्रियंवदः।
मयि जातो दशरथात् कथमुञ्छेन वर्त्तयेत्॥ २॥
यस्य भृत्याश्च दासाश्च मृष्टान्यन्नानि भुञ्जते।
कथं स भोक्ष्यते रामो वने मूलफलान्ययम्॥ ३॥
क एतच्छ्रद्दधे श्रुत्वा कस्य वा न भवेद्भयम्।
गुणवान् दयितो राज्ञः काकुत्स्थो यद्विवास्यते॥ ४॥

व्यवसितं निश्चितमतिम्। निर्देश आज्ञा बाष्पसंरुद्धा बाष्पसंरुद्धवाक्। धर्मिष्ठं रामम्॥ १॥

उञ्छः क्षेत्रपतितकणशोग्रहणम्। वर्त्तयेत् जीवेत् भवानिति शेषः॥ २॥

भृत्याः भर्त्तव्याः अयं उपस्कृतमांसादिभोजनशीलः॥ ३॥

विवास्यत इति यत् एतच्छ्रुत्वा कः श्रद्दधेत् सत्यं मन्वीत सत्यमिति वा ज्ञात्वा कस्य स्वपित्रादिभ्यो भयं न भवेत्॥ ४॥

* "त्वत्रहितम्" इति वा पाठः।

नूनन्तु बलवान् लोके कृतान्तः सर्वमादिशन्।
लोके रामाभिरामस्त्वं वनं यत्र गमिष्यसि ॥ ५ ॥
अयन्तु मामात्मभवस्तवादर्शनमारुतः।
विलापदुःखसमिधो रुदिताश्रुहुताहुतिः ॥ ६ ॥
चिन्तावाष्पमहाधूमस्तवादर्शनचिन्तजः।
कर्शयित्वा भृशं पुत्र ! निःश्वासायाससम्भवः ॥ ७ ॥
त्वया विहीनामिह मां शोकाग्निरतुलो महान्।
प्रधक्ष्यति यथा कक्षं चित्रभानुर्हिमात्यये ॥ ८ ॥

सर्वमादिशन् सुखदुःखेन योजयन्। कृतान्तो दैवं बलवानिति नूनमहं मन्ये। यत्र यस्मात् हे राम अभिरामस्त्वं लोके कर्मलोके स्थितो वनं गमिष्यसि ॥ ५ ॥

आत्मभवः आत्मजः स्वमनःसम्भूतः। तवादर्शनमेव वर्धकत्वात्, मारुतो यस्य सः। विलापदुःखैः समिधः समिन्धनं यस्य सः। घञर्थे कः। रुदिताश्रूण्येव हुता आहुतयो यस्मिन् सः। चिन्ताहेतुकवाष्पमेव महाधूमो यस्य सः। तवागमनचिन्तजः। चिन्तज इति बाहुलकात् ह्रस्वः। तव या आगमनचिन्ता तया जनितः। अदर्शनचिन्तज इति पाठेऽपि अदर्शनजातचिन्ताजनित इत्यर्थः। परे त्वदर्शनस्य मारुतत्वेन निरूपणात् सचिन्त्य इत्याहुः। निःश्वासरूपायासेन सन्धुक्षणात् सम्भवो वृद्धिर्यस्य सः। त्वया विहीनां मामधिकं कर्शयित्वा कृशां कृत्वा। अतुलः युक्तगुणः शोकाग्निर्मां धक्ष्यति। हिमात्यये ग्रीष्मे चित्रभानुर्वह्निः सूर्य्यो वा ॥ ६ ॥ ७ ॥ ८ ॥

कथं हि धेनुः स्वं वत्सं गच्छन्तमनुगच्छति ।
अहं त्वानुगमिष्यामि यत्र वत्स ! गमिष्यसि ॥ ९ ॥
यथा निगदितं मात्रा तद्वाक्यं पुरुषर्षभः ।
श्रुत्वा रामोऽब्रवीद्वाक्यं मातरं भृशदुःखिताम् ॥ १० ॥
कैकेय्या वञ्चितो राजा मयि चारण्यमाश्रिते ।
भवत्या च परित्यक्तो न नूनं वर्त्तयिष्यति ॥ ११ ॥
भर्त्तुः पुनः * परित्यागो नृशंसः केवलं स्त्रियः ।
स भवत्या न कर्त्तव्यो मनसापि विगर्हितः ॥ १२ ॥
यावज्जीवति काकुत्स्थः पिता मे जगतीपतिः ।
शुश्रूषा क्रियतां तावत् स हि धर्मः सनातनः ॥ १३ ॥

कथमिति,—यथेत्यर्थः । क्वचित्तथैव पाठः ॥ ९ ॥

यथानिगदितं येन प्रकारेण निगदितं तद्वाक्यं श्रुत्वा आत्मानुगमनं श्रुत्वेति यावत् ॥ १० ॥

वञ्चितः वञ्चनया मद्वियोजनाद्दुःखं प्रापितः । न वर्त्तयिष्यति न जीविष्यति ॥ ११ ॥

केवलं नृशंसः क्रौर्यमेव न तु तेनेहामुत्र सुखमित्यर्थः । मनसापि न कर्त्तव्यः न चिन्तनीयः । यतो विगर्हितः महापापहेतुत्वादतिनिन्दितः ॥ १२ ॥

---

* "किल" इति वा पाठः ।

एवमुक्ता तु रामेण कौशल्या शुभदर्शना ।
तथेत्युवाच सुप्रीता राममक्लिष्टकारिणम् ॥ १४ ॥
एवमुक्तस्तु वचनं रामो धर्मभृतां वरः ।
भूयस्तामब्रवीद्वाक्यं मातरं भृशदुःखिताम् ॥ १५ ॥
मया चैव भवत्या च कर्त्तव्यं वचनं पितुः ।
राजा भर्त्ता गुरुः श्रेष्ठः सर्वेषामीश्वरः प्रभुः ॥ १६ ॥
इमानि तु महारण्ये विहृत्य नव पञ्च च ।
वर्षाणि परमप्रीत्या स्थास्यामि वचने तव ॥ १७ ॥
एवमुक्ता प्रियं पुत्रं वाष्पपूर्णानना तदा ।
उवाच परमार्त्ता तु कौशल्या सुतवत्सला ॥ १८ ॥
आसां राम ! सपत्नीनां मध्ये वस्तुं न मे क्षमम् ।
नय मामपि काकुत्स्थ ! वनं वन्यां मृगीमिव ॥ १९ ॥

अतः यावदिति ॥ १३ ॥ १४ ॥

एवं वचनमुक्तः भर्तृशुश्रूषाङ्गीकारवचनमुक्तः श्रावितः ॥ १५ ॥

उभयोस्तद्वचनावश्यकर्त्तव्यत्वे हेतुर्भर्त्ता गुरुरिति च यथा योगम् ॥ १६ ॥

पितृवाक्यकरणानन्तरं त्वच्छुश्रूषापि कार्य्येत्याह,—इमानीति । विहृत्येत्यनेन वनवासस्य मृगयावल्लीलात्वं दर्शितम् । वचने स्थास्यामि वचनमनुष्ठास्यामि ॥ १७ ॥

एवमुक्ता पुत्रेणेति शेषः ॥ १८ ॥

यदि ते गमने बुद्धिः कृता पितुरपेक्षया ।
तां तथा रुदतीं रामो रुदन्वचनमब्रवीत् ॥ २० ॥
जीवन्त्या हि स्त्रिया भर्त्ता दैवतं प्रभुरेव च ।
भवत्या मम चैवाद्य राजा प्रभवति प्रभुः ॥ २१ ॥
न ह्यनाथा वयं राज्ञा लोकनाथेन धीमता ।
भरतश्चापि धर्मात्मा सर्वभूतप्रियंवदः ॥ २२ ॥
भवतीमनुवर्त्तेत स हि धर्मरतः सदा ।
यथा मयि तु निष्क्रान्ते पुत्रशोकेन पार्थिवः ॥ २३ ॥
श्रमं नावाप्नुयात् किञ्चिदप्रमत्ता तथा कुरु ।
दारुणश्चाप्ययं शोको यथैनं न विनाशयेत् ॥ २४ ॥

अङ्गीकृतभर्त्तृसेवापि सपत्नीदुःखस्मरणात् पुनः रामानुगमनमभिलषति । आसामित्यादि । वन्यां वने भवाम् ॥ १९ ॥

यदि ते इत्याद्यर्धं पूर्वान्वयि । तां तथा रुदतीं दृष्ट्वापि स्वयमरुदन् वचोऽब्रवीत् । रोदने कातर्यप्रकटनेन मातुः पुनरप्यनुगमनप्रत्याशाप्रसङ्गात् ॥ २० ॥

प्रभवति दण्डादौ समर्थो भवति ॥ २१ ॥

धीमतेति । सनाथा इति शेषः । अथ सपत्नीमध्यवासो दुष्कर इत्यत्र परिहारमाह,—भरत इति ॥ २२ ॥

भवतीमिति अतः कैकेयीकोपेऽकिञ्चित्कर इति भावः । यथा

राज्ञो वृद्धस्य सततं हितञ्चर समाहिता।
व्रतोपवासनिरता या नारी परमोत्तमा॥ २५॥
भर्त्तारं नानुवर्त्तेत सा च पापगतिर्भवेत्।
भर्त्तुः शुश्रूषया नारी लभते स्वर्गमुत्तमम् *॥ २६॥
अपि या निर्नमस्कारा निवृत्ता देवपूजनात्।
शुश्रूषामेव कुर्वीत भर्त्तुः प्रियहिते रता॥ २७॥

मयि निष्क्रान्ते श्रमं नाप्नुयात्तथा कुरु। यथा चैनं राजानं शोको न विनाशयेत्तथा च कुरु॥ २३॥ २४॥

द्विजस्य गायत्रीजपवत् स्त्रियाभर्त्तृशुश्रूषैव परं नित्या नान्यत् किञ्चित्प्रत्युत तद्विरोध्यन्यदाचर्य्यमाणं प्रत्यवायजनकमपीत्याह,—व्रते-त्यादि। नित्याकरणजप्रत्यवायानर्थं साङ्गाप्य नित्यधर्मकृतिः परिहर्त्तुं न शक्नोतीति भावः॥ २५॥ २६॥

नित्यानुष्ठाने सत्यनित्याकरणेऽपि न परलोकनाश इत्याह,—अपि-चेति। निर्नमस्कारा भर्त्तृव्यतिरिक्तदेवादेर्नमस्काराद्युपचाररहिता। देवपूजनात् विष्ण्वादिदेवपूजनात्। सापि स्वर्गं लभते इति प्राक्तने-नान्वयः। एतमेवार्थं नियमविधिद्वारेण द्रढ़यति। शुश्रूषामेवेति। तत्प्रीतिजनकं कर्मैवेत्यर्थः। तदेवाह,—प्रियहिते रतेति हितपदेन पश्चादुक्तेनैतत् ध्वनयति आपाततो प्रियमपि हितं कुर्यात् आपाततः प्रियमप्यहितं त्यजेदिति॥ २७॥

---

* "गतिमुत्तमाम्" इति वा पाठः।

एष धर्मः स्त्रिया नित्यो * वेदे लोके श्रुतः स्मृतः ।
अग्निकार्य्येषु च सदा सुमनोभिश्च देवताः ॥ २८ ॥
पूज्यास्ते मत्कृते देवि ! ब्राह्मणाश्चैव सत्कृताः † ।
एवं कालं प्रतीक्षस्व ममागमनकाङ्क्षिणी ॥ २९ ॥
नियता नियताहारा भर्त्तृशुश्रूषणे रता ।
प्राप्स्यसे परमं कामं मयि पर्य्यागते सति ॥ ३० ॥
यदि धर्मभृतां श्रेष्ठो धारयिष्यति जीवितम् ।
एवमुक्ता तु रामेण वाष्पपर्य्याकुलेक्षणा ॥ ३१ ॥
कौशल्या पुत्रशोकार्त्ता रामं वचनमब्रवीत् ।

तत्र प्रमाणमाह,—एष भर्त्तृसेवारूपो धर्मः स्त्रिया नित्य इति वेदे श्रुतः । लोके स्मृतौ स्मृतः । तर्हि किं कर्मान्तरं सर्वथा त्याज्यं नेत्याह,—अग्नीत्यादि भर्त्तृसम्मतेषु अग्निकार्य्येषु च तेष्वेव च एवकारार्थः ॥ २८ ॥

एवं भर्त्तृसेवातत्परतया । कालं ममागमनकालम् ॥ २९ ॥

कामं ऐहिकविषयसुखम् ॥ ३० ॥

तस्य पुत्रमात्रासाध्यत्वादाह,—यदीति । अनेन दशरथमरणस्य सन्निहितत्वं सूचितम् ॥ ३१ ॥

* "एष धर्मः पुरादृष्टः" इति वा पाठः ।
† "सुव्रताः" इति वा पाठः ।

गमने सुक्षतां बुद्धिं न ते शक्नोमि पुत्रक ! ॥ ३२ ॥
विनिवर्त्तयितुं वीर ! नूनं कालो दुरत्ययः।
गच्छ पुत्र ! त्वमेकाग्रो भद्रन्तेऽस्तु सदा विभो ! ॥ ३३
पुनस्त्वयि निवृत्ते तु भविष्यामि गतक्लमा।
प्रत्यागते महाभागे कृतार्थे चरितव्रते ॥ ३४ ॥
पितुरानृण्यतां प्राप्ते स्वपिष्ये परमं सुखम् *।
कृतान्तस्य गतिः पुत्र ! दुर्विभाव्या सदा भुवि ॥ ४५ ॥
यस्त्वां संचोदयति † मे वच आविध्य ‡ राघव ! ।
गच्छेदानीं महाबाहो ! क्षेमेण पुनरागतः ॥ ३६ ॥
नन्दयिष्यसि मां पुत्र ! साम्ना श्लक्ष्णेन चारुणा •।

सुक्षतां सुदृढ़कृतनिश्चयाम् ॥ ३२ ॥
काल इष्टवियोगादिजनकः ॥ ३३ ॥ ३४ ॥
आनृण्यताम्। स्वार्थे ष्यञ् ॥ ३५ ॥
मे वच आविध्य आच्छिद्य त्वां संचोदयति वनायेति शेषः ? यत् अतः कृतान्तस्य गतिर्दुर्विभाव्या ॥ ३६ ॥

* "त्वयि लब्धे परं सुखम्" इतिवा पाठः।
† "संचोदयती" इति वा पाठः।
‡ "आच्छिद्य" इति वा पाठः।
• "चेतन" इति वा पाठः।

अपीदानीं स कालः स्याद्वनात्प्रत्यागतं पुनः ।
यत्त्वां पुत्रक ! पश्येयं जटावल्कलधारिणम् ॥ ३७ ॥

तथाहि रामं वनवासनिश्चितं
ददर्श देवी परमेण चेतसा ।
उवाच रामं शुभलक्षणं वचो
बभूव च स्वस्त्ययनाभिकाङ्क्षिणी ॥ ३८ ॥

## इत्यार्षे रामायणे वाल्मीकीये अयोध्या काण्डे कौशल्यारामसंवादो नाम चतुर्विंशः सर्गः ॥ २४ ॥

शुद्धेन निर्मलेन चारुणा मनोहरेण । साम्ना सान्त्वेन वचनेन । शुक्लेनेति पाठान्तरम् । अदर्शना सहिष्णुत्वात्प्रत्यागमनकाल इदानीमेव भवेदिति प्रार्थ्यते । अपीति । येन कालेन प्रत्यागतं प्रत्यागमनं भवेत् स इत्यर्थः । अपीदानीमिति लोकोक्तो वाच ॥ ३७ ॥

परमेण आदरवता धर्मशीलत्वाद्देवर्षिरक्षणोद्यतत्वाच्च भगवत्सङ्कल्पेनैव तथा ज्ञानं तस्या इति बोध्यं स्वस्त्ययनं मङ्गलमभिकाङ्क्षितुं शीलमस्त्यस्याः सा ॥ ३८ ॥

इति रामाभिरामे श्रीरामीये रामायणतिलके
अयोध्याकाण्डे चतुर्विंशः सर्गः ॥ २४ ॥

## पञ्चविंशः सर्गः।

सा विनीय तमायाममुपस्पृश्य जलं शुचि।
चकार माता रामस्य मङ्गलानि मनस्विनी॥ १॥
न शक्यते वारयितुं गच्छेदानीं रघूत्तम!।
शीघ्रञ्च विनिवर्त्तस्व वर्त्तस्व च सतां क्रमे॥ २॥
यं पालयसि धर्मं त्वं प्रीत्या च नियमेन च।
स व राघवशार्दूल! धर्मस्त्वामभिरक्षतु॥ ३॥
येभ्यः प्रणमसे पुत्र! देवेष्वायतनेषु च *।
ते च त्वामभिरक्षन्तु वने सह महर्षिभिः॥ ४॥
यानि दत्तानि तेऽस्त्राणि विश्वामित्रेण धीमता।

मङ्गलकरणमेवाह,—सेति। आयासं तज्जनकं शोकम्। उपस्पृश्य आचम्य। मङ्गलानि मङ्गलवचनानि॥ १॥

सतां क्रमे सतां मार्गे॥ २॥ ३॥

देवेष्वायतनेषु देवालयेषु। प्रणमसे च चार्च्चितुमिच्छसि च। ते च देवाः चाहर्षयः॥ ४॥

* "चैत्येष्वायतनेषु च" इति वा पाठः।

तानि त्वामभिरक्षन्तु गुणैः समुदितं सदा ॥ ५ ॥
पितृशुश्रूषया पुत्र ! मातृशुश्रूषया तथा ।
सत्येन च महाबाहो ! चिरं जीवाभिरक्षितः । ६ ॥
समित्कुशपवित्राणि वेद्यश्चायतनानि च ।
स्थण्डिलानि च विप्राणां शैला वृक्षाः क्षुपा ह्रदाः ॥ ७ ॥
पतङ्गाः पन्नगाः सिंहास्त्वां रक्षन्तु नरोत्तम ! ।
स्वस्ति साध्याश्च विश्वे च मरुतश्च महर्षिभिः ॥ ८ ॥
स्वस्ति धाता विधाता च स्वस्ति पूषा भगोऽर्यमा ।
लोकपालाश्च ते सर्वे वासवप्रमुखास्तथा ॥ ९ ॥
ऋतवः षट् च ते सर्वे मासाः संवत्सराः क्षपाः ।
दिनानि च मुहूर्त्ताश्च स्वस्ति कुर्वन्तु ते सदा ॥ १० ॥
श्रुतिः स्मृतिश्च धर्मश्च पातु त्वां पुत्र ! सर्वतः ।
स्कन्दश्च भगवान्देवः सोमश्चेन्द्रो बृहस्पतिः ॥ ११ ॥

गुणैः सद्गुणैः ॥ ५ ॥

मातृशुश्रूषयेति मातात्र कैकेयी ॥ ६ ॥

समिदादिपदेन तदधिष्ठात्र्यो देवता उपलक्ष्यन्ते। क्षुपाः ह्रस्वशाखास्तरवः शिफायुक्तवृक्षाः क्षुपा इत्यन्ये। ह्रदा इति जलाशयमात्रोपलक्षणम्। त्वां रक्षन्त्वित्यग्रिमेण सम्बन्धः ॥ ७ ॥

पतङ्गाः पक्षिणः स्वस्ति इत्यस्य कुर्वन्त्वित्यग्रिमेण सम्बन्धः ॥ ८ ॥

सप्तर्षयो नारदश्च ते त्वां रक्षन्तु सर्वतः।
ते चापि सर्वतः सिद्धा दिशश्च सदिगीश्वराः॥ १२॥
स्तुता मया वने तस्मिन् पातु त्वां पुत्र! नित्यशः।
शैलाः सर्वे समुद्राश्च राजा वरुण एव च॥ १३॥
द्यौरन्तरिक्षं पृथिवी वायुश्च सचराचरः।
नक्षत्राणि च सर्वाणि ग्रहाश्च सह दैवतैः॥ १४॥
अहोरात्रे तथा सन्ध्ये पान्तु त्वां वनमाश्रितम्।
ऋतवश्चापि षट् चान्ये मासाः संवत्सरास्तथा॥ १५॥
कलाश्च काष्ठाश्च तथा तव शर्म दिशन्तु ते।
महावनेऽपि चरतो मुनिवेषस्य धीमतः॥ १६॥
तथा देवाश्च दैत्याश्च भवन्तु सुखदाः सदा।
राक्षसानां पिशाचानां रौद्राणां क्रूरकर्मणाम्॥ १७॥
क्रव्यादानाञ्च सर्वेषां माभूत्पुत्रक! ते भयम्।
प्लवङ्गा वृश्चिका दंशा मशकाश्चैवकानने।

धाता विराट्। विधाता सृष्टिविधायकः॥ ९॥ १०॥ ११॥ १२॥ ॥ १३॥

नक्षत्राणि रेवत्यादिनक्षत्राधिष्ठात्र्यो देवताः। ग्रहाः सूर्यादयः ग्रहदेवताः तत्तदधिदेवताः पुनरुक्तिरत्र पुत्रप्रेमपारवश्यान्न दोषाय। पाठान्तरेऽप्ययमेवार्थः॥ १४॥ १५॥ १६॥ १७॥

सरीसृपाश्च कीटाश्च माभूवन् गहने तव ॥ १८ ॥
महाद्विपाश्च सिंहाश्च व्याघ्रा ऋक्षाश्च दंष्ट्रिणः ।
महिषाः शृङ्गिणो रौद्रा न ते द्रुह्यन्तु पुत्रक ! ॥ १९ ॥
नृमांसभोजना रौद्रा ये चान्ये सर्वजातयः ।
मा च त्वां हिंसिषुः पुत्र ! मया संपूजितास्त्विह ॥ २० ॥
आगमास्ते शिवाः सन्तु सिध्यन्तु च पराक्रमाः ।
सर्वसम्पत्तयो * राम ! स्वस्तिमान् गच्छ पुत्रक ! ॥ २१ ॥
स्वस्ति तेऽस्त्वन्तरिक्षेभ्यः पार्थिवेभ्यः पुनः पुनः ।
सर्वेभ्यश्चैव देवेभ्यो ये च ते परिपन्थिनः ॥ २२ ॥

सर्वक्रव्यादसम्बन्धि भयं पुत्रक ते माभूदित्यन्वयः ॥ १८ ॥

प्लवगाः वानराः दंशा वनमक्षिकाः गहने तव माभूवन् मा सन्तु ऋक्षा भल्लूकाः ॥ १९ ॥

ते तुभ्यं सर्वजातयः सर्वजातीयाः । सर्पजातय इति पाठे क्रूरजन्तव इति फलितार्थः ॥ २० ॥

आगमाः मार्गाः ते झटिति त्वदागमनयोग्या भवन्त्विति अभिप्रायेणायमुक्तिः ॥ २१ ॥

सर्वसम्पत्तयः वनवासापेक्षिताः फलमूलादिरूपाः सन्त्विति शेषः पार्थिवेभ्यः पृथिवीभवसत्वेभ्यः ॥ २२ ॥

---

* "सर्वसम्पत्तये" इति वा पाठः ।

शुक्रः सोमश्च सूर्य्यश्च धनदोऽथ यमस्तथा ।
पान्तु त्वामर्चिता राम ! दण्डकारण्यवासिनम् ॥ २३ ॥
अग्निर्वायुस्तथा धूमो मन्त्राश्चर्षिमुखच्युताः ।
उपस्पर्शनकाले तु पान्तु त्वां रघुनन्दन ! ॥ २४ ॥
सर्वलोकप्रभुर्ब्रह्मा भूतकर्त्ता तथर्षयः ।
ये च शेषाः सुरास्ते तु रक्षन्तु वनवासिनम् ॥ २५ ॥
इति माल्यैः सुरगणान् गन्धैश्चापि यशस्विनी ।
स्तुतिभिश्चानुरूपाभिरानर्चायतलोचना ॥ २६ ॥
ज्वलनं समुपादाय ब्राह्मणेन महात्मना ।
हावयामास विधिना राममङ्गलकारणात् ॥ २७ ॥
घृतं श्वेतानि माल्यानि समिधः श्वेतसर्षपान् ।
उपसम्पादयामास कौशल्या परमाङ्गना ॥ २८ ॥
उपाध्यायः सविधिना हुत्वा शान्तिमनामयम् ।
हुतहव्यावशेषेण वाह्यं बलिमकल्पयत् ॥ २९ ॥

देवेभ्यः ये च ते परिपन्थिनस्तेभ्यश्च रक्षन्तु इति योजना ॥ २३ ॥
ऋषिमुखाच्युताः निर्गतास्त्वया गृहीताश्चेति शेषः ॥ २४ ॥
भूतकर्तृब्रह्मा जगत्कारणं ब्रह्मेत्यर्थः ॥ २५ ॥ २६ ॥ २७ ॥ २८ ॥
उपसम्पादयामास होमार्थेति शेषः । अनामयमारोग्यमुद्दिश्येति शेषः ॥ २९ ॥

मधुदध्यक्षतघृतैः स्वस्तिवाच्य द्विजांस्ततः ।
वाचयामास रामस्य वने स्वस्त्ययनक्रियाम् ॥ ३० ॥
ततस्तस्मै द्विजेन्द्राय राममाता यशस्विनी ।
दक्षिणां प्रददौ काम्यां राघवं चेदमब्रवीत् ॥ ३१ ॥
यन्मङ्गलं सहस्राक्षे सर्वदेवनमस्कृते ।
वृत्रनाशे समभवत् तत्ते भवतु मङ्गलम् ॥ ३२ ॥
यन्मङ्गलं सुपर्णस्य विनताकल्पयत् पुरा ।
अमृतं प्रार्थयानस्य तत्ते भवतु मङ्गलम् ॥ ३३ ॥
अमृतोत्पादने दैत्यान् घ्नतो वज्रधरस्य यत् ।
अदितिर्मङ्गलं प्रादात् तत्ते भवतु मङ्गलम् ॥ ३४ ॥
त्रिविक्रमान् प्रक्रमतो विष्णोरतुलतेजसः ।
यदासीन्मङ्गलं राम ! तत्ते भवतु मङ्गलम् ॥ ३५ ॥

बाह्यं बलिं होमस्थानाद्बहिर्भूतं लोकपालादिबलिं स्वस्तिवाच्य स्वस्तिवाचनमुद्दिश्य मध्वादिभिरुपलक्षितान् द्विजान् कृत्वा ॥ ३० ॥

रामस्य वने स्वस्त्यस्त्वित्येवंरूपां वने स्वस्त्ययनक्रियां वाचयामासेत्यन्वयः ॥ ३१ ॥

काम्यां इच्छाविषयाम् ॥ ३२ ॥

वृत्रनाशे तद्रूपनिमित्ते ॥ ३३ ॥

प्रार्थयानस्य आर्षत्वान्मुगभावः । अनेन भाविमहायुद्धं तत्र जयश्च सूचितः ॥ ३४ ॥

ऋषयः सागरा द्वीपा वेदा लोका दिशश्च ताः।
मङ्गलानि महाबाहो दिशन्तु शुभमङ्गलम्॥ ३६॥
इति पुत्रस्य शेषांश्च कृत्वा शिरसि भामिनी।
गन्धैश्चापि समालभ्य राममायतलोचना॥ ३७॥
औषधिञ्च सुसिद्धार्थां विशल्यकरणीं शुभाम्।
चकार रक्षां कौशल्या मन्त्रैरभिजजाप च॥ ३८॥
उवाचापि प्रहृष्टेव सा दुःखवशवर्त्तिनी।
वाङ्मात्रेण न भावेन वाचा संसज्जमानया॥ ३९॥
आनम्य मूर्ध्नि चाघ्राय परिष्वज्य यशस्विनी।
अवदत्पुत्र! सिद्धार्थो गच्छ राम! यथा सुखम्॥ ४०॥

विक्रमः पादविक्षेपः॥ ३५॥ ३६॥

शुभे मङ्गलं मङ्गलानामपि मङ्गलं इति उक्तेति शेषः। पुत्रस्य शिरसि शेषा अक्षताः शेषा इत्यक्षतनामेति कतकः॥ ३७॥

समालम्भो विलेपनं सिद्धार्थां दृष्टवीर्यां विशल्यकरणीमित्यन्वर्थ-नामिकां औषधीं शलकीकृत्य शुभां रक्षां चकार रक्षाहेतुत्वेन हस्ते बबन्धेत्यर्थः॥ ३८॥

तां मन्त्रैरतिशयितां कर्त्तुं जजाप मन्त्रानिति शेषः। उवाचापि मन्त्रानिति शेषः जपोत्तरं स्पष्टमपि मन्त्रानुच्चारयामासेत्यर्थः। एतच्च तन्मन्त्रार्थानुसन्धानेन रामस्य हृत्प्रसादार्थम्। प्रहृष्टेवेति हर्षो पार-मार्थिको नो इत्यर्थः॥ ३९॥

अरोगं सर्वसिद्धार्थमयोध्यां पुनरागतम् ।
पश्यामि त्वां सुखं वत्स ! सुस्थितं * राजवर्त्मसु ॥ ४१ ॥
प्रनष्टदुःखसंकल्पा हर्षविद्योतितानना ।
द्रक्ष्यामि त्वां वनात्प्राप्तं पूर्णचन्द्रमिवोदितम् ॥ ४२ ॥
भद्रं भद्रासनगतं वनवासादिहागतम् ।
द्रक्ष्यामि त्वां सुहृः पुत्र ! तीर्णवन्तं पितुर्वचः ॥ ४३ ॥
मङ्गलैरुपसम्पन्नो वनवासादिहागतः ।
वध्वाश्च मम नित्यन्त्वं कामान् संवर्द्ध याहि भो ॥ ४४ ॥
मयार्चिता देवगणाः शिवादयो
महर्षयो भूतगणाः सुरोरगाः ।

तदेवाह,—वाष्पाचेणेति । संसज्जमानया आन्तरखेदगद्गदया आनन्येति उचलात्पुत्रस्य ॥ ४० ॥

यद्वा वाल्मीकेरपि वर्णनीयमयीभावात् उवाचेत्युक्तावपि पुनरवददित्युक्तिर्न दोषाय ॥ ४१ ॥

सन्धितं राजवर्त्मसु प्राप्तराज्यमिति यावत् । मङ्गले राजोचितवस्त्राभरणैः वध्वाः सीतायाः संवर्ध संवर्धय याहि भो गच्छ भो भो इति निपात आमन्त्रणे ॥ ४२ ॥ ४३ ॥

मात्रा प्रदक्षिणकरणं रक्षार्थम् ॥ ४४ ॥

---

* "सन्धितं" इति वा पाठः ।

अभिप्रयातस्य वनं चिराय ते
हिताय काङ्क्षन्तु दिशश्च राघव ! ॥ ४५ ॥
अतीव चाश्रुप्रतिपूर्णलोचना
समाप्य च स्वस्त्ययनं यथाविधि ।
प्रदक्षिणञ्चापि चकार राघवं
पुनः पुनश्चापि निरीक्ष्य सस्वजे ॥ ४६ ॥
तयाहि देव्या च कृतप्रदक्षिणो
निपीड्य मातुश्चरणौ पुनः पुनः ।
जगाम सीतानिलयं महायशाः
स राघवः प्रज्वलितस्तया श्रिया ॥ ४७ ॥

इत्यार्षे रामायणे वाल्मीकीये अयोध्याकाण्डे
कौशल्यारामसंवादो नाम पञ्च-
विंशतितमः सर्गः ॥ २५ ॥

निपीड्य नमस्कृत्य तया श्रिया मातृकृतमङ्गलजशोभया ॥ ४५ ॥
॥ ४६ ॥ ४७ ॥

इति रामाभिरामे श्रीरामीये रामायणतिलके
अयोध्याकाण्डे पञ्चविंशः सर्गः ॥ २५ ॥

---

## षड्विंशः सर्गः ।

अभिवाद्य तु कौशल्यां रामः संप्रस्थितो वनम् ।
कृतस्वस्त्ययनो मात्रा धर्मिष्ठे वर्त्मनि स्थितः ॥ १ ॥
विराजयन् राजसुतो राजमार्गं नरैर्वृतम् ।
हृदयान्याममन्थेव जनस्य गुणवत्तया ॥ २ ॥
वैदेही चापि तत्सर्वं न शुश्राव तपस्विनी ।
तदेव हृदि तस्याश्च यौवराज्याभिषेचनम् ॥ ३ ॥
देवकार्य्यं स्वयं कृत्वा कृतज्ञा हृष्टचेतना ।
अभिज्ञा राजधर्माणां राजपुत्री प्रतीक्षती ॥ ४ ॥
प्रविवेशाथ रामस्तु स्ववेश्म सुविभूषितम् ।
प्रहृष्टजनसम्पूर्णं ह्रिया किञ्चिदवाङ्मुखः ॥ ५ ॥

धर्मिष्ठे अतिशयेन धर्मवति ॥ १ ॥

आममन्थ क्षोभयतिस्म तत्रहेतुर्गुणवत्ता ॥ २ ॥

तत्सर्वं वनगमनवृत्तान्तं तस्याश्च तस्यास्तु हृदि तदेव यौवराज्याभिषेचनं स्थितमभूदिति शेषः ॥ ३ ॥

देवकार्य्यं देवपूजा । देवकार्य्यकरणहेतुः कृतज्ञत्वं राजधर्माभिज्ञत्वञ्च । देवैरेवं राज्यदानेनोपकृतत्वेन कृतज्ञतया तत्पूजा ॥ ४ ॥

अथ सीता समुत्पत्य वेपमाना च तं पतिम्।
अपश्यच्छोकसन्तप्तं चिन्ताव्याकुलितेन्द्रियम्॥ ६॥
तां दृष्ट्वा स हि धर्मात्मा न शशाक मनोगतम्।
तं शोकं राघवः सोढुं ततो विवृतताङ्गतः॥ ७॥
विवर्णवदनं दृष्ट्वा तं प्रस्विन्नममर्षणम्।
आह दुःखाभिसन्तप्ता किमिदानीमिदं प्रभो!॥ ८॥

ह्रिया सीतायै कथमिदमन्याय्यं स्वमातापितृकृतं कथयामीति लज्जयावाङ्मुख इव॥ ५॥

वेपमाना भर्त्तुर्विगतहर्षत्वावाङ्मुखत्वादिदर्शनात् कम्पमाना॥ ६॥

सोढुं गूढं कर्त्तुं शोकं अन्येषां प्राकृतानां शोकजनकं वस्तु शोकरूपकार्य्याजनकं कर्त्तुं न शशाक। ततस्तदनन्तरं स शोकस्तच्छोकजनकं वस्तु विवृततां प्रकटकार्य्यत्वं गतः यद्वा स रामो विवृताभिप्रायं गतः। शुद्धसत्त्वस्वभावोपि मायाख्यप्रकृत्यवतारसीतासान्निध्यादुद्बुद्धविक्षेपशक्तिरिव जातइत्यर्थः। अनेन हि प्रियाया अग्रे न किञ्चित्पुंसो गोप्यमिति लोकव्यवहारो दर्शितः॥ ७॥

प्रस्विन्नं प्राप्तदुःखजस्वेदं अमर्षणं शोकधारणाक्षममिव। यत्तु सीताया दुःखेन कथमेष कालं नयिष्यतीति धिया दुःखित इति विवर्णवदनत्वादिकमिति तदनुचितं भगवति कथमपि दुःखासम्बन्धात् तादृशधियोप्यभावाच्च। व्यसनेषु मनुष्याणाम्भृशं भवति दुःखित इत्यादावपि दुःखित इवेत्येवार्थ इति ममाभाति॥ ८॥

अद्य बार्हस्पतः श्रीमान् युक्तः पुष्येण राघव ।
प्रोच्यते ब्राह्मणैः प्राज्ञैः केन त्वमसि दुर्मनाः ॥ ९ ॥
न ते शतशलाकेन जलफेननिभेन च ।
आवृतं वदनं वल्गु छत्रेणाभिविराजते ॥ १० ॥
व्यजनाभ्याञ्च मुख्याभ्यां शतपत्रनिभेक्षणम् ।
चन्द्रहंसप्रकाशाभ्यां वीज्यते न तवाननम् ॥ ११ ॥
वाग्मिनो वन्दिनश्चापि प्रहृष्टास्त्वां नरर्षभ ! ।
स्तुवन्तो नाद्य दृश्यन्ते मङ्गलैः सूतमागधाः ॥ १२ ॥
न ते क्षौद्रञ्च दधि च ब्राह्मणा वेदपारगाः ।
मूर्ध्नि मूर्द्धाभिषिक्तस्य ददन्ति स्म विधानतः ॥ १३ ॥
न त्वां प्रकृतयः सर्वाः श्रेणीमुख्याश्च भूषिताः ।
अनुव्रजितुमिच्छन्ति पौरजानपदास्तथा ॥ १४ ॥

बार्हस्पतो बृहस्पतिदेवताकः, युक्तः चन्द्रेणेति शेषः। युक्तस्तेन पुष्येणाभिषेक इति ब्राह्मणैः प्रोच्यते इत्यन्वयः। तज्जन्यसन्तोषं विहाय दुर्मनाः केनासि ॥ ९ ॥

शतं शलाका यस्मिन् छत्रे तेन छत्रेणावृतम् ॥ १० ॥

व्यजनाभ्यां बालव्यजनाभ्यां शतपत्रं पद्मं तत्समेक्षणम् ॥ ११ ॥ १२

क्षौद्रञ्च दधि च तीर्थोदकमिश्रितमिति शेषः। मूर्द्धाभिषिक्तस्य शिरःस्नातस्य ॥ १३ ॥

श्रेणीमुख्याः परिषन्मुख्याः, सर्वत्र तत्कृत इति शेषः ॥ १४ ॥

चतुर्भिर्वेगसम्पन्नैः हयैः काञ्चनभूषणैः ।
मुख्यः पुष्परथो युक्तः किं न गच्छति तेऽग्रतः ॥ १५ ॥
न हस्ती चाग्रतः श्रीमान् सर्वलक्षणपूजितः ।
प्रयाणे लक्ष्यते वीर ! कृष्णमेघगिरिप्रभः ॥ १६ ॥
न च काञ्चनचित्रन्ते पश्यामि प्रियदर्शनम् ।
भद्रासनं पुरस्कृत्य यान्तं वीर ! पुरःसरम् ॥ १७ ॥
अभिषेको यदा सज्जः किमिदानीमिदं तव ।
अपूर्वो मुखवर्णश्च न प्रहर्षश्च लक्ष्यते ॥ १८ ॥
इतीव विलपन्तीं तां प्रोवाच रघुनन्दनः ।
सीते ! तत्रभवांस्तातः प्रव्राजयति मां वनम् ॥ १९ ॥
कुले महति सम्भूते धर्मज्ञे धर्मचारिणि ! ।

पुष्परथः लीलागमनप्रयोजनो रथो न तु युद्धार्हः इत्यर्थः । तादृग्रथो निर्जिगमिषो राज्ञोऽग्रे भवति । तस्मिन् सत्यामिच्छायामारोहन्ति नोचेदग्रतो गच्छति ॥ १५ ॥

हस्ती कृष्णमेघप्रभो गिरिप्रभश्च ॥ १६ ॥

भद्रासनं पुरस्कृत्य पूजायुक्तं यथा भवति तथा गृहीत्वा यान्तं ते पुरःसरम् अग्रगं सेवकं न पश्यामि ॥ १७ ॥

यदाभिषेकः सज्जः इदानीं एतस्मिन्नेव तस्मिन्वर्त्तमानकाले उक्तराजचिह्नाभावः मुखवर्णश्चापूर्वः कदाप्यननुभूतः । हर्षकाले हर्षाभावश्चेति इदं किमित्यर्थः ॥ १८ ॥

शृणु जानकि ! येनेदं क्रमेणाद्यागतं मम ॥ २० ॥
राज्ञा सत्यप्रतिज्ञेन पित्रा दशरथेन वै ।
कैकेय्यै मम मात्रे तु पुरा दत्तौ महावरौ ॥ २१ ॥
तयाद्य मम सज्जेऽस्मिन्नभिषेके नृपोद्यते ।
प्रचोदितः स समयो धर्मेण प्रतिनिर्जितः ॥ २२ ॥
चतुर्दश हि वर्षाणि वस्तव्यं दण्डके मया ।
पित्रा मे भरतश्चापि यौवराज्ये नियोजितः ॥ २३ ॥
सोऽहं त्वामागतो द्रष्टुं प्रस्थितो विजनं वनम् ।

विलपन्तीं दुःखेन भाषमाणां तत्रभवान् पूज्यस्तातो दशरथः, अत्रभवत्तत्रभवच्छब्दौ पूज्यार्थौ ॥ १९ ॥

उत्कटाप्रियश्रवणेन सीताया अत्यन्तमोहो माभूदिति विविधगुणकीर्त्तनेन सम्बोधयति,—कुलेत्यादि । येन क्रमेण हेतुना इदं प्रव्राजनमागतं तत् शृणु ॥ २० ॥ २१ ॥

नृपेणोद्यते प्रस्ताविते ममाभिषेके सज्जे सति तयाद्य स समयः प्राचीनो वरसंकेतः प्रचोदितः प्रवर्त्तितः, तेन प्रवर्त्तनेन राजा धर्मेण धर्ममार्गेण प्रतिनिर्जितः स्ववशः कृतः ॥ २२ ॥

अस्तु प्रकृते किं आयातं तत्राह,—चतुर्दशेत्यादि। पित्रा वरनिर्जितपितृनियोगेन आद्यवरपालनरूपेण भरतश्च द्वितीयवरपालनरूपपितृनियोगेन यौवराज्ये नियोजितः मयेति शेषः। ज्येष्ठाज्ञां विना तस्य तल्लाभासम्भवात् ॥ २३ ॥

भरतस्य समीपे ते नाहं कथ्यः कदाचन ॥ २४ ॥
ऋद्धियुक्ता हि पुरुषा न सहन्ते परस्तवम्।
तस्मान्न ते गुणाः कथ्या भरतस्याऽग्रतो मम ॥ २५ ॥
अहं ते नानुवक्तव्यो विशेषेण कदाचन।
अनुकूलतया शक्यं समीपे तस्य वर्त्तितुम् ॥ २६ ॥
तस्मै दत्तं नृपतिना यौवराज्यं सनातनम्!
स प्रसाद्यस्त्वया सीते! नृपतिश्च विशेषतः ॥ २७ ॥
अहञ्चापि प्रतिज्ञां तां गुरोः समनुपालयन्।
वनमद्यैव यास्यामि स्थिरीभव मनस्विनि! ॥ २८ ॥

अथ सीताया गृहेऽवस्थितौ सुखजनकबुद्धिरुपदिश्यते भरतस्येत्यादिना,—न कथ्यो न श्लाघनीयः ॥ २४ ॥

ते प्रसिद्धाः मम गुणाः ॥ २५ ॥

'अहं तेनानुवक्तव्यो विशेषेण कदाचन' इति प्राचीनः पाठः कतकेन दर्शितः। अहमस्मत्स्वरूपं ते त्वया विशेषेण विशिष्य कदाचन कदापि नानुवक्तव्यः सखीभिर्वार्त्ताप्रसङ्गे इति शेषः। भरतस्याग्रत इत्यनुकर्षः। तत्र हेतुरनुकूलतयेति। मत्स्वरूपवर्णनञ्च तस्य प्रतिकूलमिति भावः। 'नापि त्वं तेन भर्त्तव्या विशेषेण कदाचन' इति आधुनिकपाठस्तु न तथा चमत्कारी। विशेषेण न भर्त्तव्या किन्तु बन्धुसाधारण्येनेत्यर्थेऽनुकूलतयेत्युत्तरार्धस्य तथोपयोगाभावात् ॥ २६ ॥

तदनुकूलाचरणं किमर्थमत आह,—तस्मादिति। नृपतिना दशरथेन। स त्वया विशेषतः प्रसाद्यः, चो हेतौ, यतो नृपतिः ॥ २७ ॥ २८ ॥

याते च मयि कल्याणि ! वनं मुनिनिषेवितम् ।
व्रतोपवासपरया भवितव्यं * त्वयानघे ! ॥ २९ ॥
कल्यमुत्थाय देवानां कृत्वा पूजां यथाविधि ।
वन्दितव्यो दशरथः पिता मम जनेश्वरः ॥ ३० ॥
माता च मम कौशल्या वृद्धा सन्तापकर्षिता ।
धर्ममेवाग्रतः कृत्वा त्वत्तः सम्मानमर्हति ॥ ३१ ॥
वन्दितव्यास्त्वया नित्यं याः शेषा मम मातरः ।
स्नेहप्रणयसम्भोगैः समा हि मम मातरः ॥ ३२ ॥
भ्रातृपुत्रसमौ चापि द्रष्टव्यौ च विशेषतः ।
उभौ भरतशत्रुघ्नौ प्राणैः प्रियतरौ मम ॥ ३३ ॥

याते गते ॥ २९ ॥

कल्यम् उषसि ॥ ३० ॥

त्वयि गते त्वन्मातुर्नमस्कारेण किं फलं सति तु त्वत्प्रातिकूल्या-करणे तत् फलमिति चेत्तत्राह,—धर्ममेवाग्रतः कृत्वा धर्मएव तत्फलं मुख्यं बुद्धौ कृत्वा तत्सम्मानः कार्य्य इति भावः ॥ ३१ ॥

स्नेहेन मातृत्वप्रयुक्तेन प्रणयेन प्रकृष्टः स्नेहः प्रणयः सम्भोगः सेवा अन्नपानादिविशेषप्रदानम् ॥ ३२ ॥

---

* "व्रतोपवासपर्य्यायैर्वर्त्तितव्यम्" इति वा पाठः ।

विप्रियञ्च न कर्त्तव्यं भरतस्य कदाचन।
स हि राजा च वैदेहि! देशस्य च कुलस्य च ॥ ३४ ॥
आराधिता हि शीलेन प्रयत्नैश्चोपसेविताः।
राजानः सम्प्रसीदन्ति प्रकुप्यन्ति विपर्य्यये * ॥ ३५ ॥
औरसानपि पुत्रान् हि त्यजन्त्यहितकारिणः।
समर्थान् प्रतिगृह्णन्ति जनानपि नराधिपाः ॥ ३६ ॥
सा त्वं वसेह कल्याणि! राज्ञः समनुवर्तिनी।
भरतस्य रता धर्मे सत्यव्रतपरायणा ॥ ३७ ॥
अहं गमिष्यामि महावनं प्रिये!
त्वया हि वस्तव्यमिहैव भामिनि!।

भ्रात्रा पुत्रेण च समौ। प्राणैः प्राणेभ्यः प्रियतरौ ॥ ३३ ॥ ३४ ॥
विपर्य्यये शीलादिविपर्य्यये ॥ ३५ ॥
जनान् प्राकृतान्। सम्बन्धलेशहीनानिति यावत् ॥ ३६ ॥७३॥
यथा कस्यचिन्मद्वचसो व्यलीकं व्यलीकत्वम् अन्टतत्वं न कुरुषे तथे-

---

* "स्पृशन्निव गजो हन्ति जिघ्रन्निव भुजङ्गमः।
स्मयन्निव नृपो हन्ति मानयन्निव दुर्जनः" ॥
इति वा पाठः।

यथा व्यलीकं कुरुषे न कस्यचित्
तथा त्वया कार्य्यमिदं वचो मम ॥ ३८ ॥

इत्यार्षे रामायणे वाल्मीकीये अयोध्याकाण्डे
सीतासमक्षं रामस्य वनगमनप्रस्तावो
नाम षड्विंशः सर्गः ॥ २६ ॥

दमपि मे वचः कार्य्यम् अनुष्ठेयमित्यर्थः। वचसोऽन्यतत्वकरणं चानुष्ठाने भवति ॥ ३८ ॥

इति रामाभिरामे श्रीरामीये रामायणतिलके
अयोध्याकाण्डे षड्विंशः सर्गः ॥ २६ ॥

## सप्तविंशः सर्गः ।

एवमुक्ता तु वैदेही प्रियार्हा प्रियवादिनी ।
प्रणयादेव संक्रुद्धा भर्त्तारमिदमब्रवीत् ॥ १ ॥
किमिदं भाषसे राम ! वाक्यं लघुतया ध्रुवम् ।
त्वया यदपहास्यं मे श्रुत्वा नरवरोत्तम ! ॥ २ ॥
वीराणां राजपुत्राणां शस्त्रास्त्रविदुषां नृप ! ।
अनर्हमयशस्यञ्च न श्रोतव्यं त्वयेरितम् ॥ ३ ॥
आर्य्यपुत्र ! पिता माता भ्राता पुत्रस्तथा स्नुषा ।
स्वानि पुण्यानि भुञ्जानाः स्वं स्वं भाग्यमुपासते ॥ ४ ॥

एवं रामेण गृहवासे नियुक्ता ममापि वनवास एव धर्मतो न्याय-प्राप्त इति सीताह,—एवमित्यादि । प्रणयात् स्नेहादेव संक्रुद्धा कथं मम पृथक्स्थितिमादिशतीत्यमर्षवती ॥ १ ॥

स एवामर्षो दर्श्यते,—किमिति । लघुतया मयि क्षुद्रत्वावलम्बनेन इदं किं भाषसे । किञ्च हे नरवरोत्तम ! त्वया यदुक्तं तच्छ्रुत्वा मे मम अपहास्यम् अतिशयितो हासो जायते ॥ २ ॥

यत् त्वयेरितं तत् वीराणाम् अनर्हमयशस्यञ्चातो न श्रोतव्यं श्रोतु-मयोग्यम् ॥ ३ ॥

कुत एवं तत्राह,—आर्य्यपुत्रेत्यादि । पित्रादयः स्वानि पुण्यानि

भर्तुर्भाग्यं तु नार्य्येका प्राप्नोति पुरुषर्षभ ! ।
अतश्चैवाहमादिष्टा वने वस्तव्यमित्यपि ॥ ५ ॥
न पिता नात्मजो नात्मा न माता न सखीजनः ।
इह प्रेत्य च नारीणां पतिरेको गतिः सदा ॥ ६ ॥
यदि त्वं प्रस्थितो दुर्गं वनमद्यैव राघव ! ।
अग्रतस्ते गमिष्यामि मृद्गन्ती कुशकण्टकान् ॥ ७ ॥
ईर्ष्यारोषौ बहिष्कृत्य पीतशेषमिवोदकम् ।
नय मां वीर ! विस्रब्धः पापं मयि न विद्यते ॥ ८ ॥

स्वस्य कर्मफलानि भुञ्जानाः स्वं स्वं भाग्यं स्वानुष्ठितं कर्मैवोपासते उपजीवन्ति । न पुत्राद्यनुष्ठितं तत्र तेषां सहाधिकाराभावात् ॥ ४ ॥

एका नारी तु भर्त्रा सहाधिकारात् भर्त्तुर्भाग्यं भर्त्रनुष्ठितं कर्मफलं प्राप्नोति अतस्तव वनवासादेशेनैव त्वत्पितृभ्यां सर्वकर्मणि सहाधिकारादहमपि वने वस्तव्यमित्यादिष्टैव, तथैव ममापि गुरुत्वात् स आदेशोऽनुल्लङ्घ्य एवेति भावः ॥ ५ ॥

यदेवमतो न पित्रादिरिह लोके प्रेत्य परलोके च नारीणां गतिः, किन्तु एकः पतिरेव सदा गतिः ॥ ६ ॥

अतो यदि त्वमिति । मृद्नन्ती * कुशेत्यनेन पद्भ्यामेव गमिष्यामीति न च ते दुःखं दास्यामीति च ध्वनितम् ॥ ७ ॥

स्त्रिया वनगमनसाहसं कथमित्यत्याह्निरीर्ष्या तां स्ववाक्योल्लङ्घनेन

* मर्दयन्ती ।

प्रासादाग्रैर्विमानैर्वा वैहायसगतेन वा।
सर्वावस्थागता भर्तुः पादच्छाया विशिष्यते॥ ९॥
अनुशिष्टास्मि मात्रा च पित्रा च विविधाश्रयम्।

रोषश्च। बहिष्कृत्य त्यक्त्वा विसन्धो निःशङ्को मां नय। तत्र हेतुगर्भं विशेषणं वारेति। स्ववीरत्वस्य लोके ख्यापनाय अन्यथा कुतस्तत्-ख्यातिरिति ध्वनिरत्र। त्यागप्रयोजकं पापञ्च मयि न विद्यते। ननु भुक्तभोगया त्वया वने किं प्रयोजनमत आह,—भुक्तशेषमुदकमिव, यथा दुष्प्रापपानीयकान्तारयायिना पीतशेषं कमण्डलुनिष्ठमुदकमवश्य-नेयमेव, तथाहमपि त्वया नेयैव तरुणत्वादिति गूढहासोक्तिः॥ ८॥

अतोऽपि मे वनगमनमेवोचितमित्याह,—प्रासादाग्रे स्थितापेक्ष-येति शेषः। विमानैर्वा वैहायसगतेन वा आकाशगमनेन उपलक्षि-ताणिमाद्यष्टसिद्धिपेक्षयेति शेषः। सर्वावस्थागताभर्तुः अपीति शेषः। 'विष्णोरभक्तिकावस्था सर्वावस्थेति गीयते' इत्यभिधानात् तां गतस्या-तएव आ ईषद्भर्त्तुः भर्त्तुरित्यन्तमेकं पदम्। अथवा पृथक्पदे अत्युक्त-धर्माननुष्ठानरूपां तां गतापीति योजना। सकलभर्तृधर्मरहितस्यापि पत्युः पादच्छाया पादसेवनमेवेतरधर्मापेक्षया स्त्रिया विशिष्यते अधिकं भवति। श्रुतिस्मृत्योः सर्वधर्मपरित्यागेन भर्तृसेवाया एव स्त्रीणां नित्यत्वबोधनादिति भावः। तृतीयाचयमपि पञ्चम्यर्थे। प्रासादाग्रेभ्यः स्वस्वर्गस्थितविमानेभ्यः वैहायसगमनोपलक्षिताणिमाद्यष्टसर्वान्तिःगमनात् वा सर्वावस्थागता दुरवस्थापन्नापि भर्त्तुः पादच्छाया पादसेवा विशि-ष्यते अधिका भवति इति वा॥ ९॥

नास्मि संप्रतिवक्तव्या वर्त्तितव्यं यथा मया ॥ १० ॥
अहं दुर्गं गमिष्यामि वनं पुरुषवर्जितम् ।
नानामृगगणाकीर्णं शार्दूलगणसेवितम् ॥ ११ ॥
सुखं वने निवत्स्यामि यथैव भवने पितुः ।
अचिन्तयन्ती त्रीन् लोकान् चिन्तयन्ती पतिव्रतम् ॥ १२ ॥
शुश्रूषमाणा ते नित्यं नियता ब्रह्मचारिणी ।
सह रंस्ये त्वया वीर ! वनेषु मधुगन्धिषु ॥ १३ ॥
त्वं हि कर्त्तुं वने शक्तो राम ! संपरिपालनम् ।
अन्यस्यापि जनस्येह किं पुनर्मम मानद ! ॥ १४ ॥
साहं त्वया गमिष्यामि वनमद्य न संशयः ।
नाहं शक्या महाभाग ! निवर्त्तयितुमुद्यता ॥ १५ ॥

मद्रूपदेशोऽप्येवमेवेत्याह,—अनुशिष्टेत्यादि । विविधाश्रयम् । नानाविधावस्थभर्तृनिष्ठाश्रयमनुशिष्टास्मि । अतो भर्त्तरि मया यथोपदिष्टं वर्त्तितव्यं तथा संप्रति नो वक्तव्यास्मि नोपदेष्टव्यास्मि ॥ १० ॥

यदेवसतोऽहमिति । गमिष्यामि त्वद्गमनमन्विति शेषः ॥ ११ ॥

त्रीन् लोकान् अचिन्तयन्ती त्रैलोक्यैश्वर्य्यमप्यगणयन्ती । पतिव्रतं पत्या सह वासरूपं व्रतम् । चिन्तयन्ती अपेक्षमाणा । ब्रह्मचारिणी तपश्चरणशीला । नियता त्वदुपदिष्टनियमयुक्ता । मधुगन्धिषु मकरन्दसुरभिषु ॥ १२ ॥ १३ ॥

अन्यस्यापि जनस्य जीवमसुहृस्य ॥ १४ ॥

फलमूलाशना नित्यं भविष्यामि न संशयः।
न ते दुःखं करिष्यामि निवसन्ती त्वया सदा * ॥ १६ ॥
अग्रतस्ते गमिष्यामि भोक्ष्ये भुक्तवति त्वयि।
इच्छामि सरितः † शैलान् पल्वलानि सरांसि च ॥ १७ ॥
द्रष्टुं सर्वत्र निर्भीता त्वया नाथेन धीमता।
हंसकारण्डवाकीर्णाः पद्मिनीः साधुपुष्पिताः ॥ १८ ॥
इच्छेयं सुखिनी द्रष्टुं त्वया वीरेण सङ्गता।
अभिषेकं करिष्यामि तासु नित्यमनुव्रता ॥ १९ ॥
सह त्वया विशालाक्ष रंस्ये परमनन्दिनी।

निवर्त्तयितुं शक्या न्यायप्राप्तानुगमनत्वात् त्वच्छक्तिरूपत्वादिति गूढ़ाऽभिप्रायः। उद्यता वनं गन्तुमिति शेषः ॥ १५ ॥

दुःखं न करिष्यामि विशिष्टान्नपानादीच्छयेति शेषः। त्वया सह शक्तिरूपत्वात् सदा वसन्ती दुःखमयकार्य्यापि यथापूर्वं न कदापि दुःखं कृतवती एवमग्रेऽपि न करिष्यामीति भावः ॥ १६ ॥

सरांसि चेत्यस्य द्रष्टुमित्यनेनान्वयः ॥ १७ ॥

कारण्डवाः जलकुक्कुटाः ॥ १८ ॥

अभिषेकं करिष्यामि तासु पद्मिनीषु इति शेषः ॥ १९ ॥

---

* "सह" इति वा पाठः।

† "परितः" इति वा पाठः।

एवं वर्षसहस्राणि शतं वापि त्वया सह ॥ २० ॥
व्यतिक्रमं न वेत्स्यामि स्वर्गोऽपि हि न मे मतः।
स्वर्गेऽपि च विना वासो भविता यदि राघव!।
त्वया विना * नरव्याघ्र! नाहं तदपि रोचये ॥ २१ ॥

अहं गमिष्यामि वनं सुदुर्गमं
मृगायुतं वानरवारणैश्च।
वने निवत्स्यामि यथा पितुर्गृहे
तवैव पादावुपगृह्य सम्मता ॥ २२ ॥
अनन्यभावामनुरक्तचेतसं
त्वया वियुक्तां मरणाय निश्चिताम्।
नयस्व मां साधु कुरुष्व याचना-
न्नातो मया ते गुरुता भविष्यति ॥ २३ ॥

वर्षसहस्राणि शतं वा त्वया सह वसन्ती व्यतिक्रमं वनवास-दुःखं न वेत्स्यामि किन्तु क्षणमिव तावन्तं कालं नेष्यामीति भावः। स्वर्गोऽपि न मे मतः त्वया विनेति शेषः। तदेव विवृणोति स्वर्गेऽपि चेति ॥ २० ॥ २१ ॥

मृगैरायुतं मृगैरासमन्तायुतं युक्तं वानरवारणैश्च युक्तामिति शेषः। सम्मता तवेति शेषः। त्वदाज्ञानुवर्त्तिनीति यावत् ॥ २२ ॥

त्वया वियुक्तामित्यादि। त्वद्वियोगे मरणविषयनिश्चितमतिं

---

* "मम" इति वा पाठः।

तथा ब्रुवाणामपि धर्मवत्सलां
न च स्म सीतां नृवरो निनीषति।
उवाच चैनां बहु सन्निवर्त्तने
वने निवासस्य च दुःखितां प्रति॥ २४॥

इत्यार्षे रामायणे वाल्मीकीये अयोध्याकाण्डे
सीताया वनगमनप्रस्तावो नाम सप्त-
विंशः सर्गः॥ २७॥

याचनां मामिकां वनानुगमनयाचनां साधु कुरुष्व चरितार्थां सम्पादय मया क्रियमाणादतोऽनुगमनात्ते गुरुता भारो न भविष्यति॥ २३॥

तथान्याययुक्तं न निनीषति स्म न नेतुमैच्छत्। अतएवास्या निवर्त्तने निवर्त्तनरूपप्रयोजननिमित्तं वनवासस्य दुःखतां दुःखजनकतां प्रति सत् सम्भवत् बहु हेतुजातमुवाचेत्यर्थः॥ २४॥

इति रामाभिरामे श्रीरामीये रामायणतिलके
अयोध्याकाण्डे सप्तविंशः सर्गः॥ २७॥

# अष्टाविंशः सर्गः ।

स एवं ब्रुवतीं सीतां धर्मज्ञां धर्मवत्सलः ।
न नेतुं कुरुते बुद्धिं वने दुःखानि चिन्तयन् ॥ १ ॥
सान्त्वयित्वा ततस्तां तु बाष्पदूषितलोचनाम् ।
निवर्त्तनार्थे धर्मात्मा वाक्यमेतदुवाच ह ॥ २ ॥
सीते ! महाकुलीनासि धर्मे च निरता सदा ।
इहाचरस्व धर्मं त्वं यथा मे मनसः सुखम् ॥ ३ ॥
सीते ! यथा त्वां वक्ष्यामि तथा कार्य्यं त्वयाबले ! ।
वने दोषा हि बहवो वसतस्तान्निबोध मे ॥ ४ ॥
सीते ! विमुच्यतामेषा वनवासकृता मतिः ।
बहुदोषं हि कान्तारं वनमित्यभिधीयते ॥ ५ ॥

स इति । न नेतुं कुरुते बुद्धिं न नेतुं कुरुत इव ॥ १ ॥ २ ॥

महाकुलीनेत्याद्युक्तिः स्ववाक्याङ्गीकारप्रयोजना । इहैव स्थित्वा यथा मे मम मनसः सुखं भवति तथा मदागमनमुद्दिश्य स्वधर्मं चर धर्ममेवाचर ॥ ३ ॥

हि यतो वने बहवो दोषाः क्लेशा अतो मदुक्तं कार्य्यमित्यन्वयः ॥ ४ ॥

हितबुद्ध्या खलु वचो मयैतदभिधीयते।
सदा सुखं न जानामि दुःखमेव सदा वनम्॥ ६॥
गिरिनिर्झरसम्भूता गिरिनिर्दरिवासिनाम्।
सिंहानां निनदा दुःखाः श्रोतुं दुःखमतो वनम्॥ ७॥
क्रीड़मानाश्च विस्रब्धा मत्ताः शून्ये तथा मृगाः।
दृष्ट्वा समभिवर्त्तन्ते सीते! दुःखमतो वनम्॥ ८॥
सग्राहाः सरितश्चैव पङ्कवत्यः सुदुस्तराः।
मत्तैरपि गजैर्नित्यमतो दुःखतरं वनम्॥ ९॥

कान्तारं गहनत्वात् दुष्प्रवेशं वनं बहुदोषमित्यभिधीयत इति योजना। सीते इति कलत्रनामग्रहणमपि दुःखाकुलचित्तत्वनाटनेन न दोषाय॥ ५॥

हितबुद्ध्या एतदभिधीयते न तु त्वद्धरणादिप्रयासोपाधिनेत्यर्थः। सदा सर्वकाले सुखं वने नास्ति सुखं सुखदं न भवति किन्तु दुःखं दुःखदमेवेत्येव जानामि निश्चिनोमि॥ ६॥

गिरिनिर्झरा गिरिनद्यस्तन्निनदैः सम्भूताः प्रभूताः गिरिनिर्दरिवासिनां सिंहानां निनदाः श्रोतुं दुःखाय अतो वनं दुःखं दुःखजनकम्॥ ७॥

विस्रब्धाः निःशङ्काः दृष्ट्वा मनुष्यं दृष्ट्वा समभिवर्त्तन्ते हन्तुं सम्मुखमायान्ति॥ ८॥

सग्राहकत्वं पङ्कवत्त्वञ्च दुस्तरत्वे हेतुः। नित्यं गजैरित्यस्य युक्तमिति शेषः॥ ९॥

लताकण्टकसङ्कीर्णाः कृकवाकूपनादिताः ।
निरपाश्च सुदुःखाश्च मार्गा दुःखमतो वनम् ॥ १० ॥
सुप्यते पर्णशय्यासु स्वयंभग्नासु भूतले ।
रात्रिषु श्रमखिन्नेन तस्माद्दुःखमतो * वनम् ॥ ११ ॥
अहोरात्रञ्च सन्तोषः कर्त्तव्यो नियतात्मना ।
फलैर्वृक्षावपतितैः सीते ! दुःखमतो वनम् ॥ १२ ॥
उपवासश्च कर्त्तव्यो यथाप्राणेन मैथिलि ! ।
जटाभारश्च कर्त्तव्यो वल्कलाम्बरधारणम् † ॥ १३ ॥
देवतानां पितृणाञ्च कर्त्तव्यं विधिपूर्वकम् ।

कृकवाकुर्वनकुक्कुटः, सरट इत्यन्ये । निरपाः निर्गतोदकाः । ऋक्पूरित्यप्समासान्तः ॥१०॥

स्वयंभग्नासु स्वयंपतितशीर्णपर्णमयशय्यास्विति यावत् । श्रमखिन्नेन दिवाफलाद्यानयनश्रमखिन्नेन सुप्यते वनवासिना जनेनेति शेषः । तेन तत्रापि स श्रमस्तदेव शयनं चेति सममेवेति ध्वनितम् ॥११॥

वृक्षावपतितैः वृक्षेभ्यः स्वयमेव पतितैः । अहोरात्रं प्रातः-सायम् ॥ १२ ॥

यथाप्राणेन यथाबलानुसारेण केशसंस्काराभावाज्जटाभारकरणम् ॥ १३ ॥

---

* "दुःखतरम्" इति वा पाठः ।

† "धारिणा" इति वा पाठः ।

प्राप्तानामतिथीनाञ्च नित्यशः प्रतिपूजनम् ॥ १४ ॥
कार्य्यस्त्रिरभिषेकश्च काले काले च नित्यशः।
चरतां नियमेनैव तस्माद्दुःखतरं वनम् ॥ १५ ॥
उपहारश्च कर्त्तव्यः कुसुमैः स्वयमाहृतैः।
आर्षेण विधिना वेद्यां सीते! दुःखमतो वनम् ॥ १६ ॥
यथालब्धेन कर्त्तव्यः सन्तोषस्तेन मैथिलि!।
यथाहारै*र्वनचरैः सीते! दुःखमतो वनम् ॥ १७ ॥
अतीववातस्तिमिरं बुभुक्षा चास्ति नित्यशः।
भयानि च महान्त्यत्र अतो दुःखतरं वनम् ॥ १८ ॥
सरीसृपाश्च बहवो बहुरूपाश्च भामिनि!।
चरन्ति पथि ते दर्पात्ततो दुःखतरं वनम् ॥ १९ ॥

प्रतिपूजनं कार्य्यं तेन तदर्थसामग्रीसम्पादनक्लेशो ध्वनितः ॥ १४ ॥

काले काले प्रातःकालादौ नियमेनैव चरतां कालक्षेपं कुर्वतां त्रिरभिषेकः कार्य्यः त्रिषवणस्नानं कर्त्तव्यमित्यर्थः ॥ १५ ॥

उपहारः पूजा आर्षो विधिरर्च्चादिवृत्तिः वेद्यामित्यनेन तत्करण दुःखं ध्वनितम् ॥ १६ ॥

तेन वन्यपदार्थेन यथाहारैः यथालब्धाहारैः ॥ १७ ॥

तिमिरं रात्रिरित्वित्ति शेषः ॥ १८ ॥

बहुरूपाः सरीसृपाः सन्ति ते च मार्गमध्ये दर्पाच्चरन्ति ॥ १९ ॥

---

* "यताहारैः" इति वा पाठः।

नदीनिलयनाः सर्पा नदीकुटिलगामिनः ।
तिष्ठन्त्यावृत्य पन्थानमतो दुःखतरं वनम् ॥ २० ॥
पतङ्गा वृश्चिकाः कीटा दंशाश्च मशकैः सह ।
बाधन्ते नित्यमबले ! सर्वं दुःखमतो वनम् ॥ २१ ॥
द्रुमाः कण्टकिनश्चैव कुशाः काशाश्च भामिनि ! ।
वने व्याकुलशाखाग्रास्तेन दुःखमतो वनम् ॥ २२ ॥
कायक्लेशाश्च बहवो भयानि विविधानि च ।
अरण्यवासे वसतो दुःखमेव सदा वनम् ॥ २३ ॥
क्रोधलोभौ विमोक्तव्यौ कर्त्तव्या तपसे मतिः ।
न भेतव्यञ्च भेतव्ये दुःखं नित्यमतो वनम् ॥ २४ ॥
तदलं ते वनं गत्वा क्षेमं न हि वनं तव ।
विमृशन्निव * पश्यामि बहुदोषकरं वनम् ॥ २५ ॥

निलयनं वासस्थानं नदीवत्कुटिलगतयः ॥ २० ॥
अबले इत्यनेन तन्निवारणासामर्थ्यं ध्वनितम् ॥ २१ ॥
व्याकुलशाखाग्रत्वं यथायोगं द्रुमेषु कुशकाशयोश्च बोध्यम् ॥२२॥२३॥
भेतव्ये भेतव्यविषये ॥ २४ ॥
अलं गत्वा न गन्तव्यमित्यर्थः । विमृशन्दोषान्विचारयन् तान्दोषा-
निहस्थोऽपि पश्यामीवातो बहुदोषकरं वनमिति ब्रवीमीति शेषः ॥२५॥

* "इह" इति वा पाठः ।

वनन्तु नेतुं न कृता मतिर्यदा
बभूव रामेण तदा महात्मना ।
न तस्य सीता वचनं चकार तं
ततोऽब्रवीद्राममिदं सुदुःखिता ॥ २६ ॥

इत्यार्षे रामायणे वाल्मीकीये अयोध्याकाण्डे
वनदोषकीर्त्तनं नाम अष्टा-
विंशः सर्गः ॥ २८ ॥

रामेण यदा वने नेतुं मतिर्न कृता बभूव तदा सीता तस्य वचनं न चकार नाङ्गीचकार ततो हेतोरिदमब्रवीत् ॥ २६ ॥

इति रामाभिरामे श्रीरामीये रामायणतिलके
अयोध्याकाण्डे अष्टाविंशः सर्गः ॥ २८ ॥

# एकोनत्रिंशः सर्गः ।

एतत्तु वचनं श्रुत्वा सीता रामस्य दुःखिता ।
प्रसक्ताश्रुमुखी मन्दमिदं वचनमब्रवीत् ॥ १ ॥
ये त्वया कीर्त्तिता दोषा वने वस्तव्यतां प्रति ।
गुणानित्येव तान्विद्धि तव स्नेहपुरस्कृता ॥ २ ॥
मृगाः सिंहा गजाश्चैव शार्दूलाः शरभास्तथा ।
चमराः सृमराश्चैव ये चान्ये वनचारिणः ॥ ३ ॥
अदृष्टपूर्वरूपत्वात्सर्वे ते तव राघव ! ।
रूपं दृष्ट्वापसर्पेयुस्तव सर्वे हि बिभ्यति ॥ ४ ॥

एतदिति ॥ १ ॥

वने वस्तव्यतां वासं प्रति त्वया ये दोषाः कीर्त्तितास्तान्मां प्रति गुणानेव विद्धि यतोऽहं तव स्नेहेन पुरस्कृता त्वन्निष्ठस्नेहविषया। अनेन त्वत्स्नेहविषयस्य दोषपदार्थो न कोऽपीति भावः। यद्वा यतस्त्वद्विषयकस्नेहेनाग्रगा इत्यर्थः ॥ २ ॥

तदेवाह,—मृगा इत्यादि ॥ ३ ॥

अदृष्टपूर्वं तावकं रूपं येषां तत्त्वात्। रूपं दृष्ट्वेति। स्थाने हृषिकेश तव प्रकीर्त्येति न्यायाद्येषामन्यकर्त्तृकत्वत्स्मरणेन भयं तेषां साक्षा-

त्वया च सह गन्तव्यं मया गुरुजनाज्ञया।
त्वद्वियोगेन मे राम! त्यक्तव्यमिह जीवितम्॥ ५॥
न हि मां त्वत्समीपस्थामपि शक्तोऽपि राघव!।
सुराणामीश्वरः शक्रः प्रधर्षयितुमोजसा॥ ६॥
पतिहीना तु या नारी न सा शक्ष्यति जीवितुम्।
काममेवंविधं राम! त्वया मम निदर्शितम्॥ ७॥
अथापि च महाप्राज्ञ! ब्राह्मणानां मया श्रुतम्।
पुरा पितृगृहे सत्यं वस्तव्यं किल मे वने॥ ८॥

त्वद्दर्शने भयमिति अर्थसिद्धमिति ध्वनितम्। तव सर्वं हि बिभ्यति। अनेन यद्भीषोदेति सूर्य इत्यर्थो ध्वनितः॥ ४॥

गुरुजनाज्ञया इयं सीता मम सुता छायेवानुगता सदेति सूचितम्। पित्राद्याज्ञया उक्तरीत्या त्वत्पित्राद्याज्ञया। त्वद्वियोगेन हेतुना॥ ५॥

आद्योपिर्लोकोक्तौ॥ ६॥

एवम्विधं पतिहीनाया जीवनमशक्यमित्येवं रूपं त्वया दर्शितं भरतानुकूलतयात्र वासस्थित्युपदेशेनातोऽहं त्वया सह यास्यामि त्वदुपदिष्टभरतानुकूल्येन स्थातुमशक्यत्वादिति भावः। केचित्तु एवंविधं वनवासदुःखं कामं त्वया मम दर्शितं यद्यपि तथापि तादृशवने पतिहीना प्रबलभर्तृहीना न जीवितुं शक्ष्यति ननु मादृशी प्रबलभर्तृकेति अहं वनं यास्याम्येवेति भाव इत्याहुः॥ ७॥

अथापि वनस्य सदोषत्वेऽपि वने त्वया वस्तव्यं किलेति ब्राह्मणानां

लक्षणिभ्यो द्विजातिभ्यः श्रुत्वाहं वचनं गृहे ।
वनवासकृतोत्साहा नित्यमेव महाबल ! ॥ ९ ॥
आदेशो वनवासस्य प्राप्तव्यः स मया किल ।
सा त्वया सह भर्त्राहं * यास्यामि प्रिय नान्यथा ॥ १० ॥
कृतादेशा भविष्यामि गमिष्यामि सह त्वया ।
कालश्चायं समुत्पन्नः सत्यवाक् भवतु द्विजः ॥ ११ ॥

सत्यं वचनं पूर्वं पितृगेहे निवसन्त्या मया श्रुतमतोऽवश्यंभावित्वान्मम वनवासस्य न दोषगणनेति भावः ॥ ८ ॥

तदेव पुनर्द्रढ़यति,—लक्षणिभ्य इति । सामुद्रिकलक्षणविद्भ्यः वचनं वनवाससम्पादकलक्षणसत्ताविषयकं वचनं नित्यमेव इतः प्रागपि ॥ ९ ॥

स वनवासस्यादेशः ब्राह्मणोक्तो मया प्राप्तव्यः किल भाविनोऽन्यथाभावाभावात् तस्मात्त्वया सह यास्यामि । इदमन्यथा न कथमप्यन्यथा न भविष्यतीत्यर्थः । अत्राज्ञापर्यायादेशशब्देन ब्राह्मणोक्तिस्तदाज्ञैव तव सर्वान्तर्यामित्वादिति सूचितम् । किञ्चावतारकरणसमयकालिकोऽयं तवादेशोऽद्यतनरात्रिशेषकालिकस्यादेश इति ध्वनितम् ॥ १० ॥

तदेवाह,—कृतादेशा अनुष्ठिताज्ञा । अन्यथा प्रतिज्ञाताचरणाभावे दोषाभावो ममापि तवैव स्यादिति भावः । अतस्त्वया सह

* "तत्राहम्" इति वा पाठः ।

वनवासे हि जानामि दुःखानि बहुधा किल ।
प्राप्यन्ते नियतं वीर ! पुरुषैरकृतात्मभिः ॥ १२ ॥
कन्यया च पितुर्गेहे वनवासः श्रुतो मया ।
भिक्षिण्याः शमवृत्ताया * मम मातुरिहाग्रतः ॥ १३ ॥
प्रसादितश्च वै पूर्वं त्वं मे बहुतिथं प्रभो ! ।
गमनं वनवासस्य काङ्क्षितं हि सह त्वया ॥ १४ ॥

गमिष्यामि । समुत्पन्नः संप्राप्तः पूर्वकल्पितवनवासस्येति शेषः । द्विज इति जात्यभिप्रायेण । अत्र द्विजपदेन रावणोऽपि । यत् श्वेतद्वीपे तेनोक्तं लक्ष्मीनिमित्तं त्वत्तो मे वधोऽस्त्विति तत्सत्यं भवत्वित्यपि गूढं सूचितम् ॥ ११ ॥

इति तात्त्विकमर्थमुक्त्वा पुनर्लोकानुसारेणाह,—वनेत्यादि । हिरे-वार्थे किलेति निश्चये । वनवासे बहुधा दुःखानि सन्तीति निश्चितं जानाम्येव तथापि तान्यकृतात्मभिरजितेन्द्रियैः पुरुषैः स्त्रीसाहित्यवशात् प्राप्यन्ते । अत्र पुरुषप्रकरणाभावेऽपि तदुक्तिस्त्वयापि सा बुद्धिर्वनवास-दुःखं दृष्ट्वा न निवर्त्तनीयेति ध्वनयितुम् ॥ १२ ॥

ननु लक्षणज्ञानां भ्रमो भवेत् तत्राह,—कन्यया चेति । भिक्षिण्याः शमवृत्तायाः शमवदाचारायास्तापस्याः तपोयुक्तत्वेन तस्या भ्रमो न सम्भवतीति भावः अत्रत्यमिहेत्युत्तरश्लोकान्वयि ॥ १३ ॥

इह,—अस्मिन् गृहे पूर्वमेव त्वं मे मया बहुतिथं बहुवारं वन-

* "साधुवृत्ताया" इति वा पाठः ।

कृतक्षणाहं भद्रन्ते गमनं प्रति राघव ! ।
वनवासस्य शूरस्य मम चर्य्या हि रोचते ॥ १५ ॥
शुद्धात्मन् ! प्रेमभावाद्धि भविष्यामि विकल्मषा ।
भर्त्तारमनुगच्छन्ती भर्त्ता हि मम दैवतम् ॥ १६ ॥
प्रेत्यभावे हि कल्याणः सङ्गमो मे सदा * त्वया ।
श्रुतिर्हि श्रूयते पुण्या ब्राह्मणानां यशस्विनाम् ॥ १७ ॥
इहलोके च पितृभिर्या स्त्री यस्य महाबल ! ।

वासस्य क्रीडार्थं वनगमनं प्रति प्रसादितः अतस्त्वया सह वनगमनं मे काङ्क्षितं हि निश्चयेन इति जानीहीति शेषः ॥ १४ ॥

हे राघव ! ते भद्रम् अहं गमनं प्रति कृतक्षणास्मि कृतानुमतिकास्मि वने वासो यस्य तादृशस्य शूरस्य तव चर्य्या शुश्रूषा मम रोचते हि तादृशस्य शूरस्य तव चर्य्या रक्षोबधादिरूपा मम रोचते तत्सम्बन्धेनैव शोभते सम्पद्यते हि यत इति गूढम् ॥ १५ ॥

प्रेमभावाद्भर्तारमनुगच्छन्ती विकल्मषा भविष्यामीत्यन्वयः त्वया विनात्र स्थितौ हि लोकः कल्मषं सम्भावयिष्यतीति भावः ॥ १६ ॥

प्रेत्यभावे मृत्वा शरीरान्तरपरिग्रहेऽपि परलोकेऽपीति यावत् । त्वया सह सङ्गमः कल्याणः दिव्यसुखहेतुः अत इह सङ्गमस्य कल्याणत्वं कैमुतिकन्यायसिद्धमिति भावः । प्रेत्यसङ्गमसत्त्वे मानमाह,—ब्राह्मणानां मुखात्पुण्या किल श्रुतिर्यत उक्तार्थप्रतिपादिका श्रूयते ॥ १७ ॥

---

* "सह त्वया" इति वा पाठः ।

अद्भिर्दत्ता स्वधर्मेण प्रेत्यभावेऽपि तस्य सा ॥ १८ ॥
एवमस्मात् स्वकां नारीं सुवृत्तां हि पतिव्रताम्।
नाभिरोचयसे नेतुं त्वं मां केनेह * हेतुना ॥ १९ ॥
भक्तां पतिव्रतां दीनां मां समां सुखदुःखयोः।
नेतुमर्हसि काकुत्स्थ ! समानसुखदुःखिनीम् ॥ २० ॥
यदि मां दुःखितामेवं वनं नेतुं न चेच्छसि।
विषमग्निं जलं वाहमास्थास्ये मृत्युकारणात् ॥ २१ ॥
एवं बहुविधं तं सा याचते गमनं प्रति।
नानुमेने महाबाहुस्तां नेतुं विजनं वनम् ॥ २२ ॥

तां श्रुतिं पठति,—इहेति। या स्त्री पितृभिः पितृपितामहमाचार्यादिभिर्यस्याद्भिः स्वधर्मेण स्वस्वजातीयकन्यादानधर्मेण दत्ता सा इहलोके च तस्यैव प्रेत्यभावेऽपि तस्यैव भवतीति ॥ १८ ॥

एवं श्रुतिन्यायतो नित्यसम्बन्धे सतीत्यर्थः। अस्मान्नगरात् स्वकां स्वीयां सुवृत्तामित्यस्य विवरणं पतिव्रतामिति ॥ १९ ॥

सुखदुःखयोः समाम्। अस्यैव विवरणं समानसुखदुःखिनीम्। नेतुं वनमिति शेषः ॥ २० ॥

न चेच्छसि नैवेच्छसीत्यर्थः ॥ २१ ॥

(याचते अयाचत) अननुमतौ हेतुर्विजनत्वं श्वश्रूप्रभृतिरक्षकजनरहितत्वम् ॥ २२ ॥

---

* "केनैव" इति वा पाठः।

एवमुक्ता तु सा चिन्तां मैथिली समुपागता ।
स्नापयन्तीव गामुष्णै*रश्रुभिर्नयनच्युतैः ॥ २३ ॥
चिन्तयन्तीं तदा तान्तु निवर्त्तयितुमात्मवान् ।
क्रोधाविष्टान्तु वैदेहीं काकुत्स्थो बहु सान्त्वयन् ॥ २४ ॥

इत्यार्षे रामायणे वाल्मीकीये अयोध्याकाण्डे
सीताया वनगमनप्रस्तावो नाम
एकोनत्रिंशः सर्गः ॥ २९ ॥

एवमुक्ता अननुमतिबोधकवाक्यमुक्ता स्नापयन्तीवेत्युक्तया तस्या अपि वास्तवदुःखाभावो ध्वनितः । रामवाक्यस्य नाट्यतया ज्ञानात् ॥ २३ ॥

सान्त्वयन् सान्त्ववाक्यान्युवाचेत्यर्थः ॥ २४ ॥

इति रामाभिरामे श्रीरामीये रामायणतिलके
अयोध्याकाण्डे एकोनत्रिंशः सर्गः ॥ २९ ॥

* "स्नापयन्ती कुचावुष्णैः" इति वा पाठः ।

# त्रिंशः सर्गः ।

सान्त्व्यमाना तु रामेण मैथिली जनकात्मजा ।
वनवासनिमित्तार्थं भर्त्तारमिदमब्रवीत् ॥ १ ॥
सा तमुत्तमसंविग्ना सीता विपुलवक्षसम् ।
प्रणयाच्चाभिमानाच्च परिचिक्षेप राघवम् ॥ २ ॥
किं त्वाऽमन्यत वैदेहः पिता मे मिथिलाधिपः ।
राम ! जामातरं प्राप्य स्त्रियं पुरुषविग्रहम् ॥ ३ ॥
अनृतं वत लोकोऽयमज्ञानाद्यदि वक्ष्यति ।
तेजो नास्ति परं रामे तपतीव दिवाकरे ॥ ४ ॥

वनवासनिमित्तार्थं वनवासनिमित्तानुमतिसिद्ध्यर्थम् ॥ १ ॥

उत्तमसंविग्ना अतिभीता सैव प्रणयात् स्नेहात् अभिमानोऽत्यन्त-मिष्टत्वेन रहसि कोपप्रीत्यादिप्रयुक्तसकलवचनार्ह इत्येवंरूपः परि-चिक्षेप सोऽपहासवचनमुक्तवती ॥ २ ॥

पुरुषविग्रहम् आकारेण पुरुषं क्रियया तु स्त्रियमेव त्वां जामातरं प्राप्य मे पिता किममन्यत तव तत्त्वं न ज्ञातवानित्यर्थः । यदि जानी-यात् मां तुभ्यं न प्रयच्छेदिति शेषः ॥ ३ ॥

यदि मां विहाय भवान् वनगमनभारं वक्ष्यति प्राप्स्यति वह प्रापणेऽस्य रूपम् । तदा यदिदं लोको वदति रामे यत्तेजस्तपति दिवा-

किं हि कृत्वा विषण्णस्त्वं कुतो वा भयमस्ति ते ।
यत् परित्यक्तुकामस्त्वं मामनन्यपरायणाम् ॥ ५ ॥
द्युमत्सेनसुतं वीरं सत्यवन्तमनुव्रताम् ।
सावित्रीमिव मां विद्धि त्वमात्मवशवर्त्तिनीम् ॥ ६ ॥
नत्वहं मनसा त्वन्यं द्रष्टास्मि त्वदृतेऽनघ ! ।
त्वया राघव ! गच्छेयं यथान्या कुलपांसनी ॥ ७ ॥
स्वयं तु भार्य्यां कौमारीं चिरमध्युषितां सतीम् ।
शैलूष इव मां राम ! परेभ्यो दातुमिच्छसि ॥ ८ ॥
यस्य पथ्यञ्चरामात्य यस्य चार्थेऽवरुध्यसे ।

करे नास्तीवेति तदज्ञानादिव गदितमन्यत्तं भविष्यतीति शेषः । वतेति खेदे खेदातिशयव्यञ्जकतया च न्यूनपदत्वादि न दोषः ॥ ४ ॥

किं हि कृत्वा किं मनसि विचार्य्येत्यर्थः । विषण्णः प्राप्तविषादः ॥५॥

द्युमत्सेनसुतं सत्यवन्तमनुव्रतां तत्पत्नीं सावित्रीमिव मां विद्धि ॥६॥

यथान्या कुलपांसनी अन्यं पश्यति । एवमहं मनसाप्यन्यं न द्रष्टास्मि अतस्त्वदृते त्वां विना नात्र स्थास्येऽतः हे राघव ! त्वया सह गच्छेयम् ॥ ७ ॥

एवमप्यननुमतिमेव दृष्ट्वा पुनराक्षिपति,—स्वयन्त्विति । कौमारीम् अन्यापूर्व्वां विवाहितामन्यापूर्व्वाञ्च चिरमध्युषितामनेन तरुणीत्वमुक्तं शैलूष इव जायाजीव इव ॥ ८ ॥

तदेव दर्शयति,—यस्य भरतस्य मां पथ्यञ्चरामिच्छानुवर्त्तिनीमात्थ

त्वं तस्य भव वश्यश्च विधेयश्च सदानघ ! ॥ ९ ॥
स मामनादाय वनं न त्वं प्रस्थितुमर्हसि ।
तपो वा यदि वारण्यं स्वर्गो वा स्यात्त्वया सह ॥ १० ॥
न च मे भविता तत्र कश्चित्पथि परिश्रमः ।
पृष्ठतस्तव गच्छन्त्या विहारशयनेष्विव ॥ ११ ॥
कुशकाशशरेषीका ये च कण्टकिनो द्रुमाः ।
तूलाजिनसमस्पर्शा मार्गे मम सह त्वया ॥ १२ ॥
महावातसमुद्भूतं यन्मामवकरिष्यति ।
रजो रमण ! तन्मन्ये परार्द्ध्यमिव चन्दनम् ॥ १३ ॥
शाद्वलेषु यदा शिश्ये वनान्ते वनगोचरा ।

संप्रत्येव कथितवानसि पथ्यश्चरामित्यत्र ममार्थः। यस्य च भरतस्यार्थे तदभिषेकरूपप्रयोजननिमित्तम् अवरुध्यसे निरुद्धाभिषेकोऽसि तस्य त्वमेव वश्य इच्छानुवर्त्ती विधेयो नियोज्यश्च भव नाहं तदिच्छानुवर्त्तिनी तद्विधेया चेह वसामीत्याशयः॥ ९ ॥ १० ॥

विहारशयनेषु सुप्ताया इवारण्ये गच्छन्त्या न मे परिश्रम इति योजना ॥ ११ ॥

तूलैरजिनैः प्रियकादिमृगाजिनैश्च समः स्पर्शो येषां तादृशा भविष्यन्तीति शेषः ॥ १२ ॥

अवकरिष्यति विक्षेप्स्यति व्याप्स्यतीति यावत्। परार्ध्यम् अत्युत्तमम् ॥ १३ ॥

कुथास्तरणयुक्तेषु * किं स्यात् सुखतरं ततः ॥ १४ ॥
पत्रं मूलं फलं यत्तु अल्पं वा यदि वा बहु ।
दास्यसे स्वयमाहृत्य तन्मेऽमृतरसोपमम् ॥ १५ ॥
न मातुर्न पितुस्तत्र स्मरिष्यामि न वेश्मनः ।
आर्त्तवान्युपभुञ्जाना पुष्पाणि च फलानि च ॥ १६ ॥
नच तत्र ततः किञ्चिद् द्रष्टुमर्हसि विप्रियम् ।
मत्कृते न च ते शोको न भविष्यामि दुर्भरा ॥ १७ ॥
यस्त्वया सह सः स्वर्गो निरयो यस्त्वया विना ।
इति जानन् परां प्रीतिं गच्छ राम ! मया सह ॥ १८ ॥

वनान्तः वनमध्ये शिश्ये त्वया सहेति शेषः। कुथाश्चित्रकम्बला-स्तद्रूपास्तरणयुक्तेषु मञ्चेषु सुप्ताया मम ततः शाद्वलशयनात् किं सुख-तरं स्यात् किमधिकं सुखं स्यात् न किमपीत्यर्थः ॥ १४ ॥

स्वयमाहृत्य दास्यसे इत्यनेन स्वस्य तदाहरणप्रयुक्तश्रमाभावः सूचितः ॥ १५ ॥

मातुरित्यादिकर्मणः शेषत्वविवक्षया षष्ठी। आर्त्तवानि तत्तदृतु-भवानि ॥ १६ ॥

ततः उक्तहेतोः ॥ १७ ॥

त्वत्साहित्येन नरकोऽपि स्वर्गस्त्वद्राहित्येन स्वर्गोऽपि नरक इति मम निश्चयं जानन् ॥ १८ ॥

* "तल्पेषु" इति वा पाठः ।

अथ मामेवमव्यग्रां वनं नैव नयिष्यसि।
विषमद्यैव पास्यामि मा वशं द्विषतां गमम् * ॥ १९ ॥
पश्चादपि हि दुःखेन मम नैवास्ति जीवितम्।
उज्झितायास्त्वया नाथ! तदैव मरणं वरम् ॥ २० ॥
इमं हि सहितुं शोकं मुहूर्त्तमपि नोत्सहे।
किं पुनर्दशवर्षाणि त्रीणि चैकञ्च दुःखिता ॥ २१ ॥
इति सा शोकसन्तप्ता विलप्य करुणं बहु।
चुक्रोश पतिमायस्ता भृशमालिंग्य सस्वरम् ॥ २२ ॥
सा विद्धा बहुभिर्वाक्यैर्दिग्धैरिव गजाङ्गना।
चिरसन्नियतं बाष्पं मुमोचाग्निमिवारणिः ॥ २३ ॥
तस्याः स्फटिकसंकाशं वारि सन्तापसम्भवम्।
नेत्राभ्यां परिसुस्राव पङ्कजाभ्यामिवोदकम् ॥ २४ ॥

कैकेयीवन्मथितसिद्धान्तमाह,—अथेति। अव्यग्रां वनवासे दोषान-गणयन्तीं द्विषतां भरतादीनाम् ॥ १९ ॥

पश्चात्त्वद्गमनोत्तरकालं अतस्तदैव त्वद्वियोगकालएव ॥ २० ॥

किमिति विग्रह्य कथनेन वनवासकालसंख्याया अतिदुस्तरत्वं ध्वनयति ॥ २१ ॥

आयस्ता आयासं प्राप्ता। सस्वरं सशब्दम् ॥ २२ ॥

दिग्धैर्विषलिप्तबाणैः चिरसन्नियतं बहुकालं सन्निरुद्धम् ॥२३॥२४॥

* "मा विशं द्विषतां वशम्" इति वा पाठः।

तत् सितामलचन्द्राभं * मुखमायतलोचनम् ।
पर्य्यशुष्यत बाष्पेण जलोद्धृतमिवाम्बुजम् ॥ २५ ॥
तां परिष्वज्य बाहुभ्यां विसंज्ञामिव दुःखिताम् ।
उवाच वचनं रामः परिविश्वासयंस्तदा ॥ २६ ॥
न देवि ! तव दुःखेन स्वर्गमप्यभिरोचये ।
न हि मेऽस्ति भयं किञ्चित् स्वयम्भोरिव सर्वतः ॥ २७ ॥
तव सर्वमभिप्रायमविज्ञाय शुभानने ! ।
वासं न रोचयेऽरण्ये शक्तिमानपि रक्षणे ॥ २८ ॥
यत् सृष्टासि मया सार्द्धं वनवासाय मैथिलि ! ।
न विहातुं मया शक्या प्रीतिरात्मवता यथा ॥ २९ ॥

सिता पूर्णमासी तत्सम्बन्धी अमलो राह्वाद्यनुपरक्तो यश्चन्द्रस्तत्सदृशम्। (बाष्पेण शोकाश्रेरश्मणा) जलोद्धृतं जलमुद्धृतं यस्मात् । आहिताग्न्यादिः ॥ २५ ॥

परिविश्वासयन् उज्जीवयन् ॥ २६ ॥

तव दुःखेन त्वद्वियोगदुःखेन प्राप्तमपीति शेषः। स्वयम्भोः ब्रह्मणः स्वव्यतिरिक्तात्वस्त्वन्तराभावेन पूर्णबलत्वेन च यथा भयाभावः तद्वदेव ममापि सर्वतो भयाभावः ॥ २७ ॥

सर्वं समग्रमान्तरमभिप्रायमविज्ञाय तत एव हेतोस्तव वनवासं न रोचये नाङ्गीकृतवानितः प्रागिति शेषः ॥ २८ ॥

---

* "तच्चैवामलचन्द्राभम्" इति वा पाठः ।

धर्मस्तु गजनासोरु! सद्भिराचरितः पुरा।
तञ्चाहमनुवर्त्तिष्ये यथा सूर्य्यं सुवर्चला ॥ ३० ॥
न खल्वहं न गच्छेयं वनं जनकनन्दिनि!।
वचनं तन्नयति मां पितुः सत्योपबृंहितम् ॥ ३१ ॥
एष धर्मश्च सुश्रोणि पितुर्मातुश्च वश्यता।
आज्ञाञ्चाहं व्यतिक्रम्य नाहं जीवितुमुत्सहे ॥ ३२ ॥
अस्वाधीनं कथं दैवं प्रकारैरभिराध्यते।
स्वाधीनं समतिक्रम्य मातरं पितरं गुरुम् ॥ ३३ ॥

यत् सृष्टासि निश्चितासि मया सार्द्धं वनवासाय गन्तुमिति शेषः। यद्वा सृष्टासि अवतीर्णासि, अतस्त्वं मया विहातुं न शक्या। आत्मवता आत्मज्ञेन यथा प्रीतिर्दया हातुमशक्या ॥ २९ ॥

सर्वथा त्वां सह नेष्यामीत्याह,—धर्मस्त्विति। वानप्रस्थधर्म इत्यर्थः। तं पूर्वाचरितधर्मम्। त्वञ्च यथा सूर्य्यं सुवर्चलानुवर्त्तते तथा मामनुवर्त्तस्व ॥ ३० ॥

मम तु गमनं निश्चितमेवेत्याह,—न खल्विति। अहं वनं न गच्छेयमिति न किन्तु सर्वथा गच्छेयमेव, यतस्तत् पितुर्वचनं मां नयति ॥३१॥

ननु यदि तव नेच्छा, तदा पितृवच उल्लंघ्यापि तिष्ठेत्याह,—एष धर्म इति। एतत्पदार्थः पितुर्मातुश्च वश्यता इच्छानुवर्त्तिता। अतोऽहं तदाज्ञां व्यतिक्रम्य जीवितुं नोत्सहे इति मया निश्चितम् ॥ ३२ ॥

अस्वाधीनमप्रत्यक्षत्वात् तादृशं दैवं प्रकारैर्भावनामात्रसाध्याराधनप्रकारैः स्वाधीनं प्रत्यक्षदृश्यमानत्वात् ॥ ३३ ॥

यत्र त्रयस्त्रयो लोकाः पवित्रं तत्समं भुवि ।
नान्यदस्ति शुभापाङ्गे! तेनेदमभिराध्यते ॥ ३४ ॥
न सत्यं दानमानौ वा यज्ञो वाप्याप्तदक्षिणः ।
तथा बलकराः सीते ! यथा सेवा पितुर्मता ॥ ३५ ॥
स्वर्गो धनं वा धान्यं वा विद्याः पुत्राः सुखानि च ।
गुरुवृत्त्यनुरोधेन न किञ्चिदपि दुर्लभम् ॥ ३६ ॥
देवगन्धर्वगोलोकान् ब्रह्मलोकांस्तथापरान् ।
प्राप्नुवन्ति महात्मानो मातापितृपरायणाः ॥ ३७ ॥
स मां पिता यथा शास्ति सत्यधर्मपथे स्थितः ।
तथा वर्त्तितुमिच्छामि स हि धर्मः सनातनः ॥ ३८ ॥
मम सन्ना मतिः सीते ! नेतुं त्वां दण्डकावनम् ।

यत्र पित्राद्याराधने सति त्रयं धर्मार्थकामरूपं भवति त्रयो लोका स्वाराधिता भवन्ति । अनेन तदाराधनेन लोकत्रयान्तर्गतसकल देवताराधनफलं दर्शितम् । अतस्तत्समम् अन्यत् पवित्रं, पुण्यजनकम् यद्वा पविर्महाभयरूपसंसारः । "पविर्वज्रं महाभयम्" इत्यभिधानात् तस्मात् त्रायते तत्तेन संसारतारकमित्यर्थः अन्यत् त्रैलोक्ये नास्ति ते भुवि स्थितैरिदमाराध्यते ॥ ३४ ॥

बलकराः परलोकबलकरास्तद्धितावहा इति यावत् ॥ ३५ ॥

गुरुवृत्तिः गुरुचित्तवृत्तिः ॥ ३६ ॥ ३७ ॥

मा माम् ॥ ३८ ॥

वसिष्यामीति सा त्वं मामनुयातुं सुनिश्चिता ॥ ३९ ॥
सा हि दिष्टानवद्याङ्गि वनाय मदिरेक्षणे! ।
अनुगच्छस्व मां भीरु! सह धर्मचरी भव ॥ ४० ॥
सर्वथा सदृशं सीते! मम स्वस्य कुलस्य च ।
व्यवसायमनुक्रान्ता कान्ते! त्वमतिशोभनम् ॥ ४१ ॥
आरभस्व शुभश्रोणि! वनवासक्षमाः क्रियाः ।
नेदानीं त्वदृते सीते! स्वर्गोऽपि मम रोचते ॥ ४२ ॥
ब्राह्मणेभ्यश्च रत्नानि भिक्षुकेभ्यश्च भोजनम् ।
देहि चाशंसमानेभ्यः सन्त्वरस्व च मा चिरम् ॥ ४३ ॥

यतो वने वसिष्यामीति दृढ़निश्चयेन त्वं मामनुयातुं निश्चिता अतस्त्वां दण्डकावनं नेतुं मम या अमतिस्तद्विरुद्धा या मतिरासीत् सा इदानीं सन्ना विशीर्णा ॥ ३९ ॥

सा त्वं हि यतोऽधुना वनाय वनगमनाय दिष्टा मयानुज्ञातातो मामनुगच्छस्व। सहधर्मचरी भवेत्यनेन वनवासस्य साध्यस्य स्वधर्मस्य रक्षोवधजस्य त्वया विनासम्भव इति सूचितम् ॥ ४० ॥

व्यवसायं भर्त्रनुसरणनिश्चयम् अनुक्रान्ता प्रकर्षेण प्राप्ता प्रीत्यतिशयात् सम्बोधनद्वयम् ॥ ४१ ॥

क्रियाः दानादिक्रियाः इदानीमेवं दृढनिश्चये ॥ ४२ ॥

रत्नानि उत्तमवस्तूनि। भोजनमाशंसमानेभ्यो भिक्षुकेभ्यो भोजनं देहि ॥ ४३ ॥

भूषणानि महार्हाणि वरवस्त्राणि यानि च ।
रमणीयाश्च ये केचित् क्रीड़ार्थाश्चाप्युपस्कराः ॥ ४४ ॥
शयनीयानि यानानि मम चान्यानि यानि च ।
देहि स्वभृत्यवर्गस्य ब्राह्मणानामनन्तरम् ॥ ४५ ॥
अनुकूलन्तु सा भर्त्तुर्ज्ञात्वा गमनमात्मनः ।
क्षिप्रं प्रमुदिता देवी दातुमेव प्रचक्रमे ॥ ४६ ॥

इत्यार्षे रामायणे वाल्मीकीये अयोध्याकाण्डे
सीताया वनगमनप्रस्तावे रामसम्मति-
र्नाम त्रिंशः सर्गः ॥ ३० ॥

क्रीडार्था उपस्कराः स्वर्णमयपुत्त्रिकाद्युपकरणानि ॥ ४४ ॥

शयनीयानि मम च, चात् स्वस्य अन्यानि यानि च वस्तूनीति शेषः । ब्राह्मणामनन्तरं ब्राह्मणदानोत्तरमवशिष्टानि भृत्यवर्गेभ्यो देहीत्यर्थः ॥ ४५ ॥

अनुकूलमिष्टं गमनं वनानुगमनम् ॥ ४६ ॥

इति रामाभिरामे श्रीरामीये रामायणतिलके
अयोध्याकाण्डे त्रिंशः सर्गः ॥ ३० ॥

# एकत्रिंशः सर्गः।

एवं श्रुत्वा स संवादं लक्ष्मणः पूर्वमागतः।
बाष्पपर्य्याकुलमुखः शोकं सोढुमशक्नुवन्॥ १॥
स भ्रातुश्चरणौ गाढं निपीड्य रघुनन्दनः।
सीतामुवाचातियशां राघवञ्च महाव्रतम्॥ २॥
यदि गन्तुं कृता बुद्धिर्वनं मृगगजायुतम्।
अहं त्वानुगमिष्यामि वनमग्रे धनुर्धरः॥ ३॥
मया समेतोऽरण्यानि रम्याणि विचरिष्यसि।
पक्षिभिर्भृङ्गयूथैश्च संघुष्टानि समन्ततः॥ ४॥

संवादं रामसीतयोरिति शेषः। पूर्वमागतः कौशल्यागृहाद्राम-सीतासंवादप्रवृत्तेः पूर्वमेवागतः। शोकं स्वस्य वनगमनमङ्गीकरोति न वेति शङ्कया सम्भावितरामविरहजम्॥ १॥

भ्रातुश्चरणौ गाढं निपीड्य प्रणम्येति यावत्। अतिशयशामुत्कृष्ट-कीर्त्तिमतीं सीतां चक्षुरादिभिः प्रार्थयन्। महाव्रतं वनवासलक्षण-महाव्रतकृतनिश्चयं रामन्तु उवाच। चस्त्वथ स्वाभिमतप्राप्तौ सीता-शरणागमनमेव मद्गमनमङ्गीकारयत्वेवं मुख्य उपाय इति मत्वा तत्-प्रार्थना॥ २॥

न देवलोकाक्रमणं नामरत्वमहं वृणे ।
ऐश्वर्य्यञ्चापि लोकानां कामये न त्वया विना ॥ ५ ॥
एवं ब्रुवाणः सौमित्रिर्वनवासाय निश्चितः ।
रामेण बहुभिः सान्त्वैर्निषिद्धः पुनरब्रवीत् ॥ ६ ॥
अनुज्ञातस्तु भवता पूर्वमेव यदस्म्यहम् ।
किमिदानीं पुनरपि क्रियते मे निवारणम् ॥ ७ ॥
यदर्थं प्रतिषेधो मे क्रियते गन्तुमिच्छतः ।
एतदिच्छामि विज्ञातुं संशयो हि ममानघ ! ॥ ८ ॥
ततोऽब्रवीन्महातेजा रामो लक्ष्मणमग्रतः ।
स्थितं प्रागगामिनं धीरं याचमानं कृताञ्जलिम् ॥ ९ ॥

बुद्धिर्युवाभ्यामिति शेषः । त्वा त्वां वनगन्तारं अनुगमिष्यामि अनुः सहार्थे गमनकाले चाग्रत एव धनुर्धरो गमिष्यामि ॥ ३ ॥ ४ ॥

नत्विहैव भोगान् भुक्त्वा स्थातव्यमित्यत्राह,—नेति । आक्रमणमारोहः ॥ ५ ॥ ६ ॥

पूर्वमेव भवतानुज्ञातः । तस्मादपरितापः सन् त्वमप्यनुविधाय माम् । प्रतिसंहारय क्षिप्रमाभिषेचनिकीं क्रियामित्युक्तेः । किञ्च पूर्वं अवतरणसमये इत्यप्यर्थः ॥ ७ ॥

एतत् प्रतिषेधप्रयोजनम् । संशयः पूर्वं केनाभिप्रायेणानुमतिरिदानीं केनाभिप्रायेण प्रतिषेध इति सन्देहः ॥ ८ ॥

स्निग्धो धर्मरतो धीरः सततं सत्पथे स्थितः।
प्रियः प्राणसमो वश्यो विधेयश्च सखा च मे ॥ १० ॥
मयाद्य सह सौमित्रे! त्वयि गच्छति तद्वनम्।
को भजिष्यति कौशल्यां सुमित्रां वा यशस्विनीम् ॥ ११ ॥
अभिवर्षति कामैर्यः पर्य्यन्यः पृथिवीमिव।
स कामपाशपर्य्यस्तो महातेजा महीपतिः ॥ १२ ॥
सा हि राज्यमिदं प्राप्य नृपस्याश्वपतेः सुता।
दुःखितानां सपत्नीनां न करिष्यति शोभनम् ॥ १३ ॥
न स्मरिष्यति कौशल्यां सुमित्राञ्च सुदुःखिताम्।
भरतो राज्यमासाद्य कैकेय्यां पर्य्यवस्थितः ॥ १४ ॥

प्रागगामिनं वनं प्रति प्रथमगमनाभिप्रायवन्तम्। याचमानं तत्रानुमतिमिति शेषः ॥ ९ ॥

वश्यविधेयावसकृद्व्याख्यातौ ॥ १० ॥

को भजिष्यतीति। भरिष्यतीति पाठान्तरम्। एवञ्च मातृसेवार्थमेव प्रतिषिध्यते। अलङ्कारप्रतिसंहारोक्तिश्च उत्सवार्थधृताधिकालङ्कारविषया। मदनुविधानञ्च मदिष्टाप्रविबन्धरूपमिति भावः ॥ ११ ॥

कामैरिष्टान्नपानैः ननु भर्त्तैवास्या रक्षकस्तत्राह,—स कामपाशेन पर्य्यस्तः कैकेय्यनुरागेण बद्ध इत्यर्थः ॥ १२ ॥ १३ ॥

पुत्रत्वाद्भरतो रक्षिष्यतीत्यत्राह,—न स्मरिष्यतीति। कैकेय्यां तन्नियोगे सपत्नीतिरस्कारविषयके पर्य्यवस्थितः प्रतिष्ठितः ॥ १४ ॥

तामार्य्यां स्वयमेवेह राजानुग्रहणेन वा।
सौमित्रे! भर कौशल्यामुक्तमर्थममुं चर॥ १५॥
एवं मयि च ते भक्तिर्भविष्यति सुदर्शिता।
धर्मज्ञ! गुरुपूजायां धर्मश्चाप्यतुलो महान्॥ १६॥
एवं कुरुष्व सौमित्रे! मत्कृते रघुनन्दन!।
अस्माभिर्विप्रहीनाया मातुर्नो न भवेत् सुखम्॥ १७॥
एवमुक्तस्तु रामेण लक्ष्मणः श्लक्ष्णया गिरा।
प्रत्युवाच तदा रामं वाक्यज्ञो वाक्यकोविदम्॥ १८॥
तवैव तेजसा वीर! भरतः पूजयिष्यति।
कौसल्याञ्च सुमित्राञ्च प्रयतो नास्ति संशयः॥ १९॥
यदि दुःस्थो * न रक्षेत भरतो राज्यमुत्तमम्।
प्राप्य दुर्मनसा वीर! गर्वेण च विशेषतः॥ २०॥

तर्हि मयापि कथं रक्षणं कर्त्तुं शक्यमत आह,—राजानुग्रहणेन वा दशरथानुग्रहसम्पादनेनेत्यर्थः॥ १५॥

मयि भक्तिः मदाज्ञायाः पालनात्। गुरुः कौशल्यादिः॥ १६॥

विप्रहीनायाः वियुक्तायाः नः अस्माकम्॥ १७॥ १८॥

मातृसेवायां भरत एवास्तीत्याह,—तवैवेति। अनेन रामोक्तानुपपत्तिपरिहारः। अप्रमेयबलराममातुरसेवायां मम महाननर्थ इति मत्वा भरत एव तां पूजयिष्यतीत्यर्थः॥ १९॥

* "दुष्टः" इति वा पाठः।

तमहं दुर्मतिं क्रूरं बधिष्यामि न संशयः ।
तत्पक्षानपि तान् सर्वान् त्रैलोक्यमपि किन्तु सा ॥ २१ ॥
कौसल्या बिभृयादार्य्या सहस्रं मद्विधानपि ।
यस्याः सहस्रं ग्रामाणां संप्राप्तमुपजीविनाम् ॥ २२ ॥
तदात्मभरणे चैव मम मातुस्तथैव च ।
पर्य्याप्ता मद्विधानाञ्च भरणाय मनस्विनी ॥ २३ ॥
कुरुष्व मामनुचरं वैधर्म्यं नेह विद्यते ।
कृतार्थोऽहं भविष्यामि तव चार्थः प्रकल्प्यते ॥ २४ ॥

तदेव कालान्तरभवं भयं दर्शयति,— यदीति । दुःस्थः दुर्मार्गस्थः राज्यं प्राप्येत्यन्वयः । दुर्मनसा कैकेय्यनुरोधात् दुष्टमनसा ॥ २० ॥

त्रैलोक्यमपि तत्पक्षं बधिष्यामीत्यनुकर्षः । किन्तु सेत्युत्तरश्लोकान्वयि ॥ २१ ॥

किञ्च स्वात्मभरणे कौशल्यायाः कस्याप्यपेक्षा नेत्याह,—किन्तु सा कौसल्येत्यादि । कुतस्तस्या एवं शक्तिस्तत्राह,—यस्या इति । यस्या उपजीविनां उपजीविभिः सहस्रं ग्रामाणां प्राप्तं वर्त्तते ॥ २२ ॥

यदेवं तदिति ॥ २३ ॥

यदेवमतो मामनुचरं कुरुष्व मत्सेवामनुमन्यस्व । इह मत्सेवानुमतौ वैधर्म्यं वैपरीत्यसाधकं न विद्यते । त्वदुक्तहेतोरन्यथासिद्धेर्दर्शितत्वात् । तवार्थः फलमूलाद्याहरणरूपस्त्वत्प्रयासं विना प्रकल्प्यते प्रसिध्यति अहञ्च तेन कृतार्थो भवामि अत उभयहितं मदनुगमनमिति भावः ॥ २४ ॥

धनुरादाय सगुणं खनित्रपिटकाधरः ।
अग्रतस्ते गमिष्यामि पन्थानं तव दर्शयन् ॥ २५ ॥
आहरिष्यामि ते नित्यं मूलानि च फलानि च ।
वन्यानि च तथान्यानि स्वाहार्हाणि तपस्विनाम् ॥ २६ ॥
भवांस्तु सह वैदेह्या गिरिसानुषु रंस्यसे ।
अहं सर्वं करिष्यामि जाग्रतः स्वपतश्च ते ॥ २७ ॥
रामस्त्वनेन वाक्येन सुप्रीतः प्रत्युवाच तम् ।
व्रजापृच्छस्व सौमित्रे ! सर्वमेव सुहृज्जनम् ॥ २८ ॥
ये च राज्ञो ददौ दिव्ये महात्मा वरुणः स्वयम् ।
जनकस्य महायज्ञे धनुषी रौद्रदर्शने ॥ २९ ॥
अभेद्ये कवचे दिव्ये तूणी चाक्षय्यसायकौ ।
आदित्यविमलाभौ द्वौ खड्गौ हेमपरिष्कृतौ ॥ ३० ॥

तदेव दर्शयति धनुरित्यादिना,—श्वापदादिभ्यो रक्षार्थं धनुर्ग्रहः । पिटका फलमूलाद्याहरणयोग्या वंशपेटी ॥ २५ ॥

स्वाहार्हाणि होमयोग्यानि हविर्भूतानि । स्वाहाराणीति पाठे सुष्ठु-आहारयोग्यानि ॥ २६ ॥

स्वपतस्तेत्यनेन रात्रौ स्वस्य निर्निद्रत्वं ध्वनयति ॥ २७ ॥

अनेन वाक्येन स्वपतस्तेत्यन्तेन व्रज अनुव्रज । आपृच्छस्व सुहृज्जना-नामाज्ञां गृहाण ॥ २८ ॥

महायज्ञे तुष्टो वरुणो राज्ञो जनकस्य धनुरादिकं ददौ । तच्च

सत्कृत्य निहितं सर्वमेतदाचार्य्यसद्मनि ।
सर्वमायुधमादाय क्षिप्रमाव्रज लक्ष्मण ! ॥ ३१ ॥
स सुहृज्जनमामन्त्र्य वनवासाय निश्चितः ।
इक्ष्वाकुगुरुमागम्य जग्राहायुधमुत्तमम् ॥ ३२ ॥
तद्दिव्यं राजशार्दूलः सत्कृतं माल्यभूषितम् ।
रामाय दर्शयामास सौमित्रिः सर्वमायुधम् ॥ ३३ ॥
तमुवाचात्मवान् रामः प्रीत्या लक्ष्मणमागतम् ।
काले त्वमागतः सौम्य ! काङ्क्षिते मम लक्ष्मण ! ॥ ३४ ॥
अहं प्रदातुमिच्छामि यदिदं मामकं धनम् ।
ब्राह्मणेभ्यस्तपस्विभ्यस्त्वया सह परन्तप ! ॥ ३५ ॥
वसन्तीह दृढं भक्त्या गुरुषु द्विजसत्तमाः ।
तेषामपि च मे भूयः सर्वेषाञ्चोपजीविनाम् ॥ ३६ ॥

जनकेनास्माकं यौतुकत्वेन दत्तं तत्सर्वमाचार्यसद्मनि आचार्यं सत्कृत्य निहितं तदादाय क्षिप्रमाव्रज आगच्छ। अत्रैवमनुवादादेव तत्र जनकाय वरुणकार्टकधनुरादिदानं रामलक्ष्मणाभ्याञ्च तत्कार्टकतद्दानं बोध्यम्। आयुधमिति जात्या॥ २९ ॥ ३० ॥ ३१ ॥

स लक्ष्मणः ॥ ३२ ॥

राजशार्दूलः क्षत्रियश्रेष्ठः ॥ ३३ ॥

मम कांक्षिते मदभीष्टप्रयोजननिमित्तसम्पादनोचितकाले आगतः ॥ ३४ ॥ ३५ ॥

वसिष्ठपुत्रन्तु सुयज्ञमार्य्यं
त्वमानयाशु प्रवरं द्विजानाम् ।
अभिप्रयास्यामि वनं समस्तान्
अभ्यर्च्य शिष्टानपरान् द्विजातीन् ॥ ३० ॥

इत्यार्षे रामायणे वाल्मीकीये अयोध्याकाण्डे
रामलक्ष्मणसंवादो नाम एकत्रिंशः
सर्गः ॥ ३१ ॥

इह मत्समीपे गुरुषु दृढ़भक्त्योपेताः । एतेन पूर्णविद्यतया दान-पात्रत्वं सूचितम् ॥ २९ ॥

वसिष्ठपुत्रं सुयज्ञमानयेत्यनेन मूलप्रभोर्दशरथस्य वसिष्ठः पुरोहितः तत्पुत्रस्य तत्पुत्र इति न्यायेन सुयज्ञस्य विशिष्यानयननियोगः । यस्यैव गृहे आयुधस्थापनमिति शेषः ॥ ३० ॥

इति रामाभिरामे श्रीरामीये रामायणतिलके
अयोध्याकाण्डे एकत्रिंशः सर्गः ॥ ३१ ॥

## द्वात्रिंशः सर्गः ।

ततः शासनमाज्ञाय भ्रातुः प्रियकरं हितम् ।
गत्वा स प्रविवेशाशु सुयज्ञस्य निवेशनम् ॥ १ ॥

तं विप्रमग्न्यगारस्थं वन्दित्वा लक्ष्मणोऽब्रवीत् ।
सखेऽभ्यागच्छ पश्य त्वं वेश्म दुष्करकारिणः ॥ २ ॥

ततः सन्ध्यामुपास्थाय गत्वा सौमित्रिणा सह ।
ऋद्धं * स प्राविशल्लक्ष्म्या रम्यं रामनिवेशनम् ॥ ३ ॥

तमागतं वेदविदं प्राञ्जलिः सीतया सह ।
सुयज्ञमभिचक्राम राघवोऽग्निमिवार्चितम् ॥ ४ ॥

जातरूपमयैर्मुख्यैरङ्गदैः कुण्डलैः शुभैः ।

तत इति ॥ १ ॥

अग्न्यागारं अग्निहोत्रशाला । हे सखे ! रामस्य वेश्म आगच्छ । दुष्करकारिणो रामस्य प्राप्तराज्यत्यागपूर्वं वनं जिगमिषोः कृत्यञ्च पश्येति शेषः ॥ २ ॥

सन्ध्यां माध्याह्निकीम् ॥ ३ ॥

अभिचक्राम प्रत्युत्थानादि कृतवान् । अर्चितमग्निमिव होमकाले इति शेषः ॥ ४ ॥

* "जुष्टम्" इति वा पाठः ।

सहेमसूत्रैर्मणिभिः केयूरैर्वलयैरपि ॥ ५ ॥
अन्यैश्च रत्नैर्बहुभिः काकुत्स्थः प्रत्यपूजयत् ।
सुयज्ञं स तदोवाच रामः सीताप्रचोदितः ॥ ६ ॥
हारञ्च हेमसूत्रञ्च भार्य्यायै सौम्य ! हारय ।
रशनाञ्चाथ सा सीता दातुमिच्छति ते सखी ॥ ७ ॥
अङ्गदानि च चित्राणि केयूराणि शुभानि च ।
प्रयच्छति सखे ! तुभ्यं भार्य्यायै गच्छती वनम् ॥ ८ ॥
पर्य्यङ्कमग्र्यास्तरणं नानारत्नविभूषितम् ।
तमपीच्छति वैदेही प्रतिष्ठापयितुं त्वयि ॥ ९ ॥
नागः शत्रुञ्जयो नाम मातुलोऽयं ददौ मम ।
तं ते निष्कसहस्रेण ददामि द्विजपुङ्गव ! ॥ १० ॥
इत्युक्तः स तु रामेण सुयज्ञः प्रतिगृह्य तत् ।

अङ्गदं बाहुमूलधार्य्यं भूषणं केयूरं तदधोभागस्थम् । हेमसूत्रैर्मणिभिः स्वर्णसूत्रस्यूतमुक्तादिरत्नमालाभिः ॥ ५ ॥

सीताप्रचोदितः सीतया सुयज्ञपत्न्यै सखीत्वाद्दिव्याभरणदानाय प्रचोदितः ॥ ६ ॥

हेमसूत्रं उरोभूषणविशेषः । हारय सेवकद्वारा प्रापय रशना काञ्ची । सा मदनुगामिनी सखी तव भार्य्याया इति शेषः ॥ ७ ॥

तुभ्यं भार्य्यायै च । गच्छती सुमभाव आर्षः ॥ ८ ॥

त्वयि त्वद्गृहे प्रतिष्ठापयितुं दानपूर्वकं प्रापयितुम् ॥ ९ ॥

रामलक्ष्मणसीतानां प्रयुयोजाशिषः शिवाः ॥ ११ ॥
अथ भ्रातरमव्यग्रं प्रियं रामः प्रियंवदम्।
सौमित्रिं तमुवाचेदं ब्रह्मेव त्रिदशेश्वरम् ॥ १२ ॥
अगस्त्यं कौशिकञ्चैव तावुभौ ब्राह्मणोत्तमौ।
अर्चयाहूय सौमित्रे! रत्नैः शस्यमिवाम्बुभिः ॥ १३ ॥
तर्पयस्व महाबाहो! गोसहस्रेण राघव!।
सुवर्णरजतैश्चैव मणिभिश्च महाधनैः ॥ १४ ॥
कौसल्याञ्च य आशीर्भिर्भक्तः पर्युपतिष्ठति।
आचार्य्यस्तैत्तिरीयाणामभिरूपश्च वेदवित् ॥ १५ ॥
तस्य यानञ्च दासीश्च सौमित्रे! संप्रदापय।
कौशेयानि च वस्त्राणि यावत्तुष्यति स द्विजः ॥ १६ ॥

शत्रुञ्जयो नाम तथाप्रसिद्धं यं गजं मातुलो मम ददौ तं गजं ते ददामि निष्कसहस्रेण स्वनामाङ्कितनिष्कसहस्रदक्षिणया ॥ १० ॥ ११ ॥

ब्रह्मा त्रिदशेश्वरमिव नियोक्तृनियोज्ययोः परापरप्रभुत्वे दृष्टान्तः ॥ १२ ॥

कौशिको विश्वामित्रः। आहूयार्चय अनन्तरं रत्नैस्तर्पय ॥१३॥१४॥

तैत्तिरीयाणां तैत्तिरिशाखाध्येतृणामाचार्य्यः यो द्विजः कौसल्यामाशीर्भिः पर्युपतिष्ठति सेवते अभिरूपः श्लाघ्यगुणः ॥ १५ ॥

यावत् यावता धनेन तुष्यति तावद्दापय। कौशेयानि कृमिकोशोत्थानि ॥ १६ ॥

सूतश्चित्ररथश्चार्यः सचिवः सुचिरोषितः ।
तोषयैनं महार्हैश्च रत्नैर्वस्त्रैर्धनैस्तथा ॥ १७ ॥
पशुकाभिश्च सर्वाभिर्गवां दशशतेन च ।
ये च मे कठकालापा बहवो दण्डमाणवाः ॥ १८ ॥
नित्यस्वाध्यायशीलत्वान्नान्यत् कुर्वन्ति किञ्चन ।
अलसाः स्वादुकामाश्च महताञ्चापि सम्मताः ॥ १९ ॥
तेषामशीतियानानि रत्नपूर्णानि दापय ।
शालिवाहसहस्रञ्च द्वे शते भद्रकांस्तथा * ।

चित्ररथनामा सुमन्त्रादन्यः सूतः, सुचिरोषितः चिरकालवृद्धः ॥ १७॥

पशुका अजादयो यज्ञपशवः महिषादयश्च, कठकालापा कठकालापसंबन्धिशाखाध्यायिनः, दण्डमाणवा दण्डप्रधाना मानवा उपकुर्वाणा ब्रह्मचारिणः ॥ १८ ॥

अन्यव्रतोपवासादि, अलसाः भिक्षादौ, स्वादुकामाः सदन्नकामाः । तेषां दानयोग्यत्वायाह,—महतामिति । तपो हि स्वाध्याय इति श्रुतेर्नित्यतपस्वित्वेन महतां सम्मताः ॥ १९ ॥

यानानि उष्ट्राः । शालीन् वहन्तीति तादृशबलीवर्दानां सहस्रम् । भद्रकान् तदाख्यान् धान्यविशेषांस्तथाकमुद्गादिरूपान् व्यञ्जनार्हान् दापय व्यञ्जनार्थं दधिघृतार्थम् उपाकुरु देहि ॥ २० ॥

---

* "भद्रकान् संप्रदापय" इति वा पाठः ।

व्यञ्जनार्थञ्च सौमित्रे ! गोसहस्रमुपाकुरु ॥ २० ॥
मेखलीनां महासङ्घ: कौशल्यां समुपस्थित: ॥ २१ ॥
तेषां सहस्रं सौमित्रे ! प्रत्येकं संप्रदापय ।
अम्बा यथा नो नन्देच्च कौशल्या मम दक्षिणाम् ॥ २२ ॥
तथा द्विजातींस्तान् सर्वान् लक्ष्मणार्चय सर्वशः ।
ततः पुरुषशार्दूलस्तद्धनं लक्ष्मणः स्वयम् ॥ २३ ॥
यथोक्तं ब्राह्मणेन्द्राणामददाद्धनदो यथा ।
अथाब्रवीद्वाष्पगलांस्तिष्ठतश्चोपजीविनः ॥ २४ ॥
स प्रदाय बहुद्रव्यमेकैकस्योपजीवनम् ।
लक्ष्मणस्य च यद्वेश्म गृहञ्च यदिदं मम ॥ २५ ॥
अशून्यं कार्य्यमेकैकं यावदागमनं मम ।
इत्युक्त्वा दुःखितं सर्वं जनं तमुपजीविनम् ॥ २६ ॥
उवाचेदं धनाध्यक्षं धनमानीयतां मम ।

मेखलीनां ब्रह्मचारिणां, दीर्घ आर्षः । समुपस्थितः विवाहार्थमिति शेषः ॥ २१ ॥

सहस्रं गवां निष्काणां वा नोऽस्माकमम्बा कौशल्या यथा मम दक्षिणां मया तदाश्रितब्रह्मचारिवर्गस्य दापितां नन्देत् तथा तानर्चयेत्यन्वयः ॥ २२ ॥ २३ ॥

बाष्पगलान् बाष्पगद्गदान् ॥ २४ ॥

उपजीवनं जीवनसाधनम् ॥ २५ ॥

ततोऽस्य धनमाजह्रुः सर्व एवोपजीविनः ॥ २७ ॥
स राशिः सुमहांस्तत्र दर्शनीयो ह्यदृश्यत ।
ततः स पुरुषव्याघ्रस्तद्धनं सहलक्ष्मणः ॥ २८ ॥
द्विजेभ्यो बालवृद्धेभ्यः कृपणेभ्यो ह्यदापयत् ।
तत्रासीत् पिङ्गलो गार्ग्यस्त्रिजटो नाम वै द्विजः ॥ २९ ॥
क्षतवृत्तिर्वने नित्यं फालकुद्दाललाङ्गली ।
तं वृद्धं तरुणी भार्य्या बालानादाय दारकान् ॥ ३० ॥
अब्रवीद् ब्राह्मणं वाक्यं स्त्रीणां भर्त्ता हि देवता * ।
अपास्य फालं कुद्दालं कुरुष्व वचनं मम ॥ ३१ ॥
रामं दर्शय धर्मज्ञं यदि किञ्चिदवाप्स्यसे ।

एकैकं प्रत्येकं यावन्ममागमनमशून्यं कार्य्यं पर्य्यायेणैकशः स्थित्वा पूर्ववद्रक्षणीयमित्यर्थः ॥ २६ ॥ २७ ॥ २८ ॥

कृपणेभ्यः दीनेभ्यः तत्र देशे गार्ग्यः गर्गगोत्रः ॥ २९ ॥

क्षतेन खननेन वृत्तिर्जीविका यस्य क्षीणवृत्तिरिति वा । उञ्छवृत्तिरिति पाठान्तरम् । फालं हलावयवविशेषः तत्सदृशं मृत्खननार्थं लोहमयमत्र विवक्षितम् । कुद्दालकं खननसाधनम् । लाङ्गलं हलाकारो दण्डः फलापाकर्षणार्थः । दारकाः पुत्राः ॥ ३० ॥

स्त्रीणां भर्त्ता हि देवतेति पाठे यद्यपि देवतात्वादाज्ञानर्हस्तथापि प्रीत्या मद्वचनं कुरुष्वेत्यर्थः ॥ ३१ ॥

---

* "दारिद्र्येणाभिपीड़िता" इति वा पाठः ।

स भार्य्याया वचः श्रुत्वा शाटीमाच्छाद्य दुश्छदाम् ॥३२॥
स प्रातिष्ठत पन्थानं यत्र रामनिवेशनम्।
भृग्वङ्गिरःसमं दीप्त्या त्रिजटं जनसंसदि ॥ ३३ ॥
आपञ्चमायाः कक्ष्याया नैनं कश्चिदवारयत्।
स राममासाद्य तदा त्रिजटो वाक्यमब्रवीत् ॥ ३४ ॥
निर्धनो बहुपुत्रोऽस्मि राजपुत्र महाबल!।
क्षतवृत्तिर्वने नित्यं प्रत्यवेक्षस्व मामिति ॥ ३५ ॥
तमुवाच ततो रामः परिहाससमन्वितम्।
गवां सहस्रमप्येकं न च विश्राणितं मया ॥ ३६ ॥
परिक्षिपसि दण्डेन यावत्तावदवाप्स्यसे।
स शाटीं परितः कक्ष्यां सम्भ्रान्तः परिवेष्ट्य ताम् ॥३७॥

यदीत्यस्य दर्शयसि तदा सर्वथेति शेषः। दुश्छदाम् अतिजीर्णत्वात् छादनायोग्याम् ॥ ३२ ॥

यत्र रामनिवेशनं यस्मिन् पथि रामनिवेशनं प्राप्यते तं पन्थानमास्थाय प्रातिष्ठत। दीप्त्या ब्रह्मवर्चसेन ॥ ३३ ॥ ३४ ॥

प्रत्यवेक्षस्व मां मयि कृपां कुर्वित्यर्थः ॥ ३५ ॥

परिहाससमन्वितं क्रीडाप्रयोजनव्यवहारविशेषसमन्वितम्। अस्त्येकमिति पाठे तावदेव शिष्टमस्तीत्यर्थः अप्येकमिति पाठे गवामसंख्यातानां मध्ये एकमपि सहस्रं मया न विश्राणितं दत्तमतोऽत्रैव स्थित्वा दण्डेन यावद्दूरवाकीर्णं यावन्तं देशं परिक्षिपसि परिगच्छसि तावत्

आविध्य दण्डं चिक्षेप सर्वप्राणेन वेगतः ।
स तीर्त्वा सरयूपारं दण्डस्तस्य कराच्च्युतः ॥ ३८ ॥
गोव्रजे बहुसाहस्रे पपातोक्षाणसन्निधौ ।
तं परिष्वज्य धर्मात्मा आ तस्मात् सरयूतटात् * ॥३९॥
आनयामास ता गावस्त्रिजटस्याश्रमं प्रति ।
उवाच च तदा रामस्तं गार्ग्यमभिसान्त्वयन् ॥ ४० ॥
मन्युर्न खलु कर्त्तव्यः परिहासो ह्ययं मम ॥ ४१ ॥
इदं हि तेजस्तव यद्दुरत्ययं
तदेव जिज्ञासितुमिच्छता मया ।
इमं भवानर्थमभिप्रचोदितो
वृणीष्व किञ्चेदपरं व्यवस्यति ॥ ४२ ॥

तावद्देशावस्था गा अवाप्स्यसि । ब्राह्मणस्य गोग्रहणचापलकौतुकदर्शनार्थमेतद्भगवद्वचनम् । संभ्रान्तः त्वरितः ॥ ३६ ॥ ३७ ॥

सर्वप्राणेन सर्वबलेन आविध्य भ्रामयित्वा वेगतः वेगेन स दण्डस्तस्य कराच्च्युतः सरयूपारन्तीर्त्वातिक्रम्योक्षाणसन्निधौ उक्ष्णां वृषभानां सन्निधिर्यत्र । आर्ष आनङ् तादृशे गोव्रजे पपात । आ तस्मात् सरयूतटात् परपारस्थसरयूमभिव्याप्य या गावः स्थितास्ता आनयामास त्रिजटाश्रमं प्रति आनयामास चेति शेषः ॥ ३८ ॥ ३९ ॥ ४० ॥

अयं दण्डपरिक्षेपवचनरूपः परिहासएवेत्यर्थः ॥ ४१ ॥

---

* "आ व्याप्य सरयूतटात्" इति वा पाठः ।

ब्रवीमि सत्येन न तेऽस्ति यन्त्रणा *
धनं हि यद्यन्मम विप्रकारणात्।
भवत्सु सम्यक्प्रतिपादनेन
मयार्जितञ्चैव † यशस्करं भवेत्॥ ४३॥
ततः सभार्य्यस्त्रिजटो महामुनि-
र्गवामनीकं प्रतिगृह्य मोदितः।
यशोबलप्रीतिसुखोपबृंहिणी-
स्तदाशिषः प्रत्यवदन्महात्मनः॥ ४४॥

इदं हीति। इदं दूरपरिक्षेपजनकं तेजः शक्तिस्तव वृद्धस्यापि यत्तदेव जिज्ञासितुं ज्ञातुम्। स्वार्थे सन् आर्षः। दृच्छता, इममर्थं दण्ड-प्रक्षेपरूपमर्थं भवान् प्रचोदितोऽसि। अपरं गोभ्योऽन्यदपि किञ्चित् बहुमूल्यमपि वस्तु वरितुं व्यवस्यसि चेत् तदपि वृणीष्व॥ ४२॥

इदमुपचारमात्रमिति न मन्तव्यमित्याह,—ब्रवीमीति। यन्त्रणा संकोचः। हि यतः। मम यद्यद्धनं तद्विप्रकारणात् विप्रप्रयोजन-सम्पादनार्थम्। कथं तथात्वमत आह। भवत्सु विप्रेषु सम्यग्यथा-शास्त्रं प्रतिपादनेन दानेन तत्फलरूपेण हेतुना दानरूपफलार्थं मया-र्जितं धनं मे यशस्करं भवेत् न तु भूमिनिक्षेपफलकम्॥ ४३॥

मोदितः संजातमोदः यशादीनां उपबृंहिणीः विवर्धनीः महा-त्मनः रामस्य तदा आशिषः प्रत्यवदत्॥ ४४॥

स चापि रामः प्रतिपूर्णपौरुषो
महाधनं धर्मबलैरुपार्जितम् ।
नियोजयामास सुहृज्जनेऽचिरात्
यथार्हसम्मानवचःप्रचोदितः ॥ ४५ ॥

द्विजः सुहृद्भृत्यजनोऽथवा तदा
दरिद्रभिक्षाचरणश्च यो भवेत् ।
न तत्र कश्चिन्न बभूव तर्पितो
यथार्हसम्माननदानसंभ्रमैः ॥ ४६ ॥

इत्यार्षे रामायणे वाल्मीकीये अयोध्याकाण्डे
द्विजेभ्यो धनविश्राणनं नाम द्वात्रिंशः
सर्गः ॥ ३२ ॥

धर्मबलैर्धर्मयुक्तपराक्रमैः यथार्हं कृतैः सम्मानवचोभिः सुहृज्जनीयैः प्रचोदितः प्रेरितः प्रेरितदानव्यापारः ॥ ४५ ॥

सुहृद्भृत्यजनः तद्युक्तश्चार्थं आद्यजन्तमेतत् । दरिद्रः सन् भिक्षाचरणकर्त्ता संभ्रम आदरः ॥ ४६ ॥

इति रामाभिरामे श्रीरामीये रामायणतिलके
अयोध्याकाण्डे द्वात्रिंशः सर्गः ॥ ३२ ॥

## त्रयस्त्रिंशः सर्गः।

दत्त्वा तु सह वैदेह्या ब्राह्मणेभ्यो धनं बहु।
जग्मतुः पितरं द्रष्टुं सीतया सह राघवौ ॥ १ ॥
ततो गृहीते प्रेष्याभ्यामशोभेतां तदायुधे।
मालादामभिरासक्ते सीतया समलङ्कृते ॥ २ ॥
ततः प्रासादहर्म्याणि विमानशिखराणि च।
अभिरुह्य जनः श्रीमानुदासीनो व्यलोकयत् ॥ ३ ॥
न हि रथ्यासु शक्यन्ते गन्तुं बहुजनाकुलाः।
आरुह्य तस्मात् प्रासादाद्दीनाः पश्यन्ति राघवम् ॥ ४ ॥
पदातिं मानुजं दृष्ट्वा ससीतञ्च जनास्तदा *।

दत्त्वेति ॥ १ ॥

आयुधे इति जात्यभिप्रायेण। सीतयालंकृते पूजार्थचन्दनादिभिः ॥ २ ॥

विमानशिखराणि सप्तभूमिकगृहाग्रभागाः। प्रासादस्त्रिभूमिकः। हर्म्यं राजगृहम्। उदासीनः अरक्षितत्वेन निरुत्सुकः व्यलोकयत् राममिति शेषः ॥ ३ ॥

यतो बहुजनाकुलत्वाद्रथ्या गन्तुं न सुखेन शक्यन्ते तस्मात् प्रासादमारुह्य प्रासादात्तत्र प्रासादे संस्थाय ॥ ४ ॥

* "पदातिं वर्जितच्छत्रं रामं दृष्ट्वा तदा जनाः" इति वा पाठः।

ऊचुर्बहुजना * वाचः शोकोपहतचेतसः ॥ ५ ॥
यं यान्तमनुयातिस्म चतुरङ्गबलं महत् ।
तमेकं सीतया सार्धमनुयाति स्म लक्ष्मणः ॥ ६ ॥
ऐश्वर्यस्य रसज्ञः सन् कामानाञ्चाकरो महान् † ।
नेच्छत्येवानृतं कर्तुं वचनं धर्मगौरवात् ॥ ७ ॥
या न शक्या पुरा द्रष्टुं भूतैराकाशगैरपि ।
तामद्य सीतां पश्यन्ति राजमार्गगता जनाः ॥ ८ ॥
अङ्गरागोचितां सीतां रक्तचन्दनसेविनीम् ।
वर्षमुष्णञ्च शीतञ्च नेष्यत्याशु विवर्णताम् ॥ ९ ॥
अद्य नूनं दशरथः सत्त्वमाविश्य भाषते ।
न हि राजा प्रियं पुत्रं विवासयितुमर्हति ॥ १० ॥
निर्गुणस्यापि पुत्रस्य कथं स्याद्विनिवासनम् ।

दीनत्वे हेतुमाह,—यदातिर्मिति ॥ ५ ॥ ६ ॥
रसज्ञः सुखज्ञः कामानां भोग्यवस्तूनाम् । वचनं पितृवचनम् ॥७॥
भूतैः प्राणिभिः वनप्रयाणानुमत्यर्थं राजसन्निधौ गमनसमये ॥८॥९॥
सत्त्वं पिशाचं राजा स्वस्वभावे वर्त्तमानः । हि यतः न पुत्रं विवा-सयितुमर्हति ॥ १० ॥

---

* "बहुविधा" इति वा पाठः ।
† "कामानाञ्चैव कामदः" इति वा पाठः ।

किं पुनर्यस्य लोकोऽयं जितो वृत्तेन केवलम् ॥ ११ ॥
आनृशंस्यमनुक्रोशः श्रुतं शीलं दमः शमः।
राघवं शोभयन्त्येते षड्गुणाः पुरुषर्षभम् ॥ १२ ॥
तस्मात् तस्योपघातेन प्रजाः परमपीड़िताः।
औदकानीव सत्त्वानि ग्रीष्मे सलिलसंक्षयात् ॥ १३ ॥
पीड़या पीड़ितं सर्वं जगदस्य जगत्पतेः।
मूलस्येवोपघातेन वृक्षः पुष्पफलोपगः ॥ १४ ॥
मूलं ह्येष मनुष्याणां धर्मसारो महाद्युतिः।
पुष्पं फलञ्च पत्रञ्च शाखाश्चास्येतरे जनाः ॥ १५ ॥

तदेवाह,—निर्गुणस्यापीति। वृत्तेन चरित्रेण तस्मात् पिशाचग्रस्त एवेति भावः ॥ ११ ॥

आनृशंस्यमहिंसा। अनुक्रोशो दया। श्रुतम् अनुष्ठानपर्य्यवसायिशास्त्राध्ययनम्। शीलं सत्स्वभावः। दमो बाह्येन्द्रियनिग्रहः। शमश्चित्तनिग्रहः ॥ १२ ॥

तस्मात्तस्य षड्गुणवत्त्वात् उपघातः पीड़नम्। पाठान्तरेऽपि स एवार्थः ॥ १३ ॥

जगत्या फलत्वादपि तस्योपघातेन जगत्पीड़ितमित्याह,—पीड़येति। पुष्पफलोपगः पुष्पफलसहितः मूलस्येवेत्यनेन सर्वजगदधिष्ठानत्वमस्य सूचितम् ॥ १४ ॥

मनुष्याणामित्युपलक्षणं प्राणिमात्रस्य वस्तुमात्रस्य च। धर्म एवान्तःसारो यस्य सः ॥ १५ ॥

ते लक्ष्मण इव क्षिप्रं सपत्न्यः सह बान्धवाः ।
गच्छन्तमनुगच्छामो येन गच्छति राघवः ॥ १६ ॥
उद्यानानि परित्यज्य क्षेत्राणि च गृहाणि च ।
एकदुःखसुखा राममनुगच्छाम धार्मिकम् ॥ १७ ॥
समुद्धृतनिधानानि परिध्वस्ताजिराणि च ।
उपात्तधनधान्यानि हृतसाराणि सर्वशः ॥ १८ ॥
रजसाभ्यवकीर्णानि परित्यक्तानि दैवतैः ।
मूषकैः परिधावद्भिरुद्बिलैरावृतानि च ॥ १९ ॥
अपेतोदकधूमानि हीनसम्मार्जनानि च ।
प्रणष्टबलिकर्मेज्यामन्त्रहोमजपानि च ॥ २० ॥
दुष्कालेनेव भग्नानि भिन्नभाजनवन्ति च ।

सपत्न्यः पत्नीसहिताः ते रामोपघातमसहन्तो वयं येन मार्गेण ॥ १६ ॥

एकदुःखसुखाः समानदुःखसुखाः ॥ १७ ॥

समुद्धृतनिधानत्वादियुक्तानि गृहाणि कैकेयी प्रतिपद्यतामित्यन्वयः । निधानानि निक्षेपाः अजिरमङ्गणं परिध्वस्तं मार्जनादिरहितं येषु धनं गवादि अनिक्षिप्तं भूषणादि च उपात्तं गृहीतं येभ्योऽतएव हृतसाराणि ॥ १८ ॥

उद्बिलैः उद्भिन्नबिलैः ॥ १९ ॥

अपेतोदकत्वादिना मनुष्यराहित्यं सूच्यते ॥ २० ॥

अस्मत्त्यक्तानि वेश्मानि कैकेयी प्रतिपद्यताम् ॥ २१ ॥
वनं नगरमेवास्तु येन गच्छति राघवः ।
अस्माभिश्च परित्यक्तं पुरं सम्पद्यतां वनम् ॥ २२ ॥
बिलानि दंष्ट्रिणः सर्वे सानूनि मृगपक्षिणः ।
त्यजन्त्वस्मद्भयाद्भीता गजाः सिंहा वनान्यपि ॥ २३ ॥
अस्मत्त्यक्तं प्रपद्यन्तु सेव्यमानं त्यजन्तु च ।
तृणमांसफलादानं देशं व्यालमृगद्विजम् ॥ २४ ॥
प्रपद्यतां हि कैकेयी सपुत्रा सह बान्धवैः ।
राघवेण वयं सर्वे वने वत्स्याम निर्वृताः ॥ २५ ॥
इत्येवं विविधा वाचो नानाजनसमीरिताः ।
शुश्राव राघवः श्रुत्वा न विचक्रेऽस्य मानसम् ॥ २६ ॥
स तु वेश्म पितुर्दूरात् कैलासशिखरप्रभम् ।

दुष्काले राजिकादेविकसोभकाणः ॥ २१ ॥

येन वनेन हेतुना ॥ २२ ॥

दंष्ट्रिणः सर्पाः मृगपक्षिणो गिरिस्थाः ॥ २३ ॥

अस्मत्त्यक्तं पुरमिति शेषः । सेव्यमानम् अस्माभिः सेव्यमानं वनमित्यर्थः । कर्त्तारोऽत्र पूर्वोक्ता दंष्ट्र्यादयः । तृणमांसफलानामादानं यस्मात् तं व्यालमृगद्विजं तद्वन्तम् । अर्शआद्यत् । तादृशं देशमिमं कैकेयी प्रपद्यतामित्यन्वयः ॥ २४ ॥ २५ ॥

न विचक्रे न विकारं प्राप्तम् ॥ २६ ॥

अभिचक्राम धर्मात्मा मत्तमातङ्गविक्रमः ॥ २७ ॥
विनीतवीरपुरुषं प्रविश्य तु नृपालयम् ।
ददर्शावस्थितं दीनं सुमन्त्रमविदूरतः ॥ २८ ॥

प्रतीक्षमाणोऽभिजनं तदार्त्त-
मनार्त्तरूपः प्रहसन्निवाथ ।
जगाम रामः पितरं दिदृक्षुः
पितुर्निदेशं विधिवच्चिकीर्षुः ॥ २९ ॥
तत्पूर्वमैक्ष्वाकसुतो महात्मा
रामो गमिष्यन् नृपमार्त्तरूपम् ।
व्यतिष्ठत प्रेक्ष्य तदा सुमन्त्रं
पितुर्महात्मा प्रतिहारणार्थम् ॥ ३० ॥
पितुर्निदेशेन तु धर्मवत्सलो
वनप्रवेशे कृतबुद्धिनिश्चयः ।

पुनः तद्वार्त्ताश्रवणानन्तरमपि मातुः कैकेय्याः ॥ २७ ॥ २८ ॥

आर्त्तं खिन्नम् । अभिजनं देशं तत्स्थजनमिति यावत् । प्रतीक्षमाणः पश्यन्नपि निदेशमाज्ञाम् ॥ २९ ॥

तत्पूर्वं सः स्वाकारणायागमनकालः पूर्वो यस्यार्त्तरूपत्ववतस्तादृशं तदारभ्यार्त्तरूपमिति यावत् । सुमन्त्रं प्रेक्ष्य प्रतिहारणार्थं स्वागमननिवेदनार्थं व्यतिष्ठत स्थाप्यवेति शेषः ॥ ३०

स राघवः प्रेक्ष्य सुमन्त्रमब्रवीत्
निवेदय स्वागमनं नृपाय मे ॥ ३१ ॥

इत्यार्षे रामायणे वाल्मीकीये अयोध्याकाण्डे
रामस्य पितृगृहप्रवेशो नाम त्रय-
स्त्रिंशः सर्गः ॥ ३३ ॥

तदेव सुमन्त्रमाह,—पितुरिति ॥ ३१ ॥

इति रामाभिरामे श्रीरामीये रामायणतिलके
अयोध्याकाण्डे त्रयस्त्रिंशः सर्गः ॥ ३३ ॥

# चतुस्त्रिंशः सर्गः ।

ततः कमलपत्राक्षः श्यामो निरुपमो महान् ।
उवाच रामस्तं सूतं पितुराख्याहि मामिति ॥ १ ॥
स रामप्रेषितः क्षिप्रं सन्तापकलुषेन्द्रियम् ।
प्रविश्य नृपतिं सूतो निःश्वसन्तं ददर्श ह ॥ २ ॥
उपरक्तमिवादित्यं भस्मच्छन्नमिवानलम् ।
तटाकमिव निस्तोयमपश्यज्जगतीपतिम् ॥ ३ ॥
आबोध्य च * महाप्राज्ञः परमाकुलचेतसम् ।
राममेवानुशोचन्तं सूतः प्राञ्जलिरब्रवीत् ॥ ४ ॥

निरुदर इति पाठे तनुमध्य इत्यर्थः । श्यामः श्यामवर्णस्तरुणश्च । अत्र कवेरपि करुणारसमग्नत्वेन वर्णितस्यैव पुनः पुनः कथनमदोषाय ॥ १ ॥ २ ॥

उपरक्तं राहुग्रस्तं पुनरपश्यदिति वाल्मीकेः प्रयोगो वर्णनीय मयीभावेन तस्यापि शोकग्रस्तत्वात् ॥ ३ ॥

आबोध्य महाराज इति संबोध्य राममेव उद्दिश्य शोचन्तम् ॥ ४ ॥

---

* "आलोक्य तम्" इति वा पाठः ।

तं वर्धयित्वा राजानं पूर्वं सूतो जयाशिषा।
भयविक्लवया वाचा मन्दया श्लक्ष्णयाब्रवीत्॥ ५॥
अयं स पुरुषव्याघ्रो द्वारि तिष्ठति ते सुतः।
ब्राह्मणेभ्यो धनं दत्त्वा सर्वञ्चैवोपजीविनाम्॥ ६॥
स त्वां पश्यतु भद्रन्ते रामः सत्यपराक्रमः।
सर्वान् सुहृद आपृच्छ्य त्वां हीदानीं दिदृक्षते॥ ७॥
गमिष्यति महारण्यं तं पश्य जगतीपते!।
वृतं राजगुणैः सर्वैरादित्यमिव रश्मिभिः॥ ८॥
स सत्यवाक्यो धर्मात्मा गाम्भीर्य्यात् सागरोपमः।
आकाश इव निष्पङ्को नरेन्द्रः प्रत्युवाच तम्॥ ९॥
सुमन्त्रानय मे दारान् ये केचिदिह मामकाः।
दारैः परिवृतः सर्वैः द्रष्टुमिच्छामि राघवम्॥ १०॥

वर्धयित्वा संपूज्य भयविक्लवया रामो वनप्रयाणोद्युक्त इतीदं परमनिष्टं कथं राज्ञे वदिष्यामीति भयेन विक्लवया कातरया श्लक्ष्णया-येति च्छेदः॥ ५॥

उपजीविनाञ्च तेभ्यश्च दत्त्वा सर्वं धनं दत्त्वेत्यनेन सर्वथातिष्ठासाभावो ध्वन्यते॥ ६॥ ७॥ ८॥

स दशरथः निष्पङ्को निष्पापः निष्पन्दो इति पाठे निश्चल इत्यर्थः॥९॥

इह मद्वेश्मनि ये केचिन्मामका दाराः स्त्रियः सन्ति तान् दारान् इहानय॥ १०॥

सोऽन्तःपुरमतीत्यैव स्त्रियस्ता वाक्यमब्रवीत्।
आर्य्यो ह्वयति वो राजा गम्यतां तत्र माचिरम्॥ ११॥
एवमुक्ताः स्त्रियः सर्व्वाः सुमन्त्रेण नृपाज्ञया।
प्रचक्रमुस्तद्भवनं भर्तुराज्ञाय शासनम्॥ १२॥
अर्द्धसप्तशतास्तास्तु प्रमदास्ताम्रलोचनाः।
कौसल्यां परिवार्य्याथ शनैर्जग्मुर्धृतव्रताः॥ १३॥
आगतेषु च दारेषु समवेक्ष्य महीपतिः।
उवाच राजा तं सूतं सुमन्त्रानय मे सुतम्॥ १४॥
स सूतो राममादाय लक्ष्मणं मैथिलीं तथा।
जगामाभिमुखस्तूर्णं सकाशं जगतीपतेः॥ १५॥
स राजा पुत्रमायान्तं दृष्ट्वा चारात् कृताञ्जलिम्।
उत्पपातासनात्तूर्णमार्त्तः स्त्रीजनसंवृतः॥ १६॥

अतीत्य अतिवेगेन प्राप्य ह्वयति आह्वयति वो युष्माकं राजा अवैधव्यदत्वात् न तु प्रजानां तासां दुःखदत्वात्। आगम्यतामिति पदम्॥११॥

प्रचक्रमुः गच्छन्ति स्म तद्भवनं तस्य राज्ञो भवनम्॥ १२॥

अर्द्धसप्तशता एकदेशी समासः। सप्तशतस्यार्द्धं संख्या यासां ता इत्यर्थः। अर्शआद्यजन्तः अतएवाग्रे वक्ष्यति त्रयः शतशतार्द्धा इति ताम्रलोचनाः रामप्रयाणश्रवणजदुःखजातरोदनेनेति शेषः। कौशल्यां परिवार्य्येत्यनेन प्राक् लक्षणोक्तं तस्याः सर्वप्रभवीत्वं ध्वनितम्॥ १३॥

समवेक्ष्य दारानिति शेषः॥ १४॥ १५॥

सोऽभिदुद्राव वेगेन रामं दृष्ट्वा विशाम्पतिः।
तमसंप्राप्य दुःखार्त्तः पपात भुवि मूर्च्छितः॥ १७॥
तं रामोऽभ्यपतत् क्षिप्रं लक्ष्मणश्च महारथः।
विसंज्ञमिव दुःखेन सशोकं नृपतिं तदा॥ १८॥
स्त्रीसहस्रनिनादश्च संजज्ञे राजवेश्मनि।
हाहा रामेति सहसा भूषणध्वनिमिश्रितः॥ १९॥
तं परिष्वज्य बाहुभ्यां तावुभौ रामलक्ष्मणौ।
पर्य्यङ्के सीतया सार्द्धं रुदन्तः समवेशयन्॥ २०॥
अथ रामो मुहूर्त्तस्य लब्धसंज्ञं महीपतिम्।
उवाच प्राञ्जलि * र्बाष्पशोकार्णवपरिप्लुतम्॥ २१॥

आराद्दूरतः उत्पपात आलिङ्गनार्थम्॥ १६॥

तम् आलिलिङ्गिषितं राममप्राप्य मध्ये एव दुःखितः पपात॥१७॥

अभ्यपतत् अभ्यागतवान् विसंज्ञमिव विसंज्ञमेव॥ १८॥

भूषणध्वनिमिश्रितः उरःशिरस्ताड़नादिना चञ्चलतरभ्रश्यद्भूषणध्वनिमिलितः मूर्च्छित इति पाठेऽपि स एवार्थः। व्यामो इत्यर्थो वा॥ १९॥

तौ सीतया सार्द्धं तं राजानं बाहुभ्यां परिष्वज्य यथा पीड़ा न भवति तथालिङ्गितमुत्थाप्य पर्य्यङ्के समवेशयन् स्थापितवन्तः॥ २०॥

मुहूर्त्तस्य संबन्धसामान्ये षष्ठी। मुहूर्त्तेन लब्धसंज्ञमित्यर्थः॥ २१॥

---

* "प्राञ्जलिर्भूत्वा" इति वा पाठः।

आपृच्छे त्वां महाराज ! सर्वेषामीश्वरोऽसि नः ।
प्रस्थितं दण्डकारण्यं पश्य त्वं कुशलेन माम् ॥ २२ ॥
लक्ष्मणश्चानुजानीहि सीता चान्वेतु मां वनम् ।
कारणैर्बहुभिस्तथ्यैर्वार्य्यमाणौ नचेच्छतः ॥ २३ ॥
अनुजानीहि सर्वान्नः शोकमुत्सृज्य मानद ! ।
लक्ष्मणं मां च सीताञ्च प्रजापतिरिवात्मजान ॥ २४ ॥
प्रतीक्षमाणमव्यग्रमनुज्ञां जगतीपतेः ।
उवाच राजा संप्रेक्ष्य वनवासाय राघवम् ॥ २५ ॥
अहं राघव ! कैकेय्या वरदानेन मोहितः ।
अयोध्यायां त्वमेवाद्य भव राजा निगृह्य माम् ॥ २६ ॥

कुशलेन मां पश्य सौम्येन चक्षुषा मामनुगृह्णाणेत्यर्थः ॥ २२ ॥

वनं प्रति प्रस्थितं मां सीता चान्वेतु गच्छत्विति लक्ष्मणश्च प्रस्थित-मनुजानीहीत्यर्थः । ननु लक्ष्मणसीतयोः कुतो वनवासकष्टप्राप्तिर्न ह्यसौ वरनिबन्धस्तयोरत आह,—कारणैरिति हेतुभिः तथ्यैः व्यवहारदशया सत्यैः न चेच्छतः इह स्थातुमिति शेषः ॥ २३ ॥

अनुजानीहि अनुज्ञां देहि । प्रजापतिर्ब्रह्मा आत्मजान् सनकादीन् तपांसि चरितुमद्युक्तान्यथानुज्ञां दत्तवान् तद्वदित्यर्थः ॥ २४ ॥

वनवासाय जगतीपतेः स्वस्यानुज्ञामनुमतिं प्रतीक्षमाणं प्रार्थय-मानम् । अव्यग्रं लेशतोऽपि विषादरहितं राघवं प्रेक्ष्य उवाच ॥ २५ ॥

हे राघव ! यतोऽहं कैकेय्यावरदानेन मोहितो नियन्त्रस्तया शोक-

एवमुक्तो नृपतिना रामो धर्मभृतां वरः।
प्रत्युवाचाञ्जलिं कृत्वा पितरं वाक्यकोविदः॥ २७॥
भवान् वर्षसहस्राय पृथिव्या नृपते! पतिः।
अहं त्वरण्ये वत्स्यामि न मे राज्यस्य काङ्क्षिता॥ २८॥
नव पञ्च च वर्षाणि वनवासे विहृत्य ते।
पुनः पादौ ग्रहीष्यामि प्रतिज्ञां ते * नराधिप!॥ २९॥
रुदन्नार्त्तः प्रियं पुत्रं सत्यपाशेन संयुतः।
कैकेय्या चोद्यमानस्तु मिथो राजा तमब्रवीत्॥ ३०॥
श्रेयसे वृद्धये तात! पुनरागमनाय च।
गच्छस्वारिष्टमव्यग्रः पन्थानमकुतोभयम्॥ ३१॥

परवशो जातोऽतो राज्यानर्हः अतो मां निगृह्य बध्वायोध्यायां त्वमेव राजा भव प्रवृत्तमभिषेकं समापयेति यावत्॥ २६॥ २७॥

भवान् वर्षसहस्राय पतिर्भवतु अतः परमप्यनेककालं राजा भवेत्यर्थः। त्वया यो वरो दत्तः तमन्यतं कर्तुं अहं न योग्यस्तव नरकपातप्रसङ्गादतोऽहमरण्ये वत्स्यामि मे राज्यस्य काङ्क्षिता इच्छा न॥ २८॥

प्रतिज्ञां ते प्रतिज्ञासमाप्तौ ते पादौ ग्रहीष्यामीत्यन्वयः॥ २९॥

कैकेय्या अद्यैव गमनमनुमन्यस्वेति मिथो रहसि चोद्यमानः॥ ३०॥

श्रेयसे परलोकहिताय वृद्धये इह लोकेऽभ्युदयाय अरिष्टं पापदुःख-

---

* "प्रतिजाने" इति वा पाठः।

नहि सत्यात्मनस्तात ! धर्माभिमनसस्तव ।
सन्निवर्त्तयितुं बुद्धिः शक्यते रघुनन्दन ! ॥ ३२ ॥
अद्य त्विदानीं रजनीं पुत्र ! मा गच्छ सर्वथा ।
एकाहं दर्शनेनापि साधु तावच्चराम्यहम् ॥ ३३ ॥
मातरं माञ्च संपश्यन् वसेमामद्य शर्वरीम् ।
तर्पितः सर्वकामैस्त्वं श्वःकाल्ये साधयिष्यसि ॥ ३४ ॥
दुष्करं क्रियते पुत्र ! सर्वथा राघव प्रिय ! * ।
त्वया हि मत्प्रियार्थन्तु वनमेवमुपाश्रितम् † ॥ ३५ ॥

भिन्नं पुण्यं सुखञ्च तेऽस्तु अव्यग्रः सन् अकुतोभयं पन्थानं गच्छस्वेत्यार्थम् ॥ ३१ ॥

सत्यात्मनः सत्यप्रतिष्ठितस्वभावस्य । धर्माभिमनसः धर्मसम्पादनाभिनिविष्टमनसः ॥ ३२ ॥

प्रातरेव कैकेय्या प्रस्थितस्य मात्राद्यनुनयदानादिना आचतुर्थप्रहरं व्यापृतस्य तुर्य्ययामे राजानुमत्यर्थमागतस्य राज्ञा तत्कालसमीपमेव प्रवत्स्यमानरजनीसहवासः प्रार्थ्यते । अद्येत्यादि । इदानीमिति समीपस्थत्वं रजनीमात्रस सर्वथा मा गच्छ किमर्थं तत्राह,—चरामि त्वया सह भोच्यामि ॥ ३३ ॥

साधयिष्यसि गमिष्यसि ॥ ३४ ॥

---

* "त्वया" इति वा पाठः ।
† "मत्प्रियार्थं प्रियांस्त्यक्त्वा यद्यासि विजनं वनम्" इति वा पाठः ।

नचैतन्मे प्रियं पुत्र ! शपे सत्येन राघव ! ।
छन्नया चलितस्त्वस्मि स्त्रिया भस्माग्निकल्पया ॥ ३६ ॥
वञ्चना या तु लब्धा मे तां त्वं निस्तर्त्तुमिच्छसि ।
अनया वृत्तसादिन्या कैकेय्याभिप्रचोदितः ॥ ३७ ॥
न चैतदाश्चर्य्यतमं यत्त्वं ज्येष्ठः सुतो मम ।
अपावृतकथं पुत्र ! पितरं कर्त्तुमिच्छसि ॥ ३८ ॥
अथ रामस्तदा श्रुत्वा पितुरार्त्तस्य भाषितम् ।
लक्ष्मणेन सह भ्राता दीनो वचनमब्रवीत् ॥ ३९ ॥

मत्प्रियार्थं मम परलोकहितार्थम् ॥ ३५ ॥

तदेव दर्शयति । नचेत्यादि । छन्नया गूढक्रूराभिप्रायया । चलितोऽस्मि भ्रंशितोऽस्मि त्वदभिषेकमनोरथात् । भस्माग्निकल्पया भस्मच्छन्नाग्नितुल्यया ॥ ३६ ॥

वञ्चनासामान्येन प्रतिश्रुतवरयोर्भरताभिषेकत्वद्विवासनरूपविशेषपर्यवसायित्वरूपा या मे लब्धा यतोऽनया वृत्तसादिन्या कुलोचितचारित्रनाशिन्याभिप्रचोदितोऽस्मि एवमिति शेषः। अतो या वञ्चना मया लब्धा तां निस्तर्तुमिच्छसीति यावत् ॥ ३७ ॥

एतदाश्चर्य्यतमं न अपावृतकथं अपगतावृतवचनं एतच्च नाश्चर्य्यं यतो ज्येष्ठो गुणैर्वयसा च सुतोऽसि ॥ ३८ ॥

आर्त्तस्य पितुर्भाषितं श्रुत्वा एकाहदर्शनेनापीत्युक्तरूपं दीनः कैकेय्याद्य गच्छेति नियोगस्यावश्यानुष्ठेयत्वप्रतिज्ञानात् तावन्मात्रपितृमनोरथपूरणाशक्तया प्राप्तशोक इव ॥ ३९ ॥

प्राप्स्यामि यानद्य गुणान् को मे श्वस्तान् प्रदास्यति ।
अपक्रमणमेवातः सर्वकामैरहं वृणे ॥ ४० ॥
इयं सराष्ट्रा सजना धनधान्यसमाकुला ।
मया विसृष्टा वसुधा भरताय प्रदीयताम् ॥ ४१ ॥
वनवासकृता बुद्धिर्न च मेऽद्य चलिष्यति ।
* यस्तु युद्धे वरो दत्तः कैकेय्यै वरद ! त्वया ॥ ४२ ॥
दीयतां निखिलेनैव सत्यस्त्वं भव पार्थिव ! ।
अहं निदेशं भवतो यथोक्तमनुपालयन् ॥ ४३ ॥
चतुर्दशसमा वत्स्ये वने वनचरैः सह ।
मा विमर्शो वसुमती भरताय प्रदीयताम् ॥ ४४ ॥

तर्पितः सर्वकामैरित्यस्योत्तरमाह,—प्राप्स्यामीति । गुणान् भस्याभादीन् अतः सर्वकामैः सर्वकामप्रतिनिधित्वेनापक्रमणं इतो गमनमेव वृणे इत्यर्थः । यद्वा अद्य प्रयाणे सतीमान् गुणान् प्रतिज्ञापालनजधर्मरूपान् प्राप्स्यामि श्वोगमने कस्तान् दास्यति प्रत्युताधर्म एव अतः सर्वकामैरित्यादि प्रागुक्तदेव ॥ ४० ॥ ४१ ॥

अद्य वनवासकृता तदर्था बुद्धिर्न चलिष्यति । अतो गमनानुज्ञामेव कुर्वित्याशयः अतिदानशूरस्य भवतोऽनुचितमप्येतदित्याह,—य इति । निखिलेन अद्यैव सत्यस्थापनात् निदेशं शासनम् ॥ ४२ ॥ ४३ ॥

---

* "यस्तुष्टेन" इति वा पाठः ।

नहि मे काङ्क्षितं राज्यं सुखमात्मनि वा प्रियम्।
यथानिदेशं कर्त्तुं वै तवैव रघुनन्दन! ॥ ४५ ॥
अपगच्छतु ते दुःखं माभूर्बाष्पपरिप्लुतः।
न हि क्षुभ्यति दुर्धर्षः समुद्रः सरितां पतिः ॥ ४६ ॥
नैवाहं राज्यमिच्छामि न सुखं न च मेदिनीम् *।
नैव सर्वानिमान् कामान् † न स्वर्गं न च जीवितम् ॥ ४७ ॥
त्वामहं सत्यमिच्छामि नानृतं पुरुषर्षभ!।
प्रत्यक्षं तव सत्येन सुकृतेन च ते शपे ॥ ४८ ॥
न च शक्यं मया तात! स्थातुं क्षणमपि प्रभो!।
स शोकं धारयस्वेमं न हि मेऽस्ति विपर्य्ययः ॥ ४९ ॥

वनचरैस्तपस्विभिः मा विमर्शः भरताय राज्यदाने मास्तु सन्देहः। सर्वथा तस्मै वसुमती दीयताम् ॥ ४४ ॥

कथमेवमतमाह,—नहीति। आत्मनि स्वमनसि सुखं स्त्रीयानां प्रियस्योद्दिश्य राज्यं न काङ्क्षितं अपि तु तव निदेशं यथावत्कर्त्तुमेव काङ्क्षितम् इच्छामि ॥ ४५ ॥

क्षुभ्यति मर्य्यादां त्यजति ॥ ४६ ॥ ४७ ॥

अनृतं अनृतयुक्तं एवं सत्यं सत्ययुक्तं तव प्रत्यक्षं तव सन्निधौ सत्येन सुकृतेन ते त्वया च शपे शपथं करोमीत्यर्थः ॥ ४८ ॥

---

* "मैथिलीम्" इति वा पाठः।

† "लोकान" इति वा पाठः।

अर्थितो ह्यस्मि कैकेय्या वनं गच्छेति राघव ! ।
मया चोक्तं व्रजामीति तत्सत्यमनुपालये ॥ ५० ॥
मा चोत्कण्ठां कृथा देव ! वने रंस्यामहे वयम् ।
प्रशान्तहरिणाकीर्णे नानाशकुनिनादिते ॥ ५१ ॥
पिता हि दैवतं तात ! देवतानामपि स्मृतम् ।
तस्माद्दैवतमित्येव करिष्यामि पितुर्वचः ॥ ५२ ॥
चतुर्दशसु वर्षेषु गतेषु नृपसत्तम ! ।
पुनर्द्रक्ष्यसि मां प्राप्तं सन्तापोऽयं विमुच्यताम् ॥ ५३ ॥
येन संस्तम्भनीयोऽयं सर्वो बाष्पाकुलो जनः ।
स त्वं पुरुषशार्दूल ! किमर्थं विक्रियां गतः ॥ ५४ ॥

पुरञ्च राष्ट्रञ्च मही च केवला
मया विसृष्टा भरताय दीयताम् ।
अहं निदेशं भवतोऽनुपालयन्
वनं गमिष्यामि चिराय सेवितुम् ॥ ५५ ॥

त्वामपि इह पुरे इति शेषः। स त्वं इमं मद्गमनसम्भवं शोकं धारयस्व। विपर्ययः इहावस्थितिरूपं प्रतिज्ञातार्थविपरीतानुष्ठानम् ॥ ४९ ॥ ५० ॥

उत्कण्ठां दर्शनादिविषयोत्कण्ठाजन्यं दुःखम् ॥ ५१ ॥ ५२ ॥ ५३ ॥

येन त्वया ॥ ५४ ॥

मया विसृष्टां भरतो महीमिमां
सशैलखण्डां सपुरोपकाननाम्।
शिवासु सीमास्वनुशास्तु केवलं
त्वया यदुक्तं नृपते! तथास्तु तत्॥ ५६॥
न मे तथा पार्थिव! दीयते मनो
महत्सु कामेषु न चात्मनः प्रिये।
यथा निदेशे तव शिष्टसम्मते
व्यपैतु दुःखं तव मत्कृतेऽनघ!॥ ५७॥
तदद्य नैवानघ! राज्यमव्ययं
न सर्वकामान् वसुधां न मैथिलीम्।

केवला कृत्स्ना। चिराय वनं सेवितुं गमिष्यामि॥ ५५॥

शिवास् सीमास्विति स्थित इति शेषः। मया विना तेनात्र पुरे स्थातुमशक्यत्वादिति भावः। केवलमनुशास्तु रक्षणमात्रं करोतु नतु राजत्वाभिमानो राज्यसुखं वा तस्येति ध्वनितम्। अनेन राज्ञो जीवनं भरतस्य नन्दिग्रामवासश्च ध्वनितः। शिवासु सीमासु रममाण इत्या-पाततोऽर्थः त्वया यदुक्तं कैकेयीं प्रतीति शेषः॥ ५६॥

यथा शिष्टसम्मते तव निदेशे मया मनो दीयते तथा महत्सु कामेषु काम्यवस्तुषु मनः संकल्पात्मकं मे मया न दीयते न च नात्मनोऽन्तःकरणस्य प्रियेऽतोमत्कृते दुःखं व्यपैतु॥ ५७॥

त्वामन्टतेन योजयन् राज्यादिकं चिन्तितं मद्विषयचिन्तावन्तं

न चिन्तितं * त्वामनृतेन योजयन्
वृणीय सत्यं व्रतमस्तु ते तथा ॥ ५८ ॥
फलानि मूलानि च भक्षयन् वने
गिरींश्च पश्यन् सरितः सरांसि च ।
वनं प्रविश्यैव विचित्रपादपं
सुखी भविष्यामि तवास्तु निर्वृतिः ॥ ५९ ॥
एवं स राजा व्यसनाभिपन्न-
स्तापेन दुःखेन च पीड्यमानः ।
आलिङ्ग्य पुत्रं सुविनष्टसंज्ञो
भूमिं गतो नैव विचेष्ट † किञ्चित् ॥ ६० ॥
देव्यः समस्ता रुरुदुः समेता-
स्तां वर्जयित्वा नरदेवपत्नीम् ।

त्वामपि न वृणीय न वरिष्यामि इति मे सत्यं व्रतं तथा ते व्रतं कैकेयी-वरदानसङ्कल्पः सत्यमस्तु । अत्र चिन्तितं त्वामित्यनेन चिन्तया तव मरणेऽपि मया न स्पृश्यं मरणादपि परलोकनाशकान्ततत्वस्यातिभयत्वं सूचितं तेन तव मरणे न मे दुःखं नापि पापं यथा तवान्ततत्वकरणे इति सूचितम् ॥ ५८ ॥ ५९ ॥

तापस्त्वगदाहोत्पादकः दुःखमन्तर्व्यथोत्पादकम् ॥ ६० ॥

* "न जीवितम्" इति वा पाठः ।
† "विवेद" इति वा पाठः ।

रुदन् सुमित्रोऽपि * जगाम मूर्च्छां
हाहाकृतं तत्र बभूव सर्वम् ॥ ६१ ॥

इत्यार्षे रामायणे वाल्मीकीये अयोध्याकाण्डे
दशरथरामसंवादो नाम चतुस्त्रिंशः
सर्गः ॥ ३४ ॥

समेता मिलिताः । तां कैकेयीम् । हाहा इति शब्दः कृतो येन तथाभूतं सर्वं परिचारिकादिजनजातम् ॥ ६१ ॥

* "सुमन्त्रोऽपि" इति वा पाठः ।

इति रामाभिरामे श्रीरामीये रामायणतिलके
अयोध्याकाण्डे चतुस्त्रिंशः सर्गः ॥ ३४ ॥

## पञ्चत्रिंशः सर्गः।

ततो निर्धूय सहसा शिरो निःश्वस्य चासकृत्।
पाणिं पाणौ विनिष्पिष्य दन्तान् कटकटाय्य च ॥ १ ॥
लोचने कोपसंरक्ते वर्णं पूर्वोचितं जहत्।
कोपाभिभूतः सहसा सन्तापमशुभं गतः ॥ २ ॥
मनः समीक्षमाणश्च सूतो दशरथस्य च।
कम्पयन्निव कैकेय्या हृदयं वाक्शरैः शितैः ॥ ३ ॥
वाक्यवज्रैरनुपमैर्निर्भिन्दन्निव चाशुभैः *।
कैकेय्याः सर्वमर्माणि सुमन्त्रः प्रत्यभाषत ॥ ४ ॥

एवं सपरिकरस्य राज्ञः परमशोके प्राप्ते सुमन्त्रः कैकेयीं प्रत्याह,—तत इति। शिरो निर्धूननादिकोपविकाराभिनयः कटकटाय्य कटकटाशब्दवतः कृत्वा ॥ १ ॥

कोपसंरक्ते कृत्वेति शेषः। वर्णं मुखकान्तिं पूर्वोचितं पूर्वकालस्थितं राजमन्त्रित्व उचितञ्च ॥ २ ॥

दशरथस्य मनः समीक्षमाणः कैकेयीविषयस्नेहरहितं जानन् ॥ ३ ॥ ४ ॥

* "चाशुगैः" इति वा पाठः।

यस्यास्तव पतिस्त्यक्तो राजा दशरथः स्वयम्।
भर्त्ता सर्वस्य जगतः स्थावरस्य चरस्य च॥ ५॥
नह्यकार्य्यतमं किञ्चित्तव देवीह विद्यते।
पतिघ्नीं त्वामहं मन्ये कुलघ्नीमपि चान्ततः॥ ६॥
यन्महेन्द्रमिवाजय्यं दुष्प्रकम्प्यमिवाचलम्।
महोदधिमिवाक्षोभ्यं सन्तापयसि कर्मभिः॥ ७॥
मावमंस्था दशरथं भर्त्तारं वरदं पतिम्।
भर्त्तुरिच्छा हि नारीणां पुत्रकोव्या विशिष्यते॥ ८॥
यथावयो हि राज्यानि प्राप्नुवन्ति नृपक्षये।
इक्ष्वाकुकुलनाथेऽस्मिंस्त्वं लोपयितुमिच्छसि॥ ९॥
राजा भवतु ते पुत्रो भरतः शास्तु मेदिनीम्।

यस्यास्तव यया त्वया॥ ५॥

अतो नहीति हे देवि! तवातिशयेन कर्त्तुमशक्यं न किञ्चिद्विद्यते। इह संसारे अन्ततः सर्वान्ते त्वत्कृत्यसाध्यफलविचारे इत्यर्थः। पतिघ्नीमिति। रामगमने राजमरणस्यावश्यकत्वादिति भावः। रामस्य विवासनात् राज्ञो मरणाच्च कुलघ्नीम्॥ ६॥

अचलमिव दुष्प्रकम्प्यम्। कर्मभिः क्रूरैः सन्तापयसि राजानमिति शेषः॥ ७॥

भर्त्तुरिच्छा भर्त्तुरिच्छाविषयानुसरणम्॥ ८॥

यथावयः वयःक्रममनतिक्रम्य नृपक्षये राजभूतपितृक्षये राज्यानि

वयं तत्र गमिष्यामो यत्र रामो गमिष्यति ॥ १० ॥
न च ते विषये कश्चित् ब्राह्मणो वस्तुमर्हति ।
तादृशं त्वममर्यादमद्य कर्म करिष्यसि ॥ ११ ॥
नूनं सर्वे गमिष्यामो मार्गं रामनिषेवितम् ।
त्यक्तया बान्धवैः सर्वैर्ब्राह्मणैः साधुभिः सदा ॥ १२ ॥
का प्रीती राज्यलोभेन तव देवि! भविष्यति ।
तादृशं त्वममर्य्यादं कर्म कर्त्तुं चिकीर्षसि * ॥ १३ ॥
आश्चर्यमिव पश्यामि यस्यास्ते वृत्तमीदृशम् ।
आचरन्त्या न विवृता सद्यो भवति मेदिनी ॥ १४ ॥
महाब्रह्मर्षिसृष्टा वा ज्वलन्तो भीमदर्शनाः ।
धिग्वाग्दण्डा न हिंसन्ति रामप्रव्राजने स्थिताम् ॥ १५ ॥

प्राप्नुवन्ति ज्येष्ठक्रमेणेति यावत्। तमिममनादिप्रवृत्तमाचारं इक्ष्वाकुकुलनाथे दशरथे जीवत्येव लोपयितुमिच्छसीति योजना ॥ ९ ॥ १० ॥

विषये देशे तादृशं ब्राह्मणवासानर्हं अमर्यादं अतिक्रमितज्येष्ठराज्यादिव्यवहारं करिष्यसीत्यनेनाद्यापि रामं निवर्त्तयेति सूचयति ॥ ११ ॥ १२ ॥ १३ ॥

यस्यास्ते ईदृशं घोरं वृत्तमस्ति तया त्वया तदाचरन्त्या हेतुभूतया पृथिवी यन्न विवृता न विदीर्णा तदाश्चर्यमिव पश्यामि ॥ १४ ॥

किञ्च महाब्रह्मर्षिभिः सृष्टाः प्रयुक्ताः ज्वलन्तः अग्निवद्भस्मकरणा-

---

* "नूनमित्यारभ्य चिकीर्षसीत्यन्तं पाश्चात्यैः परिहृतम्।

आम्रं छित्वा कुठारेण निम्बं परिचरेत्तु कः।
यश्चैनं पयसा सिञ्चेन्नैवास्य मधुरो भवेत्॥ १६॥
आभिजात्यं हि ते मन्ये यथा मातुस्तथैव ते।
न हि निम्बात् स्रवेत् चौद्रं लोके निगदितं वचः॥ १७॥
तव मातुरसद्ग्राहं विद्म पूर्वं यथा श्रुतम्।
पितुस्ते वरदः कश्चिद्ददौ वरमनुत्तमम्॥ १८॥

समर्थाः भीमदर्शनाः भीमं फलं दृश्यते येषु तादृशा धिगिति वाग्रूपा दण्डाः त्वां न हिंसन्ति इदमप्याश्चर्यमित्यनुकर्षः। स्थितां कृतनिश्चयाम् अनेन सर्वे त्वां धिक्कुर्वन्तीति ध्वनयति॥ १५॥

अथान्यापदेशेन राजानं निन्दति,—आम्रमिति। परिचरेत् आलवालादिकरणेन रोपयेदाम्रस्थाने तञ्च पुनः पयसा सिञ्चेत्। अस्यैवं निम्बसेवां कुर्वतः प्रीतये स मधुरो न भवेत्। अतो वृथैवेदं कैकेय्यनुवर्त्तनं राज्ञ इत्याशयः॥ १६॥

इदानीं कैकेय्या मर्मवचनान्यप्याह,—आभिजात्यमिति। यथा ते मातुराभिजात्यं प्रशस्तमातापितृजत्वोचितव्यवहाररूपं तथैव ते तव मन्ये कारणानुसारित्वात्कार्यस्येति भावः। तदुपपादयति दृष्टान्तेन नहीति। निम्बात् चौद्रं न स्रवेदिति वचो लोकप्रसिद्धं किलेत्यर्थः॥ १७॥

ननु मे मातुः कथमाभिजात्यच्युतिस्तत्राह,—तवेति। असद्ग्राहं घोरपापकर्माभिनिवेशं पूर्वं वृद्धेभ्यो यथा येन प्रकारेण श्रुतं तथा सम्प्रति विद्म स्मराम तदेवाह,—पितुरित्यादि। कश्चिदृषिः॥ १८॥

सर्वभूतरुतं तस्मात् संजज्ञे वसुधाधिपः ।
तेन तिर्य्यग्गतानाञ्च भूतानां विदितं वचः ॥ १९ ॥
ततो जृम्भस्य शयने विरुतात् भूरिवर्चसः ।
पितुस्ते विदितो भावः स तत्र बहुधाहसत् ॥ २० ॥
तत्र ते जननी क्रुद्धा मृत्युपाशमभीप्सती ।
हासन्ते नृपते ! सौम्य ! जिज्ञासामीति चाब्रवीत् ॥ २१ ॥
नृपश्चोवाच तां देवीं हासं शंसामि ते यदि ।

तस्माद्वरदानात्सर्वभूतानां व्यक्ताव्यक्तवाचां रुतं शब्दं तद्बोध्यमर्थं संजज्ञे जानीते स्म तेन सर्वभूतरुतज्ञत्वेन तिर्य्यग्गतानां तिर्यक्स्रोतसां पशुपक्ष्यादीनां वचो विदितं ज्ञातार्थं भवति ॥ १९ ॥

ततस्तत एव हेतोः शयने शयानस्य ते पितुः भूरिवर्चसः सुवर्ण-कान्तेर्जृम्भस्य जृम्भाख्यस्य पक्षिणो भावोऽभिप्रायः विरुतात्तदीयशब्दा-द्विदितः अथ स ते पिता तत्र शयने शयान एव तद्भावपरिज्ञानज-सन्तोषेण बहुधा द्वित्रिर्बहुप्रकारेण चाहसत् ॥ २० ॥

तत्र शयने शयाना ते जननी मामयं हसतीति क्रुद्धा सती मृत्यु-रूपं पाशमिच्छन्ती हे नृपते ! ते हासं हासकारणं ज्ञातुमिच्छामीति ते पितरमब्रवीत् । वरन्ते इति पाठे ते जननी मामयं हसतीति बुद्ध्वा क्रुद्धाभवत् । ततो राज्ञा त्वद्विषयोऽयं न हासः किन्तु वरबलात् मे सर्वरुतज्ञानसामर्थ्यमस्ति अतः किञ्चिज्जन्तुं विदिततद्भावोऽहासिष-मित्युक्ते तदरस्वरूपं तद्दातारञ्च जिज्ञासामीत्यर्थः ॥ २१ ॥

ततो मे मरणं सद्यो भविष्यति न संशयः ॥ २२ ॥
माता ते पितरं देवी पुनः केकयमब्रवीत्।
शंस मे जीव वा मा वा न मां त्वं प्रहसिष्यसि ॥ २३ ॥
प्रियया च तथोक्तः स केकयः पृथिवीपतिः।
तस्मै तं वरदायार्थं कथयामास तत्त्वतः ॥ २४ ॥
ततः स वरदः साधू*राजानं प्रत्यभाषत।
म्रियतां ध्वंसतां वेयं माशंसीस्त्वं महीपते ! ॥ २५ ॥
स तच्छ्रुत्वा वचस्तस्य प्रसन्नमनसो नृपः।
मातरं ते निरस्याशु विजहार कुबेरवत् ॥ २६ ॥

हासं तत्कारणम्। वरमिति पाठे तद्दातारम् ॥ २२ ॥

सर्वथा शंस जीव वा मा वा म्रियस्व वा। तस्मिन्नवगते इतः परं मां कदापि न हसिष्यसि त्वत्कर्तृकमत्कर्मकभाविहासाभावं निश्चेष्यामीत्यर्थः ॥ २३ ॥

तस्मै वरदाय ऋषये तमर्थं कथननिर्बन्धरूपम् कथयामासेत्यन्वयः ॥ २४ ॥

ततः साधुः स वरदः प्रत्यभाषत ध्वंसतां वा रूपित्रादिसमीपं गच्छतु वा। मा कृथा इति पाठे अस्या वच इति शेषः ॥ २५ ॥

निरस्य भद्रे ! त्वमितो गच्छेति ते मातरं परित्यज्य ॥ २६ ॥

---

* "सोऽर्थमृ" इति वा पाठः।

तथा त्वमपि राजानं दुर्जनाचरिते पथि ।
असत्याहमिमं मोहात् कुरुषे पापदर्शिनी ॥ २७ ॥
सत्यश्चात्र प्रवादोऽयं लौकिकः प्रतिभाति मा ।
पितॄन् समनुजायन्ते नरा मातरमङ्गनाः ॥ २८ ॥
नैवं भव गृहाणेदं यदाह वसुधाधिपः ।
भर्त्तुरिच्छामुपास्येह जनस्यास्य गतिर्भव ॥ २९ ॥
मा त्वं प्रोत्साहिता पापैर्देवराजसमप्रभम् ।
भर्त्तारं लोककर्त्तारमसद्धर्ममुपादध ॥ ३० ॥
न हि मिथ्या प्रतिज्ञातं करिष्यति तवानघः ।
श्रीमान् दशरथो राजा देवि! राजीवलोचनः ॥ ३१ ॥

तथा त्वमपि दुर्जनाचरिते पथि स्थितेति शेषः । अत इमं राजानं मोहात् मोहमुत्पाद्य असद्ग्राहं असत्कार्यग्राहकं कुरुषे ॥ २७ ॥

कन्यानां मातृतुल्यत्वं न्यायप्राप्तमित्याह,—सत्यमिति । मा माम् । नराः पुत्ररूपाः समनुजायन्ते पितृस्वभावानुवर्त्तिनो जायन्ते ॥ २८ ॥

नैवं भव मातृवत् मा भव यद्वसुधाधिप आह तद्गृहाण रामाभिषेकरूपं वचः । नैषेति पाठे विधेया भवेत्यर्थः । भर्त्तुरिच्छां तद्विषयम् उ[illegible] तदनुवर्त्तिनी भूत्वा अस्य जनस्य अस्मदादेः गतिः शरण्या भव ॥ २९ ॥

प्रोत्साहिता प्रेरिता असद्धर्मं कनिष्ठाभिषेकपूर्वं ज्येष्ठस्य विवासनरूपं उपादध ग्राहय उपावहेति पाठेऽप्ययमेवार्थः ॥ ३० ॥

ज्येष्ठो वदान्यः कर्मण्यः स्वधर्मस्यापि रक्षिता ।
रक्षिता जीवलोकस्य बली रामोऽभिषिच्यताम् ॥ ३२ ॥
परिवादो हि ते देवि ! महान् लोके चरिष्यति ।
यदि रामो वनं याति विहाय पितरं नृपम् ॥ ३३ ॥
स्वराज्यं राघवः पातु भव त्वं विगतज्वरा ।
न हि ते राघवादन्यः क्षमः पुरवरे वसन् ॥ ३४ ॥
रामे हि यौवराज्यस्थे राजा दशरथो वनम् ।
प्रवेक्ष्यति महेष्वासः पूर्ववृत्तमनुस्मरन् ॥ ३५ ॥
इति सान्त्वैश्च तीक्ष्णैश्च कैकेयीं राजसंसदि ।
भूयः संक्षोभयामास सुमन्त्रस्तु कृताञ्जलिः ॥ ३६ ॥

तव मिथ्याप्रतिज्ञातं लीलयोक्तं वरद्वयदानरूपं वचोऽतो राजा न करिष्यति तत् ॥ ३१ ॥

अतो ज्येष्ठत्वादिगुणको रामोऽभिषिच्यताम् । तदभिषेकेऽनुमतिः क्रियतां कर्मण्यः कर्मणि साधुः ॥ ३२ ॥

विपक्षे बाधकमाह,—परिवाद इति अपवादः । चरिष्यति प्रचरिष्यति ॥ ३३ ॥

राघवाद्रामादन्यः पुरवरे वसन् ते क्षमोऽनुकूलो न हि भवेदित्यर्थः । भरतस्त्वत्प्रतिकूल एव भविष्यतीति भावः ॥ ३४ ॥

अतो रामेहीति । पूर्ववृत्तं पूर्वराजाचारम् ॥ ३५ ॥

भूयोऽत्यर्थम् ॥ ३६ ॥

नैव सा क्षुभ्यते देवी न च स्म परिदूयते ।
न चास्या मुखवर्णस्य लक्ष्यते विक्रिया तदा ॥ ३७ ॥

इत्यार्षे रामायणे वाल्मीकीये अयोध्याकाण्डे
कैकेयीदशरथसंवादो नाम पञ्च-
त्रिंशः सर्गः ॥ ३५ ॥

सान्त्वैः न क्षुभ्यते तीक्ष्णैः न परिदूयते ॥ ३७ ॥

इति रामाभिरामे श्रीरामीये रामायणतिलके
अयोध्याकाण्डे पञ्चत्रिंशः सर्गः ॥ ३५ ॥

## षट्त्रिंशः सर्गः ।

ततः सुमन्त्रमैक्ष्वाकः पीड़ितोऽत्र प्रतिज्ञया ।
सबाष्पमति निश्वस्य जगादेदं पुनर्वचः ॥ १ ॥
सूत ! रत्नसुसम्पूर्णा चतुर्विधबला चमूः ।
राघवस्यानुयात्रार्थं क्षिप्रं प्रतिविधीयताम् ॥ २ ॥
रूपाजीवाश्च वादिन्यो वणिजश्च महाधनाः ।
शोभयन्तु कुमारस्य वाहिनीः सुप्रसारिताः ॥ ३ ॥
ये चैनमुपजीवन्ति रमते यैश्च वीर्य्यतः ।

एवं सुमन्त्रेण राजप्रतिज्ञाया मिथ्यात्वोक्तावपि राजा तस्या वास्तवत्वं जानन् रामस्य वन एव सुखवासोपायमादिशति,—तत इति । कैकेय्यनङ्गीकारानन्तरम् । प्रतिज्ञया कैकेयीमुद्दिश्य कृतया वास्तव्या । इदं वक्ष्यमाणम् ॥ १ ॥

चतुर्विधबला रथादिचतुर्विधबलवती चमूः सेना । अनुयात्रार्थं सेवार्थं प्रति विधीयतां नियुज्यतां प्रस्थाप्यताम् ॥ २ ॥

वादिन्यः परचित्ताकर्षकवचनचतुराः । रूपाजीवाः वेश्याः सुप्रसारिताः सुप्रसारितापण्याः ॥ ३ ॥

तेषां बहुधनं * दत्त्वा तानप्यत्र नियोजय ॥ ४ ॥
आयुधानि च मुख्यानि नागराः शकटानि च ।
अनुगच्छन्तु काकुत्स्थं व्याधाश्चारण्यकोविदाः ॥ ५ ॥
निघ्नन् मृगान् कुञ्जरांश्च पिबंश्चारण्यकं मधु ।
नदीश्च विविधाः पश्यन्न राज्यं संस्मरिष्यति ॥ ६ ॥
धान्यकोशश्च यः कश्चिद्धनकोशश्च मामकः ।
तौ राममनुगच्छेतां वसन्तं निर्जने वने ॥ ७ ॥
यजन् पुण्येषु देशेषु विसृजंश्चाप्तदक्षिणाः ।
ऋषिभिश्चापि सङ्गम्य प्रवत्स्यति सुखं वने ॥ ८ ॥
भरतश्च महाबाहुरयोध्यां पालयिष्यति ।
सर्वकामैः पुनः श्रीमान् रामः संसाध्यतामिति ॥ ९ ॥
एवं ब्रुवति काकुत्स्थे कैकेय्या भयमागतम् ।
मुखञ्चाप्यगमच्छोषं स्वरश्चापि व्यरुध्यत ॥ १० ॥

येमल्लैः वीर्यतः वीर्यपरीक्षया रमते इत्यर्थः ॥ ४ ॥
नागरा जनाः अरण्यकोविदाः अरण्यमर्मज्ञाः ॥ ५ ॥
राज्यं राज्यस्थितिं देशस्थितिम् ॥ ६ ॥ ७ ॥
आप्तदक्षिणाः उत्तमदक्षिणाः ॥ ८ ॥
पालयिष्यतीति सोपालम्भोक्तिः संसाध्यतां प्रस्थाप्यताम् ॥ ९ ॥

---

* "बहुविधम्" इति वा पाठः ।

सा विषण्णा च सन्त्रस्ता मुखेन परिशुष्यता।
राजानमेवाभिमुखी कैकेयी वाक्यमब्रवीत्॥ ११॥
राज्यं गतधनं साधो! पीतमण्डां सुरामिव।
निरास्वाद्यतमं शून्यं भरतो नाभिपत्स्यते॥ १२॥
कैकेय्यां मुक्तलज्जायां वदन्त्यामतिदारुणम्।
राजा दशरथो वाक्यमुवाचायतलोचनाम्॥ १३॥
वहन्तं किन्तुदसि मां नियुज्य धुरिमाहिते।
अनार्य्ये! कृत्यमारब्धं किन्तु पूर्वमुपारुधः॥ १४॥
तस्यैतत् क्रोधसंयुक्तमुक्तं श्रुत्वा वराङ्गना।
कैकेयी द्विगुणं क्रुद्धा राजानमिदमब्रवीत्॥ १५॥

स्वरश्च व्यरुध्यत रुद्धो जातः भयकार्य्यमेतत्॥ १०॥ ११॥

मण्डः सुरासारांशः। निरास्वाद्यं निर्गतास्वाद्यतमं शून्यम् अवस्तुकम्॥ १२॥ १३॥

हे अहिते! मा मां धुरि दासवत् वरहेतुकरामविवासनभरताभिषेकरूपभारे नियुज्य तञ्च भारं वहन्तं मां किं तुदसि व्यथयसि॥ हे अनार्य्ये! यदिदानीमारब्धं कृत्यं सार्वभौमभोगसहितस्य प्रस्थापनप्रतिबन्धरूपं तत् तादृशं गमनं पूर्वमेव वनवासप्रार्थनकाल एव नोपारुधः सर्वं त्यक्त्वा केवलो यात्विति किं न प्रार्थितवत्यसि। तत एतन्निरोधे तव सामर्थ्यं नास्तीति भावः। क्रुद्धदीनोक्तित्वात्सर्वदोषपरिहारः॥ १४॥

तत्रैव वंशे सगरो ज्येष्ठं पुत्रमुपारुधत् ।
असमञ्ज इति ख्यातं तथाऽयं गन्तुमर्हति ॥ १६ ॥
एवमुक्तो धिगित्येव राजा दशरथोऽब्रवीत् ।
व्रीडितश्च जनः सर्वः सा च तन्नावबुध्यत ॥ १७ ॥
तत्र वृद्धो महामात्रः सिद्धार्थो नाम नामतः ।
शुचिर्बहुमतो राज्ञः कैकेयीमिदमब्रवीत् ॥ १८ ॥
असमञ्जो गृहीत्वा तु क्रीड़तः पथि दारकान् ।
सरय्वां प्रक्षिपन्नप्सु रमते तेन दुर्मतिः ॥ १९ ॥
तं दृष्ट्वा नागराः सर्वे क्रुद्धा राजानमब्रुवन् ।
असमञ्जं वृणीष्वैकमस्मान् वा राष्ट्रवर्धन ! ॥ २० ॥
तानुवाच ततो राजा किन्निमित्तमिदं भयम् ।
ताश्चापि राज्ञा संपृष्टा वाक्यं प्रकृतयोऽब्रुवन् ॥ २१ ॥

द्विगुणं कृत्वा प्रकारान्तरेण मत्प्रयोजनं नाशयतीत्याशयेन ॥ १५ ॥

पूर्वमनुक्तमपि वनगमनत्वादेवार्थसिद्धमिति दृष्टान्तबलेनाह,—तत्रैवेति । उपारुधत् राज्यभोगेभ्य इति शेषः ॥ १६ ॥

एवमुक्तः असमञ्जतुल्यतया गमनं उक्तः । स्वप्रतिश्रुतातिरिक्त-प्रलापात् राज्ञो धिगित्युक्तिः । जनः कैकेयीसेवकजनः सर्वस्वामिन्या असम्बद्धप्रलापात् नावबुध्यत क्रोधवशादिति भावः ॥ १७ ॥

तद्गमनस्य नात्र प्रसङ्ग इति महामात्र आह,—तत्रेति । महा-मात्रः प्रधानः ॥ १८ ॥

क्रीड़तस्त्वेष नः पुत्रान् बालानुद्भ्रान्तचेतसः।
सरय्वां प्रक्षिपन् मौर्ख्याद्तुलां प्रीतिमश्नुते ॥ २२ ॥
स तासां वचनं श्रुत्वा प्रकृतीनां नराधिपः।
तं तत्याजाहितं पुत्रं तासां प्रियचिकीर्षया ॥ २३ ॥
तं यानं शीघ्रमारोप्य सभार्य्यं सपरिच्छदम्।
यावज्जीवं विवास्योऽयमितितानन्वशात्पिता ॥ २४ ॥
स फालपिटकं गृह्य गिरिदुर्गाण्यलोकयत्।
दिशः सर्वास्त्वनुचरन् स यथापापकर्मकृत् ॥ २५ ॥
इत्येनमत्यजद्राजा सगरो वै सुधार्मिकः।
रामः किमकरोत्पापं येनैवमुपरुध्यते ॥ २६ ॥

सरय्वाम् अप्सु प्रक्षिपन् रमते तेन कारणेन दुर्मतिः सः न ताद्दृशोऽयमिति भावः ॥ १९ ॥ २० ॥ २१ ॥ २२ ॥

तं प्रकृतीनामहितं पुत्रं तत्याजेत्यन्वयः ॥ २३ ॥

शीघ्रं यानमारोप्य स्वेच्छया गमने विलम्बकरणसम्भवात् सपरिच्छदं वनयोग्यफालपिटकादिपरिच्छदसहितम्। तान्विवासनाधिकारिणः अन्वशात् उक्तवान् ॥ २४ ॥

यथापापकर्मकृत् यथोक्तपापकर्मकृत् सः फालसहितं पिटकं गृहीत्वा कन्दाद्यर्थं सर्वा दिशः सर्वदिक्षुः गिरिदुर्गाणि अनुचरन् भ्रममाणः कन्दाद्यलोकयत्। सर्वादिशस्त्वनुचरन्नतिष्ठत्पापकर्मकृदिति पाठ गिरिदुर्गाणि वासार्थमेव विलोकयन् सर्वा दिशश्च कन्दाद्यर्थमनुचरन् अतिष्ठत्। यावज्जीवं निजापराधादने इति शेषः ॥ २५ ॥

नहि कञ्चन पश्यामो राघवस्यागुणं वयम् ।
दुर्लभोह्यस्य निरयः शशाङ्कस्येव कल्मषम् ॥ २७ ॥
अथवा देवि ! त्वं कञ्चिद्दोषं पश्यसि राघवे ।
त्वमद्य ब्रूहि तत्त्वेन तदा रामो विवास्यते ॥ २८ ॥
अदुष्टस्य हि संत्यागः सत्पथे निरतस्य च ।
निर्दहेदपि शक्रस्य द्युतिं धर्मविरोधनात् ॥ २९ ॥
तदलं देवि ! रामस्य श्रिया विहृतया त्वया ।
लोकतोऽपि हि ते रक्ष्यः परिवादः शुभानने ! ॥ ३० ॥
श्रुत्वा तु सिद्धार्थवचो राजा श्रान्ततरस्वरः ।
शोकोपहतया वाचा कैकेयीमिदमब्रवीत् ॥ ३१ ॥
एतद्वचो नेच्छसि पापरूपे !
हितं न जानासि ममात्मनोऽथवा ।

प्रकृते तदप्रसङ्ग इत्याह,—रामः किमिति ॥ २६ ॥

अगुणं दोषव्यसनरूपम् । निरयः पापम् । कल्मषं मालिन्यम् ॥ २७ ॥ २८ ॥ २९ ॥

त्वया विहृतया रामस्य श्रिया तेन किञ्चित् फलमिति शेषः, भरतस्य त्वदनुरूपमतित्वाभावात् तदलं तथा श्रमेण हि यतो लोकतः प्राप्तः परिवादस्व ते रक्ष्यः परिहार्यो भवति । एतच्च लोकापवादमात्रमस्य फलं नान्यत्किञ्चिदिति भावः ॥ ३० ॥ ३१ ॥

आस्थाय मार्गं कृपणं कुचेष्टा
चेष्टाहिते ! साधुपथादपेता ॥ ३२ ॥
अनुव्रजिष्याम्यहमद्य रामं
राज्यं परित्यज्य सुखं धनञ्च ।
सर्वे च * राज्ञा भरतेन च त्वं
यथासुखं भुंक्ष्व चिराय राज्यम् ॥ ३३ ॥

इत्यार्षे रामायणे वाल्मीकीये अयोध्याकाण्डे
कैकेयीमहामात्र संवादो नाम षट्-
त्रिंशः सर्गः ॥ ३६ ॥

एतद्वचः सिद्धार्थवचः हि यतः कृपणं मार्गमास्थाय येयं त्वया कुचेष्टारूपा चेष्टा कृता सा साधुपथादपेता ॥ ३२ ॥
सर्वे च अयोध्यावासिनो जनाः राज्ञा भरतेन च त्यक्ष्यते ॥ ३३ ॥

इति रामाभिरामे श्रीरामीये रामायणतिलके
अयोध्याकाण्डे षट्त्रिंशः सर्गः ॥ ३६ ॥

---

* "सहैव" इति वा पाठः ।

## सप्तत्रिंशः सर्गः ।

महामात्रवचः श्रुत्वा रामो दशरथं तदा ।
अभ्यभाषत वाक्यन्तु विनयज्ञो विनीतवत् ॥ १ ॥
त्यक्तभोगस्य मे राजन् ! वने वन्येन जीवत. ।
किं कार्य्यमनुयात्रेण त्यक्तसङ्गस्य सर्वतः ॥ २ ॥
यो हि दत्वा द्विपश्रेष्ठं कक्ष्यायां कुरुते मनः ।
रज्जुस्नेहेन किं तस्य त्यजतः कुञ्जरोत्तमम् ॥ ३ ॥
तथा मम सतां श्रेष्ठ ! किं ध्वजिन्या जगत्पते ! ।
सर्व्वाण्येवानुजानामि चीराण्येवानयन्तु मे ॥ ४ ॥

रामो धीरोदात्तत्वेन कैकेयीपरितोषायाह,—महामात्रेति । महामात्रः सिद्धार्थः विनीतवत् विनीतः सन् ॥ १ ॥

अनुयात्रेण अनुयात्रावता सैन्येन त्यक्तसङ्गस्य सर्वतः । असङ्गो ह्ययमात्मेति श्रुतेः ॥ २ ॥

असङ्गत्वेदं ससैन्यस्य वनगमनमित्याह,—योहीति । कक्ष्या गजमध्यबन्धनरज्जुः ॥ ३ ॥

ध्वजिन्या कक्ष्यातुल्यया अनुजानामि मातृप्रीतये भरताय ददामि । चीराणि वनोपयुक्तवासांसि आनयन्तु कैकेयीदास्यः ॥ ४ ॥

खनित्रपिटके चोभे समानयत गच्छतः।
चतुर्दश वने वासं वर्षाणि वसतो मम॥ ५॥
अथ चीराणि कैकेयी स्वयमाहृत्य राघवम्
उवाच परिधत्स्वेति जनौघे निरपत्रपा॥ ६॥
स चीरे पुरुषव्याघ्रः कैकेय्याः प्रतिगृह्य ते।
सूक्ष्मवस्त्रमवक्षिप्य मुनिवस्त्राण्यवस्त ह॥ ७॥
लक्ष्मणश्चापि तत्रैव विहाय वसने शुभे।
तापसाच्छादने चैव जग्राह पितुरग्रतः॥ ८॥
अथात्मपरिधानार्थं सीता कौशेयवासिनी।
संप्रेक्ष्य चीरं सन्त्रस्ता पृषती वागुरामिव॥ ९॥

चतुर्दशवर्षाणि वने वसतो मम फलाद्यानयनसाधने उभे खनित्रपिटके भो कैकेयिदास्यः समानयत गच्छत शीघ्रं तदानयनायेति शेषः॥ ५॥

एतत्पर्यन्तं मन्थराप्रेरितं सिद्धं कृत्वा ब्राह्मणशापप्राप्तलोकासूयाविषयत्वसम्पादकं कर्म कैकेय्यारभते। अथेति। स च शापोऽध्यात्मरामायणे स्पष्टः॥ ६॥

स रामः चीरे अन्तरीयोत्तरीयरूपे, अवक्षिप्य परित्यज्य, अवस्त धृतवान्। वस आच्छादने॥ ७॥ ८॥

अथात्मनः परिधानार्थं तया दत्तं चीरं सीता संप्रेक्ष्य। वागुरां संप्रेक्ष्य पृषती मृगीव सन्त्रस्तासेनाभूत्॥ ९॥

सा व्यपत्रपमाणेव प्रगृह्य च सुदुर्मनाः ।
कैकेय्याः कुशचीरे ते जानकी शुभलक्षणा ॥ १० ॥
अश्रुसम्पूर्णनेत्रा च धर्मज्ञा धर्मदर्शिनी ।
गन्धर्वराजप्रतिमं भर्त्तारमिदमब्रवीत् ॥ ११ ॥
कथं नु चीरं बध्नन्ति मुनयो वनवासिनः ।
इति ह्यकुशला सीता सा मुमोह मुहुर्मुहुः ॥ १२ ॥
कृत्वा कण्ठे स्म सा चीरमेकमादाय पाणिना ।
तस्थौ ह्यकुशला तत्र व्रीडिता जनकात्मजा ॥ १३ ॥
तस्यास्तत्क्षिप्रमागत्य रामो धर्मभृतां वरः ।
चीरं बबन्ध सीतायाः कौशेयस्योपरि स्वयम् ॥ १४ ॥
रामं प्रेक्ष्य तु सीताया बध्नन्तं चीरमुत्तमम् ।
अन्तःपुरचरा नार्य्यो मुमुचुर्वारि नेत्रजम् ॥ १५ ॥

व्यपत्रपमाणेव लज्जमानेव कैकेय्याः सकाशात् ते कुशचीरे प्रगृह्य भर्त्तुरीदृश्यवस्थेति सुतरां दुर्मना इव अतएवाश्रुपूर्णनेत्रा ॥ १० ॥ ११ ॥

अकुशला अपरिचयात् चीरबन्धनेऽनिपुणा । मुमोह बन्धनस्थलनिश्चयं न प्रापेव ॥ १२ ॥

कृत्वा कण्ठे अनेनेदृश्यां राजकुमार्य्यामस्या ईदृशो व्यवहार इति कैकेय्यां तत्र जनस्यात्यन्तमसूया सूचिता ॥ १३ ॥

कौशेयस्योपरीति तस्याः कौशेयत्यागप्रसक्त्यभावात् ॥ १४ ॥

सीतायाश्चीरं बध्नन्तमुत्तमं रामं सम्प्रेक्ष्येत्यन्वयः ॥ १५ ॥

ऊचुश्च परमायत्ता रामं ज्वलिततेजसम्।
वत्स! नैवं नियुक्तेयं वनवासे मनस्विनी॥ १६॥
पितुर्वाक्यानुरोधेन गतस्य विजनं वनम्।
तावद्दर्शनमस्या नः सफलं भवतु प्रभो!॥ १७॥
लक्ष्मणेन सहायेन वनं गच्छस्व पुत्रक!।
नेदमर्हति कल्याणी वस्तुं तापसवद्वने॥ १८॥
कुरु नो याचनां पुत्र! सीता तिष्ठतु भामिनी।
धर्मनित्यः स्वयं स्थातुं नहीदानीं त्वमिच्छसि॥ १९॥
तासामेवंविधा वाचः शृण्वन् दशरथात्मजः।
बबन्धैव तदा चीरं सीतया तुल्यशीलया॥ २०॥
चीरे गृहीते तु तया सबाष्पो * नृपतेर्गुरुः।

परमायत्ताः परमखिन्नाः। यत्तः खेदोपस्कारयोः। एवं त्वद्वत् इयं नियुक्ता न॥ १६॥

विजनं वनं गतस्य यावदागमनं तावदस्या दर्शनं नोऽस्तु तेन च नो जीवनं सफलं भवतु॥ १७॥ १८॥

तिष्ठतु अत्रैवेति शेषः। हि यद्यपि धर्मनित्यस्त्वं इदानीं स्वयं स्थातुं नेच्छसि तथापीयं तिष्ठतु॥ १९॥

तुल्यशीलया अनङ्गीकृतनगरस्थित्या सीतया प्रेरितः सन् चीरं बबन्धेत्यन्वयः॥ २०॥

* "समीक्ष्य" इति वा पाठः।

निवार्य्य सीतां कैकेयीं वशिष्ठो वाक्यमब्रवीत् ॥ २१ ॥
अतिप्रवृत्ते ! दुर्मेधे ! कैकेयि ! कुलपांसिनि ! ।
वञ्चयित्वा तु राजानं न प्रमाणेऽवतिष्ठसि ॥ २२ ॥
न गन्तव्यं वनं देव्या सीतया शीलवर्जिते ! ।
अनुष्ठास्यति रामस्य सीता प्रकृतमासनम् ॥ २३ ॥
आत्मा हि दाराः सर्वेषां दारसंग्रहवर्त्तिनाम् ।
आत्मेयमिति रामस्य पालयिष्यति मेदिनीम् ॥ २४ ॥
अथ यास्यति वैदेही वनं रामेण सङ्गता ।
वयमत्रानुयास्यामः पुरञ्चेदं गमिष्यति ॥ २५ ॥

चीरे गृहीते इत्यमिच्छेति शेषः सवाप्य इति पाठे पाठान्तरन्तु सम्यगेव ॥ २१ ॥

अतिप्रवृत्ते मर्यादातिक्रमेण प्रवृत्ते यावद्वरस्तावत्प्रमाणे न अवतिष्ठसि। कुतः, अत्रा वनगमनस्य त्वया अवृतत्वादिति भावः। सप्रमाणेवेति पाठः। तद्व्याख्यानञ्च न प्रकृतोपयोगीति चिन्त्यम् ॥ २२ ॥

अतएव न गन्तव्यमिति। रामस्य प्रकृतं प्रस्तुतमासनं सीता अनुष्ठास्यति अधिष्ठास्यति राज्यं करिष्यति यावद्रामागमनमित्यर्थः ॥ २३ ॥

ननु स्त्रियाः कथं राज्याधिष्ठानमत आह—आत्मा हीति। दारसंग्रहवर्त्तिनां गृहस्थानां सर्वेषामात्मा दाराः। अर्द्धो वा एष आत्मनो यत्पत्नीति श्रुतेः। अनेन स्त्रीपुरुषयोरुभयोः परस्परावयवमेलनं सूचितम्। अतएव लोकेऽपि सर्वतस्तयोः परस्परप्रियत्वं दृश्यते ॥ २४ ॥

अन्तपालाश्च यास्यन्ति सदारोयत्र राघवः।
सहोपजीव्यं राष्ट्रञ्च पुरञ्च सपरिच्छदम् ॥ २६ ॥
भरतश्च सशत्रुघ्नश्चीरवासा वनेचरः।
वने वसन्तं काकुत्स्थमनुवत्स्यति पूर्वजम् ॥ २७ ॥
ततः शून्यां गतजनां वसुधां पादपैः सह।
त्वमेका शाधि दुर्वृत्ता प्रजानामहिते रता ॥ २८ ॥
न हि तद्भविता राष्ट्रं यत्र रामो न भूपतिः।
तद्वनं भविता राष्ट्रं यत्र रामो निवत्स्यति ॥ २९ ॥
नह्यदत्तां महीं पित्रा भरतः शास्तुमिच्छति।
त्वयि वा पुत्रवद्वस्तं यदि जातो महीपतेः ॥ ३० ॥

अथ यास्यति त्वन्निर्बन्धादिति शेषः। वयं सदाद्याः ब्राह्मणाः। अत्र यत्र रामोऽवस्थातुमेनमनुगमिष्यामः ॥ २५ ॥

अन्तपालाः शुद्धान्तरक्षकाः राष्ट्रान्तस्थितदाहनायकाः इत्यन्ये। उपजीव्यं जीवनसाधनं तेन सहितं राष्ट्रं सपरिच्छदं दासीदासादिसहितं पुरञ्च यास्यति ॥ २६ ॥

भरतश्च पूर्वजमनुवत्स्यति तत्सदृशावस्थयैव स्थास्यति दशरथजातस्य तत्स्वभावताया एवौचित्यमिति भावः ॥ २७ ॥

पादपैः सहेत्यनेनाटवीभूतामिति द्योत्यते ॥ २८ ॥ २९ ॥

सर्वथैव तव भरतराज्यप्रयासो व्यर्थ इत्याह,—नहीति। अदत्तां

यद्यपि त्वं क्षितितलाद्गगनञ्चोत्पतिष्यति ।
पितृवंशचरित्रज्ञः सोऽन्यथा न करिष्यति ॥ ३१ ॥
तत्त्वया पुत्रगर्द्धिन्या पुत्रस्य कृतमप्रियम् ।
लोके नहि स विद्येत यो न राममनुव्रतः ॥ ३२ ॥
द्रक्ष्यस्यद्यैव कैकेयि ! पशुव्यालमृगद्विजान् ।
गच्छतः सह रामेण पादपांश्च तदुन्मुखान् ॥ ३३ ॥
अथोत्तमान्याभरणानि देवि !
देहि स्नुषायै व्यपनीय चीरम् ।

प्रीतिपूर्वमदत्तां किन्तु स्वक्षिर्बन्धमेन दत्तां त्वयि वा परम्पराप्राप्तधर्म-मार्गिकायां अतःपरं पुत्रवद्दत्तुं नार्हति। कुतस्तत्राह,—यदीति। महीपतेर्दशरथाज्जातो यदि पितॄन् समनुजायन्ते नरा इति न्यायादित्याशयः। यदि इत्यसन्दिग्धवचनं वेदश्चेत् प्रमाणमिति वत्। यद्वा कैकेय्याधिक्कारानन्तरमिदम् ॥ ३० ॥

पितृवंशचरित्रं ज्येष्ठे विद्यमाने कनिष्ठस्य राज्यानर्हत्वरूपं तज्ज्ञः ॥ ३१ ॥

पुत्रगर्धिन्या पुत्रराज्याभिलाषवत्या लोके स न विद्येत तत्प्रत्तां न सम्भाविता यो रामं नानुव्रतः ॥ ३२ ॥

तत्र प्रत्यक्षं मानमाह,—द्रक्ष्यसीति। पादपांश्चेति किमु वक्तव्यं मनुष्यानिति भावः ॥ ३३ ॥

न चीरमस्याः प्रविधीयतेति
न्यवारयत्तद्वसनं वसिष्ठः ॥ ३४ ॥
एकस्य रामस्य वने निवास
स्त्वयावृतः केकयराजपुत्रि !
विभूषितेयं प्रतिकर्मनित्या
वसत्वरण्ये सह राघवेण ॥ ३५ ॥
यानैश्च मुख्यैः परिचारकैश्च
सुसंवृता गच्छतु राजपुत्री ।
वस्त्रैश्च सर्वैः सहितैर्विधानै-
र्नेयं वृता ते वरसम्प्रदाने ॥ ३६ ॥
तस्मिंस्तथा जल्पति विप्रमुख्ये
गुरौ नृपस्याप्रतिमप्रभावे ।

एवं वसिष्ठो भाव्यर्थजातमुक्त्वा प्रकृतमनुष्ठेयमुपदिशति । अथेति । प्रविधीयते इति इति च्छेदः इकारलोप आर्षः । दातुं युज्यते इत्यर्थः इत्युक्त्वा तद्वसनं परिधानं न्यवारयत् जानक्या इति शेषः ॥ ३४ ॥

दानयोग्यत्वमुपपादयति । एकस्येति । प्रतिकर्म प्रसाधनव्यापारः स नित्यं यस्याः सा, अतएव विभूषिता वसत्वरण्ये स्वभर्तृशुश्रूषार्थम् ॥ ३५ ॥

विधानैः उपकरणैः ॥ ३६ ॥

तस्मिन् गुरौ तथा जल्पत्यपि भर्तुः प्रतिकारकामा वेषादिभिः

नैव स्म सीता विनिवृत्तभावा
प्रियस्य भर्त्तुः प्रतिकारकामा ॥ ३७ ॥

इत्यार्षे रामायणे वाल्मीकीये अयोध्याकाण्डे
कैकयीवसिष्ठ संवादो नाम सप्तत्रिंशः
सर्गः ॥ ३७ ॥

तदवस्थासदृशावस्थासम्पादनकामा सती चीरपरिग्रहाद्विनिवृत्तभावा नैव बभूव स्म ॥ ३७ ॥

इति रामाभिरामे श्रीरामीये रामायणतिलके
अयोध्याकाण्डे सप्तत्रिंशः सर्गः ॥ ३७ ॥

---

## अष्टत्रिंशः सर्गः।

तस्यां चीरं वसानायां नाथवत्यामनाथवत्।
प्रचुक्रोश जनः सर्वो धिक् त्वां दशरथन्त्विति॥ १॥
तेन तत्र प्रणादेन दुःखितः स महीपतिः।
चिच्छेद जीविते श्रद्धां धर्मे यशसि चात्मनः॥ २॥
स निश्वस्योष्णमैक्ष्वाकुस्तां भार्यामिदमब्रवीत्।
कैकेयि! कुशचीरेण न सीता गन्तुमर्हति॥ ३॥
सुकुमारी च बाला च सततञ्च सुखोचिता।
नेयं वनस्य योग्येति सत्यमाह गुरुर्मम॥ ४॥

इयं हि कस्यापकरोति किञ्चित्
तपस्विनी राजवरस्य पुत्री

तस्यामिति। तद्द्वारानन्तर्गतायामीदृशमनिष्टमवहारमनिवार्य तूष्णीं तिष्ठतीति जनाक्रोशः॥ १॥

तेन प्रणादेन जनाक्रोशेन तां भार्यां कैकेयीम्॥ २॥ ३॥ ४॥

वनस्य वनगमनयोग्यचीरस्य कस्यापि किञ्चित् करोति काकुर-पितु नेत्यर्थः। किञ्चिद्राज्यप्रतिबन्धादि। विसंज्ञा अपरिचिताश्रमधर्मानुष्ठानप्रसङ्गतः प्राप्तमोहा श्रमणीव भिक्षुकीव॥ ५॥

या चीरमासाद्य जनस्य मध्ये
स्थिता विसंज्ञा श्रमणीव काचित् ॥ ५ ॥
चीराण्यपास्याज्जनकस्य कन्या
नेयं प्रतिज्ञा मम दत्तपूर्वा
यथासुखं गच्छतु राजपुत्री
वनं समग्रा सह सर्वरत्नैः ॥ ६ ॥
अजीवनार्हेण मया नृशंसा
कृता प्रतिज्ञा नियमेन तावत्
त्वया हि बाल्यात्प्रतिपन्नमेतत्
तन्मा दहेद्वेणुमिवात्मपुष्पम् ॥ ७ ॥
रामेण यदि ते पापे ! किञ्चित्कृतमशोभनम् ।

अपास्यात् त्यजतु । इयं प्रतिज्ञा चीरवासिनी सीता वनं यात्विति त्वदीया प्रतिज्ञा न मम दत्तपूर्वा न मया पूर्वमनुमता वरदानसमये अतो यथासुखं गच्छतु इत्यन्वयः ॥ ६ ॥

अजीवनार्हेण मुमूर्षुणा, अनेन मतिभ्रंशः सूच्यते । नृशंसा अतिक्रूरा प्रतिज्ञा रामवनवासविषया नियमेन शपथपूर्वं सा तावत् कृता । यदेतत् हि यतोऽधिकं सीताचीरग्रहणं त्वया प्रतिपन्नं आरब्धं तद्-बाल्यादज्ञानादेव नात्र ते सामर्थ्यम् । तस्माद्वेणुरात्मपुष्पमिव त्वत्कृता-तिप्रवृत्तिस्त्वां मा दहेत् मा नाशयतु । यद्वा एषा तव प्रवृत्तिरुक्त वैधव्यप्राप्तये मां दहेत् नाशयेत् ॥ ७ ॥

अपकारः क इह ते वैदेह्याद्र्शितोऽधमे ! ॥ ८ ॥
मृगीवोत्फुल्लनयना मृदुशीला मनस्विनी।
अपकारं किमित्र ते करोति जनकात्मजा ॥ ९ ॥
ननु पर्याप्तमेतत्ते पापे ! रामविवासनम्।
किमेभिः कृपणैर्भूयः पातकैरपि ते कृतैः। १० ॥
प्रतिज्ञातं मया तावत् त्वयोक्तं देवि ! शृण्वता।
रामं यदभिषेकाय त्वमिहागतमब्रवीः। ११ ॥

अशोभनमपराधः। वैदेह्या ते कः अपकारः चीरग्रहणपूर्वकवनवासप्रयोजनको दर्शितः कृप्पादितः ॥ ८ ॥ ९ ॥

ते तव एवं रामविवासनं चीरादि वर्जितेन रामवनगमनं पर्याप्तं सकलनरकानुभवायालम्। ते त्वया कृतैः एभिरपि कृपणरतिवाच्यदुःखप्रदैः सीताप्रव्राजनादिरूपैः पातकैः किं किमनुभविष्यसि वा न जानामीति शेषः ॥ १० ॥

अभिषेकाय मया कृतनिश्चयं पश्चात्तत्प्रतिबन्धे त्वया कृते मत्प्रेरणयेहागतं रामं प्रति यत्त्वमब्रवीः जटाचीरधरो वनं गच्छेति तत्त्वयोक्तं शृण्वता मया तावदेव प्रतिज्ञातं तथाङ्गीकृत्यनुमतं नतु सीता प्रव्राजनादि ॥ ११ ॥

एतत् त्वोक्तं तदतिक्रम्य अधिकार्थे प्रवृत्तत्वान्निरयं गन्तुमर्हसि। कोऽत्रमेतिक्रमोऽत आह,—मैथिलीमिति। ईक्षसे वाञ्छसि। स एवेक्षतबहुस्यां प्रजायेयेत्यादाविच्छार्थस्येक्षतेर्दर्शनात् ॥ १२ ॥

तत्त्वेतत् समतिक्रम्य निरयं गन्तुमिच्छसि ।
मैथिलीमपि या हि त्वमीक्षसे चीरवासिनीम् * ॥ १२ ॥
एवं ब्रुवन्तं पितरं रामः संप्रस्थितो वनम् ।
अवाक्शिरसमासीनमिदं वचनमब्रवीत् ॥ १३ ॥
इयं धार्मिक ! कौशल्या मम माता यशस्विनी ।
वृद्धा चाक्षुद्रशीला च न च त्वां देव ! गर्हते ॥ १४ ॥
मया विहीनां वरद ! प्रपन्नां शोकसागरम् ।

एवं ब्रुवन्तं सीता यथासुखं गच्छत्विति ब्रुवन्तम् । संप्रस्थितः एवंवादात्तया सह गमने कृतानुमतिकत्वात् तया गन्तुं प्रवृत्तः ॥ १३ ॥

न च गर्हते त्वदाज्ञया मयि वनं गच्छत्यपि इति शेषः । सत्य-रक्षणं धर्म इति ज्ञात्वा इति भावः ॥ १४ ॥

प्रपन्नां प्राप्तां भूयः सम्मन्तुं प्रधानपत्नीत्वात् क्रियमाणसम्माना-मपि भूयोऽधिकं सम्मन्तुमर्हसि । सम्मन्तुं तस्याः सम्मानं कर्त्तुं मत्प्रार्थ-नयेति शेषः ॥ १५ ॥

---

* इतीव राजा विलपन्महात्मा
शोकस्य नान्तं स ददर्श किञ्चित् ।
भृशातुरत्वाच्च पपात भूमौ
तेनैव पुत्रव्यसनेन मग्नः ॥
क्वचित् पुस्तकेषु इत्यधिकं दृश्यते ।

अदृष्टपूर्वव्यसनां भूयः संमन्तुमर्हसि * ॥ १५ ॥

इमां महेन्द्रोपम ! जातगर्द्धिनीं
तथा विधातुं जननीं ममार्हसि ।
यथा वनस्थे मयि शोककर्शिता
न जीवितं न्यस्य यमक्षयं व्रजेत् ॥ १६ ॥

इत्यार्षे रामायणे वाल्मीकीये अयोध्याकाण्डे
रामदशरथसंवादो नाम अष्टत्रिंशः
सर्गः ॥ ३८ ॥

जातगर्धिनीम् त्वत्समीपे जातो मद्दर्शनविषयो गर्धोऽभिलाषो यस्यास्तां, न्यस्य त्यक्त्वा ॥ १६ ॥

इति रामाभिरामे श्रीरामीये रामायणतिलके
अयोध्याकाण्डे अष्टत्रिंशः सर्गः ॥ ३८ ॥

---

* पुत्रशोकं यथा नर्च्छेत् त्वया पूज्येन पूजिता
मां हि सञ्चिन्तयन्तीयमपि जीवेत् तपस्विनी ॥
केषुचित् पुस्तकेषु इत्यधिकं दृश्यते ।

# एकोनचत्वारिंशः सर्गः ।

रामस्य तु वचः श्रुत्वा मुनिवेषधरञ्च तम् ।
समीक्ष्य सह भार्य्याभीराजा विगतचेतनः ॥ १ ॥
नैनं दुःखेन सन्तप्तः प्रत्यवेक्षत राघवम् ।
न चैनमभिसंप्रेक्ष्य प्रत्यभाषत दुर्मनाः ॥ २ ॥
स मुहूर्त्तमिवासंज्ञो दुःखितश्च महीपतिः ।
विललाप महाबाहूरराममेवानुचिन्तयन् ॥ ३ ॥
मन्ये खलु मया पूर्वं विवत्सा बहवः कृताः ।
प्राणिनो हिंसिता वापि तन्मामिद*मुपस्थितम् ॥ ४ ॥
नत्वेवानागते काले देहाच्चवति जीवितम् ।
कैकेय्या क्लिश्यमानस्य मृत्युर्मम न विद्यते ॥ ५ ॥

रामस्येति । विगतचेतनोऽभूदिति शेषः ॥ १ ॥
प्रत्यवेक्षत द्रष्टुं नाशक्नोत् ॥ २ ॥ ३ ॥
विवत्सा इति धेनव इति शेषः ॥ ४ ॥
कैकेय्या क्लिश्यमानस्यापि मम यतो मृत्युर्न विद्यते ततप्राणिनं

* "तस्मादिदम्" इति वा पाठः ।

योऽहं पावकसङ्काशं पश्यामि पुरतः स्थितम्।
विहाय वसने सूक्ष्मे तापसाच्छादमात्मजम् ॥ ६ ॥
एकस्याः खलु कैकेय्याः कृतेऽयं क्लिश्यते * जनः।
स्वार्थे प्रयतमानायाः संश्रित्य निकृतिन्त्विमाम् ॥ ७ ॥
एवमुक्त्वा तु वचनं बाष्पेण विहतेन्द्रियः।
रामेति सकृदेवोक्त्वा व्याहर्त्तुं न शशाक सः ॥ ८ ॥
संज्ञां तु प्रतिलभ्यैव मुहूर्त्तात् स महीपतिः।
नेत्राभ्यामश्रुपूर्णाभ्यां सुमन्त्रमिदमब्रवीत् ॥ ९ ॥
औपवाह्यं रथं युक्त्वा त्वमायाहि हयोत्तमैः।
प्रापयैनं महाभागमितो जनपदात् परम् ॥ १० ॥

दृश्यतेऽतः कालेऽनागते देहाज्जीवितं नैव च्यवत इति जाने इति शेषः ॥ ५ ॥

आच्छाद्यतेऽनेनेत्याच्छादः तापसानामाच्छादो यस्य तादृशमात्मजं पश्यामि यस्तस्य मे मृत्युर्न विद्यते इत्यन्वयः ॥ ६ ॥

जनः कैकेयीव्यतिरिक्तः सर्वोऽपि। इमां निकृतिं वरव्याजरूपाम् संश्रित्येत्यस्य स्थिताया इति शेषः ॥ ७ ॥ ८ ॥

नेत्राभ्याम् उपलक्षितः ॥ ९ ॥

औपवाह्यं वाहनमात्रोपयुक्तं युद्धानर्हमित्यर्थः। युक्त्वा योजयित्वा योज्येति पाठेऽप्येवमेव परं दक्षिणस्यामिति शेषः ॥ १० ॥

---

* "क्लिश्यते" इति वा पाठः।

एवं मन्ये गुणवतां गुणानां फलमुच्यते।
पित्रा मात्रा च यत्साधुर्वीरो निर्वास्यते वनम् ॥ ११ ॥
राज्ञो वचनमाज्ञाय सुमन्त्रः शीघ्रविक्रमः।
योजयित्वा ययौ तत्र रथमश्वैरलङ्कृतम् ॥ १२ ॥
तं रथं राजपुत्राय सूतः कनकभूषितम्।
आचचक्षेऽञ्जलिं कृत्वा युक्तं परमवाजिभिः ॥ १३ ॥
राजा सत्वरमाहूय व्यापृतं वित्तसञ्चये।
उवाच देशकालज्ञो निश्चितं सर्वतः शुचिः ॥ १४ ॥
वासांसि च वरार्हाणि भूषणानि महान्ति च *।
वर्षाण्येतानि संख्याय वैदेह्याः क्षिप्रमानय ॥ १५ ॥

साधुर्वीरो रामः पित्रा मात्रा च वनं निर्वास्यते यत् अतः गुणवतां पुंसां गुणानां फलं एवं निवासगहनमुच्यते शास्त्रेणेति मन्ये इति दुःखातिशयादुक्तिः। ऊर्जस्वलङ्कारः ॥ ११ ॥

रथं योजयित्वा तत्र रामसन्निधौ ययौ ॥ १२ ॥

आचचक्षे रथ उपस्थित इत्युक्तवान् ॥ १३ ॥

वित्तसञ्चये व्यापृतं धनाध्यक्षमित्यर्थः निश्चितं वच उवाचेत्यन्वयः। सर्वतः शुचिः इहामुत्रान्तरः ॥ १४ ॥

एतानि वर्षाणि चतुर्दशवर्षाणि। एतेन एतावानेव वनवासो नाधिक इति पुनर्दार्ढ्याय ध्वनितम् ॥ १५ ॥

---

* वराणि च" इति वा पाठः।

नरेन्द्रेणैवमुक्तस्तु गत्वा कोशगृहं ततः।
प्रायच्छत् सर्वमाहृत्य सीतायै क्षिप्रमेव तत् ॥ १६ ॥
सा सुजाता सुजातानि वैदेही प्रस्थिता वनम्।
भूषयामास गात्राणि तैर्विचित्रैर्विभूषणैः ॥ १७ ॥
व्यराजयत वैदेही वेश्म तत् सुविभूषिता।
उद्यतोऽंशुमतः काले खं प्रभेव विवस्वतः ॥ १८ ॥
तां भुजाभ्यां परिष्वज्य श्वश्रूर्वचनमब्रवीत्।
अनाचरन्तीं कृपणं मूर्ध्न्युपाघ्राय मैथिलीम् ॥ १९ ॥
असत्यः सर्वलोकेऽस्मिन् सततं सत्कृताः प्रियैः।
भर्त्तारं नाभिमन्यन्ते विनिपातगतं स्त्रियः ॥ २० ॥

प्रायच्छत् धनाध्यक्षः। सममेवेति पाठे वचनसमकालमेवेत्यर्थः ॥१६॥

सुजाता अयोनिजा सुजातानि सामुद्रिकोक्तलक्षणवन्ति गात्राणी-त्यन्वयः ॥ १७ ॥

उद्यतः उदयं प्राप्नुवतः काले प्रातःकाले। अनेन शोकतोऽपि विषाद-राहित्यं तस्याः सूचितम् ॥ १८ ॥

कृपणम् अनाचरन्तीं क्षुद्राचारहीनां तां भर्तृशुश्रूषापरां सीताम् ॥ १९ ॥

सततं प्रियैः सत्कृता अपि विनिपातगतं कष्टगतं भर्तारं याः शुश्रूषितं नानुमन्यन्ते ताः सर्वलोके इहलोके परलोके चासत्यः असती-त्वेन गणिताः ॥ २० ॥

एष स्वभावो नारीणामनुभूय पुरा सुखम् ।
अल्पामप्यापदं प्राप्य दुष्यन्ति प्रजहत्यपि ॥ २१ ॥
असत्यशीला विकृता दुर्गा अहृदयाः सदा ।
असत्यः पापसङ्कल्पाः क्षणमात्रविरागिणः ॥ २२ ॥
न कुलं न कृतं विद्या न दत्तं नापि संग्रहः ।
स्त्रीणां गृह्णाति हृदयमनित्यहृदयाहिताः ॥ २३ ॥

नारीणां प्रकृतत्वादसतीनाम् । यत् पुरा अनापदवस्थायां सुखं भर्तृदत्तमनुभूय । तस्य अल्पामपि रोगदारिद्र्यादिलक्षणामापदं प्राप्य दृष्ट्वा तं दुष्यन्ति दूषयन्ति नानादूषणयुक्तत्वेन वदन्ति । नैतावदेव प्रजहत्यपि ॥ २१ ॥

असत्यशीलाः असत्यवचनशीलाः विकृताः विकृतोपेताद्यादि-व्यापाराः । दुर्गाः दुष्टाभिसरणादिगतिशीलाः । अहृदयाः स्वभर्तरि विरसाः । असत्यः कुलटाः । पापे परपुरुषप्रसङ्गादौ संकल्पो मनो-व्यापारो यासाम् । क्षणमात्रविरागिणः क्षणमात्रविरागिण्य इत्यर्थः । अल्पनिमित्ततः क्षणमात्रेण त्यक्तानुरागाः । अविश्वसनीयस्नेहा इति यावत् । विरागिण इत्यत्र ङीवभाव आर्षः । ता असत्य इति विधे-यम् ॥ २२ ॥

कुलं प्रशस्तम् । कृतमुपकारः । विद्या गुरूपदिष्टधर्मविद्या । दत्तं भूषणादिदानम् । संग्रहः दृष्टेऽपि दोषे स्वीकारः । यद्वा संग्रहो बन्ध-नादि । एतत् सर्वमपि स्त्रीणामसतीनां हृदयं न गृह्णाति पापवृत्तेर्न

साध्वीनान्तु स्थितानान्तु शीले सत्ये श्रुते स्थिते।
स्त्रीणां पवित्रं परमं पतिरेको विशिष्यते ॥ २४ ॥
स त्वया नावमन्तव्यः पुत्रः प्रव्राजितो वनम्।
तव देवसमस्त्वेष निर्धनः सधनोऽपि वा ॥ २५ ॥
विज्ञाय वचनं सीता तस्या धर्मार्थसंहितम्।
कृत्वाञ्जलिमुवाचेदं स्त्रियमभिमुखे स्थिता ॥ २६ ॥
करिष्ये सर्वमेवाहं आर्या यदनुशास्ति माम्।
अभिज्ञास्मि यथा भर्त्तुर्वर्त्तितव्यं श्रुतञ्च मे ॥ २७ ॥

प्रतिबध्नाति। नञ्‌द्वाऊत्वम् अप्रतिबन्धदार्ढ्यप्रतिपादनाय। कामातुराणां न भयं न लज्जेति न्यायात्। कुलाद्युचितं कृत्यं एवं कृत्वा लोकगर्हितकृत्ये एव प्रवर्तन्ते। कुतः यतोऽनित्यहृदयाः। अव्यवस्थितचित्ताः ॥ २३ ॥

साध्वीनां तु पतिव्रतानां तु शीले सच्चरित्रे। सत्ये सत्यवचने। श्रुते गुरुजनोपदेशे स्थिते स्वकुलोचितमर्य्यादावस्थितौ तु तुरेवार्थे एष्वेव स्थितानां स्त्रीणां परमं पवित्रम् उत्तमं पुण्यसाधनं पतिरेक एव अतएव स्त्रियाः सर्वधर्मसाधनेभ्यो विशिष्यते ॥ २४ ॥

यदेवमतः किमत आह,—स इति। देवसमः देवतुल्यः एषः पतिः ॥ २५ ॥ २६ ॥

यथा भर्तुः भर्तृविषये वर्तितव्यं तथा अभिज्ञास्मि। किञ्च तथा श्रुतं मे स्वमातापितृभ्यामिति शेषः ॥ २७ ॥

न मामसज्जनेनार्य्या समानयितुमर्हति ।
धर्म्माद्विचलितुं नाहमलं चन्द्रादिव प्रभा ॥ २८ ॥
नातन्त्री विद्यते * वीणा नाचक्रो विद्यते रथः ।
नापतिः सुखमेधेत या स्यादपि शतात्मजा ॥ २९ ॥
मितं ददाति हि पिता मितं भ्राता मितं सुतः ।
अमितस्य तु दातारं भर्त्तारं का न पूजयेत् ॥ ३० ॥
साहमेवं गता श्रेष्ठाश्रुतधर्म्मपरावरा ।
आर्य्ये ! किमवमन्येयं स्त्रिया भर्त्ता हि दैवतम् ॥ ३१ ॥
सीताया वचनं श्रुत्वा कौशल्या हृदयङ्गमम् ।
शुद्धसत्वा मुमोचाश्रु सहसा दुःखहर्षजम् ॥ ३२ ॥
तां प्राञ्जलिरभिप्रेक्ष्य * मातृमध्येऽतिसत्कृताम् ।

असज्जनेन असतीजनेन समानयितु समानां कर्तुमार्य्या नार्हति । नाहमलं न समर्था ॥ २८ ॥

विद्यते वादनसमर्था इति गमनसमर्थ इति च शेषः । शतात्मजेति बहुव्रीहिः शतपुत्रा ॥ २९ ॥

अमितस्य ऐहिकामुष्मिकसकलसुखस्य कर्मणि षष्ठी ॥ ३० ॥

एवंगता भर्ता परमपूज्य इति ज्ञानवती श्रेष्ठाश्रुतधर्मेति पाठे श्रेष्ठाभ्यः श्वश्रूमातृप्रमुखाभ्यः श्रुतः परावरः सामान्यविशेषरूपो धर्मो यया । श्रेष्ठे इति पाठः क्वचित् । किमवमन्येयं कस्मादवमंस्यामि ॥३१॥

* "वाद्यते" इति वा पाठः ।

रामः परमधर्मात्मा मातरं वाक्यमब्रवीत् ॥ ३३ ॥
अम्ब ! मा दुःखिता भूत्वा पश्येस्त्वं पितरं मम।
क्षयोऽपि वनवासस्य क्षिप्रमेव भविष्यति ॥ ३४ ॥
सुप्तायास्ते गमिष्यन्ति नववर्षाणि पञ्च च।
समग्रमिह संप्राप्तं मां द्रक्ष्यसि सुहृद्‌वृतम् ॥ ३५ ॥
एतावदभिनीतार्थमुक्त्वा स जननीं वचः।
त्रयः शतशतार्धा हि ददर्शावेक्ष्य मातरः ॥ ३६ ॥
ताश्चापि स तथैवार्त्ता मातॄर्दशरथात्मजः।
धर्मयुक्तमिदं वाक्यं निजगाद कृताञ्जलिः ॥ ३७ ॥

शुद्धसत्त्वा शुद्धचित्ता। पुत्रादेर्वनगमनेन दुःखं सीतावाक्यश्रवणेन च हर्षः ॥ ३२ ॥

अभिप्रेक्ष्य दृष्ट्वा। अतिसत्कृतां सर्वजनैरिति शेषः ॥ ३३ ॥

वनवासस्य वनवासकालस्य ॥ ३४ ॥

सुप्तायाः सुप्ताया इव। चतुर्दशघटीवद् गमिष्यन्ति। समग्रं भ्रातृभार्यासहितं समग्रश्रेयस्कञ्च। पुनरपि सुहृद्भिर्वृतं राजत्वेन ॥३५॥

अभिनीतार्थं निर्णीतार्थम्। त्रयःशतानि त्रीणि शतानि शतार्द्धञ्च संख्या यासां ताः त्रेस्त्रयसादेश आर्षः। एवंभूता या मातरः सन्ति ताः अवेक्ष्य विविच्य ददर्शेत्यर्थः। तथा मातरश्च तं ददृशुरिति शेषः ॥३६॥

तथैव कौशल्यावदेवार्तास्ता मातॄः प्रति इदं जगादेत्यन्वयः ॥ ३७ ॥

---

* अभिक्राम्य प्रदक्षिणीकृत्य इति।

* "अभिक्राम्य" * इति वा पाठः।

संवासात् परुषं किञ्चिदज्ञानादपि यत् कृतम् ।
तन्मे समुपजानीत सर्वाश्चामन्त्रयामि वः ॥ ३८ ॥
वचनं राघवस्यैतद्धर्मयुक्तं समाहितम् ।
शुश्रुवुस्ताः स्त्रियः सर्वाः शोकोपहतचेतसः ॥ ३९ ॥
जज्ञेऽथ तासां सन्नादः क्रौञ्चीनामिव निस्वनः ।
मानवेन्द्रस्य भार्य्याणामेवं वदति राघवे ॥ ४० ॥
मुरजपणवमेघघोषवद्दशरथवेश्म बभूव यत्पुरा ।
विलपितपरिदेवनाकुलं व्यसनगतं तदभूत् सुदुःखितम् ।४१॥

इत्यार्षे रामायणे वाल्मीकीये अयोध्याकाण्डे
गुरुजनसम्भाषणं नाम एकोनचत्वा-
रिंशः सर्गः ॥ ३९ ॥

संवासः सहवासः परुषमुक्तमिति शेषः । अज्ञानादपि यत्कृतं परुषं कर्म समुपजानीत क्षान्तमित्यनुजानीतेत्यर्थः ॥ ३८ ॥

समाहितं धीरम् ॥ ३९ ॥

अथ रामवचः श्रवणानन्तरं सन्नादः शोकजः शब्दः ॥ ४० ॥

मेघो वाद्यविशेषः मुरजपणवाएव मेघा इति रूपकं वा विलपितं रामगुणकैकेयीदुर्गुणप्रतिपादकं वाक्यम् । परिदेवनं रोदनम् ॥ व्यसनगतं प्राप्तेष्टवियोगम् ॥ ४१ ॥

इति रामाभिरामे श्रीरामीये रामायणतिलके
अयोध्याकाण्डे एकोनचत्वारिंशः सर्गः ॥ ३९ ॥

## चत्वारिंशः सर्गः ।

अथ रामश्च सीता च लक्ष्मणश्च कृताञ्जलिः ।
उपसंगृह्य राजानं चक्रुर्दीनाः प्रदक्षिणम् ॥ १ ॥
तञ्चापि समनुज्ञाप्य धर्मज्ञः सह सीतया ।
राघवः शोकसंमूढो जननीमभ्यवादयत् ॥ २ ॥
अन्वक्षं लक्ष्मणो भ्रातुः कौशल्यामभ्यवादयत् ।
अथ मातुः सुमित्राया जग्राह चरणौ पुनः ॥ ३ ॥
तं वन्दमानं रुदती माता सौमित्रिमब्रवीत् ।
हितकामा महाबाहुं मूर्ध्न्युपाघ्राय लक्ष्मणम् ॥ ४ ॥

उपसंगृह्य पादपतनपूर्वकं प्रणम्य । दीनाः मातापित्रोः शोकदर्शना-द्दीना इव ॥ १ ॥

समनुज्ञाप्य कृतानुमतिकं कृत्वा । शोकसंमूढः मातृदुःखदर्शनात् स इव ॥ २ ॥

अन्वक्षं अनुपदं रामेण कौशल्यावन्दनानन्तरम् । भ्रातुः जननी-मिति शेषः । कौशल्यामभ्यवादयत् । पुनः कौशल्यावन्दनानन्तरं मातुः सुमित्राया अपिना अन्यासाञ्च ॥ ३ ॥ ४ ॥

अत्यन्तसुहृज्जने स्वनुरक्तोऽपि त्वं मया वनवासाय सृष्टोऽनुमतः ।

सृष्टस्त्वं वनवासाय स्वनुरक्तः सुहृज्जने ।
रामे प्रमादं माकार्षीः पुत्र ! भ्रातरि गच्छति ॥ ५ ॥
व्यसनी वा समृद्धो वा गतिरेष तवानघ ! ।
एष लोके सतां धर्मो यज्ज्येष्ठवशगो भवेत् ॥ ६ ॥
इदं हि वृत्तमुचितं कुलस्यास्य सनातनम् ।
दानं दीक्षा च यज्ञेषु तनुत्यागो मृधेषु हि * ॥ ७ ॥
रामं दशरथं विद्धि मां विद्धि जनकात्मजाम् ।
अयोध्यामटवीं विद्धि गच्छ तात ! यथासुखम् ॥ ८ ॥
लक्ष्मणमेवमुक्त्वासौ संसिद्धं प्रियराघवम् ।

वनं गच्छति भ्रातरि रामे प्रमादमनवधानं माकार्षीः भ्रातरीत्यनेन सोदरवदेवायं द्रष्टव्य इति सूचितम् ॥ ५ ॥

कनीयसो ज्येष्ठानुवर्त्तनं परमो धर्म इत्याह,—व्यसनी वेति राज्याभावेन ॥ ६ ॥

इदं ज्येष्ठानुवर्त्तनरूपं धर्मान्तरमपि चाह्नोचितमाह,—दानमित्यादि । मृधेषु युद्धेषु तनुत्यागः तनावनास्थापूर्वकं युद्धकरणम् ॥ ७ ॥

असौ एवं स्वपुत्रं लक्ष्मणमुक्त्वा संसिद्धं वनं गन्तुं निश्चितमनस्कम् । प्रियराघवं प्रियरूपं राघवं गच्छ गच्छेति पुनःपुनरुवाच शकुनसम्पत्तये इति भावः । तं लक्ष्मणं पुनरुवाचेत्यनुकर्षः ॥ ८ ॥

* "ज्येष्ठस्याप्यानुवृत्तिश्च राजवंशस्य लक्षणम् ।"
इति पाश्चात्याः ।

सुमित्रा गच्छ गच्छेति पुनःपुनरुवाच तम् ॥ ९ ॥
ततः सुमन्त्रः काकुत्स्थं प्राञ्जलिर्वाक्यमब्रवीत् ।
विनीतो विनयज्ञश्च मातलिर्वासवं यथा ॥ १० ॥
रथमारोह भद्रन्ते राजपुत्र ! महायशः ! ।
क्षिप्रं त्वां प्रापयिष्यामि यत्र मां राम ! वक्ष्यसे ॥ ११ ॥
चतुर्दश हि वर्षाणि वस्तव्यानि वने त्वया ।
तान्युपक्रमितव्यानि यानि देव्या प्रचोदितः ॥ १२ ॥
तं रथं सूर्य्यसंकाशं सीता हृष्टेन चेतसा ।
आरुरोह वरारोहा कृत्वालङ्कारमात्मनः ॥ १३ ॥

तद्वचनमाह,—राममिति । एवञ्च पितृमातृनगरस्मरणेन मनस्चाञ्चल्यं मा कुर्व्विति ध्वनितम् । रामस्य पितृवत् सेव्यत्वम् । सीतायां मातृवद्भावकरणम् । अटव्या अयोध्यावत्पाल्यत्वम् । तेन तत्रत्यजन्तूनामनुद्वेगकरणञ्च ध्वनितम् ॥ ९ ॥ १० ॥

यत्र यद्देशप्रापणे मां वक्ष्यसे नियोजयसि तं देशं क्षिप्रं प्रापयिष्यामि । नेह रजन्यां वस्तव्यमिति शेषः ॥ ११ ॥

कुतस्तत्राह,—चतुर्दशेति । यानि चतुर्दशवर्षाणि वने वस्तव्यानि तान्यद्यैवोपक्रमितव्यानि आरम्भणीयानि । यतो देव्या कैकेय्या अद्यैव वनं गच्छेति प्रेरितोऽस्मि ॥ १२ ॥

हृष्टेन चेतसेत्यनेनांगिरामनउत्साहमित्युक्तो मुख्यः शकुनो ध्वनितः ॥ १३ ॥

वनवासं हि संख्याय वासांस्याभरणानि च ।
भर्तारमनुगच्छन्त्यै सीतायै श्वशुरो ददौ ॥ १४ ॥
तथैवायुधजातानि भ्रातृभ्यां कवचानि च ।
रथोपस्थे प्रविन्यस्य सचर्मकठिनञ्च यत् ॥ १५ ॥
अथो ज्वलनसंकाशं चामीकरविभूषितम् ।
तावारुरुहतुस्तूर्णं भ्रातरौ रामलक्ष्मणौ ॥ १६ ॥
सीतातृतीयानारूढ़ान् दृष्ट्वा रथमचोदयत् ।
सुमन्त्रः सम्मतानश्वान्वायुवेगसमाञ्जवे ॥ १७ ॥
प्रयाते तु महारण्यं चिररात्राय राघवे ।
बभूव नगरे मूर्च्छा बलमूर्च्छा जनस्य च ॥ १८ ॥

अलङ्कारकरणोपायमुक्तं स्मारयति,—वनवासं हीति। यानि ददौ तानि रथोपस्थे विन्यस्येत्यन्वयः। अग्रिमश्लोके तथैवेति पदस्वरसात् ॥ १४ ॥

भ्रातृभ्यां भ्रात्रोरित्यर्थः। सचर्म चर्मपिनद्धं पेटकम्। कठिनं खनित्रम्। प्रविन्यस्य स्थापयित्वा ॥ १५ ॥

अथो अनन्तरं आरुरुहतुः ॥ १६ ॥

सम्मतान् सम्मतसर्वलक्षणान् ॥ १७ ॥

चिररात्रायेत्यव्ययं चिरकालावस्थित्यर्थमित्यर्थः। नगरे विद्यमानस्य सर्वमनुष्यस्य बलस्य अश्वगजादेर्मूर्च्छा। जनस्य तिर्यग्जन्तुरूपस्य च मूर्च्छा बभूवेत्यर्थः ॥ १८ ॥

तत्समाकुलसंभ्रातं मत्तसंकुपितद्विपम्।
हयसिञ्जितनिर्घोषं पुरमासीन् महास्वनम्॥ १८॥
ततः सबालवृद्धा सा पुरी परमपीड़िता।
राममेवाभिदुद्राव घर्मार्त्तः सलिलं यथा॥ २०॥
पार्श्वतः पृष्ठतश्चापि लम्बमानास्तदुन्मुखाः।
बाष्पपूर्णमुखाः सर्वे तमुचुर्भृशनिस्वनाः॥ २१॥
संयच्छ वाजिनां रश्मीन् सूत! याहि शनैः शनैः।
मुखं द्रक्ष्याम रामस्य दुर्दर्शन्नो भविष्यति॥ २२॥
आयसं हृदयं नूनं राममातुरसंशयम्।
यद्देवगर्भप्रतिमे वनं याति न भिद्यते॥ २३॥
कृतकृत्या हि वैदेही छायेवानुगता पतिम्।
न जहाति रता धर्मे मेरुमर्कप्रभा यथा॥ २४॥

तदेव प्रपञ्चयति,—तदिति। ससाकुलमिति। कर्त्तव्यतामूढ़ञ्च तत् सम्भ्रान्तं रामानुगमनाय त्वरायुक्तम्। मत्ता रामवियोगेन संकुपिता द्विपा यस्मिन्। हयानां दुःखेन शिञ्जितानां शब्दवतां पर्य्याकुलप्राणि-भूषणानां निर्घोषो यस्मिन्॥ १८॥

परमपीड़िता रामवियोगदुःखेनेति शेषः॥ २०॥

तं सुमन्त्रम्॥ २१॥ २२॥

देवगर्भप्रतिमे स्कन्दतुल्ये। यद्वा देवगर्भो देवनिधिर्हिरण्यगर्भ-स्तत्प्रतिमे याति गच्छति सति॥ २३॥

अहो लक्ष्मण ! सिद्धार्थः सततं प्रियवादिनम् ।
भ्रातरं देवसंकाशं यस्त्वं परिचरिष्यसि ॥ २५ ॥
महत्येषा हि ते बुद्धिरेष चाभ्युदयो महान् ।
एषः स्वर्गस्य मार्गश्च यदेनमनुगच्छसि ॥ २६ ॥
एवंवदन्तस्ते सोढुं न शेकुर्बाष्पमागतम् ।
नरास्तमनुगच्छन्त प्रियमिक्ष्वाकुनन्दनम् ॥ २७ ॥
अथ रा[illegible]ः स्त्रीभिर्दीनाभिर्दीनचेतनः ।
निर्जगाम प्रियपुत्रं द्रक्ष्यामीति ब्रुवन् गृहात् ॥ २८ ॥
शुश्रुवे चाग्रतः स्त्रीणां रुदतीनां महास्वनः ।
यथा नादः करेणूनां बद्धे महति कुञ्जरे ॥ २९ ॥
पिता हि राजा काकुत्स्थः श्रीमान् सन्नस्तदा बभौ ।
परिपूर्णः शशी काले ग्रहेणोपप्लुतो यथा ॥ ३० ॥
स च श्रीमानचिन्त्यात्मा रामो दशरथात्मजः ।
सूतं संचोदयामास त्वरितं वाह्यतामिति ॥ ३१ ॥

मेरुमित्यादि नित्यं तत्प्रदक्षिणसञ्चारात् ॥ २४ ॥
यस्त्वं भ्रातरं परिचरिष्यसि सत्वं सिद्धार्थः कृतार्थः ॥ २५ ॥
तदेवाह,—महतीत्यादि । अभ्युदय ऐहिकः ॥ २६ ॥ २७ ॥ २८ ॥
करेणूनां तत्पालकवृद्धकरिणीनाम् ॥ २९ ॥
सन्नः खिन्नः ग्रहेण राहुणा ॥ ३० ॥
अचिन्त्यात्मा । अहंममताभिमानराहित्येन तद्बुद्धिरज्ञेयस्वरूपः ।

रामो याहीति तं सूतं तिष्ठेति च जनस्तदा।
उभयं नाशकत् सूतः कर्त्तुमध्वनि चोदितः॥ ३२॥
निर्गच्छति महाबाहौ रामे पौरजनाश्रुभिः।
पतितैरभ्यवहितं प्रशशाम महीरजः॥ ३३॥
रुदिताश्रुपरिद्यूनं हाहाकृतमचेतनम्।
प्रयाणे राघवस्यासीत् पुरं परमपीड़ितम्॥ ३४॥
सुस्राव नयनैः स्त्रीणामस्रमायाससम्भवम्।
मीनसंक्षोभचलितैः सलिलं पङ्कजैरिव॥ ३५॥
दृष्ट्वा तु नृपतिः श्रीमानेकचित्तगतं पुरम्।
निपपातैव दुःखेन कृत्तमूल इव द्रुमः॥ ३६॥
ततो हलहलाशब्दो जज्ञे रामस्य पृष्ठतः।

एतेन सर्वथा ममताराहित्यं सूचितम्। तदेव स्वस्य ध्वनयन्नाह,—त्वरितं वाह्यतामिति॥ ३१॥

तं सुमन्त्रं आहेति शेषः। उभयं नाशकत् एवञ्च नातिमन्दं नातिवेगमवाहयदित्यर्थः॥ ३२॥

अभ्यवहितं रथनेम्युद्धतम्॥ ३३॥

रुदिताश्रुपरिद्यूनम् अनुत्साहवत्॥ ३४॥

आयासः खेदः। चलितैः तिर्य्यग्भूतैः पङ्कजैः वर्षसंभूतोदकैरिति बोध्यम्। अपादानस्यैव करणत्वविवक्षा॥ ३५॥

एकचित्तगतं दुःखेनैकचित्ततां प्राप्तम्॥ ३६॥

नराणां प्रेक्ष्य राजानं सीदन्तं भृशदुःखितम् ॥ ३७ ॥
हा रामेति जनाः केचिद्राममातेति चापरे ।
अन्तःपुरसमृद्धञ्च क्रोशन्तं पर्य्यदेवयन् ॥ ३८ ॥
अन्वीक्षमाणो रामस्तु विषण्णं भ्रान्तचेतसम् ।
राजानं मातरञ्चैव ददर्शानुगतौ पथि ॥ ३९ ॥
स बद्ध इव पाशेन किशोरो मातरं यथा ।
धर्मपाशेन संयुक्तः प्रकाशं नाभ्युदैक्षत ॥ ४० ॥
पदातिनौ च यानार्हावदुःखार्हौ सुखोचितौ ।
दृष्ट्वा सञ्चोदयामास शीघ्रं याहीति सारथिम् ॥ ४१ ॥

सीदन्तं मूर्च्छन्तम् ॥ ३७ ॥

अन्तःपुरसमृद्धं अन्तःपुरसहितं क्रोशन्तं उच्चैः शब्देन रुदन्तं [रा]जानं दृष्ट्वा केचिन्नरा हा रामेति केचिद्वा राममातेति पर्य्यदेवयन् [श]ुशुचुः । उपलक्षणमेतत् केचिद्वा राजन्नित्यपि । राममातेत्या-[दि]म् ॥ ३८ ॥

अनु पश्चाद्भागे ईक्षमाणो रामः मातरं राजानञ्च समनुगतौ [द]दर्श ॥ ३९ ॥

पाशेन निबद्धः किशोरोऽश्वबालो मातरं यथा न पश्यति एवं [ध]र्मपाशेन संयुक्तः स बद्ध इव । नित्यमुक्तस्वभावत्वादेवमुक्तिः प्रकाशं [ना]भ्युदैक्षत सङ्कुचितदर्शनव्यापारोऽभूदित्यर्थः ॥ ४० ॥

यानार्हत्वादिगुणविशिष्टौ पितरौ दृष्ट्वेत्यन्वयः ॥ ४१ ॥

नहि तत्पुरुषव्याघ्रो दुःखजं दर्शनं पितुः।
मातुश्च सहितुं शक्तोतोत्रैर्नुन्न * इव द्विपः॥ ४२॥
प्रत्यगारमिवायान्ती सवत्सा वत्सकारणात्।
बद्धवत्सा यथा धेनू राममाताभ्यधावत॥ ४३॥
तथा रुदन्तीं कौशल्यां रथं तमनुधावतीम्।
क्रोशन्तीं रामरामेति हा सीते! लक्ष्मणेति च॥ ४४॥
रामलक्ष्मणसीतार्थं स्रवन्तीं वारि नेत्रजम्।
असकृत् प्रैक्षत सतां नृत्यन्तीमिव मातरम्॥ ४५॥

दुःखजं दुःखं जायतेऽस्मात् तादृशं अन्यत्रापि दृश्यत इति डः दुःखदमिति पाठान्तरम्। तोकदृष्ट्यौदसहितुम्। तोषसहेति वेट्। दुःखितौ पितरौ द्रष्टुं न शक्त इति यावत्। तोत्त्रमङ्कुशः तत्पीड़ितो द्विपो यथा स्वपृष्ठवर्त्तिवस्तुदर्शनाशक्तस्तद्वत्। अस्य च कैकेयीवाक्यमेवाङ्कुशः॥ ४२॥

वत्सकारणात् प्रत्यगारं वत्सावस्थितिमत् गृहमुद्दिश्यागच्छन्ती सवत्सा बद्धवत्सा धेनुर्यथा धावति एवं राममाता अभ्यधावत। एषु सवत्सेत्याद्यधिककथनं कवेरपि शोकाविष्टत्वान्न दोषाय॥ ४३॥ ४४॥

रामलक्ष्मणसीतार्थं तद्वियोगजशोकवशात् नेत्रजं वारि स्रवन्तीं मुञ्चन्तीं नृत्यतीमिवेतस्ततः परिभ्रमन्तीं असकृत्प्रैक्षत राम इति शेषः॥ ४५॥

---

* "तोत्त्रार्दितः" इति वा पाठः।

तिष्ठेति राजा चुक्रोश याहि याहीति राघवः ।
सुमन्त्रस्य बभूवात्मा चक्रयोरिव चान्तरा ॥ ४६ ॥
नाश्रौषमिति राजानमुपालब्धोऽपि वक्ष्यसि ।
चिरं दुःखस्य पापिष्ठमिति रामस्तमब्रवीत् ॥ ४७ ॥
स रामस्य वचः कुर्व्वन्ननुज्ञाप्य च तं जनम् ।
व्रजतोऽपि हयांश्शीघ्रं चोदयामास सारथिः ॥ ४८ ॥
न्यवर्त्तत जनो राज्ञो रामं कृत्वा प्रदक्षिणम् ।
मनसाप्याशुवेगेन न न्यवर्त्तत मानुषम् ॥ ४९ ॥

चक्रयोर्युगपत्प्रसेनयोरन्तरास्थितः उदासीनः पुरुष इव सुमन्त्रस्यात्मा दोलायितो बभूव ॥ ४६ ॥

ननु राजवचनातिक्रमे दोषः स्यादत आह, नेति। उपालब्धोऽपि। मया बहुशस्तिष्ठतिष्ठेत्युक्तोऽपि मद्वचनं नाकार्षीरिति पुनर्गमनानन्तरं राज्ञोपालब्धोऽपि नाश्रौषमिति वक्ष्यसि। दुःखस्य मद्दुःखस्य हेतुभूतं पापिष्ठं अतिदुःखजनकत्वात् पापिष्ठं चिरविलम्बनमितिहेतोः शीघ्रं गच्छेति रामस्तमब्रवीत् ॥ ४७ ॥

तं जनं अनुव्रजत् पौरजनं अनुज्ञाप्य रामेण कृतां पुनः परावृत्य गमनानुज्ञां प्रापय्य व्रजतोऽपि स्वतो गच्छतोऽपि पुनः शीघ्रं शीघ्रगत्यर्थम् ॥ ४८ ॥

राज्ञो जनः राजसम्बन्धी जनः अवरोध जनः उपजीवि जनश्च रामं मनसा प्रदक्षिणां कृत्वा न्यवर्त्तत देहमात्रेणेति शेषः रथस्य शीघ्रगत्वादिति भावः। आशु वेगेन मनसा तु न न्यवर्त्तत। मानुषं

यमिच्छेत् पुनरायान्तं नैनं दूरमनुव्रजेत् ।
इत्यमात्या महाराजमूचुर्दशरथं वचः ॥ ५० ॥

तेषां वचः सर्वगुणोपपन्नः
प्रस्विन्नगात्रः प्रविषण्णरूपः ।
निशम्य राजा कृपणः सभार्यो
व्यवस्थितस्तं सुतमीक्षमाणः ॥ ५१ ॥

इत्यार्षे रामायणे वाल्मीकीये अयोध्याकाण्डे
सीतालक्ष्मणसहितस्य रामस्य वनवासो
नाम चत्वारिंशः सर्गः ॥ ४० ॥

इतरमनुष्यसमूहः । आशुवेगेन मनसापि न न्यवर्त्तत । अपिना देहेन च न न्यवर्त्तत । मनसाप्यश्रुवेगैश्चेति पाठान्तरम् । अत्र पाठे मनसोऽनिवृत्तेरश्रुवेगो ज्ञापकः ॥ ४९ ॥

उत्कटदिदृक्षावतो राज्ञस्तु सचिववचनान्निवृत्तिरित्याह,—यमिच्छेदिति ॥ ५० ॥

व्यवस्थितः अवस्थितः ॥ ५१ ॥

इति रामाभिरामे श्रीरामीये रामायणतिलके
अयोध्याकाण्डे चत्वारिंशः सर्गः ॥ ४० ॥

---

## एकोचत्वारिंशः सर्गः ।

तस्मिंस्तु पुरुषव्याघ्रे निष्क्रामति कृताञ्जलौ ।
आर्त्तशब्दो हि संजज्ञे स्त्रीणामन्तःपुरे महान् ॥ १ ॥
अनाथस्य जनस्यास्य दुर्बलस्य तपस्विनः ।
यो गतिः शरणञ्चासीत् स नाथः क्व नु गच्छति ॥ २ ॥
न क्रुध्यत्यभिशस्तोऽपि क्रोधनीयानि वर्जयन् ।
क्रुद्धान् प्रसादयन् सर्वान् समदुःखः क्व गच्छति ॥ ३ ॥
कौशल्यायां महातेजा यथा मातरि वर्त्तते ।
तथा यो वर्त्ततेऽस्मासु महात्मा क्व नु गच्छति ॥ ४ ॥
कैकेय्या क्लिश्यमानेन राज्ञा संचोदितो वनम् ।

इदानीं तत्प्रयाणनिमित्तसर्वप्रजाशोक उच्यते । तस्मिन्निति । मातृवेष्टितपितृदेशेन कृताञ्जलौ । निष्क्रामति नगरान्निर्गच्छति सति ॥ १ ॥

तदेवाह,—अनाथस्येति । तपस्विनः शोच्यस्य गतिः सकलसुखावाप्तिहेतुः शरणं सर्वापद्भ्यो रक्षिता ॥ २ ॥

अभिशस्तः मिथ्याभिशंसनं प्रापितः क्रोधनीयानि प्रजाक्रोधकराणि ॥ ३ ॥ ४ ॥

परित्राता जनस्यास्य जगतः क्वनु गच्छति॥ ५॥
अहो निश्चेतनो राजा जीवलोकस्य संश्रयम् *।
धर्म्यं सत्यव्रतं रामं वनवासे प्रवत्स्यति॥ ६॥
इति सर्वा महिष्यस्ता विवत्सा इव धेनवः।
रुरुदुश्चैव दुःखार्त्ताः सस्वरञ्च विचुक्रुशुः॥ ७॥
स तमन्तःपुरे घोरमार्त्तशब्दं महीपतिः।
पुत्रशोकाभिसन्तप्तः श्रुत्वा चासीत् सुदुःखितः॥ ८॥
नाग्निहोत्राण्यहूयन्त सूर्य्यश्चान्तरधीयत।
व्यसृजन् कवलान् नागा गावो वत्सान् न पाययन् *॥९॥

वनं गन्तुमिति शेषः। अस्य जनस्येत्युक्त्वा किं विशिष्य कथनेन सर्वस्य जगतः परित्रातेति भववत्सम्यग्च्छायाः कस्याश्चिद्वचः॥ ५॥

संश्रयं आधारत्वेन गृहभूतं वनवासे तन्निमित्तम्। प्रवत्स्यति प्रवासयति॥ ६॥ ७॥ ८॥

नाहूयन्त अग्निहोत्रिभीरामदुःखादिति शेषः। अन्तरधीयत रामव्यसनात्तदंशतया दिवसशेषे सत्यपि अन्तर्हितोऽभूत्। अकाले दुर्दिनमभूदिति शेषः। व्यसृजन् त्यक्तवन्तः। नागाः गजाः न पाययन् नापाययन्। अडभाव आर्षः॥ ९॥

---

* "संप्रियम्" इति वा पाठः।
* "पुत्रं प्रथमजं दृष्ट्वा जननी नाभ्यनन्दत।"
इति केषुचित् पुस्तकेषु दृश्यते।

त्रिशङ्कुर्लोहिताङ्गश्च बृहस्पतिबुधावपि ।
दारुणाः सोममभ्येत्य ग्रहाः सर्वे व्यवस्थिताः ॥ १० ॥
नक्षत्राणि गतार्चींषि ग्रहाश्च गततेजसः ।
विशाखाश्च सधूमाश्च नभसि प्रचकाशिरे ॥ ११ ॥
कालिकानिलवेगेन महोदधिरिवोत्थितः ।
रामे वनं प्रव्रजिते नगरं प्रचचाल तत् ॥ १२ ॥
दिशः पर्याकुलाः सर्वास्तिमिरेणेव संवृताः ।
न ग्रहो नापि नक्षत्रं प्रचकाशे न किञ्चन ॥ १३ ॥
अकस्मान्नागरः सर्वो जनो दैन्यमुपागमत् ।
आहारे वा विहारे वा न कश्चिदकरोन्मनः ॥ १४ ॥

दुर्दिनाद्युत्पाता राज्ञो रावणस्य च नाशसूचका इति बोध्यम् । त्रिशङ्कुर्दक्षिणदिक्स्थः लोहिताङ्गो भौमः गुरुबुधौ अन्ये सर्वे ग्रहाः शनिशुक्रादयः सोममभ्येत्य रात्रौ वक्रगत्या चन्द्रं प्राप्य दारुणाः क्रूरार्चिषः सन्तो व्यवस्थिताः ॥ १० ॥

गतार्चींषि त्यक्तस्वाभाविककान्तीनि ग्रहाः शन्यादयः । विशाखाः विमार्गस्थाः सधूमाश्च नभसि दृश्यन्ते ॥ ११ ॥

कालिका मेघपङ्क्तिः अनिलवेगेन आकाशे उत्थित उदधिरिव दृश्यते । नगरं प्रचचालेत्यनेन भूकम्पः ॥ १२ ॥ १३ ॥

अकस्माद्दैन्यहेतुकारणाभावेऽपि दैन्यं रामवियोगदैन्यादधिकं दैन्यम् ॥ १४ ॥

शोकपर्य्यायसन्तप्तः सततं दीर्घमुच्छ्वसन् ।
अयोध्यायां जनः सर्वश्चुक्रोश जगतीपतिम् ॥ १५ ॥
वाष्पपर्य्याकुलमुखो राजमार्गगतो जनः ।
न हृष्टो लभ्यते कश्चित् सर्वः शोकपरायणः ॥ १६ ॥
न वाति पवनः शीतो न शशी सौम्यदर्शनः ।
न सूर्य्यस्तपते लोकं सर्वं पर्य्याकुलं जगत् ॥ १७ ॥
अनर्थिनः सुतास्त्रीणां भर्त्तारो भ्रातरस्तथा ।
सर्वे सर्वं परित्यज्य राममेवान्वचिन्तयन् ॥ १८ ॥
ये तु रामस्य सुहृदः सर्वे ते मूढचेतसः ।
शोकभारेण चाक्रान्ताः शयनं नैव भेजिरे ॥ १९ ॥
ततस्त्वयोध्या रहिता महात्मना
पुरन्दरेणेव मही सपर्वता ।

शोकेन रामवियोगजेन पर्यायसन्तप्तः पुनःपुनः सन्तप्तः प्रतिज्ञापालनरूपधर्मवत्यपि कोप उत्पातः ॥ १५ ॥

पूर्वन्तु केषाञ्चित्तत्त्वज्ञानां हर्ष आसीत् सम्प्रति तु सर्वोऽप्यहृष्टः ॥ १६ ॥ १७ ॥

सुता अनर्थिनोऽमपेक्षिणो मातापित्रोरिति शेषः । स्त्रीणां भर्त्तारोऽनर्थिनः भ्रातरो भ्रातृणामनर्थिन इति शेषः । राममेवान्वचिन्तयन् । तत्-ध्यानेन सर्वो जनः सर्वत्र विरक्तोऽभूदित्याशयः ॥१८॥१९ ॥

पुरन्दरेण रहिता सपर्वता समेरुः यथा मही चलति तद्य

चचाल घोरं भयशोकदीपिता
मनागयोधाश्वगणा ननाद च ॥

इत्यार्षे रामायणे वाल्मीकीये अयोध्याकाण्डे राम-
निर्व्यसने उत्पातवर्णनं नाम एकचत्वारिंशः
सर्गः ॥ ४१ ॥

त्रिलोकीपतित्वात् तथा रामेण रहिता अयोध्या चचाल रक्षका-
भावात् ननाद च दुःखाचक्रन्देत्यर्थः ॥ २० ॥

इति रामाभिरामे श्रीरामीये रामायणतिलके
अयोध्याकाण्डे एकचत्वारिंशः सर्गः ॥ ४१ ॥

## द्विचत्वारिंशः सर्गः ।

यावत्तु निर्यतस्तस्य रजोरूपमदृश्यत ।
नैवेक्ष्वाकुवरस्तावत् संजहारात्मचक्षुषी ॥

यावद्राजा प्रियं पुत्रं पश्यत्यत्यन्तधार्मिकम् ।
तावद् व्यवर्धते चास्य धरण्यां पुत्रदर्शने ॥ २ ॥

न पश्यति रजोऽप्यस्य यदा रामस्य भूमिपः ।
तदार्त्तश्च विषण्णश्च पपात धरणीतले ॥ ३ ॥

तस्य दक्षिणमन्वागात् कौशल्या बाहुमङ्गना ।
परञ्चास्यान्वगात् पार्श्वं कैकेयी सा सुमध्यमा ॥ ४ ॥

निर्यतस्तस्य रामस्य सम्बन्धि रजसो रूपं रथ्याधूलेः स्वरूपं यावत्तेनादृश्यत तावदात्मनश्चक्षुषी न संजहार। इदं रामरथोरज इति प्रीत्या तत्पश्यन्नेवासीदिति भावः ॥ १ ॥

यावत् प्रियं पुत्रं राजा पश्यति रथधूलिदर्शनद्वारेति शेषः। तावत् पुत्रदर्शने तन्निमित्तं धरण्यां स्थितोऽस्य देहो व्यवर्धतेव उत्थाय स्थित एवाभूदित्यर्थः ॥ २ ॥

रजसोऽप्यदर्शने तच्छरीरं पतितमभूदित्याह,—नेति। रामस्य रजः रामरथोद्धतं रज इत्यर्थः ॥ ३ ॥

तस्येति। पतितमुत्थाप्य तस्य दक्षिणं बाहुं धृत्वा कौशल्यानु

तां नयेन च सम्पन्नो धर्मेण विनयेन च ।
उवाच राजा कैकेयीं समीक्ष्य व्यथितेन्द्रियः ॥ ५ ॥
कैकेयि ! मामकाङ्गानि मास्प्राक्षीः पापनिश्चये ! ।
न हि त्वां द्रष्टुमिच्छामि न भार्य्या न च बान्धवी ॥ ६ ॥
ये च त्वामनुजीवन्ति नाहं तेषां न ते मम ।
केवलार्थपरां हि त्वां त्यक्तधर्मां त्यजाम्यहम् ॥ ७ ॥
अगृह्णां यच्च ते पाणिं अग्निं पर्य्यणयञ्च यत् ।
अनुजानामि तत् सर्वमस्मिन् लोके परत्र च ॥ ८ ॥
भरतश्चेत् प्रतीतः स्याद्राज्यं प्राप्यैतदव्ययम् ।

आगात् स्वपुरं प्रति गम्यमानमनु आ सद्मेव ससार । कैकेयी तस्य वामं पार्श्वमेव केवलमन्वगात् । तथात्वञ्च राज्ञोऽस्यां परमवैरस्यात् ॥ ४ ॥

तदेवाह,—तामिति ॥ ५ ॥

न च बान्धवी । बन्धूनां स्नेहपात्रदास्यादिरूपापि नेत्यर्थः । अगान्त-त्वान्ङीप् ॥ ६ ॥ ७ ॥

न केवलमैहिकव्यवहारस्य त्यागः किन्तु पारलौकिकस्यापीत्याह,—अगृह्णामिति । यच्च ते पाणिं पर्य्यगृह्णां यच्च त्वामग्निं पर्यणायं प्रद-क्षिणमनयम् अग्निहोत्रसम्बन्धं वा कार्यं, तत्सर्वं अस्मिन् लोके पाणि-ग्रहणसाध्यक्रीड़ादि परलोके अग्निहोत्रादिसाध्यस्वर्गादि चानुजानामि त्यजामि ॥ ८ ॥

नन्, मम त्यागेऽपि मत्पुत्रादेः कथं त्यागः ? ये च त्वामनुजीवन्तीत्या-

यस्मै स दद्यात् पित्रर्थं मा मां तद्दत्तमागमत् ॥ ९ ॥
अथ रेणुसमुध्वस्तं समुत्थाप्य नराधिपम् ।
न्यवर्त्तत तदा देवी कौशल्या शोककर्षिता ॥ १० ॥
हत्वेव ब्राह्मणं कामात् स्पृष्ट्वाग्निमिव पाणिना ।
अन्वतप्यत धर्मात्मा पुत्रं संचिन्त्य राघवम् * ॥ ११ ॥

दिनोक्तस्तत्राह,—भरत इति। यदि त्वया प्रापितं राज्यं प्राप्य भरतः प्रतीतः स्यात् तुष्टः स्यात् तर्हि मे मरणानन्तरं स भरतः पित्रर्थं पितृत्वप्रयुक्तश्राद्धार्थं यद्दद्यात्तत्तद्दत्तं मां मा आगमत् मा प्राप्नोत्वित्यर्थः अन्यथा तु तं न त्यजामीत्यर्थः। कतकस्तु अनुजानामीत्यादिसार्धश्लोक एकं वाक्यं तत्पूर्वार्धे त्यजामीत्यस्यानुकर्षः। तत्तृतीयार्धे यस्मै स दद्यात् पित्रर्थं मामतद्दत्तमागमदिति पाठः। स दद्यादिति चावर्त्तते। भरतस्त्वया प्रापितं राज्यं प्राप्य प्रतीतः विवेकवान् सन् यत्प्राप्तं राज्यं तत् स पित्रर्थं पितुर्मम प्रीतिसम्पादनाय यदि दद्यात् त्यजेत् माम्वातद्दत्तं न कृतं तस्मै दत्तं दानं राज्यस्य येन तादृशं मां प्रीत्या पूर्ववदागमत् प्राप्नुयाच्चेत्तदा यत् स मे दद्यादस्मिन् लोके विहारशय्याभोजनादि परत्र च परलोके पिण्डदानादि तत्सर्वं अनुजानामि अङ्गीकरोमि। अन्यथा तं त्यजाम्येवेत्यर्थं इत्याह ॥ ९ ॥

रेणुसमुध्वस्तम्। भुविलुण्ठनाद्रजोव्याप्तं न्यवर्त्तत राज्ञा सहेति शेषः ॥ १० ॥

---

* "तापसम्" इति वा पाठः।

निवृत्त्यैव निवृत्त्यैव सीदतो रथवर्त्मसु ।
राज्ञो नातिबभौ रूपं ग्रस्तस्यांशुमतो यथा ॥ १२ ॥
विललाप स दुःखार्त्तः प्रियं पुत्रमनुस्मरन् ।
नगरान्तमनुप्राप्तं बुध्वा पुत्रमथाब्रवीत् ॥ १३ ॥
वाहनानाञ्च मुख्यानां वहतान्तं ममात्मजम् ।
पदानि पथि दृश्यन्ते स महात्मा न दृश्यते ॥ १४ ॥
यः सुखेनोपधानेषु शेते चन्दनरूषितः ।
वीज्यमानो महार्हाभिः * स्त्रीभिर्मम सुतोत्तमः ॥ १५ ॥
स नूनं क्वचिदेवाद्य वृक्षमूलमुपाश्रितः ।
काष्ठं वा यदि वाश्मानमुपधाय शयिष्यते ॥ १६ ॥

यथा पाणिनाग्निं स्पृष्ट्वा स्वकर्त्तृकदोषेण तत्पीड़यानुतप्तो भवति तथा स्वकृतमेतद्दुःखमित्यनुतापः ॥ ११ ॥

निवृत्त्य निवृत्त्य पुनःपुनरित्यर्थः । रथवर्त्मसु सीदतः रथमार्गदर्शने क्लिश्यतः ग्रस्तस्य राहुणा ॥ १२ ॥

आत्मानं नगरान्तं नगरसमीपं प्राप्तं बुध्वा पुत्रञ्चाप्राप्तं बुध्वा अब्रवीदिति कतकः । यद्वा पुत्रं नगरान्तं नगरबाह्यन्देशं प्राप्तं मत्वेत्यर्थः ॥ २३ ॥ १४ ॥

महार्हाभिः उत्तमरूपालङ्कारवतीभिः ॥ १५ ॥

क्वचिन्नदीतीरादौ अश्मा पाषाणः ॥ १६ ॥

---

* "महाबाहुः" इति वा पाठः ।

उत्थास्यति च मेदिन्याः कृपणः पांशुगुण्ठितः।
विनिश्वसन् प्रस्रवणात् करेणूनामिवर्षभः॥ १७॥
द्रक्ष्यन्ति नूनं पुरुषा दीर्घबाहुं वनेचराः।
राममुत्थाय गच्छन्तं लोकनाथमनाथवत्॥ १८॥
सा नूनं जनकस्येष्टा सुता सुखसदोचिता।
कण्टकाक्रमणक्लान्ता वनमद्य गमिष्यति॥ १९॥
अनभिज्ञा वनानां सा नूनं भयमुपैष्यति।
श्वापदानर्दितं श्रुत्वा गम्भीरं रोमहर्षणम्॥ २०॥
सकामा भव कैकेयि! विधवा राज्यमावस।
न हि तं पुरुषव्याघ्रं विना जीवितुमुत्सहे॥ २१॥
इत्येवं विलपन् राजा जनौघेनाभिसंवृतः।
अपस्नात इवारिष्टं प्रविवेश गृहोत्तमम् *॥ २२॥

वन्दिस्तुत्यादिराहित्येन कृपण इव। प्रस्रवणात् गिरिप्रस्थादिप्रदेशात्॥ १७॥ १८॥

सुखसदोचिता सुखस्य सदा उचिता तादृश्यपि कण्टकेष्वाक्रमणेन पादविक्षेपेण क्लान्ता पीड़िता॥ १९॥

श्वापदानां व्याघ्रादीनां आसमन्तान्नर्दितम्॥ २०॥

सकामा भवेति वक्रोक्त्या अनपकारिणां दुःखदानात्ते कामपूर्त्तिर्न कदापीति भावः। विधवात्वेहेतुर्नहीत्यादि॥ २१॥

* "पुरोत्तमम्" इति वा पाठः।

शून्यचत्वरवेश्मान्तां संवृतापणवेदिकाम् ।
क्लान्तदुर्बलदुःखार्त्तां नात्याकीर्णमहापथाम् ॥ २३ ॥
तामवेक्ष्य पुरीं सर्वां राममेवानुचिन्तयन् ।
विलपन् प्राविशद्राजा गृहं सूर्य्य इवाम्बुदम् ॥ २४ ॥
महाह्रदमिवाक्षोभ्यं सुपर्णेन हृतोरगम् ।
रामेण रहितं वेश्म वैदेह्या लक्ष्मणेन च ॥ २५ ॥
अथ गद्गदशब्दस्तु विलपन् वसुधाधिपः ।
उवाच मृदुमन्दार्थं वचनं दीनमस्वरम् ॥ २६ ॥
कौशल्याया गृहं शीघ्रं राममातुर्नयंतु माम् ।
नह्यन्यत्र ममाश्वासो हृदयस्य भविष्यति ॥ २७ ॥

अपस्नातः मृतस्नानस्नातः अरिष्टं कश्मलमयम् ॥ २२ ॥

तदेवाह,—शून्येति । शून्या निर्मनुष्याश्चत्वरा गृहप्रान्तभागाः वेश्मान्ता वेश्ममध्यभागाश्च यस्यां सर्वजनानां रामपृष्ठे गतत्वात् । संवृतापणवेदिकां संवृताः आवृताः पण्यस्थापनवेदिका यस्यां सा । देवतामिति पाठे पिहितापणदेवतागृहामित्यर्थः । क्लान्ताः गन्तुमशक्ताः अतएव दुर्बलाः दुःखार्त्ताः रामवियोगपीड़ार्त्ता यस्याम् । नात्याकीर्णाऽत्यन्तसंमर्दरहितो महापथो यस्यां ताम् ॥ २३ ॥ २४ ॥

सुपर्णेन हृतोरगं महाह्रदमिवेति रिपूणां निर्भयप्रवेशद्योतकम् ॥२५॥

मृदुमन्दोच्चारणात् अतएव मन्दार्थमबुद्धार्थं दीनं शोच्यं अस्वरं शुष्ककण्ठध्वनिरहितम् ॥ २६ ॥

इति ब्रुवन्तं राजानमनयन् द्वारदर्शिनः।
कौशल्याया गृहं तत्र न्यवेश्यत विनीतवत्॥ २८॥
ततस्तत्र प्रविष्टस्य कौशल्याया निवेशनम्।
अधिरुह्यापि शयनं बभूव लुलितं मनः॥ २९॥
पुत्रद्वयविहीनञ्च स्नुषया च विवर्जितम्।
अपश्यद्भवनं राजा नष्टचन्द्रमिवाम्बरम्॥ ३०॥
तच्च दृष्ट्वा महाराजो भुजमुद्यम्य वीर्य्यवान्।
उच्चैःस्वरेण प्राक्रोशत् हा राम! विजहासि नौ॥ ३१॥
सुखिता वत तं कालं जीविष्यन्ति नरोत्तमाः।
परिष्वजन्तो ये रामं द्रक्ष्यन्ति पुनरागतम्॥ ३२॥

नयन्तु ये केचिदत्र मनुष्या इति शेषः। अन्यत्र स्वान्तरगृहे आश्वासः खेदापगमः॥ २७॥

द्वारदर्शिनो वेत्रिणः कौशल्याया गृहमनयन्। तत्र गृहे तैर्विनीतवत् पर्य्यङ्के न्यवेश्यत राजेति शेषः। यद्वा तन्निवेशनोत्तरं राजा विनीतवत् अधोमुख आसेति शेषः॥ २८॥

कौशल्याया निवेशनं प्रविष्टस्य स्वापस्थानभूतं शयनं मञ्चमारुह्यापि लुलितं कलुषं बभूव॥ २९॥ ३०॥

नौ आवां मातापितरावित्यर्थः। ये वत तं कालं तावत्कालं रामपरावृत्तिकालपर्यन्तं जीविष्यन्ति। पुनरागतं रामं परिष्वजन्तो रामं द्रक्ष्यन्ति ते सुखिता नरोत्तमाश्च तेन स्वस्याधमत्वादि व्यङ्ग्यम्॥३१॥३२॥

अथ रात्र्यां प्रपन्नायां कालरात्र्यामिवात्मनः।
अर्धरात्रे दशरथः कौशल्यामिदमब्रवीत् ॥ ३३ ॥
न त्वां पश्यामि कौशल्ये! साधु मां पाणिना स्पृश।
रामं मेऽनुगता दृष्टिरद्यापि न निवर्त्तते ॥ ३४ ॥
तं राममेवानुविचिन्तयन्तं
समीक्ष्य देवी शयने नरेन्द्रं
उपोपविश्याधिकमार्तरूपा
विनिश्वसन्तं * विललाप कृच्छ्रम् ॥ ३५ ॥

इत्यार्षे रामायणे वाल्मीकीये अयोध्याकाण्डे
दशरथविषादो नाम द्विचत्वारिंशः
सर्गः ॥ ४२ ॥

अथ कौशल्यागृहप्रवेशानन्तरम्। आत्मनः कालरात्र्यामिव संहार-रात्र्यामिव रात्र्यां प्रपन्नायां मध्यं प्राप्तायाम् ॥ ३३ ॥

मां स्पृश स्वसत्ताज्ञापनार्थमिति भावः। कौशल्यादर्शने हेतुमाह,—राममिति। काव्यलिङ्गमत्रालङ्कारः। दृष्टेर्दर्शनशक्तेः रामविषये समनस्कायाविलीनत्वात्पदार्थान्तरं न स्फुरतीति व्यङ्ग्यं परं गुणीभूतम् ॥३४॥

विनिश्वसन्तं राजानं उपोपविश्य शयनसमीपे उपविश्य ॥ ३५ ॥

इति रामाभिरामे श्रीरामीये रामायणतिलके
अयोध्याकाण्डे एकचत्वारिंशः सर्गः ॥ ४१ ॥

---

* "विनिश्वसन्ती" इति वा पाठः।

## त्रिचत्वारिंशः सर्गः ।

ततः समीक्ष्य शयने सन्नं शोकेन पार्थिवम् ।
कौशल्या पुत्त्रशोकार्त्ता तमुवाच महीपतिम् ॥ १ ॥

राघवे नरशार्दूल ! विषङ्क्षिप्त्वाहिजिह्मगा ।
विचरिष्यति कैकेयी निर्मुक्तेव हि पन्नगी ॥ २ ॥

विवास्य रामं सुभगा लब्धकामा समाहिता ।
त्रासयिष्यति मां भूयो दुष्टाहिरिव वेश्मनि ॥ ३ ॥

अथास्मिन्नगरे रामश्चरन् भैक्ष्यं गृहे वसेत् ।
कामकारो वरन्दातुमपि दासं ममात्मजम् ॥ ४ ॥

सन्नं खिन्नम् ॥ १ ॥

अहिजिह्मगा सर्पवत्कुटिलगतिः कुटिलचरित्रा । जिह्मतामिति पाठे जिह्मतां कौटिल्यरूपं विषं मुक्तेत्यर्थः । निर्मुक्ता त्यक्तकञ्चुका ॥ २ ॥ ३ ॥

भवतु भरतराज्यवरणम् । अथापि इहैव नगरे रामो भैक्ष्यञ्चरन् गृहे वसेदिति यदि अनया वृतं स्यात्तं वरं दातुं ममापि कामकारः इच्छाचरणम् । अपि आत्मजं रामं अस्या दासमपि दातुं वरं मम कामकार इष्टमेव तद्वियोगशोकाभावात् । एवञ्चैवं वरयाचनं ममाभित्रासनार्थमेवेति व्यङ्ग्यम् ॥ ४ ॥

पातयित्वा तु कैकेय्या रामः स्थानाद्यथेष्टतः ।
प्रविद्धो रक्षसां भागः पर्वणीवाहिताग्निना ॥ ५ ॥
नागराजगतिर्वीरो महाबाहुर्धनुर्द्धरः ।
वनमाविशते नूनं सभार्य्यः सहलक्ष्मणः ॥ ६ ॥
वने त्वदृष्टदुःखानां कैकेय्यनुमते त्वया ।
त्यक्तानां वनवासाय कान्यावस्था भविष्यति ॥ ७ ॥
ते रत्नहीनास्तरुणाः फलकाले विवासिताः ।
कथं वत्स्यन्ति कृपणाः फलमूलैः कृताशनाः ॥ ८ ॥
अपीदानीं स कालः स्यान्मम शोकक्षयः शिवः ।
सभार्य्यं यत्सह भ्रात्रा पश्येयमिह राघवम् ॥ ९ ॥
श्रुत्वैवोपस्थितौ वीरौ कदायोध्या भविष्यति ।

कैकेय्या कर्त्र्या रामं स्थानात्स्वस्थानाद्यथेष्टतः स्वेच्छानुसारेण पातयित्वा प्रभ्रंश्य पर्वण्याहिताग्निना रक्षसां भागस्तथादिष्टयः विप्रविद्धः प्रक्षिप्तः इतःपरं तद्ग्रहणमसम्भावितम् रक्षोभिर्नाशादिति व्यङ्ग्यम् ॥ ५ ॥ ६ ॥

कैकेय्यनुमते स्थितेनेति शेषः । कान्यावस्था रक्षो भक्षणातिरिक्ता न कापि जीवनं सर्वथा न सम्भावितमिति भावः ॥ ७ ॥

रत्नहीना उत्तमवस्तुहीनाः तरुणाच तरुणीच तरुणाः फलकाले युवावस्थत्वेन राज्यभोगकाले ॥ ८ ॥

शोकक्षयः शोकस्य क्षयो यस्मिन् सः अपीदानीं स्यात् । इदानी-

यशस्विनी हृष्टजना सूच्छितध्वजमालिनी ॥ १० ॥
कदा प्रेक्ष्य नरव्याघ्रावरण्यात् पुनरागतौ।
भविष्यति पुरी हृष्टा समुद्र इव पर्वणि ॥ ११ ॥
कदायोध्यां महाबाहुः पुरीं वीरः प्रवेक्ष्यति।
पुरस्कृत्य रथे सीतां वृषभो गोवधूमिव ॥ १२ ॥
कदा प्राणिसहस्राणि राजमार्गे ममात्मजौ।
लाजैरवकरिष्यन्ति प्रविशन्तावरिन्दमौ ॥ १३ ॥
प्रविशन्तौ कदायोध्यां द्रक्ष्यामि शुभकुण्डलौ।
उदग्रायुधनिस्त्रिंशौ सशृङ्गाविव पर्वतौ ॥ १४ ॥
कदा सुमनसः कन्या द्विजातीनां फलानि च।
प्रदिशन्तःपुरीं हृष्टाः करिष्यन्ति प्रदक्षिणम् ॥ १५ ॥
कदा परिणतो बुद्ध्या वयसा चामरप्रभः।

मेव स्यात् स काल इत्यर्थः। अथोदानीमिति लोकस्थो वा ॥ ९ ॥ ॥ १० ॥ ११ ॥

गोरूपां वधूम् ॥ १२ ॥ १३ ॥

उदग्रायुधनिस्त्रिंशौ आयुधं धनुरादि निस्त्रिंशः खड्गः ॥ १४ ॥

कन्या द्विजातयश्चेति द्वन्द्वः। तत्र कन्यानां सुमनसः पुष्पाणि द्विजानां फलानि च प्रदिशन्तः प्रयच्छन्तः हृष्टा भूत्वा सकलपौरजनोत्सवाय कदा पुरीं प्रदक्षिणं करिष्यन्ति ॥ १५ ॥

अभ्युपैष्यति धर्मात्मा त्रिवर्ष इवलालयन् ॥ १६ ॥
निःसंशयं मया मन्ये पुरा वीर ! कदर्यया ।
पातुकामेषु वत्सेषु मातॄणां शातितास्तनाः ॥ १७ ॥
साहं गौरिव सिंहेन विवत्सा वत्सला कृता ।
कैकेय्या पुरुषव्याघ्र ! बालवत्सेव गौर्बलात् ॥ १८ ॥
न हि तावत् गुणैर्जुष्टं सर्वशास्त्रविशारदम् ।
एकपुत्रा विना पुत्रमहं जीवितुमुत्सहे ॥ १९ ॥
न हि मे जीविते किञ्चित्सामर्थ्यमिह कल्प्यते ।
अपश्यन्त्याः प्रियं पुत्रं लक्ष्मणञ्च महाबलम् ॥ २० ॥

बुद्ध्या परिणतः ज्ञानेन वृद्धः वयसा चामरप्रभस्तरुणतर इव । देवानां सदा तरुणत्वात् सुवर्ष इव कालिकः कालिकसुवृष्टिरिव जनान् लालयन् । त्रिवर्ष इव लालयन्निति पाठे मामिति शेषः । मां ललन्निति पाठे प्रतिक्रीड़ां कुर्वन्नित्यर्थः ॥ १६ ॥

कदर्यया क्षुद्राचारया । पातुं कामो येषां तेषु पातुकामेषु शातिताः कृत्ताः ॥ १७ ॥

वत्सला पुत्रवत्सला सिंहेन गौरिव त्वया विवत्सा कृता उत्पातकेनेति शेषः । एवं कैकेय्या सिंह्या बालवत्सा गौरिव बलात् विवत्सा कृता ॥ १८ ॥

अतो नहीति । गुणैः सर्वकल्याणगुणैः ॥ १९ ॥

कल्प्यते दैवेनेति शेषः । कल्पत इति पाठे विद्यत इत्यर्थः ॥ २० ॥

अयं हि मान्दीपयते समुत्थित- *

स्तनूजशोकप्रभवो हुताशनः † ।

महीमिमां रश्मिभिरुद्धतप्रभो ‡

यथा निदाघे भगवान् दिवाकरः ॥ २१ ॥

इत्यार्षे रामायणे वाल्मीकीये अयोध्याकाण्डे कौशल्याविषादो नाम त्रिचत्वारिंशः सर्गः ॥ ४३ ॥

दीपयते सन्तापयति ॥ २१ ॥

इति रामाभिरामे श्रीरामीये रामायणतिलके अयोध्याकाण्डे द्विचत्वारिंशः सर्गः ॥ ४२ ॥

---

* "अद्य वह्निः" इति वा पाठः ।

† "महाहितः" इति वा पाठः ।

‡ उद्धतप्रभः उत्कटकिरणः ।

## चतुश्चत्वारिंशः सर्गः ।

विलपन्तीं तथा तां तु कौशल्यां प्रमदोत्तमाम् ।
इदं धर्मे स्थिता धर्म्यं सुमित्रा वाक्यमब्रवीत् ॥ १ ॥
तवार्ये ! सद्गुणैर्युक्तः स पुत्रः पुरुषोत्तमः ।
किन्ते विलपितेनैवं कृपणं रुदितेन वा ॥ २ ॥
यस्तवार्ये ! गतः पुत्रः त्यक्त्वा राज्यं महाबलः ।
साधु कुर्वन् महात्मानं पितरं सत्यवादिनम् ॥ ३ ॥
शिष्टैराचरिते सम्यक् शश्वत् प्रेत्यफलोदये ।
रामो धर्मे स्थितः श्रेष्ठो न स शोच्यः कदाचन ॥ ४ ॥

एवं दुःखितां कौशल्यां सुमित्रा समाश्वासयतीत्याह,—विलपन्ती-मिति । इदं वाक्यमित्यन्वयः ॥ १ ॥

कृपणं यथा तथा रुदितेन वा किम्, अयुक्तमेवेत्यर्थः । तत्र हेतुः सद्गुणैर्युक्त इति । तादृशस्य च न क्वाप्यपाय इति भावः । पुरुषोत्तम इत्यनेन तस्येश्वरत्वं व्यङ्ग्यम् । एवञ्च सर्वव्यापकत्वेनात्रापि सन्निधाना-द्विलापादिव्यर्थमिति च व्यङ्ग्यम् ॥ २ ॥

तदेवाह,—य इति । श्लोकद्वयमेकं वाक्यम् । साधु सिद्धसत्यं कुर्वन् गतः वनमिति शेषः । सत्यवादिनं तत्त्वेन प्रसिद्धम् ॥ ३ ॥

वर्त्तते चोत्तमां वृत्तिं लक्ष्मणोऽस्मिन् सदानघः।
दयावान् सर्वभूतेषु लाभस्तस्य महात्मनः॥ ५॥
अरण्यवासे यद्दुःखं जानन्ती वै सुखोचिता।
अनुगच्छति वैदेही धर्मात्मानं तवात्मजम्॥ ६॥
कीर्त्तिभूतां पताकां यो लोके भ्रामयति प्रभुः।
दमसत्यव्रतपरः किं न प्राप्तस्तवात्मजः॥ ७॥
व्यक्तं रामस्य विज्ञाय शौचं माहात्म्यमुत्तमम्।

ग्रस्मत् सर्वथा नित्यं प्रेत्यफलस्यामुष्मिकसुखस्योदयो यस्मात्तत्र धर्मे स्थितोऽतो न शोच्यः॥ ४॥

सुसहायसम्पत्तेश्च न शोच्य इत्याह,—वर्त्तते चेति। उत्तमां वृत्तिम् पितृतुल्यसुश्रूषाव्यापारं वर्त्तते वर्त्तयते करोतीति यावत्। लाभः सुखमेव॥ ५॥

एवं वैदेह्यप्यनुगच्छति तेन लाभ एव तस्य। अनेन सर्वभूतदयावत्त्वेन लक्ष्मणस्य सर्वभूताधारभूधारकशेषावतारत्वं धर्मानुगत्या च जानक्याः श्रीत्वं ध्वनितम्। तेन रामस्य भगवत्त्वं ध्वनितम्॥ ६॥

तदेवाह,—यः कीर्त्यात्मना सम्भूतां पताकां ध्वजं लोके त्रैलोक्येऽपि भ्रामयति प्रवर्त्तयति। प्रभुः सर्वभूतपालको दयया स तवात्मजः साक्षाद्धर्मस्तद्रूपो यतः सत्यव्रतपरोऽतः किं न प्राप्तः किं तच्छ्रेयो यत् न प्राप्तः। अनेन तदेव व्यक्तं दृढ़ीकृतम्। सर्वश्रेयस्थानत्वस्य भगवदतिरिक्तेऽभावात्॥ ७॥

एतदेव ध्वनयन्ती सकलदेवसेव्यत्वं तस्याह,—व्यक्तमिति। शौच

न गात्रमंशुभिः सूर्य्यः सन्तापयितुमर्हति ॥ ८ ॥
शिवः सर्वेषु कालेषु काननेभ्यो विनिःसृतः ।
राघवं युक्तशीतोष्णः सेविष्यति सुखोऽनिलः ॥ ९ ॥
शयानमनघं रात्रौ पितेवाभिपरिष्वजन् ।
रश्मिभिः संस्पृशन् शीतैश्चन्द्रमा ह्लादयिष्यति ॥ १० ॥
ददौ चास्त्राणि दिव्यानि यस्मै ब्रह्मा महौजसे ।
दानवेन्द्रं हतं दृष्ट्वा तिमिध्वजसुतं रणे ॥ ११ ॥
स शूरः पुरुषव्याघ्रः स्वबाहुबलमाश्रितः ।
असन्त्रस्तो ह्यरण्येऽसौ वेश्मनीव निवत्स्यते ॥ १२ ॥

अपहतपाप्मत्वादिलक्षणं माहात्म्यं सर्वनियन्तृत्वम् । यद्भीषोदेति सूर्य इति श्रुतेः ॥ ८ ॥

युक्तशीतोष्णः अतएव सुखः सुखस्पर्श इत्यर्थः ॥ ९ ॥

चन्द्रमाश्चन्द्रः ह्लादयिष्यति सुखयिष्यति ॥ १० ॥

ब्रह्मा ब्राह्मणो विश्वामित्रः ब्रह्मेव सृष्टिकर्त्ता वा । तिमिध्वजः शम्बरस्तत्सुतः सुबाहुरित्यर्थ इति कतकक्रतः । तीर्थस्तु कदाचिद्रामो वैजयन्तं नगरं निरुध्य तत्रत्यतिमिध्वजाख्यशम्बरपुत्रस्य दानवस्य पुत्रं हतवान् तेन प्रीतो ब्रह्मा रामाय दिव्यास्त्राणि ददावित्येतद्बलात्कल्पयति । कतकोक्तं न युक्तम् । ताड़काबधोत्तरं सुबाहुबधात्प्रागेव विश्वामित्रेणास्त्रोपदेशस्य प्रागुक्तत्वात्सुबाहोर्मारीचभ्रातृत्वस्य पूर्वमुक्तत्वेन शम्बरपुत्रत्वानौचित्याच्च ॥ ११ ॥ १२ ॥

यस्येषुपथमासाद्य विनाशं यान्ति शत्रवः।
कथं न पृथिवी तस्य शासने स्थातुमर्हति॥ १३ ॥
या श्रीः शौर्य्यञ्च रामस्य या च कल्याणसत्वता।
निवृत्तारण्यवासः स्वक्षिप्रं राज्यमवाप्स्यति॥ १४ ॥
सूर्य्यस्यापि भवेत् सूर्य्योह्यग्नेरग्निः प्रभोः प्रभुः।
श्रियः श्रीश्च भवेदग्र्या कीर्त्याः कीर्त्तिः क्षमाक्षमा॥१५॥
दैवतं देवतानाञ्च भूतानां भूतसत्तमः।
तस्य केह्यगुणा देवि! वने वाप्यथवा पुरे॥ १६ ॥
पृथिव्या सह वैदेह्या श्रिया च पुरुषर्षभः।
क्षिप्रं तिसृभिरेताभिः सह रामोऽभिषेक्ष्यते॥ १७ ॥

तस्य शासने पृथिवी तत्स्थाः प्राणिनः कथं न शासने स्थास्यन्ति। अतस्तस्य कुतोऽपि न भयमिति भावः॥ १३ ॥

यादृशी श्रीः शरीरशोभा यादृशञ्च शौर्य्यं यादृशी च कल्याणसत्वता दृश्यते तया ज्ञायते निवृत्तवनवासः क्षिप्रमेव स्वं राज्यं प्राप्स्यति॥ १४॥

इदानीं साक्षादेव सर्वान्तर्यामित्वं रामस्य दर्शयति,—सूर्य्यस्यापीति। सर्वस्यापि स्वस्वकार्य्यजनकत्वं एतदधीनमेवेति भावः। क्षमाक्षमेति षष्ठीतत्पुरुषः॥ १५॥

अगुणाः दोषजनका इत्यर्थः॥ १६॥

राम एताभिस्तिसृभिः सह अभिषेक्ष्यते वसिष्ठादिभिरिति शेषः। श्रिया विजयलक्ष्म्या॥ १७॥

दुःखजं विसृजत्यस्रु निष्क्रामन्तमुदीक्ष्य यम् ।
अयोध्यायां जनः सर्वः शोकवेगसमाहतः ॥ १८ ॥
कुशचीरधरं देवं गच्छन्तमपराजितम् ।
सीतेवानुगता लक्ष्मी तस्य किं नाम दुर्लभम् ॥ १९ ॥
धनुर्ग्रहवरो यस्य बाणखड्गास्त्रभृत्स्वयम् ।
लक्ष्मणो व्रजति ह्यग्रे तस्य किं नाम दुर्लभम् ॥ २० ॥
निवृत्तवनवासन्तं द्रष्टासि पुनरागतम् ।
जहि शोकञ्च मोहञ्च देवि ! सत्यं ब्रवीमि ते ॥ २१ ॥
शिरसा चरणावेतौ वन्दमानमनिन्दिते ! ।
पुनर्द्रक्ष्यसि कल्याणि ! पुत्रं चन्द्रमिवोदितम् ॥ २२ ॥
पुनःप्रविष्टं दृष्ट्वा तम् अभिषिक्तं महाश्रियम् ।
समुत्स्रक्ष्यसि नेत्राभ्यां शीघ्रमानन्दजं जलम् ॥ २३ ॥

कालान्तरेऽपि राज्यार्हतां जनानुरागप्रदर्शनेनाह,—दुःखजमिति । यतः अयोध्यायां विद्यमानः सर्वो जनः यं निष्क्रामन्तमुदीक्ष्य दुःखजमश्रु विसृजति । अतस्तस्य राज्यमवश्यम्भावीति शेषः ॥ १८ ॥

अथ तस्य वने विषयसुखं नास्तीति शोचन्तीमाह । कुशचिरादिधरमपि यं लक्ष्मीरिव सीतानुगता तस्य किं दुर्लभम् इवशब्द एवार्थे । सीतारूपेण लक्ष्मीरेवैषेति भावः । एतेन स विष्णुरेवेति ध्वनितम् ॥१९॥

धनुर्ग्रहाणां शूराणां वरः श्रेष्ठः । पुरुषोत्तमत्वं विना न लक्ष्मणोऽग्रेसरः स्यादिति भावः ॥ २० ॥

मा शोको देवि ! दुःखं वा न रामे दृश्यतेऽशिवम् ।
क्षिप्रं द्रक्ष्यसि पुत्रं त्वं ससीतं सहलक्ष्मणम् ॥ २४ ॥
त्वया शेषो जनश्चायं समाश्वास्यो यतोऽनघे ! ।
किमिदानीमिदं देवि ! करोषि हृदि विक्लवम् ॥ २५ ॥
नार्हा त्वं शोचितुं देवि ! यस्यास्ते राघवः सुतः ।
न हि रामात् परो लोके विद्यते सत्पथे स्थितः ॥ २६ ॥
अभिवादयमानं तं दृष्ट्वा ससुहृदं सुतम् ।
मुदाश्रु मोक्ष्यसे क्षिप्रं मेघरेखेव वार्षिकी ॥ २७ ॥
पुत्रस्ते वरदः क्षिप्रमयोध्यां पुनरागतः ।
कराभ्यां मृदुपीनाभ्याञ्चरणौ पीड़यिष्यति ॥ २८ ॥
अभिवाद्य नमस्यन्तं शूरं ससुहृदं सुतम् ।
मुदास्रैः प्रोक्षसे पुत्रं मेघराजिरिवाचलम् ॥ २९ ॥

द्रक्ष्यसि लुट् ॥ २१ ॥ २२ ॥ २३ ॥

रामे रामविषये शोकप्रलापादिदुःखं त्वया मास्तु । यतस्तस्मिन्नशिवम् अशुभं न दृश्यते ॥ २४ ॥

हे अनघे ! यस्मात्त्वया अशेषोऽयं जनः त्वत्परिवाररूपत्वात् त्वया समाश्वास्यः । अतो देवि ! त्वं हृदि विक्लवं दुःखं किं करोषि ॥२५॥२६

मेघरेखा मेघपंक्तिः ॥ २७ ॥ २८ ॥

अभिवाद्य चरणौ स्पृष्ट्वा प्रोक्षसे उक्ष सेचने वर्तमानसामीप्ये लट् ॥ २९ ॥

आश्वासयन्ती विविधैश्च वाक्यै-
र्वाक्योपचारे कुशलानवद्या ।
रामस्य तां मातरमेवमुक्त्वा
देवी सुमित्रा विरराम रामा ॥ ३० ॥

निशम्य तल्लक्ष्मणमातृवाक्यं
रामस्य मातुर्नरदेवपत्न्याः ।
सद्यः शरीरे विननाश शोकः
शरद्गतो मेघ इवाल्पतोयः ॥ ३१ ॥

इत्यार्षे रामायणे वाल्मीकीये अयोध्याकाण्डे
कौशल्यासमाश्वासनं नाम चतुश्चत्वारिंशः
सर्गः ॥ ४४ ॥

वाक्योपचारे वाक्यरचनायाम् । रामा रमणीया ॥ ३० ॥ ३१ ॥

इति रामाभिरामे श्रीरामीये रामायणतिलके
अयोध्याकाण्डे चतुश्चत्वारिंशः सर्गः ॥ ४४ ॥

## पञ्चचत्वारिंशः सर्गः।

अनुरक्ता महात्मानं रामं सत्यपराक्रमम्।
अनुजग्मुः प्रयान्तं तं वनवासाय मानवाः॥ १॥
निवर्त्तितेऽतीव बलात् सुहृद्धर्मेण राजनि।
नैव ते संन्यवर्त्तन्त रामस्यानुगता रथम्॥ २॥
अयोध्यानिलयानां हि पुरुषाणां महायशाः।
बभूव गुणसम्पन्नः पूर्णचन्द्र इव प्रियः॥ ३॥
स याच्यमानः काकुत्स्थस्ताभिः प्रकृतिभिस्तदा।
कुर्वाणः पितरं सत्यं वनमेवान्वपद्यत॥ ४॥
अवेक्षमाणः सस्नेहं चक्षुषा प्रपिबन्निव।
उवाच रामः सस्नेहं ताः प्रजाः स्वाः प्रजा इव॥ ५॥

इदानीं दूरमनुगच्छत्पौरजननिवर्तनमाह,—अन्विति। वनवासाय प्रयान्तमित्यन्वयः॥ १॥

सुहृद्धर्मेण। यमिच्छेत् पुनरायान्तं नैव दूरमनुव्रजेदित्युक्तिरूपेण। ते अनुरक्ताः पौराः॥ २॥

तन्निवृत्तौ हेतुमाह,—अयोध्येति॥ ३॥

याच्यमानः प्रतिनिवृत्तिमिति शेषः। ताभिः प्रकृतिभिः अनुरक्तात्मप्रजाभिः सत्यं सत्यवन्तम्॥ ४॥

स्वाः प्रजा इव स्वपुत्रानिव॥ ५॥

या प्रीतिर्बहुमानश्च मय्ययोध्यानिवासिनाम्।
मत्प्रियार्थं विशेषेण भरते सा विधीयताम्॥ ६ ॥
स हि कल्याणचारित्रः कैकेय्यानन्दवर्धनः।
करिष्यति यथावद्वः प्रियाणि च हितानि च॥ ७ ॥
ज्ञानवृद्धो वयोबालो मृदुर्वीर्य्यगुणान्वितः।
अनुरूपः स वो भर्त्ता भविष्यति भयापहः॥ ८ ॥
स हि राजगुणैर्युक्तो युवराजः समीक्षितः।
अपि चापि मया शिष्टैः कार्य्यं वो भर्तृशासनम्॥ ९ ॥
न सन्तप्येद्यथा चासौ वनवासं गते मयि।
महाराजस्तथा कार्य्यो मम प्रियचिकीर्षया॥ १० ॥
यथा यथा दाशरथिर्धर्ममेवाश्रितोऽभवत्।

अयोध्यानिवासिनां युष्माकमिति शेषः॥ ६ ॥

प्रियाणि ऐहलौकिकसुखजनकानि हितानि परलोकसुखजनकानि ॥ ७ ॥

वयसा बालोऽपि ज्ञानवृद्धः वीर्य्यगुणान्वितोऽपि मृदुः॥ ८ ॥

समीक्षितः राज्ञा निश्चितः मया शिष्टैः मत्तोऽधिकैरिति यावत् ईदृशो राजगुणैर्युक्तः हि यतः अपि चापि अस्मादपि हेतोः भरते प्रीतिर्विधीयताम्। यतो वो युष्माकं भर्तृशासनं राजाज्ञा कार्य्या अवश्यकार्य्या भवति॥ ९ ॥

तथा कार्य्यः अनुकूलाचरणेन सदा समाश्वासनीयः॥ १० ॥

तथा तथा प्रकृतयो रामं पतिमकामयन् ॥ ११ ॥
बाष्पेण पिहितं दीनं रामः सौमित्रिणा सह।
चकर्षेव गुणैर्बद्धं जनं पुरनिवासिनम् ॥ १२ ॥
ते द्विजास्त्रिविधं वृद्धा ज्ञानेन वयसौजसा।
वयःप्रकम्पशिरसो दूरादूचुरिदं वचः ॥ १३ ॥
वहन्तो जवना रामं भो भो जात्यास्तुरङ्गमाः !।
निवर्त्तध्वं न गन्तव्यं हिता भवत भर्त्तरि ॥ १४ ॥
कर्णवन्ति हि भूतानि विशेषेण तुरङ्गमाः।
यूयं तस्मान्निवर्त्तध्वं याचनां प्रतिवेदिताः ॥ १५ ॥

धर्मं राजवाक्यपरिपालनरूपम्। अकामयन् चित्ते स्वीकृतवन्तः अत्यन्तधर्मशालित्वात् ॥ ११ ॥

बाष्पेण पिहितं पिहितनेत्रं रज्जुरूपः स्वगुणैर्बद्धं पुरनिवासिनं सौमित्रिसहितो रामश्चकर्षेव। उत्प्रेक्षालङ्कारः। गुणैरित्यत्र श्लेषः ॥१२॥

ओजसा तपोबलेन। एवं त्रिविधं यथा तथा वृद्धाः तेषां मध्ये वयःप्रकम्पशिरसः वयस आधिक्यात् कम्पयुक्तशिरसः। अतिवृद्धत्वादनुधावनाशक्त्या दूरादिदमूचुः। क्वचित्तु प्रभुग्नशिरसः इति पाठः॥१३॥

किमूचुस्तदाह,—वहन्त इति। रथेन प्रापयन्त इत्यर्थः। जात्याः उत्तमजातीयाः भर्त्तरि रामविषये हिता भवत। वनं मा नयतेति यावत्। आज्ञायाचनामतिक्रम्य युष्मद्गमनं भर्तुरहितमिति भावः॥ १४ ॥

धर्मतः स विशुद्धात्मा वीरः शुभदृढव्रतः ।
उपवाह्यस्तु वो भर्त्ता नापवाह्यः पुराद्वनम् ॥ १६ ॥
एवमार्त्तप्रलापांस्तान् वृद्धान् प्रलपतो द्विजान् ।
अवेक्ष्य सहसा रामो रथादवततार ह ॥ १७ ॥
पद्भ्यामेव जगामाथ ससीतः सहलक्ष्मणः ।
सन्निकृष्टपदन्यासो रामो वनपरायणः ॥ १८ ॥
द्विजातीन् हि पदातींस्तान् रामश्चारित्रवत्सलः ।
न शशाक घृणाचक्षुः परिमोक्तुं रथेन सः ॥ १९ ॥

विशेषेण यूयं कर्णवन्तस्तस्माद्वधिरवन्न गन्तव्यम् । अपि तु याचनामस्मदीयां प्रतिवेदिताः ज्ञातवन्तो निवर्तध्वम् ॥ १५ ॥

उपवाह्यः पुरसमीपं प्रापणीयः वः युष्माकं नतु पुरादपनीय वनं वाह्यः प्रापणीयः ॥ १६ ॥

आर्तप्रलापान् आर्तवाक्यानि प्रलपतः कथयतः ॥ १७ ॥

द्विजानां सङ्गमार्थं सन्निकृष्टपदन्यासो भूत्वा वनपरायणं एव शनैर्जगाम नतु निवृत्तो नापि स्थितः रथेन गमने ब्राह्मणक्लेशेन दोषः । प्रतिनिवृत्य ब्राह्मणाश्वासने व्रतभङ्गो भवतीति धिया पद्भ्यां मन्दगमनोऽभूत् । यावद्वृद्धसन्निधानमिति भावः ॥ १८ ॥

रथेन परिमोक्तुं न शशाक अत्यन्तं रथवेगालम्बनेन निवर्तयितुं न शशाकेत्यर्थः । तत्र घृणाचक्षुः हेतुः घृणा दया तत्सूचकचक्षुष्मानित्यर्थः ॥ १९ ॥

गच्छन्तमेव तं दृष्ट्वा रामं सम्भ्रान्तमानसाः।
ऊचुः परमसन्तप्ता रामं वाक्यमिदं द्विजाः॥ २० ॥
ब्राह्मण्यं कृत्स्नमेवत्वां ब्रह्मण्यमनुगच्छति।
द्विजस्कन्धाधिरूढास्त्वामग्नयोऽप्यनुयान्त्यमी॥ २१ ॥
वाजपेयसमुत्थानि च्छत्राण्येतानि पश्य नः।
पृष्ठतोऽनुप्रजातानि मेघानिव जलात्यये॥ २२ ॥
अनवाप्तातपत्रस्य रश्मिसन्तापितस्य ते।
एभिश्छायां करिष्यामः स्वैश्छत्रैर्वाजपेयकैः॥ २३ ॥
या हि नः सततं बुद्धिर्वेदमन्त्रानुसारिणी।
त्वत्कृते सा कृता वत्स! वनवासानुसारिणी॥ २४ ॥
हृदयेष्ववतिष्ठन्ते वेदा ये नः परं धनम्।

गच्छन्तमेव स्वप्रार्थनानन्तरमपि न स्थितं नापि निवृत्तमित्यर्थः॥२०॥

ब्राह्मण्यं ब्राह्मणसमूहः ब्रह्मण्यं ब्राह्मणहितं द्विजस्कन्धाधिरूढाः याचारणिद्वारेणेति शेषः॥ २१ ॥

वाजपेयसमुत्थानि वाजपेययाजिनो राजवच्छत्रादिसम्बन्धस्य श्रुताव्युक्तेः। मेघानिव जलात्यये शारदमेघवत् पाण्डराणि छत्राणीत्यर्थः॥२२॥

अनवाप्तातपत्रस्य अप्राप्तश्वेतच्छत्रस्य। वाजपेयकैः वाजपेययागप्राप्तैः॥ २३ ॥

वेदमन्त्रानुसारिणी तदभ्यासानुसरणशीला। त्वत्कृते त्वन्निमित्तं वनवासानुसारिणी वेदाभ्यासादि परित्यज्य वनवासोन्मुखी कृतेत्यर्थः॥२४॥

वत्स्यन्त्यपि गृहेष्वेव दाराश्चारित्ररक्षिताः ॥ २५ ॥
न पुनर्निश्चयः कार्यस्त्वद्गतौ सुकृता मतिः ।
त्वयि धर्म्मव्यपेक्षे तु किं स्याद्धर्म्ममपेक्षितम् * ॥ २६ ॥
याचितो नो निवर्त्तस्व हंसशुक्लशिरोरुहैः ।
शिरोभिर्निभृताचार ! महीपतनपांशुलैः ॥ २७ ॥
बहूनां वितता यज्ञा द्विजानां य इहागताः ।
तेषां समाप्तिरायत्ता तव वत्स ! निवर्त्तने ॥ २८ ॥

अस्माकं त्वया सह वनानुगमने न काप्यनुपपत्तिरित्याहुः,—हृदयेष्विति । ये नोऽस्माकं परं धनं वेदास्तेऽस्माकं हृदये एवावतिष्ठन्ते । चारित्रं पातिव्रत्यम् ॥ २५ ॥

न पुनरिति । यद्यपि त्वद्गतौ त्वदनुगमनेऽस्माकं मतिः सुकृता निश्चिता अतः पुनर्वनगमननिश्चयोऽस्माकं न कार्य्योऽस्ति कृतत्वादेव तथापि किञ्चिद्ब्रूम इति शेषः । त्वयि धर्म्मव्यपेक्षे ब्राह्मणवचनरूपधर्म्मनिरपेक्षे सति किम्भूतं धर्म्मपथे स्थितं स्यात् न किमपि सर्व्वे धर्म्ममार्गं व्यतिक्रमेयुः ॥२६॥

तस्मात् अस्माभिर्हंसशुक्लशिरोरुहैः पलितकेशैः शिरोभिः साष्टाङ्गप्रणामेन महीपतनपांशुलैः महीपतनेन पांशुलै रजोव्याप्तैरहैश्च याचितस्त्वं निभृताचार निश्चलधर्म्मानुष्ठान निवर्तस्व । अत्र ब्राह्मणैर्नमस्कारः क्षत्रियस्य कार्य्यमिति न शङ्क्यं तत्त्वज्ञतया भगवदवतारत्वदृष्ट्या नमस्कारेणादोषात् । यद्वा राज्ञो विष्णवंशत्वेन नतौ न दोष इत्याहुः ॥२७॥

एवमपि गच्छन्तमेव दृष्ट्वाहुः,—बहूनामिति । ये द्विजा इहागता-

---

* "धर्म्मपथे स्थितम्" इति वा पाठः ।

भक्तिमन्तीह भूतानि जङ्गमा जङ्गमानि च।
याचमानेषु तेषु त्वं भक्तिं भक्तेषु दर्शय॥ २९॥
अनुगन्तुमशक्तास्त्वां मूलैरुद्धृतवेगिनः।
उन्नता वायुवेगेन विक्रोशन्तीव पादपाः॥ ३०॥
निश्चेष्टाहारसञ्चारा वृक्षैकस्थाननिश्चिताः।
पक्षिणोऽपि प्रयाचन्ते सर्वभूतानुकम्पनम् *॥ ३१॥
एवं विक्रोशतां तेषां द्विजातीनां निवर्त्तने।

त्वेषां बहूनां यज्ञाः इहकाले वितताः सन्ति तेषां समाप्तिस्त्वन्निवर्तना-यत्ता अनिवृत्तौ सर्वयज्ञविघ्नकर्तृत्वं त्वय्यापतिष्यतीति भावः॥ २८॥

न केवलं अस्मत्प्रार्थनैवापि तु सर्वभूतप्रार्थनापीत्याह,—भक्तीति। जङ्गमाजङ्गमानि सर्वाण्यपि भूतानि भक्तिमन्ति स्नेहवन्ति। तेषु त्वन्निवृत्तिं याचमानेषु भक्तेषु त्वमपि भक्तिं स्नेहं प्रदर्शय निवर्त्त्येति शेषः॥ २९॥

तेषां याचञाप्रकारमाह। मूलैः स्थावरत्वादुत् अत्यन्तं हृतवेगा अत-स्त्वामनुगन्तुमशक्ता उन्नता उच्छ्रिताः पादपाः वायुवेगेन वायुवेगजशाखा-चलनशब्दैर्विक्रोशन्तीव त्वन्निवर्तनायेति शेषः॥ ३०॥

चेष्टा गात्रचलनादिरूपा आहारार्थसञ्चारश्च तेभ्यो निर्गताः तद्र-हिताः वृक्षरूपैकस्थान एव निश्चिता निश्चयेन स्थिताः न त्वाहारायापि भुवमवतीर्णाः। एवं मरणपर्य्यन्तव्यापारेण त्वां याचन्ते निवृत्तिमिति शेषः॥ ३१॥

* "सर्वभूतानुकम्पिनम्" इति वा पाठः।

ददृशे तमसा तत्र वारयन्तीव राघवम् ॥ ३२ ॥

ततः सुमन्त्रोऽपि रथाद्विमुच्य
श्रान्तान् हयान् सम्परिवर्त्य शीघ्रम् ।
पीतोदकांस्तोयपरिप्लुताङ्गा-
नचारयद्वै तमसाविदूरे ॥ ३३ ॥

इत्यार्षे रामायणे वाल्मीकीये अयोध्याकाण्डे राम-
निर्वासने ब्राह्मणानुनयो नाम पञ्चचत्वारिंशः
सर्गः ॥ ४५ ॥

निवर्तने निवर्तननिमित्तम् । विक्रोशतां तेषामनुग्रहाय मार्गे तिर्यङ्प्रवाहत्वाद्राघवं वारयन्तीव तमसा ददृशे दृष्टा ॥ ३२ ॥

सम्परिवर्त्य श्रमापनुत्तये कृतविलुण्ठनान्विधाय तोयपरिप्लुताङ्गान् स्नापितान् तमसाया अविदूरे अचारयत् भक्षिततृणानकारयत् ॥ ३३ ॥

इति रामाभिरामे श्रीरामीये रामायणतिलके
अयोध्याकाण्डे पञ्चचत्वारिंशः सर्गः ॥ ४५ ॥

---

## षट्चत्वारिंशः सर्गः ।

ततस्तु तमसातीरं रम्यमाश्रित्य राघवः ।
सीतामुद्वीक्ष्य सौमित्रिमिदं वचनमब्रवीत् ॥ १ ॥
इयमद्य निशा पूर्वा सौमित्रे ! प्रस्थिता वनम् ।
वनवासस्य भद्रन्ते न चोत्कण्ठितुमर्हसि ॥ २ ॥
पश्य शून्यान्यरण्यानि रुदन्तीव समन्ततः ।
यथानिलयमायद्भिर्निलीनानि मृगद्विजैः ॥ ३ ॥
अद्यायोध्या तु नगरी राजधानी पितुर्मम ।

सीतामुद्वीक्ष्य सौमित्रिमब्रवीदित्यनेन सीतोद्देश्यकत्वमस्य वचसो ध्वनिता ॥ १ ॥

हे सौमित्रे ! वनवासस्य वनवाससम्बन्धिनिशानां मध्येऽद्यप्रवृत्ता इयं निशा वनं वनवासं प्रति पूर्वा प्रस्थिता प्राप्ता वनवासकालस्यैतन्-निशामारभ्य गणनीयत्वात् । अतस्त्वमुत्कण्ठितुमद्यप्रभृति पुरीतसुक्येना-योध्यादिस्मरणं कर्तुं नार्हसि ॥ २ ॥

यथायोगं स्वस्वनिलयमायद्भिरागच्छद्भिर्मृगद्विजैर्निलीनानि सशब्द-मन्तर्लीनतया व्याप्तानि अतएव शून्यानि अरण्यानि रुदन्तीव अस्मान् दृष्ट्वाखिन्नानीववर्तन्तेतानि पश्य ॥ ३ ॥

सस्त्रीपुंसा गतानस्मांश्छोचिष्यति न संशयः ॥ ४ ॥
अनुरक्ता हि मनुजा राजानं बहुभिर्गुणैः।
त्वाञ्च माञ्च नरव्याघ्र! शत्रुघ्नभरतौ यथा ॥ ५ ॥
पितरञ्चानुशोचामि मातरञ्च यशस्विनीम्।
अपि नान्धौ भवेतान्नौ रुदन्तौ तावभीक्ष्णशः ॥ ६ ॥
भरतः खलु धर्मात्मा पितरं मातरञ्च मे।
धर्मार्थकामसहितैर्वाक्यैराश्वासयिष्यति ॥ ७ ॥
भरतस्यानृशंसत्वं सञ्चिन्त्याहं पुनः पुनः।
नानुशोचामि पितरं मातरञ्च महाभुज! ॥ ८ ॥
त्वया कार्य्यं नरव्याघ्र! मामनुव्रजता कृतम्।
अन्वेष्टव्या हि वैदेह्या रक्षणार्थं सहायता ॥ ९ ॥

सस्त्रीपुंसा स्त्रीपुंसैः सहिता। अद्य अद्यप्रभृति ॥ ४ ॥
कुतस्तत्राह,—अनुरक्ता इति। बहुभिर्गुणैरिति सर्वाण्यपि ॥ ५ ॥
नौ अस्मदर्थे अस्मन्निमित्तम्। अभीक्ष्णं मुहुर्मुहुः रुदन्तौ पितरौ अन्धौ न भवेतामपि भवेतामेवातः शोचामि तौ ॥ ६ ॥
अथवा तदनुशोकोऽस्माकं व्यर्थेत्याह,—भरत इति ॥ ७ ॥
अनृशंसत्वमक्रूरत्वम् ॥ ८ ॥
अथ लक्ष्मणानुगमनेन सन्तुष्ट आह,—त्वयेति। मामनुव्रजता त्वया तु यत् कार्य्यं कर्त्तव्यं तत् कृतमेव। हि यतस्त्वदनुव्रजनाभावे वैदेहीरक्षणार्थं

अद्भिरेव हि सौमित्रे ! वत्स्याम्यत्र निशामिमाम्।
एतद्धि रोचते मह्यं वन्येऽपि विविधे सति ॥ १० ॥
एवमुक्त्वा तु सौमित्रिं सुमन्त्रमपि राघवः।
अप्रमत्तस्त्वमश्वेषु भव सौम्येत्युवाच ह ॥ ११ ॥
सोऽश्वान् सुमन्त्रः संयम्य सूर्य्येऽस्तं समुपागते।
प्रभूतयवसान् कृत्वा बभूव प्रत्यनन्तरः ॥ १२ ॥
उपास्य तु शिवां सन्ध्यां दृष्ट्वा रात्रिमुपागताम्।
रामस्य शयनं चक्रे सूतः सौमित्रिणा सह ॥ १३ ॥
तां शय्यां तमसातीरे वीक्ष्य वृक्षदलैर्वृताम्।
रामः सौमित्रिणा सार्द्धं सभार्य्यः संविवेश ह ॥ १४ ॥

सहायता सहायसमूहोऽन्वेष्टव्यः स्यात्। त्वमेकोऽपि सहायसमूहस्थानीय इति भावः। अतस्त्वस्यै अद्यारभ्यैव सुखाहारादिकं सम्पादयेति शेषः ॥९॥

अहं तु अत्र तमसातीरे इमां निशामद्भिरेव कृतप्राणरक्षणो वत्स्यामि प्रथमदिनत्वात्। वनवाससङ्कल्पांगत्वेनेति शेषः। तदेवाह,—एतद्धीति। वन्ये सत्यपीत्यन्वयः ॥ १० ॥ ११ ॥

संयम्य यथायोग्यं बन्धनं कृत्वा प्रभूतयवसान् प्रभूतघासान् प्रत्यनन्तरः प्रत्यासन्नः ॥ १२ ॥

शयनं शयनस्थलम्। शर्करापांसूत्क्षेपणादिना चक्रे इत्यन्वयः ॥१३॥

वृक्षदलैर्वृक्षपर्णैः सौमित्रिणा सार्द्धं सूतेन कृतां शय्यां वीक्ष्य सभार्य्यः संविवेश ॥ १४ ॥

सभार्य्यं संप्रसुप्तन्तु भ्रान्तं संप्रेक्ष्य लक्ष्मणः ।
कथयामास सूताय रामस्य विविधान् गुणान् ॥ १५ ॥
जाग्रतोरेव तां रात्रिं सौमित्रेरुदितो रविः । *
सूतस्य तमसातीरे रामस्य ब्रुवतो गुणान् ॥ १६ ॥
गोकुलाकुलतीरायाः तमसाया विदूरतः ।
अवसत्तत्र तां रात्रिं रामः प्रकृतिभिः सह ॥ १७ ॥
उत्थाय च महतेजाः प्रकृतीस्ता निशाम्य च ।
अब्रवीत् भ्रातरं रामो लक्ष्मणं पुण्यलक्षणम् ॥ १८ ॥

गुणान् कथयामास जागरणार्थमिति भावः ॥ १५ ॥

तां रात्रिमित्यत्यन्तसंयोगे द्वितीया । उदितो रविः अरुणोदय-कालो जात इत्यर्थः ॥ १६ ॥

गोकुलैराकुलं व्याप्तं तीरं यस्याः तस्यास्तमसायास्तीरे विदूरतः द्विजसंवेशदेशादतिदूरदेशेऽतिसन्धाय गमनसौकर्य्यार्थमवसत् । प्रकृति-साहित्यं तमसातीरवासमात्रे बोध्यम् ॥ १६ ॥

निशाम्य अवलोक्य निद्राणा इति शेषः ॥ १८ ॥

---

* "जाग्रतोरेव सा रात्रिस्तयोः सौमित्रिसूतयोः ।
जगाम तमसातीरे रामस्य—"
इति वा पाठः ।

अस्मदनपेक्षान् सौमित्रे ! निर्व्यपेक्षान् गृहेष्वपि * ।
वृक्षमूलेषु संसक्तान् † पश्य लक्ष्मण ! साम्प्रतम् ॥ १९ ॥
यथैते नियमं पौराः कुर्वन्त्यस्मन्निवर्त्तने ।
अपि प्राणान् नशिष्यन्ति न तु त्यक्ष्यन्ति निश्चयम् ॥२०॥
यावदेव तु संसुप्तास्तावदेव वयं लघु ।
रथमारुह्य गच्छामः पन्थानमकुतोभयम् ॥ २१ ॥
अतो भूयोऽपि नेदानीमिक्ष्वाकुपुरवासिनः ।
स्वपेयुरनुरक्ता मां वृक्षमूलेषु संश्रिताः ॥ २२ ॥

अस्मद्व्यपेक्षान् अस्मास्वेव विशेषेणापेक्षावतः अतएव गृहेषु निर्व्यपेक्षान् निरपेक्षान् अमात् साम्प्रतं अत्रयोदयेऽपि सुप्तान् ॥ १९ ॥

एते पौरा अस्मन्निवर्तने यथा नियमं यत्नं कुर्वन्ति तथा जाने अपि प्राणान् नशिष्यन्ति त्यक्ष्यन्ति नतु अस्मन्निवर्तनविषयं निश्चयं त्यक्ष्यन्तीत्यर्थः ॥ २० ॥

अतो यावदिति। लघु शीघ्रम् ॥ २१ ॥

शीघ्रगमने हेतुमाह,—अत इति। एतदनन्तरमेते यतो मामनुरक्ता अतो भूयोऽपि न स्वपेयुरतो यावन्नोत्तिष्ठन्ति तावच्छीघ्रं गच्छाम इत्याशयः ॥ २२ ॥

---

* "गृहेष्विमान्" इति वा पाठः।
† "संसुप्तान्" इति वा पाठः।

पौरा ह्यात्मकृताद्दुःखाद्विप्रमोच्या नृपात्मजैः ।
न तु खल्वात्मना योज्याः दुःखेन पुरवासिनः ॥ २३ ॥
अब्रवील्लक्ष्मणो रामं साक्षाद्धर्ममिव स्थितम् ।
रोचते मे तथा प्राज्ञ ! क्षिप्रमारुह्यतामिति ॥ २४ ॥
अथ रामोऽब्रवीत्सूतं शीघ्रं संयुज्यतां रथः ।
गमिष्यामि ततोऽरण्यं गच्छ शीघ्रमितः प्रभो ! ॥ २५ ॥
सूतस्ततः संत्वरितः स्यन्दनन्तैर्हयोत्तमैः ।
योजयित्वा तु रामस्य प्राञ्जलिः प्रत्यवेदयत् ॥ २६ ॥
अयं युक्तो महाबाहो ! रथस्ते रथिनाम्वर ! ।
त्वरयारोह भद्रन्ते ससीतः सहलक्ष्मणः ॥ २७ ॥
तं स्यन्दनमधिष्ठाय राघवः सपरिच्छदः ।
शीघ्रगामाकुलावर्त्तां तमसामतरन्नदीम् ॥ २८ ॥

तत्र हेत्वन्तरमाह,—पौरा हीति । आत्मकृतात् आत्मनिमित्तकात् । आत्मना आत्मनिमित्तकेन योज्याः संयोज्याः ॥ २३ ॥

आरुह्यतां रथ इति शेषः ॥ २४ ॥

ततः संयोजितेन तेन रथेनेत्यर्थः । शीघ्रं गच्छ रथयोजनायेति शेषः । प्रभो समर्थ ॥ २५ ॥ २६ ॥

युक्तः सज्जः ॥ २७ ॥

परिच्छदो धनुःकवचादि । आकुलावर्तां निबिडावर्ताम् आवर्तै-राकुलामिति वा ॥ २८ ॥

स मन्त्रीय्य महाबाहुः श्रीमान् शिवमकण्टकम्।
प्रापद्यत महामार्गमभयं भयदर्शिनाम्॥ २९॥
मोहनार्थन्तु पौराणां सूतं रामोऽब्रवीद्वचः।
उदङ्मुखः प्रयाहि त्वं रथमारुह्य सारथे!॥ ३०॥
मुहूर्त्तन्त्वरितं गत्वा निवर्त्तय रथं पुनः।
यथा न विद्युः पौरा मां तथा कुरु समाहितः॥ ३१॥
रामस्य तु वचः श्रुत्वा तथा चक्रे च सारथिः।
प्रत्यागम्य च रामस्य स्यन्दनं प्रत्यवेदयत्॥ ३२॥
तौ संप्रयुक्तन्तु रथं समास्थितौ
तदा ससीतौ रघुवंशवर्द्धनौ।

भयदर्शिनामप्यभयं मार्गं राजमार्गमित्यर्थः॥ २९॥

त्वमेव रथमास्थायोदङ्मुखः प्रयाहि मत्प्रतिनिवृत्तिबुद्ध्युत्पादनेन जनमोहनाय, नतु वयं, व्रतभङ्गापत्तेः॥ ३०॥

तदेवाह,—मुहूर्तमिति। न विद्युर्वनमेव गत इति न जानीयुः॥३१॥

तथा चक्रे। उदङ्मुखतया गत्वा मार्गान्तरेण निवृत्तिपूर्वकमागत्य एवं हि रामः प्रतिनिवृत्त इति पौरभ्रमः सिध्यति। महामायाधिष्ठातु-र्भगवत इयत्या क्रियया पौरमोहनं नाश्चर्य्यायेति मन्तव्यम्। प्रत्यवेदयत् आरोहणार्थमज्ञापयत्॥ ३२॥

संप्रयुक्तं सम्यगानीयदर्शितम्। समास्थितावारूढौ अभूतामिति

प्रचोदयामास ततस्तुरङ्गमान्
स सारथिर्येन पथा तपोवनम् ॥ ३३ ॥
ततः समास्थाय रथं महारथः
ससारथिर्दाशरथिर्वनं ययौ ।
उदङ्मुखन्तन्तु रथं चकार सः
प्रयाणमाङ्गल्यनिमित्तदर्शनात् ॥ ३४ ॥

इत्यार्षे रामायणे वाल्मीकीये अयोध्याकाण्डे
तमसावतरणं नाम षट्चत्वारिंशः
सर्गः ॥ ४६ ॥

शेषः । येन पथा मार्गेण तपोवनं प्राप्यत इति शेषः । ततस्तेन मार्गेण तुरङ्गमान् प्रचोदयामास ॥ ३३ ॥

उक्तं निगमयति,—तत इति । प्रयाणापेक्षितं माङ्गल्यं शुभं यन्निमित्तं शकुनं तद्दर्शनात् तदनुभवहेतोरुदङ्मुखं रथं चकार स्थापयामास । तत आरुह्य दक्षिणाभिमुखतया वनं ययौ ॥ ३४ ॥

इति रामाभिरामे श्रीरामीये रामायणतिलके
अयोध्याकाण्डे षट्चत्वारिंशः सर्गः ॥ ४६ ॥

---

# सप्तचत्वारिंशः सर्गः ।

प्रभातायान्तु शर्वर्य्यां पौरास्ते राघवं विना ।
शोकोपहतनिश्चेष्टा बभूवुर्हतचेतसः ॥ १ ॥

शोकजाश्रुपरिद्यूना वीक्षमाणास्ततस्ततः ।
आलोकमपि रामस्य न पश्यन्ति स्म दुःखिताः ॥ २ ॥

ते विषादार्त्तवदना रहितास्तेन धीमता ।
कृपणाः करुणा वाचो वदन्ति स्म मनीषिणः ॥ ३ ॥

धिगस्तु खलु निद्रां तां ययाऽपहृतचेतसः ।
नाद्य पश्याम हे रामं पृथूरस्कं महाभुजम् ॥ ४ ॥

कथं रामो महाबाहुः स तथा वितथक्रियः ।
भक्तं जनमभित्यज्य प्रवासं तापसो गतः ॥ ५ ॥

शोकेनोपहता अतएव निश्चेष्टाः हृतचेतसो मूर्च्छिताः ॥ १ ॥

परिद्यूनाः क्लिन्नाः । आलोकम् आलोकसाधनं रथोद्धतधूल्यापि ॥ २ ॥ ३ ॥

यया निद्रया । "निद्रां भगवतीं विष्णोः" इत्यादिना मार्कण्डेयेन तस्या भगवन्मायारूपत्वाभिधानात् । तदावरणादेव च विषयाविष्टानां भगवद्दर्शनं प्रसिद्धं श्रुतिशिरःसु न पश्यामह इति तदर्थः । हे इति सम्बोधनं वा परस्परम् ॥ ४ ॥

यो नः सदा पालयति पिता पुत्रानिवौरसान् ।
कथं रघूणां स श्रेष्ठस्त्यक्त्वा नो विपिनं गतः ॥ ६ ॥
इहैव निधनं यामो महाप्रस्थानमेव वा ।
रामेण रहितानां नो किमर्थं जीवितं हितम् ॥ ७ ॥
सन्ति शुष्काणि काष्ठानि प्रभूतानि महान्ति च ।
तैः प्रज्वाल्य चितां सर्वे प्रविशामोऽथ पावकम् ॥ ८ ॥
किं वक्ष्यामो महाबाहुरनसूयः प्रियंवदः ।
नीतः स राघवोऽस्माभिरिति वक्तुं कथं क्षमम् ॥ ९ ॥
सा नूनं नगरी दीना दृष्ट्वास्मान् राघवं विना ।
भविष्यति निरानन्दा सस्त्रीबालवयोधिका ॥ १० ॥
निर्यातास्तेन वीरेण सह नित्यं महात्मना ।
विहीनास्तेन च पुनः कथं द्रक्ष्याम तां पुरीम् ॥ ११ ॥

तथा वितथा मोघा क्रिया यस्य सः त्यक्त्वा गत इदमनुचितं तस्येति भावः ॥ ५ ॥ ६ ॥

निधनं प्रायोपवेशेन मरणम् । महाप्रस्थानं मरणदीक्षापूर्वकमुत्तराभिमुखगमनम् । तद्रहितानां जीवितं किमर्थं कस्मै फलाय हितं न कस्मायीत्यर्थः अतो मरणमेव श्रेयः ॥ ७ ॥ ८ ॥

रामवृत्तान्तं पृच्छन्तं जनं प्रति किं वक्ष्यामः । अस्माभी राघवो वनं नीतः प्रापित इति उत्तरं देयमिति चेदिदं वक्तुं कथं क्षमं वक्तुमशक्यमयोग्यञ्चैतत् अन्यच्च न सदुत्तरमिति भावः ॥ ९ ॥ १० ॥ ११ ॥

इतीव बहुधा वाचो बाहुमुद्यम्य ते जनाः ।
विलपन्तिस्म दुःखार्त्ता हृतवत्सा इवाग्र्यगाः * ॥ १२ ॥
ततो मार्गानुसारेण गत्वा किञ्चित्ततःक्षणम् ।
मार्गनाशाद्विषादेन महता समभिप्लुताः ॥ १३ ॥
रथमार्गानुसारेण न्यवर्त्तन्त मनस्विनः ।
किमिदं किं करिष्यामो दैवेनोपहता इति । १४ ॥
ततो यथागतेनैव मार्गेण क्लान्तचेतसः ।
अयोध्यामगमन् सर्वे पुरीं व्यथितसज्जनाम् ॥ १५ ॥
आलोक्य नगरीं ताञ्च क्षयव्याकुलमानसाः ।
आवर्त्तयन्त तेऽश्रूणि नयनैः शोकपीड़ितैः ॥ १६ ॥

अग्रे भवा अग्र्याः पुरोगामिन्यस्ताश्च ता गाश्चेत्यर्थः । यद्वा अग्र्या मुख्याः पुष्टत्वदुग्धवत्त्वादिगुणा गाव इवेत्यर्थः । गा इत्यार्षम् ॥ १२ ॥

ततः मार्गानुसारेण अतिसन्धानप्रवर्त्तितमार्गानुसारेण किञ्चित् क्षणं किञ्चित् कालं गत्वा । ततो मार्गनाशात् वञ्चनया मार्गान्तरे प्रवृत्त्या रथमार्गादर्शनात् महता विषादेन समभिप्लुताः व्याप्ताः ॥ १३ ॥

किमिदं यद्रथमार्गादर्शनं इतः परं किं करिष्यामः । अहो दैवेनोपहता वयमिति वदन्तो न्यवर्त्तन्तेत्यन्वयः ॥ १४ ॥

व्यथिताः सज्जना यस्यां तां सत्पदेन कैकेय्या व्यावृत्तिः ॥ १५ ॥

---

* 'विवत्सा इव धेनवः' इति वा पाठः ।

एषा रामेण नगरी रहिता नातिशोभते ।
आपगा गरुडेनेव ह्रदादुद्धृतपन्नगा ॥ १७ ॥
चन्द्रहीनमिवाकाशं तोयहीनमिवार्णवम् ।
अपश्यन्निहतानन्दं नगरन्ते विचेतसः ॥ १८ ॥
ते तानि वेश्मानि महाधनानि
दुःखेन दुःखोपहता विशन्तः ।
नैव प्रजग्मुः स्वजनं परं वा
निरीक्ष्यमाणाः प्रविनष्टहर्षाः ॥ १९ ॥

इत्यार्षे रामायणे वाल्मीकीये अयोध्याकाण्डे प्रकृतीनां नगर प्रत्यागमनं नाम सप्तचत्वारिंशः सर्गः ॥ ४७ ॥

त्रयो हर्षत्रयस्तेन व्याकुलमानसाः । यद्वा त्रयं गृहं प्रति व्याकुलं गन्तव्यं न वेत्येवं रूपं मानसं येषां तादृशाः आवर्त्तयन्त अमुञ्चन् ॥ १६ ॥ १७ ॥ १८ ॥

दुःखेन रामवियोगदुःखेनोपहताः कथं गृहं प्रवेष्टव्यमिति दुःखेन विशन्तोऽपि नैव प्रजग्मुः । स्ववेश्म परवेश्मविवेकं नाज्ञासिषुः । तथा निरीक्ष्यमाणा अपि स्वजन परजनविवेकं न प्राप्तवन्तः ॥ १९ ॥

इति रामाभिरामे श्रीरामीये रामायणतिलके
अयोध्याकाण्डे सप्तचत्वारिंशः सर्गः ॥ ४७ ॥

## अष्टचत्वारिंशः सर्गः ।

तेषामेवं विषण्णानां पीडितानामतीव च ।
बाष्पविप्लुतनेत्राणां सशोकानां मुमूर्षया ॥ १ ॥
अभिगम्य निवृत्तानां रामं नगरवासिनाम् ।
उद्गतानीव सत्वानि बभूवुरमनस्विनाम् ॥ २ ॥
स्वं स्वं निलयमागम्य पुत्रदारैः समावृताः ।
अश्रूणि मुमुचुः सर्वे बाष्पेण पिहिताननाः ॥ ३ ॥
न चाहृष्यन् न चामोदन्वणिजो न प्रसारयन् ।
न चाशोभन्त पण्यानि नापचन् गृहमेधिनः ॥ ४ ॥

तेषामित्यादि पद्यद्वयमेकं वाक्यम् । मुमूर्षयोपलक्षितानां अमनस्विनां दुर्मनसां खिन्नानामिति यावत् । सत्वान्यसवः . उद्गतानीव उत्क्रान्तानीव । मृतप्राया जाता इति भावः ॥ १ ॥ २ ॥

बाष्पेण पिहिताननाः अश्रुव्याप्तमुखा इत्यर्थः ॥ ३ ॥

हर्षः शारीरो मुखविकासादिरूपः । मोद आन्तरो हर्षः । परस्मैपदमार्षम् । प्रसारयन् प्रासारयन्नित्यर्थः । प्रसारितान्यपि नाशोभन्त ॥ ४ ॥

नष्टं दृष्ट्वा नाभ्यनन्दन् विपुलं वा धनागमम् ।
पुत्रं प्रथमजं लब्ध्वा जननी नाभ्यनन्दत ॥ ५ ॥
गृहे गृहे रुदत्यश्च भर्त्तारं गृहमागतम् ।
व्यगर्हयन्त दुःखार्त्ता वाग्भिस्तोत्त्रैरिव द्विपान् ॥ ६ ॥
किं नु तेषां गृहैः कार्य्यं किं दारैः किं धनेन वा ।
पुत्त्रैर्वापि सुखैर्वापि ये न पश्यन्ति राघवम् ॥ ७ ॥
एकः सत्पुरुषो लोके लक्ष्मणः सह सीतया ।
योऽनुगच्छति काकुत्स्थं रामं परिचरन् वने ॥ ८ ॥
आपगाः कृतपुण्याश्च पद्मिन्यश्च सरांसि च ।

नष्टमिति । चिरनष्टधनस्य विपुलस्यागमं लाभं दृष्ट्वापि नाभ्यनन्दन् । वा शब्द एवार्थे । नाभ्यनन्दन्नेवेत्यर्थः ॥ ५ ॥

व्यगर्हयन्त । राघवमप्रतिनिवर्त्य किमर्थं यूयमागता इत्येवं वाग्रूपैः तोत्त्रैः अङ्कुशैः ॥ ६ ॥

तेषां रामं विना आगतानाम् । रामं राजानं विना सर्वस्यास्थिरत्वात् । किञ्च भगवन्तं राममादरेणापश्यन्तो ये गृहपुत्त्रदारसुखादिष्वासक्त्या प्रतिनिवृत्तास्तेषां पुनः पुनः संसारप्राप्तिरेव नतु कदापि मोक्ष इत्याशयः । तस्य मायिकरूपदर्शनेपि चित्तशुद्धिद्वारा मोक्षोपयोगिज्ञानाधिकारो भवति ॥ ७ ॥

सत्पुरुषः भाग्यवान् पुरुषः सीता च भाग्यवती । यो वने रामं परिचरन् अनुगच्छति ॥ ८ ॥

येषु यास्यति काकुत्स्थो विगाह्य सलिलं शुचिः ॥ ९ ॥
शोभयिष्यन्ति काकुत्स्थमटव्यो रम्यकाननाः।
आपगाश्च महानूपाः सानुमन्तश्च पर्वताः ॥ १० ॥
काननं वापि शैलं वा यं रामोऽनुगमिष्यति।
प्रियातिथिमिव प्राप्तं नैनं शक्ष्यन्त्यनर्चितुम् ॥ ११ ॥
विचित्रकुसुमापीड़ा बहुमञ्जरिधारिणः।
राघवं दर्शयिष्यन्ति नगा भ्रमरशालिनः ॥ १२ ॥
अकाले चापि मुख्यानि पुष्पाणि च फलानि च।
दर्शयिष्यन्त्यनुक्रोशाद्गिरयो राममागतम् ॥ १३ ॥
प्रस्रविष्यन्ति तोयानि विमलानि महीधराः।

सीता लक्ष्मणावेवेति किं वाच्यम् अचेतना आपगादयोपि सभाग्याः नतु यूयमित्याह। आपगा इति विगाह्य स्नात्वा ॥ ९ ॥

रम्यकाननाः चारुवृक्षसङ्घाः अनूपोजलप्रायदेशः ॥ १० ॥

ते शैलादयः। अनर्चितुं न शक्ष्यन्ति अर्चितुमेव शक्ष्यन्तीत्यर्थः ॥ ११ ॥

तदेव दर्शयति। विचित्रेत्यादि। विचित्रैः कुसुमैरापीड़ः शिरोभूषणमेषाम्। बह्वीर्मञ्जरीः पुष्पस्तवकान् धर्तुं शीलमेषाम्। छान्दसो ह्रस्वः। नगाः वृक्षाः दर्शयिष्यन्ति आत्मानमिति शेषः। एवञ्च पुष्पाञ्जलिरूपार्चायां ते शक्ता इति भावः ॥ १२ ॥

गिरयो दर्शयिष्यन्ति स्वगत वृक्षद्वारेति शेषः ॥ १३ ॥ १४ ॥

विदर्शयन्तो विविधान् भूयश्चित्रांश्च निर्झरान् ॥ १४ ॥
पादपाः पर्वताग्रेषु रमयिष्यन्ति राघवम् ।
यत्र रामो भयं नात्र नास्ति तत्र पराभवः ॥ १५ ॥
स हि शूरो महाबाहुः पुत्रो दशरथस्य च ।
पुरा भवति नो दूरादनुगच्छाम राघवम् ॥ १६ ॥
पादच्छायासुखं भर्त्तु *स्तादृशस्य महात्मनः ।
स हि नाथो जनस्यास्य स गतिः स परायणम् ॥ १७ ॥
वयं परिचरिष्यामः सीतां यूयञ्च राघवम् ।
इति पौरस्त्रियो भर्तॄन् दुःखार्त्तास्तत्तदब्रुवन् ॥ १८ ॥

पादपा रमयिष्यन्ति स्वमूलाकीर्यमाणपल्लवकुसुमरचित शय्यास्विति शेषः यत्र रामः वसतीति शेषः ॥ १५ ॥

भयाभावादौ हेतुः स हि शूर इत्यादि । नोऽस्माकमदूरात् पुरा भवति यावत् पुरेति भविष्यति लट् आसन्नो भविष्यतीत्यर्थः । अतो राघवमनुगच्छाम प्रार्थनायां लोट् ॥ १६ ॥

पादच्छाया च्छायापदेनानुग्रहहेतुभूता सेवा लक्ष्यते । भर्तृराम-चन्द्रस्य पादसेवैव नः परमसुखं सुखसाधनम् । गतिः शरणम् । परा-यणं शाश्वतप्रतिष्ठा ॥ १७ ॥

वयं स्त्रियः यूयं पुरुषाः ॥ १८ ॥

---

* 'पादच्छाया सुखोदर्का' इति वा पाठः ।

युष्माकं राघवोऽरण्ये योगक्षेमं विधास्यति।
सीता नारी जनस्यास्य योगक्षेमं करिष्यति ॥ १९ ॥
को न्वनेनाप्रतीतेन सोत्कण्ठितजनेन च।
संप्रीयेता मनोज्ञेन वासेन हृतचेतसा ॥ २० ॥
कैकेय्या यदि चेद्राज्यं स्यादधर्म्यमनाथवत्।
न हि नो जीवितेनार्थः कुतः पुत्रैः कुतो धनैः ॥ २१ ॥
यया पुत्रश्च भर्त्ता च त्यक्तावैश्वर्यकारणात्।
कं सा परिहरेदन्यं कैकेयी कुलपांसनी ॥ २२ ॥
कैकेय्या न वयं राज्ये भृतका हि वसेमहि।
जीवन्त्या जातु जीवन्त्यः पुत्रैरपि शपामहे ॥ २३ ॥

अप्राप्तप्राप्तिर्योगः। प्राप्तरक्षणं क्षेमम् ॥ १९ ॥

अप्रतीतेन असुखेन सोत्कण्ठितजनेन उत्कण्ठितजनसहितेन अत-एवामनोज्ञेन हृतचेतसा चितनाशकेन वासेन कोऽनुसंप्रीयेतेत्यर्थः ॥२०॥

यदि चेदिति समुदायो यद्यर्थः। अधर्म्यमधर्मयुक्तम् अतएवानाथ-वत् नाथरहितं स्यात्। जीवितेनार्थः जीविताभिन्नोऽर्थोऽपि न पुत्रादि-रूपस्तु सुतरां नेत्यर्थः ॥ २१ ॥

पुत्रो रामः परिहरेत् त्यागात् परिहरेत्। पुत्रभर्तृत्यागिन्या इतर-त्यागः कियानिति भावः ॥ २२ ॥

जीवन्त्याः कैकेय्या राज्ये वयं भृतकाः पोषिता हि अपि जीवन्त्यो न वसेमहि न वसेम इममर्थं प्रति पुत्रैरपि शपामहे ॥ २३ ॥

या पुत्रं पार्थिवेन्द्रस्य प्रवासयति निर्घृणा ।
कस्तां प्राप्य सुखं जीवेदधर्म्यां दुष्टचारिणीम् ॥ २४ ॥
उपद्रुतमिदं सर्वमनालम्भमनायकम् ।
कैकेय्यास्तु कृते सर्वं विनाशमुपयास्यति ॥ २५ ॥
न हि प्रव्रजिते रामे जीविष्यति महीपतिः ।
मृते दशरथे व्यक्तं विलोपस्तदनन्तरम् ॥ २६ ॥
ते विषं पिबतालोड्य क्षीणपुण्याः सुदुःखिताः ।
राघवं वानुगच्छध्वमश्रुतिं वापि गच्छत ॥ २७ ॥
मिथ्याप्रव्राजितो रामः सभार्यः सहलक्ष्मणः ।
भरते सन्निबद्धाःस्म * सौनिके पशवो यथा ॥ २८ ॥

अधर्म्यां अधर्मयुताम् ॥ २४ ॥

अनालम्भम् अयत्नम् तत्र हेतुरनायकमिति कृते तन्निमित्तम् ॥ २५ ॥

विलोपो नाशः ॥ २६ ॥

ते यूयं पुरुषाः सस्त्रीका इति शेषः । आलोड्य पेषयित्वा । अश्रुतिं वापि यत्र देशे कैकेय्या नामश्रवणमपि न भवति तादृशं दूरदेशं वा गच्छतेत्यर्थः ॥ २७ ॥

मिथ्याप्रव्राजितः मिथ्यावरकल्पनया प्रव्राजितोऽभूत् । ततः कैकेयी-

---

* 'सन्निविष्टाः स्म' इति वा पाठः ।

पूर्णचन्द्राननः श्यामो गूढ़यत्रुररिन्दमः ।
आजानुबाहुः पद्माक्षो रामो लक्ष्मणपूर्वजः ॥ २९ ॥
पूर्वाभिभाषी मधुरः सत्यवादी महाबलः ।
सौम्यश्च सर्वलोकस्य चन्द्रवत् प्रियदर्शनः ॥ ३० ॥
नूनं पुरुषशार्दूलो मत्तमातङ्गविक्रमः ।
शोभयिष्यत्यरण्यानि विचरन् स महारथः ॥ ३१ ॥
ता स्तथा विलपन्त्यस्तु नगरे नागरस्त्रियः ।
चुक्रुशुर्दुःखसन्तप्ता मृत्योरिव भयागमे ॥ ३२ ॥
इत्येवं विलपन्तीनां स्त्रीणां वेश्मसु राघवम् ।
जगामास्तं दिनकरो रजनी चाभ्यवर्त्तत ॥ ३३ ॥

वशगे भरते राजनि वसति सौनिके सूना पशुवधस्थानं तत्र भवे हिंसके तत्समीपे पशवो यथा निश्चितमरणास्तथा संनिबद्धाः स्मः सन्निविष्टा भवामः ॥ २८ ॥

इदानीं तद्गुणवर्णनेनात्मानमाप्याययन्ति । पूर्णेत्यादि ॥ २९ ॥

पूर्वाभिभाषी सौहार्दप्रदर्शनाय परभयापगमाय च सर्वत्र पूर्वभाषणशीलः ॥ ३० ॥ ३१ ॥

मृत्योरिव भयागमे मृत्युहेतुकभयागम इवेत्यर्थः ॥ ३२ ॥

विलपन्तीनां दुःखं दृष्ट्वेति शेषः । रविरस्तं जगाम । तदीयदुःखदर्शनासहिष्णुतया रविरपि शीघ्रगतिरभूदित्याशयः ॥ ३३ ॥

नष्टज्वलनसन्तापा प्रशान्ताध्यायसत्कथा।
तिमिरेणानुलिप्तेव तदा सा नगरी बभौ ॥ ३४ ॥
उपशान्तवणिक्पण्या नष्टहर्षा निराश्रया।
अयोध्या नगरी चासीन्नष्टतारमिवाम्बरम् ॥ ३५ ॥

तदा स्त्रियो रामनिमित्तमातुरा
यथा सुते भ्रातरि वा विवासिते।
विलप्य दीना रुरुदुर्विचेतसः
सुतैः हि तासामधिकोपि सोऽभवत् ॥ ३६ ॥
प्रशान्तगीतोत्सवनृत्यवादना
विभ्रष्टहर्षा पिहितापणोदया।

नष्टो होमाद्यर्थोऽपि ज्वलनसन्तापो ज्वलनसंगमो * यस्याम्। प्रशान्ता अध्याया अध्ययनानि सत्कथाश्च यस्यां सा ॥ ३४ ॥

निराश्रया रामरूपाश्रयराहित्यात् ॥ ३५ ॥

सुतैः तृतीयार्थे। सुतेभ्योऽपि तासां स अधिकोऽभवत् ॥ ३६ ॥

वादनं वादित्रं प्रशान्तानि गीतोत्सववादित्राणि यस्यां सा। पिहितश्चापणानां पण्यवस्तूनामुदयः प्रसारणं यस्यां सा। संक्षपितोदकः

---

* होमाद्यर्थमुद्बोधो यस्याम् इति वा।

तदाह्ययोध्या नगरी बभूव सा
महार्णवः संक्षपितोदको यथा ॥ ३७ ॥

इत्यार्षे रामायणे वाल्मीकीये अयोध्याकाण्डे
पौरनारीविषादो नाम अष्टचत्वारिंशः
सर्गः ॥ ४८ ॥

क्षीणोदकः । संक्षुभितोदक इति पाठे क्षोभात् संक्षुभितोदक इत्यर्थः ॥ ३७ ॥

इति रामाभिरामे श्रीरामीये रामायणतिलके
अयोध्याकाण्डे अष्टचत्वारिंशः सर्गः ॥ ४८ ॥

## एकोनपञ्चाशः सर्गः ।

रामोऽपि रात्रिशेषेण तेनैव महदन्तरम् ।
जगाम पुरुषव्याघ्रः पितुराज्ञामनुस्मरन् ॥ १ ॥
तथैव गच्छतस्तस्य व्यपायाद्रजनी शिवा ।
उपास्य तु शिवां सन्ध्यां विषयानत्यगाहत ॥ २ ॥
ग्रामान् विकृष्टसीमान्तान् पुष्पितानि वनानि च ।
पश्यन्नतिययौ शीघ्रं शनैरिव हयोत्तमैः ॥ ३ ॥
शृण्वन् वाचो मनुष्याणां ग्रामसंवासवासिनाम् ।

अथ रामवृत्तान्तमाह,—रामोऽपीति । तेनैव यत्र रात्रिशेषे स्थितावस्थितास्तेनैव । महदन्तरं बहुदूरम् ॥ १ ॥

व्यपायात् गता । विषयो देशः ॥ २ ॥

विशेषेण कृष्टाः सीमान्ता येषु । अनेन सौराज्यं ध्वनितम् । तान्यतिक्रामन् शनैरिव शीघ्रं ययौ । रमणीयदेशादिदर्शनपारवश्यात् अतिशीघ्रमपि गमनं शनैरिव प्रत्यभादित्यर्थ इति तीर्थः । शरैरिवेति पाठः । शरसदृशवेगवद्भिस्तोत्तमैरित्यर्थः इति कतकः ॥ ३ ॥

ग्रामाः महान्तः संवासाः स्वल्पग्रामाः । शृण्वन्ययावित्यन्वयः । ता वाच आह,—राजानं धिगित्यादि । आश्रितं प्राप्तम् ॥ ४ ॥

* राजानं धिक् दशरथं कामस्य वशमास्थितम् ॥ ४ ॥
हा नृशंसाद्य कैकेयी पापा पापानुबन्धिनी।
तीक्ष्णा संभिन्नमर्यादा तीक्ष्णकर्मणि वर्त्तते ॥ ५ ॥
या पुत्रमीदृशं राज्ञः प्रवासयति धार्मिकम्।
वनवासे महाप्राज्ञं सानुक्रोशं जितेन्द्रियम् † ॥ ६ ॥
अहो दशरथो राजा निस्नेहः स्वसुतं प्रति।
प्रजानामनघं रामं परित्यक्तमिहेच्छति ॥ ७ ॥
एता वाचो मनुष्याणां ग्रामसंवासवासिनाम्।
शृण्वन्नतिययौ वीरः कोशलात् कोशलेश्वरः ॥ ८ ॥

पापा पापकर्मारब्धशरीरा। पापानुबन्धिनी पापकर्मनिरता। तीक्ष्णा क्रूरदर्शना। संभिन्नमर्य्यादा त्यक्तमर्य्यादा ॥ ५ ॥
ईदृशं अनेककल्याणगुणवन्तं सानुक्रोशं सदयम् ॥ ६ ॥
प्रजानां प्रियमिति शेषः। यद्वा प्रजाविषयेऽनघं पापरहितम् ॥७॥
कोशलानति अतिक्रम्य ययौ ॥ ८ ॥

---

* 'विगर्हितां हि कैकेयीं क्रूरां क्रूरेण कर्मणा।'
इत्यधिकं पाश्चात्याः पठन्ति।
† 'कथं नाम महाभागा सीता जनकनन्दिनी।
सदा सुखेष्वभिरता दुःखान्यनुभविष्यति ॥'
इत्यधिकं पाश्चात्याः पठन्ति।

ततो वेदश्रुतिं नाम शिववारिवहां नदीम् ।
उत्तीर्य्याभिमुखः प्रायादगस्त्याध्युषितां दिशम् ॥ ९ ॥
गत्वा तु सुचिरं कालं ततः शीतवहां नदीम् ।
गोमतीं गोयुतानूपामतरत्सागरङ्गमाम् ॥ १० ॥
गोमतीञ्चाप्यतिक्रम्य राघवः शीघ्रगैर्हयैः ।
मयूरहंसाभिरुतां ततार स्यन्दिकां नदीम् ॥ ११ ॥
स महीं मनुना राज्ञा दत्तामिक्ष्वाकवे पुरा ।
स्फीतां राष्ट्रवृतां रामो वैदेहीमन्वदर्शयत् ॥ १२ ॥
सूत इत्येवमाभाष्य सारथिं तमभीक्ष्णशः ।
हंसमत्तस्वरः श्रीमानुवाच पुरुषोत्तमः ॥ १३ ॥

शिववारिवहां शिवानि वारीणि वहन्तीम् ॥ ९ ॥

गोभिर्युतान्यनूपानि जलप्रायदेशा यस्यां सागरङ्गमाम् इत्यनेन यमुनावत्तस्या अपि पृथक्सागरप्रवेशं सूचयति ॥ १० ॥

स्यन्दिकां तदाख्याम् ॥ ११ ॥

सः अतीतस्यन्दिकः महीं स्यन्दिकासीमां कोसलदेशरूपां राष्ट्रवृताम् अवान्तरजनपदावृतां वैदेहीमन्वदर्शयत् । इक्ष्वाकवे मनुना दत्तकोसलदेशस्य दक्षिणसीमां कथयामासेत्यर्थः । यद्यपीक्ष्वाक्वादयः सार्वभौमास्तथापि तेषां स्वराजधानीत्वात् स्वन्दः कोसलदेश एव । सार्वभौमत्वं तु तद्देशसिंहासनाधिष्ठातृसकलराजपालनीयाज्ञत्वमेवेत्यलम् ॥ १२ ॥

कदाहं पुनरागम्य सरय्वाः पुष्पिते वने।
मृगयां पर्यटिष्यामि मात्रा पित्रा च सङ्गतः॥ १४॥
नात्यर्थमभिकाङ्क्षामि मृगयां सरयूवने।
रतिर्ह्येषातुला लोके राजर्षिगणसम्मता॥ १५॥
राजर्षीणां हि लोकेऽस्मिन् रत्यर्थं मृगया वने।
काले कृतान्तां मनुजैर्धन्विनामभिकाङ्क्षिताम् *॥ १६॥

आभाष्य संबोध्य। हंसमत्तस्वरः मत्तहंसस्वरः॥ १३॥

अथ परिगृहीतमनुष्यदेहस्य तद्देहग्रहणानुरूपोऽभिनयः कदेति आगम्य अतिक्रान्तं स्वदेशमिति शेषः॥ १४॥

ननु मृगयायाः—

स्त्रीद्यूतमृगयामद्य वाक्पारुष्योग्रदण्डताः।
अर्थस्य दूषणञ्चेति राज्ञां व्यसनसप्तकम्॥

इत्युक्तेर्व्यसनानां निषेधाच्च कथं तदिच्छेत्यतआह,—नात्यर्थमिति। प्रजान्यायचिन्तादिविमुखापादकतया अत्यन्तरतेरेव तस्यां निषेधात्। ननु सर्वथैव निषेधोऽस्त्यत आह,—एषा रतिः क्रीड़ा लोके राजर्षिगणसम्मता अतोऽतुला न सर्वथा निषिद्धेत्यर्थः। गजादयो न हन्तव्या मृगयायां महेषुभिरित्यादिनास्या अप्यनुमतत्वमिति भावः॥ १५॥

राजर्षीणां हीति श्लोकः पुनरुक्तार्थकइव कतकासम्मतश्चेति बोध्यम्। एवं हि तद्व्याख्या। हि यतः अस्मिन् लोके राजर्षीणां वने मृगयारत्यर्थमासीत्। अतोऽहमपि काले श्राद्धादिकाले। मनुजैः मनुपुत्रैः

* पाश्चात्त्यैः परिहृतम्।

स तमध्वानमैक्ष्वाकः सूतं मधुरया गिरा ।
तं तमर्थमभिप्रेत्य ययौ वाक्यमुदीरयन् ॥ १७ ॥

इत्यार्षे रामायणे वाल्मीकीये अयोध्याकाण्डे
रामस्य सरिदुत्तरणं नाम एकोनपञ्चाशः
सर्गः ॥ ४९ ॥

सदाचारपरैरपि कृतां सीकृतां धन्विनां चञ्चललक्ष्येषु इषुसिद्ध्यर्थमभि-
कांक्षितां नात्यर्थमभिकांक्षामीति सम्बन्धः ॥ १६ ॥

तं तमर्थमभिप्रेत्य विषयीकृत्य मधुरया गिरा सूतं प्रति वाक्यमुदी-
रयन् स ऐक्ष्वाको रामस्तमध्वानं ययाविति सम्बन्धः ॥ १७ ॥

इति रामाभिरामे श्रीरामीये रामायणतिलके
अयोध्याकाण्डे एकोनपञ्चाशः सर्गः ॥ ४९ ॥

## पञ्चाशः सर्गः ।

विशालान् कोशलान् रम्यान्यात्वा लक्ष्मणपूर्वजः ।
अयोध्यामुन्मुखो धीमान् प्राञ्जलिर्वाक्यमब्रवीत् ॥ १ ॥
आपृच्छे त्वां पुरिश्रेष्ठे ! काकुत्स्थपरिपालिते ! ।
दैवतानि च यानि त्वां पालयन्त्यावसन्ति च ॥ २ ॥
निवृत्तवनवासस्त्वामनृणो जगतीपतेः ।
पुनर्द्रक्ष्यामि मात्रा च पित्रा च सह सङ्गतः ॥ ३ ॥
ततो रुचिरताम्राक्षो भुजमुद्यम्य दक्षिणम् ।
अश्रुपूर्णमुखो दीनोऽब्रवीज्जानपदं जनम् ॥ ४ ॥
अनुक्रोशो दयाचैव यथार्हं मयि वः कृतः ।

अथ जन्मभूमिप्रयुक्तस्नेहेन निर्गमनकाले शिष्टाचारपरिप्राप्ततया च स्वदेशमापृच्छति स्वस्वरूपगोपनाय । विशालानिति । यात्वा तदन्तं गत्वा ॥ १ ॥

हे पुरिश्रेष्ठे ! त्वां त्वत्सम्बन्धिदैवतानि च आपृच्छे प्रार्थयामि ॥२॥

प्रार्थनाप्रकारमाह,—निवृत्तेति ॥ ३ ॥

जानपदं जनं स्वदर्शनार्थं तत्रागतं तेषामश्रुपूर्णमुखत्वात् लोकव्यवहारानुसारेण नटइव स्वयमप्यश्रुपूर्णमुखः ॥ ४ ।

चिरं दुःखस्य पापीयो गम्यतामर्थसिद्धये ॥ ५ ॥
तेऽभिवाद्य महात्मानं कृत्वा चापि प्रदक्षिणम् ।
विलपन्तो नरा घोरं व्यतिष्ठंश्च क्वचित् क्वचित् ॥ ६ ॥
तथा विलपतां तेषामतृप्तानाञ्च राघवः ।
अचक्षुर्विषयं प्रायाद्यथार्कः क्षणदामुखे ॥ ७ ॥
ततो धान्यधनोपेतान् दानशीलजनान् शिवान् ।
अकुतश्चिद्भयान् रम्यांश्चैत्ययूपसमावृतान् ॥ ८ ॥
उद्यानाम्रवनोपेतान् सम्पन्नसलिलाशयान् ।
तुष्टपुष्टजनाकीर्णान् गोकुलाकुलसेवितान् ॥ ९ ॥

अनुक्रोशः आदरोऽनुतापो वा दया कारुण्यं यथायोग्यं मयि वः युष्माकं युष्माभिरिति यावत् कृतः कृता च। दुःखस्य चिरमनुभव इति शेषः पापीयः अशोभनम्। अतो युष्माभिर्गम्यताम्। वयमप्यर्थसिद्धये पितृनुज्ञातार्थसिद्धये अवतारप्रयोजनार्थसिद्धये इति भूतस्थं गच्छाम इति शेषः। व्याख्यानान्तरं तु अप्रयोजकत्वान्नोक्तम् ॥ ५ ॥

ते एवं रामेण बोधिताः ॥ ६ ॥

अतृप्तानां दर्शनतृप्तिरहितानां क्षणदामुखे सायंकालेऽर्को यथा तथा अचक्षुर्विषयं देशं गतः ॥ ७ ॥

तदेवाह,—वाल्मीकिः। तत इति। दानशीला जना येषु तान्। चैत्यैर्देवताधिष्ठानवृक्षैर्यूपैश्च समावृतान् ॥ ८ ॥

गोकुलैराकुलतया सेवितान् ॥ ९ ॥

रक्षणीयान् नरेन्द्राणां ब्रह्मघोषाभिनादितान् ।
रथेन पुरुषव्याघ्रः कोसलानत्यवर्त्तत ॥ १० ॥
मध्येन मुदितं स्फीतं रम्योद्यानसमाकुलम् ।
राज्यं भोज्यं नरेन्द्राणां ययौ धृतिमतां वरः ॥ ११ ॥
तत्र त्रिपथगां दिव्यां शीततोयामशैवलाम् ।
ददर्श राघवो गङ्गां रम्यां ऋषिनिषेविताम् ॥ १२ ॥
आश्रमैरविदूरस्थैः श्रीमद्भिः समलङ्कृताम् ॥
कालेऽप्सरोभिर्हृष्टाभिः सेविताम्भोह्रदां शिवाम् ॥ १३ ॥
देवदानवगन्धर्वैः किन्नरैरुपशोभिताम् ।
नागगन्धर्वपत्नीभिः सेवितां सततं शिवाम् ॥ १४ ॥

नरेन्द्राणां रक्षणीयान् ग्रामश इति शेषः । नरेन्द्ररक्षणयोग्यकैक-ग्रामान् इतरनरेन्द्रराज्यतुल्यैकैकग्रामानिति यावत् ॥ १० ॥

मध्येन मध्यगत्या नरेन्द्राणामितरेषां भोज्यं राज्यं देशं ययौ। स्वदेशत्वाभावेन तज्जनानुयानशङ्काभावात् । शनैर्देशसौभाग्यं पश्यन् अगमदित्यर्थः ॥ ११ ॥

तत्र अयोध्याराज्याद्दक्षिणराज्ये ॥ १२ ॥

काले क्रीड़ाकाले सेविता अम्भःपूर्णह्रदा यस्यां ताम् ॥ १३ ॥

नागपत्नीभिर्गन्धर्वपत्नीभिश्च सेवितां सततं शिवमित्यनेन महा-निशायामपि तस्यां स्नानाद्यधिकारः सूचितः । तदुक्तं भारते । भुक्त्वा

देवाक्रीड़शताकीर्णां देवोद्यानयुतां नदीम्।
देवार्थमाकाशगमां विख्यातां देवपद्मिनीम् ॥ १५ ॥
जलाघाताट्टहासोग्रां फेननिर्मलहासिनीम्।
क्वचिद्वेणीकृतजलां क्वचिदावर्त्तशोभिताम् ॥ १६ ॥
क्वचित् स्तिमितगम्भीरां क्वचिद्वेगसमाकुलाम्।
क्वचिद्गम्भीरनिर्घोषां क्वचिद्भैरवनिःस्वनाम् ॥ १७ ॥
देवसंघाप्लुतजलां निर्मलोत्पलसंकुलाम्।
क्वचिदाभोगपुलिनां क्वचिन्निर्मलवालुकाम् ॥ १८ ॥

वा यदि वाभुक्ता रात्रौ वा यदि वा दिवा। न कालनियमः कश्चित् गङ्गां प्राप्य सरिद्वरामिति ॥ १४ ॥

देवानामाक्रीड़ैः क्रीड़ापर्वतैर्हिमवत उभयतीरवर्त्तिभिर्युक्तां देवार्थं देवानां स्नानपानादिप्रयोजनाय तत्प्रार्थनया आकाशगतां देवपद्मिनीं देवभोग्यहेमपद्मवतीम् ॥ १५ ॥

शिलामयस्थले यो जलाघातशब्दस्तद्रूपाट्टहासेनोग्राम्। पाठान्तरे जलेनाधूताः प्रक्षालिताः गुहाग्राः गुहामुखानि यया ताम्। फेनरूपो यो निर्मलो हासो मन्दहासस्तद्वतीम्। एवमादिना स्त्रीरूपेण वर्णनं प्रवाहरूपाया गङ्गाया इति बोध्यम्। वेणीकृतजलां द्वित्रिजलसंयोगात् ॥ १६ ॥

स्तिमिता निश्चला सा चासौ गम्भीरा च तां गम्भीरनिर्घोषां मृदङ्गादिवत् भैरवनिःस्वनां अशन्यादिवत् ॥ १७ ॥

हंससारससंघुष्टां चक्रवाकोपशोभिताम्।
सदा मत्तैश्च विहगैरभिपन्नामनिन्दिताम्॥ १९ ॥
क्वचित्तीररुहैर्वृक्षैर्मालाभिरिव शोभिताम्।
क्वचित्फुल्लोत्पलच्छन्नां क्वचित् पद्मवनाकुलाम्॥ २० ॥
क्वचित्कुमुदखण्डैश्च कुड्मलैरुपशोभिताम्।
नानापुष्परजोध्वस्तां समदामिव च क्वचित्॥ २१ ॥
व्यपेतमलसंघातां मणिनिर्मलदर्शनाम्।
दिशागजैर्वनगजैर्मत्तैश्च वरवारणैः॥ २२ ॥
देवराजोपवाह्यैश्च सन्नादितवनान्तराम्।
प्रमदामिव यत्नेन भूषितां भूषणोत्तमैः॥ २३ ॥
फलपुष्पैः किसलयैर्वृतां गुल्मैर्द्विजैस्तथा।

आभोगपुलिनां विशालसैकताम्॥ १८ ॥ १९ ॥ २० ॥

कुड्मलरूपैः कुमुदखण्डैः समूहैरित्यर्थः। पुष्परजसा ध्वस्तां संयुक्तां समदामिव मदसहितां प्रमदामिव स्थिताम्॥ २१ ॥

व्यपेतो दूरीकृतो मलसङ्घातः पापसङ्घातो यया ताम्। व्यपेतजलसङ्घातामिति पाठे तीरे क्रूरप्रवाहरहितामित्यर्थः। मणिर्मुक्तामणिः अनेनातिस्वच्छशुभ्रजलत्वं दिग्गजाद्यालोडनेऽपि निर्मलत्वमित्यतिशयोक्तिरलङ्कारः। वरवारणैरुत्तमगजैः॥ २२ ॥

देवराजानन्ते उपवाह्या येषां तैश्च वरगजैः। औपवाह्यैरिति पाठे तेषां क्रीडार्थयानभूतैरित्यर्थः॥ २३ ॥

विष्णुपादच्युतां दिव्यामपापां पापनाशिनीम् ॥ २४ ॥
शिंशुमारैश्च नक्रैश्च भुजङ्गैश्च समन्विताम् ।
शङ्करस्य जटाजूटाद् भ्रष्टां सागरतेजसा ॥ २५ ॥
समुद्रमहिषीं गङ्गां सारसक्रौञ्चनादिताम् ।
आससाद महाबाहुः शृङ्गवेरपुरं प्रति ॥ २६ ॥
तामूर्मिकलिलावर्त्तामन्ववेक्ष्य महारथः ।
सुमन्त्रमब्रवीत् सूतमिहैवाद्य वसामहे ॥ २७ ॥
अविदूरादयं नद्यां बहुपुष्पप्रवालवान् ।
सुमहानिङ्गुदीवृक्षो वसामोऽत्रैव सारथे ! ॥ २८ ॥

भूषणान्येवाह,—फलेत्यादि । द्विजैः पक्षिभिः । विष्णुपादस्पर्शेन ब्रह्मलोकात् ब्रह्माण्डबाह्यजलदेशाच्च च्युताम् । अपापां कर्मनाशादिवत् केनापि प्रकारेण पापजनकत्वाभाववतीमिति कतकस्तन्न पापजनकत्वसम्भावनाया एवाभावात् । वस्तुतोऽपापां पापवज्जन्तुरहिताम् । तत्र हेतुः पापनाशिनीं दर्शनमात्रेण तादृशीम् ॥ २४ ॥

शिंशुमारो जलकपिरिति वैजयन्ती कोशकर्त्ता । नक्रैर्मकरैः । सागरतेजसा भगीरथतपसा ॥ २५ ॥

शृङ्गवेरपुरं प्रस्थितामिति शेषः ॥ २६ ॥

ऊर्मिभिः कलिलाः संपृक्ता आवर्त्ता यस्यां सा ताम् । इह गङ्गातीरे ॥ २७ ॥

नद्यविदूरत्वं बहुपुष्पप्रवालवत्त्वे हेतुः इङ्गुदीतापसतरुः ॥ २८ ॥

प्रेक्ष्यामि सरितां श्रेष्ठां संमान्यसलिलां शिवाम्।
देवमानवगन्धर्वमृगपन्नगपक्षिणाम् ॥ २९ ॥
लक्ष्मणश्च सुमन्त्रश्च बाढ़मित्येव राघवम्।
उक्त्वा तमिङ्गुदीवृक्षं तदोपययतुर्हयैः ॥ ३० ॥
रामोऽभियाय तं रम्यं वृक्षमिक्ष्वाकुनन्दनः।
रथादवतरत्तस्मात् सभार्य्यः सहलक्ष्मणः ॥ ३१ ॥
सुमन्त्रोऽप्यवतीर्य्याथ मोचयित्वा हयोत्तमान्।
वृक्षमूलगतं राममुपतस्थे कृताञ्जलिः ॥ ३२ ॥
तत्र राजा गुहो नाम रामस्यात्मसमः सखा।
निषादजात्यो बलवान् स्थपतिश्चेति विश्रुतः ॥ ३३ ॥

देवादीनां सम्मान्यं सलिलं यस्यास्तां अनेन गङ्गाजलं प्रवाहादन्यत्रानीतमपि सकलपापक्षयसमर्थमिति ध्वनितम् ॥ २९ ॥

तत्र गङ्गातीरे स्थितं इङ्गुदीवृक्षं हयैर्ययतुः ॥ ३० ॥

तं अभियाय तत्समीपं गत्वेति यावत्। अवतरत् अवातरत् ॥ ३१ ॥

उपतस्थे समीपं सेवार्थं प्राप्तः ॥ ३२ ॥

आत्मसमः प्राणसमः। निषादजात्यः तज्जातौ भवः बलवान् प्राणतः सेनातश्च स्थपतिर्निषादाधिपतिः निषादजात्यः। स्थपतिरित्यनेन निषादस्थपतिं याजयेदित्यत्र कर्मधारय इति सूचितम्। यद्यपीदृश सख्यं हीनप्रेष्यं हीनसख्यमित्यादिनोपपातकेषु गणितं तथापि तद्विप्रविषयं राज्ञामाटविकबलेन प्रयोजनवत्त्वात्। षड्विधबलसंग्रहस्य राज-

स श्रुत्वा पुरुषव्याघ्रं रामं विषयमागतम् ।
वृद्धैः परिवृतोऽमात्यैर्ज्ञातिभिश्चाप्युपागतः ॥ ३४ ॥
ततो निषादाधिपतिं दृष्ट्वा दूरादुपस्थितम् ।
सह सौमित्रिणा रामः समागच्छद् गुहेन सः ॥ ३५ ॥
तमार्तः संपरिष्वज्य गुहो राघवमब्रवीत् ।
यथायोध्या तथेदं ते राम ! किं करवाणि ते ॥ ३६ ॥
ईदृशं हि महाबाहो ! कः प्राप्स्यत्यतिथिं प्रियम् ।
ततो गुणवदन्नाद्यमुपादाय पृथक्विधम् ॥ ३७ ॥
अर्घ्यञ्चोपानयच्छीघ्रं वाक्यञ्चेदमुवाच ह ।
स्वागतं ते महाबाहो ! तवेयमखिला मही ॥ ३८ ॥

धर्मत्वाच्च तत्सख्यमेवेति दिक् । अत्रेदं बोध्यं निषादगुहविषये रामस्यात्मसमः सखेत्येवं वदता वाल्मीकिना रामसमत्वे रामसमानख्यातित्वोक्त्या भगवद्भक्तत्वेन निषादत्वेऽपि पूर्वोक्तश्रवणादिमत्त्वेन तस्य तत्त्वज्ञत्वं सूचितम् ॥ ३३ ॥

उपागतः रामसमीपं प्राप्तः । विषयं स्वदेशम् ॥ ३४ ॥

समागच्छत् । क्षेमालिङ्गनादिना सङ्गतोऽभूत् ॥ ३५ ॥

आर्त्तः रामीयवल्कलादिधारणदर्शनेन तप्तः । इदमस्मत्पुरम् ॥ ३६ ॥

ईदृग्वचने कारणमाह,—ईदृशं हीति । अनेन भगवत्स्वरूपज्ञत्वमात्मनो ध्वनितम् । अन्नाद्यं अन्नमोदनं तदाद्यं भोज्यादीत्यर्थः ॥ ३७ ॥ ३८ ॥

वयं प्रेष्या भवान् भर्त्ता साधु राज्यं प्रशाधि नः।
भक्ष्यं भोज्यञ्च पेयञ्च लेह्यञ्चैतदुपस्थितम्॥ ३९॥
शयनानि च मुख्यानि वाजिनां खादनञ्च ते।
गुहमेवं ब्रुवाणन्तु राघवः प्रत्युवाच ह॥ ४०॥
अर्चिताश्चैव हृष्टाश्च भवता सर्वदा वयम्।
पद्भ्यामभिगमाच्चैव स्नेहसन्दर्शनेन च॥ ४१॥
भुजाभ्यां साधु वृत्ताभ्यां पीड़यन् वाक्यमब्रवीत्।
दिष्ट्या त्वां गुह! पश्यामि ह्यरोगं सह बान्धवैः॥ ४२॥
अपि ते कुशलं राष्ट्रे मित्रेषु च वनेषु च।
यच्चिदं भवता किञ्चित् प्रीत्या समुपकल्पितम्॥ ४३॥

नो राज्यं भक्ष्यादिकञ्च प्रशाधि स्वीकुरु॥ ३९॥

वाजिनां खादनं घासादि॥ ४०॥

महाप्रभुरपि सन् स्वगृहादिह दूरं यत् पद्भ्यामागतोऽसि यच्च ते वयमखिला मदीयमनेन स्नेहं दर्शयसि। तेन त्वया वयमर्चिता एव हृष्टाश्च वयमित्युवाचेत्यर्थः। सर्वदा वयमर्चिता इत्यनेन मद्ध्यानमेव मे महती पूजा। तच्च सर्वदा तवास्ते इत्यप्यर्थो गर्भितः। अतएव वयं त्वयि सर्वदा हृष्टाः॥ ४१॥

अतएव पुनरालिङ्गति। अत्यन्तप्रेमास्पदत्वं बोधयितुं भुजाभ्यामिति॥ ४२॥

वनेषु चेति। तस्याटविकत्वाद्वनकुशलप्रश्नः। क्वचित् धनेष्विति पाठः॥ ४३॥

सर्वं तदनुजानामि न हि वर्त्ते प्रतिग्रहे ।
कुशचीराजिनधरं फलमूलाशनञ्च माम् ॥ ४४ ॥
विद्धि प्रणिहितं धर्मे तापसं वनगोचरम् ।
अश्वानां खादनेनाहमर्थी नान्येन केनचित् ॥ ४५ ॥
एतावतात्रभवता भविष्यामि सुपूजितः ।
एते हि दयिता राज्ञः पितुर्दशरथस्य मे ॥ ४६ ॥
एतैः सुविहितैरश्वैर्भविष्याम्यहमर्चितः ।
अश्वानां प्रतिपानञ्च खादनञ्चैव सोऽन्वशात् ॥ ४७ ॥
गुहस्तत्रैव पुरुषांस्त्वरितं दीयतामिति ।
ततश्चीरोत्तरासङ्गः सन्ध्यामन्वास्य पश्चिमाम् ॥ ४८ ॥

अनुजानामि। अङ्गीकृत्य ददामि। प्रतिग्रहे भोगफलके ॥ ४४ ॥

धर्मे प्रणिहितं पित्राज्ञापालनलक्षणे धर्मे सावधानं अत्र तद्दत्तस्याग्रहेऽप्रतिग्रहे अप्रतिग्रहीतृत्वरूपक्षत्त्रधर्मोपन्यासेन अन्नभोजनायोग्यत्वे व्रतस्थत्वरूपहेतूपन्यासेन च तदन्नस्य भोजनयोग्यत्वं सूचयता तस्य तत्त्वज्ञत्वं सूचितम्। अन्यथा निषादत्वेनाभोज्यान्नतया तमेव हेतुमुपन्यसेत् स वा कथं पक्वान्नमाहरेत्। एतेन तत्त्वज्ञः सर्वोऽपि भोज्यान्न एवेति ध्वनितम् ॥ ४५ ॥

एते अश्वाः ॥ ४६ ॥

प्रतिपानं जात्यश्वानां राजोपवाह्यानां घासदानानन्तरं यत्पाय्यते क्षीरादि तत्प्रतिपानं यच्च घृतशर्करादियुतयवचूर्णादि खाद्यते तत् खादनम् ॥ ४७ ॥

जलमेवाददे भोज्यं लक्ष्मणेनाहृतं स्वयम् ।
तस्य भूमौ शयानस्य पादौ प्रक्षाल्य लक्ष्मणः ॥ ४९ ॥
सभार्यस्य ततोऽभ्येत्य तस्थौ वृक्षमुपाश्रितः ।
गुहोऽपि सह सूतेन सौमित्रिमनुभाषयन् ।
अन्वजाग्रत्ततो राममप्रमत्तो धनुर्धरः ॥ ५० ॥

तथा शयानस्य ततो यशस्विनो
मनस्विनो दाशरथेर्महात्मनः ।
अदृष्टदुःखस्य सुखोचितस्य सा
तदा व्यतीता सुचिरेण शर्वरी ॥ ५१ ॥

इत्यार्षे रामायणे वाल्मीकीये अयोध्याकाण्डे गुहसमागमो नाम पञ्चाशः सर्गः ॥ ५० ॥

त्वरितं दीयतामित्यन्वशादित्यन्वयः ॥ ४८ ॥

जलमेवाददे तीर्थप्राप्तिनिमित्तकोपवासस्यावश्यकत्वात् ॥ ४९ ॥

अभ्येत्य ततोऽन्यत्र समीपदेशं चागत्य तस्थावित्यनेन तस्य निद्राभावः सूचितः अन्वजाग्रदित्यार्षं अजागरीदित्यर्थः ॥ ५० ॥

सुचिरेण शर्वरीति । निद्रागमनाच्चिरत्वप्रतिभासस्तस्याम् ॥ ५१ ॥

इति रामाभिरामे श्रीरामीये रामायणतिलके अयोध्याकाण्डे पञ्चाशः सर्गः ॥ ५० ॥

# एकपञ्चाशः सर्गः ।

तं जाग्रतमदम्भेन भ्रातुरर्थाय लक्ष्मणम् ।
गुहः सन्तापसन्तप्तो राघवं वाक्यमब्रवीत् ॥ १ ॥
इयं तात ! सुखा शय्या त्वदर्थमुपकल्पिता ।
प्रत्याश्वसिहि साध्वस्यां राजपुत्र ! यथासुखम् ॥ २ ॥
उचितोऽयं जनः सर्वः क्लेशानान्त्वं सुखोचितः ।
गुप्त्यर्थं जागरिष्यामः काकुत्स्थस्य वयं निशाम् ॥ ३ ॥
न हि रामात्प्रियतमो ममास्ते भुवि कश्चन ।
ब्रवीम्येव च ते सत्यं सत्येनैव च ते शपे ॥ ४ ॥
अस्य प्रसादादाशंसे लोकेऽस्मिन् सुमहद्यशः ।
धर्मावाप्तिञ्च विपुलां अर्थकामौ च पुष्कलौ ॥ ५ ॥

एवं रामे शयाने तद्रक्षार्थं जाग्रल्लक्ष्मणगुहसंवादः । तमित्यादि । अदम्भेन अकृत्रिमानुरागेण भ्रातुरर्थाय भ्रातृरक्षार्थं राघवं रघुकुलजं सन्तापसन्तप्तो रामस्य भूशय्यादिजेन सन्तापेन पीड़ितः ॥ १ ॥

इयमिति । प्रत्याश्वसिहि विश्रान्तो भव ॥ २ ॥

अयं जनः आटविकः ॥ ३ ॥

सोऽहं प्रियसखं रामं शयानं सह सीतया।
रक्षिष्यामि धनुष्पाणिः सर्वथा ज्ञातिभिः सह ॥ ६ ॥
न मेऽस्त्यविदितं किञ्चिद्वनेऽस्मिन् चरतः सदा।
चतुरङ्गं ह्यपि बलं सुमहत्सन्तरेमहि * ॥ ७ ॥
लक्ष्मणस्तु ततोवाच रक्ष्यमाणास्त्वयानघ!।
नात्र भीता वयं सर्वे धर्ममेवानुपश्यता ॥ ८ ॥
कथं दाशरथौ भूमौ शयाने सह सीतया।
शक्या निद्रा मया लब्धुं जीवितं वा सुखानि वा ॥ ९ ॥
यो न देवासुरैः सर्वैः शक्यः प्रसहितुं युधि।
तं पश्य सुखसंसुप्तं तृणेषु सह सीतया ॥ १० ॥
यो मन्त्रतपसा लब्धो विविधैश्च पराक्रमैः।

न हि रामादिति सर्वात्मभूतात् ॥ ४ ॥ ५ ॥ ६ ॥

अविदितमज्ञातं किञ्च चतुरङ्गमिति परकीयमिति शेषः। तादृश-मपि परकीयं बलं सन्तरेमहि युद्धेन जयेम ॥ ७ ॥

ततोवाच तत उवाचेति च्छेदः आर्षः सन्धिः अत्र देशे वयं न भीताः यतो धर्ममेवानुपश्यता त्वया रक्ष्यमाणा भवामः ॥ ८ ॥

तथापि जागरणे कारणमाह,—कथमिति। जीवितं विशिष्ट-सुखजीवितजनकं भोजनादि ॥ ९ ॥ १० ॥

---

* "प्रसहेमहि" इति वा पाठः।

एको दशरथस्यैष पुत्रः सदृशलक्षणः ॥ ११ ॥
अस्मिन् प्रव्रजिते राजा न चिरं वर्त्तयिष्यति ।
विधवा मेदिनी नूनं क्षिप्रमेव भविष्यति ॥ १२ ॥
विनद्य सुमहानादं श्रमेणोपरताः स्त्रियः ।
निर्घोषोपरतं तात ! मन्ये राजनिवेशनम् ॥ १३ ॥
कौशल्या चैव राजा च तथैव जननी मम ।
नाशंसे यदि जीवन्ति सर्वे ते शर्वरीमिमाम् ॥ १४ ॥
जीवेदपि हि मे माता शत्रुघ्नस्यान्ववेक्षया ।
तद्दुःखं यदि कौशल्या वीरसूर्विनशिष्यति ॥ १५ ॥

मन्त्रो गायत्र्यादिः । तपः कृच्छ्रादिः । पराक्रमैः तज्जन्यैः ऋष्यशृङ्गाद्यानयनाश्वमेधाद्यनुष्ठानैः एको मुख्यः तत्र हेतुः सदृशलक्षणः पुरुषोत्तमसदृशलक्षणः दशरथसदृशलक्षण इत्यापाततोऽर्थः ॥ ११ ॥

विधवा विगतपतिका ॥ १२ ॥

श्रमेणोपरता राजभवनेऽयोध्यानगरे च भविष्यन्तीति शेषः । निर्घोषोपरतं उपरतनिर्घोषं भवतीति मन्ये ॥ १३ ॥

जीवन्तीति नाशंसे न सम्भावयामि यदि वा जीवन्ति एतावत्पर्यन्तं तदेमां शर्वरीमेव जीविष्यन्ति नाग्रे अन्नपानाद्यभावादिति सम्भावयामीति शेषः ॥ १४ ॥

जीवेदपि एतन्नाम्याः परमपीति शेषः । यदि यत् । वीरसूः कौशल्या एकपुत्रत्वाद्विनशिष्यत्येव तदतिदुःखमित्यर्थः ॥ १५ ॥

अनुरक्तजनाकीर्णा सुखालोकप्रियावहा।

राजव्यसनसंसृष्टा सा पुरी विनशिष्यति॥ १६॥

कथं पुत्रं महात्मानं ज्येष्ठपुत्रमपश्यतः।

शरीरं धारयिष्यन्ति प्राणा राज्ञो महात्मनः॥ १७॥

विनष्टे नृपतौ पश्चात् कौशल्या विनशिष्यति।

अनन्तरञ्च मातापि मम नाशमुपैष्यति॥ १८॥

अतिक्रान्तमतिक्रान्तमनवाप्य मनोरथम्।

राज्ये राममनिक्षिप्य पिता मे विनशिष्यति॥ १९॥

सिद्धार्थाः पितरं वृत्तं तस्मिन् काले ह्युपस्थिते।

प्रेतकार्य्येषु सर्वेषु संस्करिष्यन्ति राघवम्॥ २०॥

रम्यचत्वरसंस्थानां सुविभक्तमहापथाम्।

अनुरक्तैः रामानुरक्तैर्जनैराकीर्णा व्याप्ता सुखालोकरूपं प्रियमावहति सा सदा सुखवल्लोका इदानीं राजव्यसनेन दशरथमरणदुःखेन संसृष्टा युक्ता॥ १६॥

राजव्यसनमेव दर्शयति,—कथमिति॥ १७॥

मातापि भर्तृपुत्रवियोगात् सत्यप्येकपुत्रसन्निधौ॥ १८॥

मनोरथं रामराज्याभिषेकमनवाप्य अतिक्रान्तमतिक्रान्तं नष्टं नष्टमिति क्रोशन्निति शेषः प्रत्यागतं रामं राज्येऽनिक्षिप्यैव मे पिता विनशिष्यतीत्यन्वयः॥ १९॥

तस्मिन् काले मरणकाले उपस्थिते ये वृत्तं मृतं पितरं रघुकुलजं

हर्म्यप्रासादसम्पन्नां गणिकावरशोभिताम् ॥ २१ ॥
रथाश्वगजसम्बाधां तूर्य्यनादविनादिताम् ।
सर्वकल्याणसम्पूर्णां हृष्टपुष्टजनाकुलाम् ॥ २२ ॥
आरामोद्यानसम्पन्नां समाजोत्सवशालिनीम् ।
सुखिता विचरिष्यन्ति राजधानीं पितुर्मम ॥ २३ ॥
अपि जीवेद्दशरथो वनवासात् पुनर्वयम् ।
प्रत्यागम्य महात्मानमपि पश्याम सुव्रतम् ॥ २४ ॥
अपि सत्यप्रतिज्ञेन सार्धं कुशलिनो वयम् ।
निवृत्ते वनवासेऽस्मिन्नयोध्यां प्रविशेमहि ॥ २५ ॥
परिदेवयमानस्य दुःखार्त्तस्य महात्मनः ।
तिष्ठतो राजपुत्रस्य शर्वरी साऽत्यवर्त्तत ॥ २६ ॥

तथाहि सत्यं ब्रुवति प्रजाहिते
नरेन्द्रसूनौ गुरुसौहृदात् गुहः ।

सर्वप्रेतकार्येषु संस्करिष्यन्ति ते सिद्धार्थाः भाग्यवन्तः प्राप्तराज्याश्च भरतादय इति शेषः । क्रोधात् तन्नामाग्रहणम् ॥ २० ॥ २१ ॥ २२ ॥

विचरिष्यन्ति भरतादय इति शेषः ॥ २३ ॥

अपि जीवेदिति सम्भावने लिङ् । अपि च अपि पश्याम अपि द्रक्ष्यामः ॥ २४ ॥

सत्यप्रतिज्ञेन रामेण ॥ २५ ॥

परिदेवयमानस्येति । इत्थमित्यादिः । तिष्ठतः जाग्रतः ॥ २६ ॥

मुमोच वाष्पं व्यसनाभिपीडितो
ज्वरातुरो नाग इव व्यथातुरः ॥ २७ ॥

इत्यार्षे रामायणे वाल्मीकीये अयोध्याकाण्डे
गुहलक्ष्मणसंवादो नाम एकपञ्चाशः
सर्गः ॥ ५१ ॥

गुरौ रामे सौहृदात् इत्युभयान्वयि अतिस्नेहाज्ज्वरातुरो गुहः व्यथातुरो नागो गज इव ॥ २७ ॥

इति रामाभिरामे श्रीरामीये रामायणतिलके
अयोध्याकाण्डे एकपञ्चाशः सर्गः ॥ ५१ ॥

## द्विपञ्चाशः सर्गः ।

प्रभातायान्तु सर्व्वर्य्यां पृथुवक्षा महायशाः ।
उवाच रामः सौमित्रिं लक्ष्मणं शुभलक्षणम् ॥ १ ॥
भास्करोदयकालोसौ गता भगवती निशा ।
असौ सुकृष्णो विहगः कोकिलस्तात ! कूजति ॥ २ ॥
बर्हिणानाञ्च निर्घोषः श्रूयते नदतां वने ।
तराम जाह्नवीं सौम्य ! शीघ्रगां सागरङ्गमाम् ॥ ३ ॥
विज्ञाय रामस्य वचः सौमित्रिर्मित्रनन्दनः * ।
गुहमामन्त्र्य सूतञ्च सोऽतिष्ठद्भ्रातुरग्रतः ॥ ४ ॥

प्रभातायामिति ॥ १ ॥

सुकृष्णो विहगः काकः कोकिलपालकत्वाच्च कोकिलपदेनोक्तः काकेति नामग्रहणस्य प्रातर्निन्द्यत्वादेवमुक्तिः ॥ २ ॥ ३ ॥

विज्ञाय तरणसाधनं शीघ्रमानेयमित्येवं रामवचनतात्पर्यं ज्ञात्वा गुहं सूतञ्चामन्त्र्य आमन्त्रणेनैव तत्तात्पर्यं बोधयित्वा यथापूर्वं भ्रातुरग्रतोऽतिष्ठत् ॥ ४ ॥

---

* गच्छामः सन्ध्यपासार्थं त्वरयस्व महारथ ! ।
पाश्चात्यपुस्तके इत्यधिकम् ।

स तु रामस्य वचनं निशम्य प्रतिगृह्य च।
स्थपतिस्तूर्णमाहूय सचिवानिदमब्रवीत्॥ ५॥
अस्यवाहनसंयुक्तां कर्णग्राहवतीं शुभाम्।
सुप्रतारां दृढां तीर्थे शीघ्रं नावमुपाहर॥ ६॥
तं निशम्य गुहादेशं गुहामात्यगणो महान्।
उपोह्य रुचिरां नावं गुहाय प्रत्यवेदयत्॥ ७॥
ततः स प्राञ्जलिर्भूत्वा गुहो राघवमब्रवीत्।
उपस्थितेयं नौर्देव! भूयः किं करवाणि ते॥ ८॥
तवामरसुतप्रख्य! तर्तुं सागरगां नदीम्।
नौरियं पुरुषव्याघ्र! शीघ्रमारोह सुव्रत!॥ ९॥
अथोवाच महातेजा रामो गुहमिदं वचः।
कृतकामोऽस्मि भवता शीघ्रमारोप्यतामिति॥ १०॥

स तु गुहस्तु रामस्य वचनं तराम जाह्नवीमित्येवं निशम्य तात्पर्यतो ज्ञात्वा प्रतिगृह्य नमस्कारपूर्वं प्रतिगृह्य सचिवानाहूय तन्मध्ये कञ्चित्प्रति अब्रवीत्॥ ५॥

अस्य वाहनसंयुक्तां अस्य जलं निरस्य नावं तीरं प्रापयतीत्यस्यवाहनमरित्रम्। मयूरव्यंसकादित्वात्समासः। कर्णग्राहः कर्णधारः। सुखेन प्रतारः प्रतरणं यया ताम्। दृढां दृढसन्धिबन्धां तीर्थेऽवतारमार्गे उपाहर समीपं प्रापय॥ ६॥

उपोह्य समीपं प्रापय्य॥ ७॥ ८॥ ९॥

ततः कलापान् सन्नह्य खड्गौ बध्वा च धन्विनौ ।
जग्मतुर्य्येन तां गङ्गां सीतया सह राघवौ ॥ ११ ॥
राममेवन्तु धर्मज्ञमुपागम्य विनीतवत् ।
किमहं करवाणीति सूतः प्राञ्जलिरब्रवीत् ॥ १२ ॥

ततोऽब्रवीत् दाशरथिः सुमन्त्रं
स्पृशन् करेणोत्तमदक्षिणेन ।
सुमन्त्र ! शीघ्रं पुनरेव याहि
राज्ञः सकाशे भवचाप्रमत्तः ॥ १३ ॥

निवर्त्तस्वेत्युवाचैनमेतावद्धि कृतं मम ।
रथं विहाय पद्भ्यान्तु गमिष्यामो महावनम् ॥ १४ ॥

आरोप्यतां खनित्रपिटकवैदेहीवस्त्राभरणादिकमिति शेषः ॥ १० ॥

सन्नह्य कवचं कलापान् तूणीरान् । येन अवतारणमार्गेण नावमारुह्य तामनिर्वाच्यगुणां गङ्गां लोकास्तरन्ति तमवतारं तर्तुं जग्मतुः ॥ ११ ॥

एवन्तु एवम्भूतन्तु रथादिनिरपेक्षं गच्छन्तं तु ॥ १२ ॥

उत्तमश्चासौ दक्षिणश्च तेन स्पर्शादिव्यापारे उत्तमेन स्पर्शमात्रेण सकलदुःखहारकत्वाद्दक्षिणेनेदृशेन करेण दक्षिणकरेण ॥ १३ ॥

गमनप्रत्याशा निवृत्तये पुनः सावधारणां निवृत्तिमाह,—निवर्त्तस्वेति। एतावत्पर्यन्तं राजाज्ञया यानेन गमनं कृतम् । हि अतःपरं ममानेन न प्रयोजनं यतो रथं विहाय पद्भ्यामेव महावनं गमिष्यामोऽतस्त्वं सर्वथा निवर्त्तस्व ॥ १४ ॥

आत्मानं त्वभ्यनुज्ञातमवेक्ष्यार्त्तः स सारथिः।
सुमन्त्रः पुरुषव्याघ्रमैक्ष्वाकमिदमब्रवीत्॥ १५॥
नातिक्रान्तमिदं लोके पुरुषेणेह केनचित्।
तव सभ्रातृभार्यस्य वासः प्राकृतवद्वने॥ १६॥
न मन्ये ब्रह्मचर्य्ये वा स्वधीते वा फलोदयः।
मार्दवार्जवयोर्वापि त्वां चेद्व्यसनमागतम्॥ १७॥
सह राघव! वैदेह्या भ्रात्रा चैव वने वसन्।
त्वं गतिं प्राप्स्यसे वीर! त्रीन् लोकांस्तु जयन्निव। १८॥
वयं खलु हता राम! यत्त्वयाप्युपवञ्चिताः।

अभ्यनुज्ञातं प्रतिनिवृत्त्यै इति शेषः॥ १५॥

तदादौ लोकदृष्ट्या शोकापनुदं वचनमाह,—नातीति। सभ्रातृभार्यस्य तव प्राकृतवत् क्षुद्रवत् वने वासो येन दैवेन कृतस्तदिदं दैवं इहलोके केनाप्यतिक्रान्तं न लङ्घितं न अतो हृदये मा शुच इत्यर्थः। यद्वा ते वनवासो जात इति यदिदं इहलोके अयोध्यास्थलोकमध्ये केनापि पुरुषेण न हृदि अत्यन्तं क्रान्तं स्वीकृतं सर्वासम्मतमेवातोऽस्मदादीन् दोषेण मा गृह्णीया इति तात्पर्यम्॥ १६॥

किञ्च यदि त्वामीदृशं व्यसनमागतं तदा ब्रह्मचर्यादिनिष्फलमिति मन्ये॥ १७॥

इदानीं रामं भगवन्तं मत्वाह,—सहेति। गतिमुत्कर्षं एवास्यैव त्रिलोकीजेतुर्जयेन पितृवाक्यपरिपालनेन च त्रीन् लोकान् जयन्निव। एवञ्च तवायं वनवासोऽपि महाफल एव॥ १८॥

कैकेय्यास्त्वमेष्यामः पापाया दुःखभागिनः ॥ १९ ॥
इति ब्रुवन्नात्मसमं सुमन्त्रः सारथिस्तदा ।
दृष्ट्वा दूरगतं रामं दुःखार्त्तो रुरुदे चिरम् ॥ २० ॥
ततस्तु विगते वाष्पे सूतं स्पृष्टोदकं शुचि ।
रामस्तु मधुरं वाक्यं पुनः पुनरुवाच तम् ॥ २१ ॥
इक्ष्वाकूणां त्वया तुल्यं सुहृदं नोपलक्षये ।
यथा दशरथो राजा मां न शोचेत् तथा कुरु ॥ २२ ॥
शोकोपहतचेताश्च वृद्धश्च जगतीपतिः ।
कामभारावसन्नश्च तस्मादेतद्ब्रवीमि ते ॥ २३ ॥
यद्यदाज्ञापयेत् किञ्चित् स महात्मा महीपतिः ।
कैकेय्याः प्रियकामार्थं कार्य्यन्तदविकाङ्क्षया ॥ २४ ॥

वयन्तु सर्वथा पीड़िता इत्याह,—वयमिति । उपवर्षिताः केचि-द्राघावविदितगमनेन अहं तु बलान्निवर्त्तनेन एवं सर्वे त्यक्ताः ॥ १९ ॥

आत्मसम अतिबुद्धिमत्त्वान्नियोग्यम् । दूरगतं दूरदेशावस्थानवन्तं निश्चित्य तत्समीपे दुःखार्त्तश्चिरं रुरोद ॥ २० ॥

स्पृष्टोदकमाचामन्तं शुचिं पवित्रम् ॥ २१ ॥

सुहृदं व्यसनापनोदकम् । यत एवमतो यथेत्यादि ॥ २२ ॥

कामभारावसन्नः कामवेगेन पीड़ितः। यद्वा अवसन्नः मदभिषेकादि-मनोरथसमूहैः । तस्मादेतदुक्तं वक्ष्यमाणञ्च ॥ २३ ॥

कैकेय्याः प्रियो यः कामोविषयो भरताभिषेकादिस्तदर्थं यथा येन

एतदर्थं हि राज्यानि प्रशासति नराधिपाः।
यदेषां सर्वकृत्येषु मनो न प्रतिहन्यते ॥ २५ ॥
यद्यथा स महाराजो नालीकमधिगच्छति।
न च ताम्यति शोकेन सुमन्त्र! कुरु तत्तथा ॥ २६ ॥
अदृष्टदुःखं राजानं वृद्धमार्य्यं जितेन्द्रियम्।
ब्रूयास्त्वमभिवाद्यैव मम हेतोरिदं वचः ॥ २७ ॥
न चाहमनुशोचामि लक्ष्मणो नच शोचति *।
अयोध्यायाश्च्युताश्चेति वने वत्स्यामहेति वा ॥ २८ ॥
चतुर्दशसु वर्षेषु निवृत्तेषु पुनः पुनः।
लक्ष्मणं माञ्च सीताञ्च द्रक्ष्यसे क्षिप्रमागतान् ॥ २९ ॥

प्रकारेण यदस्तु आज्ञापयेत् तत् अविकाङ्क्षया अस्मदादीनामविशङ्कया कार्यं सादरमनुष्ठेयम् ॥ २४ ॥

एतच्छब्दार्थमाह,—यदेषामिति प्रशासतीत्यभ्यस्तत्वादत्। सर्वकृत्येष्वपि कामक्रोधप्रवृत्तेष्वपि ॥ २५ ॥

यत्कार्यम्प्रति यथा येन प्रकारेण अलीकमप्रियं ताम्यति ग्लायति ॥ २६ ॥

अभिवाद्य मत्प्रतिनिधितया मदीयनमस्कारं कृत्वा ॥ २७ ॥

इदं पदार्थमाह,—न चेति। वने वत्स्यामहेति हेति सन्धिरार्षः। वत्स्यामहे इति वा नानुशोचामीति सम्बन्धः ॥ २८ ॥

---

* "मैथिली" इति वा पाठः।

एवमुक्त्वा तु राजानं मातरञ्च सुमन्त्र ! मे ।
अन्याश्च देवीः सहिताः कैकेयीञ्च पुनः पुनः ॥ ३० ॥
आरोग्यं ब्रूहि कौशल्यामथ पादाभिवन्दनम् ।
सीताया मम चार्य्यस्य वचनाल्लक्ष्मणस्य च ॥ ३१ ॥
ब्रूयाश्चापि महाराजं भरतं शीघ्रमानय ।
आगतश्चापि भरतः स्थाप्यो नृपमते पदे ॥ ३२ ॥
भरतञ्च परिष्वज्य यौवराज्येऽभिषिच्य च ।
अस्मत्सन्तापजं दुःखं न त्वामभिभविष्यति ॥ ३३ ॥
भरतश्चापि वक्तव्यो यथा राजनि वर्त्तसे ।
तथा मातृषु वर्त्तेथाः सर्वास्वेवाविशेषतः ॥ ३४ ॥

पुनरागतानस्मान् पुनस्त्वं द्रक्ष्यसीति सम्बन्धः । पुनःपुनरभीक्ष्णं द्रक्ष्यसि वा ॥ २९ ॥

सहिताः मम मात्रेति शेषः । पुनःपुनरभीक्ष्णं पूर्वोक्तं वाक्यमुक्त्वा कौशल्यामित्युपलक्षणं सर्वाः प्रति कैकेयीञ्चारोग्य अहमरोगोऽदुःख इति ब्रूहि कैकेयीमिति न व्यङ्गोक्तिः । किन्तु दैवकृतत्वेनास्या अनपराधित्वमित्याशयेन अथ आरोग्यकथनानन्तरं सर्वान् प्रति आर्यस्य ज्येष्ठस्य मम सीताया लक्ष्मणस्य च वचनात्पादाभिवन्दनं ब्रूहि ॥ ३० ॥ ॥ ३१ ॥

एवं पितरं मातरं प्रति च सन्दिश्य पुनः पितरं प्रति सन्दिशति । ब्रूया इति महाराजं दशरथं नृपमते राजसम्मते पदे राज्ये ॥ ३२ ॥

यथा च तव कैकेयी सुमित्रा चाविशेषतः ।
तथैव देवी कौशल्या मम माताविशेषतः ॥ ३५ ॥
तातस्य प्रियकामेन यौवराज्यमवेक्षता ।
लोकयोरुभयोः शक्यं नित्यदा सुखमेधितुम् ॥ ३६ ॥
निवर्त्यमानो रामेण सुमन्त्रः प्रतिबोधितः ।
तत्सर्वं वचनं श्रुत्वा स्नेहात् काकुत्स्थमब्रवीत् ॥ ३७ ॥
यदहं नोपचारेण ब्रूयां स्नेहादविक्लवः ।
भक्तिमानिति तत्तावद्वाक्यं त्वं क्षन्तुमर्हसि ॥ ३८ ॥
कथं हि त्वद्विहीनोऽहं प्रतियास्यामि तां पुरीम् ।
तव तात ! वियोगेन पुत्रशोकातुरामिव ॥ ३९ ॥

अथ सुमन्त्रं प्रत्याह,—भरतश्चेति । अभिषिच्य अभिषेचय्य ॥ ३३ ॥
राजनि दशरथे ॥ ३४ ॥

अविशेषतः शत्रुघ्नसम्बन्धात्कैकेय्यविशेषतः कैकेय्यविशेषेत्यर्थः । एवं मम मातापि कैकेय्यविशेषा द्रष्टव्येत्यर्थः ॥ ३५ ॥

अवेक्षता अङ्गीकुर्वता उभयोर्लोकयोरिहपरलोकयोः । नित्यदा सर्वदा । छान्दसो दाप्रत्ययः । सुखं वर्धयितुं शक्यं तेन तथा वर्त्तस्व येन लोकद्वयेऽपि सुखं भवतीति व्यंग्यम् । पर्यायोक्तमत्रालङ्कारः ॥ ३६॥
॥ ३७ ॥

उपचारः स्वामिभृत्योचितः सत्कारः तेन न ब्रूयाम् । अपितु भक्तिमानिति ज्ञात्वा क्षन्तुमर्हसीति सम्बन्धः ॥ ३८ ॥

सराममपि तावन्मे रथं दृष्ट्वा तदा जनः ।
विनारामं रथं दृष्ट्वा विदीर्येतापि सा पुरी ॥ ४० ॥
दैन्यं हि नगरी गच्छेत् दृष्ट्वा शून्यमिमं रथम् ।
सूतावशेषं स्वं सैन्यं हतवीरमिवाहवे ॥ ४१ ॥
दूरेऽपि निवसन्तं त्वां मानसेनाग्रतः स्थितम् ।
चिन्तयन्त्योऽद्य नूनं त्वां निराहाराः कृताः प्रजाः ॥ ४२ ॥
दृष्टं तद्धि त्वया राम ! यादृशं त्वत्प्रवासने ।
प्रजानां सङ्कुलं वृत्तं त्वच्छोकक्लान्तचेतसाम् ॥ ४३ ॥
आर्त्तनादो हि यः पौरैरुन्मुक्तस्त्वत्प्रवासने ।

पुत्रशोकः पुत्रवियोगजः शोकः ॥ ३९ ॥

मे रथं मत्प्रवर्त्यं रथं दूरात् दृष्ट्वा । तदा दर्शनकाले सराममपि । अपिः सम्भावने सरामं सम्भावयमानो जनः पुरी च निकटगतं रथं विनारामं दृष्ट्वा विदीर्येतापि । अपिः सम्भावनायाम् ॥ ४० ॥

सूतावशेषं हतवीरं रथं दृष्ट्वा स्वसैन्यमिव ॥ ४१ ॥

दूरेऽपि निवसन्तं त्वां मानसेन व्यापारेणाग्रतः पुरः स्थितमिव त्वां चिन्तयन्त्यः रथेनागतप्रायो राम इति चिन्तयन्त्यः प्रजाः जनाः अद्य एकस्य मम गमनदिने नूनं निश्चयेन निराहाराः कृताः निराहारसङ्कल्पवत्यः कृताः मरिष्यन्तीति यावत् ॥ ४२ ॥

तस्यैव युक्त्या साधनं करोति । दृष्टमित्यादिना सङ्कुलं आसन्नादादि ॥ ४३ ॥

सरथं मां निशाम्यैव कुर्युः शतगुणं ततः ॥ ४४ ॥
अहं किञ्चापि वक्ष्यामि देवीं तव सुतो मया ।
नीतोऽसौ मातुलकुलं सन्तापं मा कृथा इति ॥ ४५ ॥
असत्यमपि नैवाहं ब्रूयां वचनमीदृशम् ।
कथमप्रियमेवाहं ब्रूयां सत्यमिदं वचः ॥ ४६ ॥
मम तावन्नियोगस्थास्त्वद्बन्धुजनवाहिनः ।
कथं रथं त्वया हीनं प्रवाक्ष्यन्ति हयोत्तमाः ॥ ४७ ॥

सरथं मामेव निशाम्येत्यन्वयः ॥ ४४ ॥

पुनः रामं विना स्वगमनेऽनुपपत्तिमाह,—अहमिति। अपि च अहं देवीं किं वक्ष्यामि। देवीं कौशल्याम्। तव सुतो मया मातुलकुलं प्रापित इति ब्रूहि तत्राह,—ईदृशं वचनं प्रियमपि असत्यं नवाहं ब्रूयां वनं प्रापित इत्येव तर्हि ब्रूहि तत्राह,—इदं सत्यमपि अप्रियमेव अतः कथं ब्रूयाम्। सत्यं ब्रूयात्प्रियं ब्रूयान्न ब्रूयात्सत्यमप्रियमिति स्मृतेः। तस्मात्तव मातरम्प्रति वक्तुं योग्यस्योत्तरस्याभावादहं न गमिष्यामीति भावः। एतदेव ध्वनयन् वक्ष्यति। तन्न शक्ष्याम्यहं गन्तुमिति। यत्तु कतकेनासत्यमपि मातुलकुलगमनं वक्ष्यामि नतु सत्यमपि वनगमनमप्रियत्वादित्युक्तं तत्तु तन्न शक्ष्यामीत्यादिनोक्तवचसां नगरगमनाभावप्रतिपादकत्वस्यैव लाभाच्चिन्त्यम् ॥ ४५ ॥ ४६ ॥

रथोऽपि नेतुमशक्य इत्यनुपपत्त्यन्तरमाह,—ममेति। एते अश्वा मम नियोगस्थाः मत्प्रेरणामात्राधीनाः मत्प्रेरणया त्वद्बन्धुजनवहनशीला एव नत्वन्यवहनशीला नापि त्वद्बन्धुरहितरथवहनशीलाः। अतस्त्वया-

तन्न शक्ष्याम्यहं गन्तुमयोध्यां त्वदृतेऽनघ ! ।
वनवासानुयानाय मामनुज्ञातुमर्हसि ॥ ४८ ॥
यदि मे याचमानस्य त्यागमेव करिष्यसि ।
सरथोऽग्निं प्रवेक्ष्यामि त्यक्तमात्र इह त्वया ॥ ४९ ॥
भविष्यन्ति वने यानि तपोविघ्नकराणि ते ।
रथेन प्रतिबाधिष्ये तानि सर्वाणि राघव ! ॥ ५० ॥
त्वत्कृतेन मया प्राप्तं रथचर्य्याकृतं सुखम् ।
आशंसे तत्कृतेनाहं वनवासकृतं सुखम् ॥ ५१ ॥

हीनं रथमेते कथं प्रवाह्यन्ति न कथमपि वहन्ति अतो रथनयनं दुःशक्यमिति भावः ॥ ४७ ॥

उपसंहरति तन्नेति ॥ ४८ ॥

त्यक्तमात्रे त्यागक्षण एव ॥ ४९ ॥

भविष्यन्ति सम्भावितानि रथेन साधनेनाहमेव रथी भूत्वा प्रतिबाधिष्ये ॥ ५० ॥

ननु सूतेन त्वया कथं रथिकृत्यं कर्त्तुं शक्यं तत्राह,—त्वत्कृतेनेति । न केवलमहं सूतः किन्तु प्रधानभूतो मन्त्री सूतत्वन्तु त्वत्कृतानुग्रहरूपफलेन तदर्थफलस्यापि हेतुत्वाङ्गीकारान्मयाङ्गीकृतमिति शेषः । तत् फलञ्च त्वदीयरथचर्य्यया त्वदनुग्रहकृतं सुखं मया प्राप्तमिदानीं त्वदृतेन त्वदङ्गीकृतवनानुगमनानुग्रहेण वनवासकृतं सुखं राज्यचिन्तादुःखाभावात् महत्सुखमाशंसे प्रार्थयामि । एतेन त्वदवतारं ज्ञात्वैव त्वद्रथचर्य्यासौभाग्याय सूतत्वं मयाङ्गीकृतमिति ध्वनितम् ॥ ५१ ॥

प्रसीदेच्छामि तेऽरण्ये भवितुं प्रत्यनन्तरः।
प्रीत्याभिहितमिच्छामि भव मे प्रत्यनन्तरः॥ ५२॥
इमेऽपि च हया वीर! यदि ते वनवासिनः।
परिचर्य्यां करिष्यन्ति प्राप्स्यन्ति परमां गतिम्॥ ५३॥
तत्र शुश्रूषणं मूर्ध्ना करिष्यामि वने वसन्।
अयोध्यां देवलोकं वा सर्व्वथा प्रजहाम्यहम्॥ ५४।
न हि शक्या प्रवेष्टुं सा मयायोध्या त्वया विना।
राजधानी महेन्द्रस्य यथा दुष्कृतकर्म्मणा॥ ५५॥
वनवासे क्षयं प्राप्ते ममैष हि मनोरथः।
यदनेन रथेनैव त्वां वहेयं पुरीं पुनः॥ ५६॥
चतुर्दश हि वर्षाणि सहितस्य त्वया वने।
क्षणभूतानि यास्यन्ति शतसंख्यानि चान्यथा॥ ५७॥
भृत्यवत्सल! तिष्ठन्तं भर्तृपुत्रगते पथि।

प्रत्यनन्तरः प्रत्यासन्नोऽनुकूल इति यावत् प्रत्यनन्तरो भवेति त्वया प्रीत्याभिहितं वाक्यं श्रोतुमिच्छामि॥ ५२॥ ५३॥

देवलोकं वेत्यनेन त्वद्भक्तानां भक्त्यन्तरायभूतदेवलोकप्राप्तिरपि हेयैवेति सूचितम्॥ ५४॥ ५५॥

वनवासे क्षयं प्राप्ते वनवासकाले समाप्ते पुरीं वहेयं प्रापयेयमिति यत् एष मे मनोरथः॥ ५६॥

अन्यथा त्वया रहितस्य स्थितिपक्षे॥ ५७॥

भक्तं भृत्यं स्थितं स्थित्या न मां त्वं हातुमर्हसि ॥ ५८ ॥
एवं बहुविधं दीनं याचमानं पुनः पुनः।
रामो भृत्यानुकम्पी तु सुमन्त्रमिदमब्रवीत् ॥ ५९ ॥
जानामि परमां भक्तिं मयि ते भर्तृवत्सल !।
शृणु चापि यदर्थं त्वां प्रेषयामि पुरीमितः ॥ ६० ॥
नगरीं त्वां गतं दृष्ट्वा जननी मे यवीयसी।
कैकेयी प्रत्ययं गच्छेदिति रामो वनं गतः ॥ ६१ ॥
परितुष्टा हि सा देवी वनवासं गते मयि।
राजानं नातिशङ्केत मिथ्यावादीति धार्मिकम् । ६२ ॥
एष मे प्रथमः कल्पो यदम्बा मे यवीयसी।
भरतारक्षितं स्फीतं पुत्रराज्यमवाप्नुयात् ॥ ६३ ॥
मम प्रियार्थं राज्ञश्च सुमन्त्र ! त्वं पुरीं व्रज।
सन्दिष्टश्चापि यानर्थांस्तांस्तान् ब्रूयास्तथा तथा ॥ ६४ ॥

भर्तृपुत्रगते राजपुत्राश्रिते पथि यथा भृत्येन स्थातव्यं तथा त्वद्विषये तिष्ठन्तं सर्वभृत्यमध्ये भक्तिमन्तं भृत्यम्। स्थित्या भृत्ययोग्यया स्थित्या सर्वदा स्थितं नियुक्तं कार्यविषये कदाप्यपराधरहितमिति यावत् ॥ ५८ ॥ ५९ ॥ ६० ॥

रामो वनं गत इति प्रत्ययं निश्चयं कैकेयी गच्छेदित्यन्वयः ॥ ६१ ॥

अतिशङ्का अन्यथाशङ्का तां न कुर्यात् ॥ ६२ ॥

इत्येष मे प्रथमः कल्पो मुख्यं प्रयोजनं त्वद्गमनस्येत्यन्वयः भरतेना-

इत्युक्त्वा वचनं सूतं सान्त्वयित्वा पुनःपुनः ।
गुहं वचनमक्लीवो रामो हेतुमदब्रवीत् ॥ ६५ ॥
नेदानीं गुह! योग्योऽयं वासो मे सजने वने ।
अवश्यमाश्रमे वासः कर्त्तव्यस्तद्गतो विधिः ॥ ६६ ॥
सोऽहं गृहीत्वा नियमं तपस्विजनभूषणम् ।
हितकामः पितुर्भूयः सीताया लक्ष्मणस्य च ॥ ६७ ॥
जटाः कृत्वा गमिष्यामि न्यग्रोधक्षीरमानय ।
तत् क्षीरं राजपुत्राय गुहः क्षिप्रमुपाहरत् ॥ ६८ ॥
लक्ष्मणस्यात्मनश्चैव रामस्तेनाकरोज्जटाः ।

रक्षितं समन्तादक्षितमीदृशं पुत्रराज्यं तज्जन्यं सुखं प्राप्नुयादिति च मम त्वद्गमनस्य प्रयोजनं भरतानयनस्य त्वदधीनत्वात् ॥ ६३ ॥ ६४ ॥ ॥ ६५ ॥

सजने वने वासो न योग्य इत्युक्तिरत्रैव वने स्थेयमिति कदाचिद्गुहः प्रार्थयेत्तत्प्रतिबन्धाय आश्रमे जनपदरहिते वासो योग्योऽतस्तद्गत आश्रमवासोचितो विधिर्जटाधारणादिरूप इदानीं कर्त्तव्य इत्यन्वयः ॥ ६६ ॥

सोऽहं नियमं वन्याहारभूशयनादिरूपं गृहीत्वा सीताया लक्ष्मणस्य चानुमत्या तपस्विजनभूषणं जटाः कृत्वा गमिष्यामि । अतो न्यग्रोधक्षीरमानय भूयोऽतिशयेन पितुर्हितकामः तत्प्रतिज्ञारक्षणेन । यत्तु सीताया हितकाम इति तन्न जटाधारणेन सीताहिताप्रसिद्धेः । अनुमतिस्तु अपेक्षितैव अन्यथा सन्न्यासबुध्या परमदुःखापत्तेः ॥ ६७ ॥ ६८ ॥

दीर्घबाहुर्नरव्याघ्रो जटिलत्वमधारयत् ॥ ६९ ॥
तौ तदा चीरसम्पन्नौ जटामण्डलधारिणौ ।
अशोभेतामृषिसमौ भ्रातरौ रामलक्ष्मणौ ॥ ७० ॥
ततो वैखानसं मार्गमास्थितः सहलक्ष्मणः ।
व्रतमादिष्टवान् रामः सहायं गुहमब्रवीत् ॥ ७१ ॥
अप्रमत्तो बले कोषे दुर्गे जनपदे तथा ।
भवेथा गुह ! राज्यं हि दुरारक्ष्यतमं मतम् ॥ ७२ ॥
ततस्तं समनुज्ञाप्य गुहमिक्ष्वाकुनन्दनः ।
जगाम तूर्णमव्यग्रः सभार्यः सहलक्ष्मणः ॥ ७३ ॥
स तु दृष्ट्वा नदीतीरे नावमिक्ष्वाकुनन्दनः ।
तितीर्षुः शीघ्रगां गङ्गामिदं वचनमब्रवीत् ॥ ७४ ॥

लक्ष्मणस्याकरोत् । तेनापि रामवदवस्थानस्य सङ्कल्पितत्वात् ॥ ६९ ॥ ७० ॥

वैखानसं मार्गं वानप्रस्थाश्रमधर्मं आस्थितः प्राप्तुं कृतबुद्धिः सन् व्रतं वानप्रस्थव्रतं आदिष्टवान् अङ्गीकृतवान् । अत्र गङ्गाख्यतीर्थप्राप्त्यवसरेऽपि प्रयागाख्यतीर्थे प्राप्तौ तदग्रे पितृमरणश्रवणेऽपि यन्मुण्डनाकरणं रामलक्ष्मणयोस्तेनानेन परकृतिरूपार्थवादेन क्षत्रियाणां तीर्थादिषु मुण्डननिषेधं प्रतीम इत्यलम् । सहायं गङ्गातरणादिकृतसहायम् ॥ ७१ ॥

किमब्रवीत्तदाह,—अप्रमत्त इति । दुःखेनारक्षा रक्षणं यस्य तद्दुरारक्ष्यं अतिशयेन दुरारक्ष्यं तत् दुरारक्ष्यतमम् ॥ ७२ ॥ ७३ ॥ ७४ ॥

आरोह त्वं नरव्याघ्र ! स्थितां नावमिमां शनैः ।
सीताञ्चारोपयान्वक्षं परिगृह्य मनस्विनीम् ॥ ७५ ॥
स भ्रातुः शासनं श्रुत्वा सर्वमप्रतिकूलयन् ।
आरोप्य मैथिलीं पूर्वमारुरोहात्मवांस्ततः ॥ ७६ ॥
अथारुरोह तेजस्वी स्वयं लक्ष्मणपूर्वजः ।
ततो निषादाधिपतिर्गुहो ज्ञातीनचोदयत् ॥ ७७ ॥
राघवोऽपि महातेजा नावमारुह्य तां ततः ।
ब्रह्मवत् क्षत्रवच्चैव जजाप हितमात्मनः ॥ ७८ ॥
आचम्य च यथा शास्त्रं नदीं तां सह सीतया ।
प्रणमत् प्रीतिसन्तुष्टो लक्ष्मणश्च महारथः ॥ ७९ ॥
अनुज्ञाय सुमन्त्रञ्च स बलञ्चैव तं गुहम् ।
आस्थाय नावं रामस्तु चोदयामास नाविकान् ॥ ८० ॥

स्थितामिमां नावम् । परिगृह्य हस्ते गृहीत्वा सीतामारोपय अन्वक्षं पश्चात् त्वमारोह ॥ ७५ ॥

अप्रतिकूलयन् अनुकूलयन् ॥ ७६ ॥ ७७ ॥

ब्रह्मवत् क्षत्रियवत् ब्राह्मणक्षत्रियार्हं ब्रह्मक्षत्रदेवताकमित्यर्थो वा आत्मनो हितमुद्दिश्य जजाप । सुत्रामाणमृचानावमारोहेदिति स्मृतेः । क्षत्रियाधिकारे पाठात् ब्रह्मक्षत्रदेवताकत्वञ्चास्य ब्राह्मणे उक्तमिति कतकः । दैवीं नावमित्यादिर्ब्रह्मक्षत्रसाधारणो मन्त्र इत्यन्ये ॥ ७८ ॥

ततस्तै शासिता नौका कर्णधारसमाहिता ।
शुभस्फ्यवेगाभिहता शीघ्रं सलिलमत्यगात् ॥ ८१ ॥
मध्यन्तु समनुप्राप्य भागीरथ्यास्त्वनिन्दिता ।
वैदेही प्राञ्जलिर्भूत्वा तां नदीमिदमब्रवीत् ॥ ८२ ॥
पुत्रो दशरथस्यायं महाराजस्य धीमतः ।
निदेशं पालयत्वेनं गङ्गे ! त्वदभिरक्षितः ॥ ८३ ॥
चतुर्दश हि वर्षाणि समग्राण्युष्य कानने ।
भ्रात्रा सह मया चैव पुनः प्रत्यागमिष्यति ॥ ८४ ॥
ततस्त्वां देवि ! सुभगे ! क्षेमेण पुनरागता ।
यक्ष्ये प्रमुदिता गङ्गे ! सर्वकामसमृद्धिनि ! ॥ ८५ ॥

प्रणमत् अडभाव आर्षः ॥ ७९ ॥ ८० ॥

कर्णधारेण नाविकेन समाहिता सज्जीकृता स्फ्यमरित्रं तेन वेगादभिहता प्रणुन्ना ॥ ८१ ॥

गङ्गाया महादेवतात्वात् स्त्रीदेवतात्वाच्च सीता प्रार्थितवतीत्याह,—मध्यमिति ॥ ८२ ॥

पालयतु पारयतु समापयत्विति यावत् रलयोः समानश्रुतित्वात् ॥ ८३ ॥

पुनः प्रत्यागमिष्यति स्वदेशं यदीति शेषः ॥ ८४ ॥

सर्वकामसमृद्धिनि सर्वकामसमृद्धं सर्वकामपूरणमस्या अस्ति दातृत्वेनेत्यर्थः ॥ ८५ ॥

त्वं हि त्रिपथगे ! देवि ! ब्रह्मलोकं समचसे ।
भार्या चोदधिराजस्य लोकेऽस्मिन् सम्प्रदृश्यसे ॥ ८६ ॥
सा त्वां देवि ! नमस्यामि प्रशंसामि च शोभने ! ।
प्राप्तराज्ये नरव्याघ्रे शिवेन पुनरागते ॥ ८७ ॥
गवां शतसहस्रञ्च वस्त्राण्यन्नञ्च पेशलम् * ।
ब्राह्मणेभ्यः प्रदास्यामि तव प्रियचिकीर्षया ॥ ८८ ॥
सुराघटसहस्रेण मांसभूतौदनेन च ।
यक्ष्ये त्वां प्रीयतां देवि ! पुरीं पुनरुपागता ॥ ८९ ॥
यानि त्वत्तीरवासीनि दैवतानि च सन्ति हि ।
तानि सर्वाणि यक्ष्यामि तीर्थान्यायतनानि च ॥ ९० ॥
पुनरेव महाबाहुर्मया भ्राता च सङ्गतः ।
अयोध्यां वनवासात्तु प्रविशत्वनघोऽनघे ! ॥ ९१ ॥

समचसे व्याप्नोषि अचू व्याप्तौ सङ्घाते च । तत्त्वव्याख्या बालकाण्डे निरूपितम् ॥ ८६ ॥

प्रशंसामि स्तौमि शिवेन क्षेमेण ॥ ८७ ॥ ८८ ॥

मांसभूतौदनेन † यक्ष्ये महाबलिदानेनेति शेषः॥ ८९ ॥

तीर्थानि प्रयागादीनि आयतनानि काश्यादीनि ॥ ९० ॥ ९१ ॥

---

* "शोभनम्" इति वा पाठः ।

† मांसमिश्रौदनेन ।

तथा सम्भाषमाणा सा सीता गङ्गामनिन्दिता ।
दक्षिणा दक्षिणं तीरं क्षिप्रमेवाभ्युपागमत् ॥ ९२ ॥
तीरन्तु समनुप्राप्य नावं हित्वा नरर्षभः ।
प्रातिष्ठत सह भ्रात्रा वैदेह्या च परन्तपः ॥ ९३ ॥
अथाब्रवीन् महाबाहुः सुमित्रानन्दवर्धनम् ।
भव संरक्षणार्थाय सजने विजनेऽपि वा ॥ ९४ ॥
अवश्यं रक्षणं कार्यं मद्विधैर्विजने वने ।
अग्रतो गच्छ सौमित्रे ! सीता त्वामनुगच्छतु ॥ ९५ ॥
पृष्ठतोऽनुगमिष्यामि सीतां त्वाञ्चानुपालयन् ।
अन्योन्यस्य हि नो रक्षा कर्त्तव्या पुरुषर्षभ ! ॥ ९६ ॥
न हि तावदतिक्रान्ताऽसुकरा काचन क्रिया ।
अद्य दुःखन्तु वैदेही वनवासस्य वेत्स्यति ॥ ९७ ॥

दक्षिणा भर्तुरनुकूला ॥ ९२ ॥ ९३ ॥

संरक्षणार्थं सीताया इति शेषः । भव सावधान इति शेषः ॥ ९४ ॥

यदेवमतोऽग्रत इति । एवञ्च कार्यवशात् लघोरप्यग्रतो गमनमदोषायेति ध्वनितम् । मार्गएव लघोरग्रतो गमनमदोषायेत्यन्ये । एवं स्वयं विश्वसनीयेति च ध्वनितम् ॥ ९५ ॥

नः अस्माकं सीतयापि पातिव्रत्यमहिम्नेतररक्षणम् ॥ ९६ ॥

कुत एवमतियत्नोऽत आह,—नहीति असुकरा दुष्करा काचन

प्रणष्टजनसम्बाधं चैत्रारामविवर्जितम् ।
विषमञ्च प्रपातञ्च वनमद्य प्रवेच्यति ॥ ९८ ॥
श्रुत्वा रामस्य वचनं प्रतस्थे लक्ष्मणोऽग्रतः ।
अनन्तरञ्च सीताया राघवो रघुनन्दनः ॥ ९९ ॥

गतन्तु गङ्गापरपारमाशु
रामं सुमन्त्रः सततं निरीक्ष्य ।
अध्वप्रकर्षाद्विनिवृत्तदृष्टि-
र्मुमोच वाष्पं व्यथितस्तपस्वी ॥ १०० ॥

स लोकपालप्रतिमप्रभाव-
स्तीर्त्वा महात्मा वरदो महानदीम् ।
ततः समृद्धान् शुभसस्यमालिनः
चणेन वत्सान्मुदितानुपागमत् ॥ १०१ ॥

कापि क्रिया अतिक्रान्ता न किन्तु इतः प्रभृतिदुष्करक्रियारम्भ इति भावः । यद्वा काचनक्रिया अपायलक्षणा अतिक्रान्ता अस्मानतिक्रम्य प्राप्ता चेत्ततो रक्षा सुकरा न हि प्रहृतं प्रहृतमेवति न्यायादित्यर्थः । अद्येत्यादि सार्धश्लोक एकं वाक्यम् ॥ ९७ ॥

दुःखज्ञाने हेतुः । प्रणष्टेति । चैत्रं शाल्यादिक्षेत्रं विषमं निम्नोन्नतम् । प्रपातं गर्तादि तद्युक्तम् ॥ ९८ ॥ ९९ ॥ १०० ॥

वत्सान् वत्सदेशान् ॥ १०१ ॥

तौ तत्र हत्वा चतुरो महामृगान्
वराहमृश्यं पृषतं महारुरुम्।
आदाय मेध्यं त्वरितं बुभुक्षितौ
वासाय काले ययतुर्वनस्पतिम्॥ १०२॥

इत्यार्षे रामायणे वाल्मीकीये अयोध्याकाण्डे
गङ्गासमुत्तरणं नाम द्विपञ्चाशः
सर्गः॥ ५२॥

ऋश्यादयो हरिणभेदाः। काले सायंकाले मांसस्य च वन्याहारान्तर्गतत्वान्नदोषः। मृगयाधर्मकत्वाच्च न मृगहनने दोषः। बुभुक्षिता हत्वा तानादाय गताविव्यनेन भोजनमर्थसिद्धमेवेति नोक्तम्॥ १०२॥

इति रामाभिरामे श्रीरामीये रामायणतिलके
अयोध्याकाण्डे द्विपञ्चाशः सर्गः॥ ५२॥

## द्विपञ्चाशः सर्गः ।

स तं वृक्षं समासाद्य सन्ध्यामन्वास्य पश्चिमाम् ।
रामो रमयतां श्रेष्ठ इति होवाच लक्ष्मणम् ॥ १ ॥
अद्येयं प्रथमा रात्रिर्याता जनपदाद् बहिः ।
या सुमन्त्रेण रहिता तां नोत्कण्ठितुमर्हति ॥ २ ॥
जागतर्त्तव्यमतन्द्रिभ्यामद्यप्रभृति रात्रिषु ।
योगक्षेमौ हि सीताया वर्त्तेते लक्ष्मणावयोः ॥ ३ ॥
रात्रिं कथञ्चिदेवेमां सौमित्रे ! वर्त्तयामहे ।
अपवर्त्तामहे भूमावास्तीर्य स्वयमर्जितैः ॥ ४ ॥

आजनपदादिति च्छेदः । आ इति यातेत्यनेन सम्बध्यते अस्मज्जन-पदाद्बहिर्देशेऽद्य इयं या रात्रिरायाता प्राप्ता येयं वनवासरात्रिषु प्रथमा सुमन्त्रेण रहिता च तामिमां प्राप्य नोत्कण्ठितुं नगरादि-स्मर्तुम् ॥ २ ॥

न विद्यते तन्द्री ययोस्ताभ्याम् । ङडभावो कृसत्वश्चार्षम् । क्वचित्तु अतन्द्राभ्यामित्येव पाठः । आवयोर्वर्त्तेतेसदायत्तावित्यर्थः । अप्राप्त प्राप्तिर्योगः लब्धपरिपालनं क्षेमः ॥ ३ ॥

कथञ्चिदेवेमां उटजादिनिर्माणाभावात् स्वयमर्जितैस्तृणपर्णादि-भिरिति शेषः । अपवर्त्तामहे यथा कथञ्चिच्छयनं कुर्मः ॥ ४ ॥

स तु संविश्य मेदिन्यां महार्हशयनोचितः ।
इमाः सौमित्रये रामो व्याजहार कथाः शुभाः ॥ ५ ॥
ध्रुवमद्य महाराजो दुःखं स्वपिति लक्ष्मण ! ।
कृतकामा तु कैकेयी तुष्टा भवितुमर्हति ॥ ६ ॥
सा हि देवी महाराजं कैकेयी राज्यकारणात् ।
अपि न च्यावयेत् प्राणान् दृष्ट्वा भरतमागतम् ॥ ७ ॥
अनाथस्य हि वृद्धस्य मया चैव विनाकृतः ।
किं करिष्यति कामात्मा कैकेय्या वशमागतः ॥ ८ ॥
इदं व्यसनमालोक्य राज्ञश्च मतिविभ्रमम् ।
काम एवार्थधर्माभ्यां गरीयानिति मे मतिः ॥ ९ ॥
कोऽह्यविद्वानपि पुमान् प्रमदायाः कृते त्यजेत् ।
छन्दानुवर्त्तिनं पुत्रं तातो मामिव लक्ष्मण ! ॥ १० ॥

कथाः वार्त्ताः ॥ ५ ॥

कृतकामा सम्पन्नमनोरथा ॥ ६ ॥

राज्यकारणात् महाराज्यपदाभिषेककारणात् प्राणान् अपि न च्यावयेत् अपि तु च्यावयेदित्यर्थः ॥ ७ ॥ ८ ॥ ९ ॥

कामस्य गरीयस्त्वं साधयति । कोह्रीत्यादिना । अत्यज्ञोऽपि कः पुमान् मामिव छन्दानुवर्त्तिनं आज्ञाकारिणं पुत्रं प्रमदायाः कृते प्रमदातोषनिमित्तं त्यजेत् किं पुनः सर्वज्ञो राजा । तस्मात् सर्वतः प्रबलः काम इति भावः ॥ १० ॥

सुखी बत सभार्यश्च भरतः कैकयीसुतः ।
मुदितान् कोशलानेको यो भोच्यत्यधिराजवत् ॥ ११ ॥
स हि राज्यस्य सर्वस्य सुखमेकं भविष्यति ।
ताते तु वयसातीते मयि चारण्यमाश्रिते ॥ १२ ॥
अर्थधर्मौ परित्यज्य यः काममनुवर्त्तते ।
एवम।पद्यते क्षिप्रं राजा दशरथो यथा ॥ १३ ॥
मन्ये दशरथान्ताय मम प्रव्राजनाय च ।
कैकेयी सौम्य ! संप्राप्ता राज्याय भरतस्य च ॥ १४ ॥
अपीदानीन्तु कैकेयी सौभाग्यमदमोहिता ।
कौशल्याञ्च सुमित्राञ्च सा प्रबाधेत मत्कृते ॥ १५ ॥
मातास्मत्कारणाद्देवी सुमित्रा दुःखमावसेत् ।
अयोध्यामितएव त्वं काले प्रविश लक्ष्मण ! ॥ १६ ॥

एवंवादो हि भगवतो लक्ष्मणमतिपरीक्षार्थं [illegible]
इति लक्ष्मणं प्रति वक्तुं तदाशयं ज्ञातुञ्च न वास्तव [illegible]
एकं मुख्यं सुखं अनुभवितेति शेषः । ईदृशो [illegible]
इति वा पाठः । एक एव राजा भविष्यतीत्यर्थ इति तीर्थः ॥ १[illegible]
यो भरतः काममनुवर्त्तते । स यथा राजा दशरथो यथा विपद-
मापन्न एवं विपदमापद्यते प्राप्नोतीत्यर्थः । अन्ये तु राजा दशरथो
यथा राजत्वमापन्नस्तथा भरतोराजत्वमापद्यते इत्यर्थमाहुः ॥ १३ ॥१४ ॥
मत्कृते मम दुःखसम्पादननिमित्तम् ॥ १५ ॥

अहमेको गमिष्यामि सीतया सह दण्डकान् ।
अनाथाया हि नाथस्त्वं कौशल्याया भविष्यसि ॥ १७ ॥
क्षुद्रकर्मा हि कैकेयी द्वेषादन्यायमाचरेत् ।
परिदद्याद्धि धर्मज्ञ ! गरन्ते मम मातरम् * ॥ १८ ॥
नूनं जात्यन्तरे तात ! स्त्रियः पुत्रैर्वियोजिताः ।
जनन्या मम सौमित्रे ! तदद्यैतत् † उपस्थितम् ॥ १९ ॥
मया हि चिरपुष्टेन दुःखसंवर्धितेन च ।
विप्रयुज्यत कौशल्या फलकाले धिगस्तु माम् ॥ २० ॥

माता तवेति शेषः । काले प्रातःकाले उत्थापयेत्यर्थः ॥ १६ ॥

नाथो रक्षकः ॥ १७ ॥

क्षुद्रकर्मा कैकेयी द्वेषादन्यायमाचरेत् हि निश्चितं तदेवाह,— हे धर्मज्ञ ते मम च मातरं सुमित्रां कौसल्याञ्चोद्दिश्य गरं विषं हि तु दद्यात् ॥ १८ ॥

जात्यन्तरे जन्मान्तरे एतत् पुत्रवियोगदुःखम् ॥ १९ ॥

फलकाले सुखानुभवकाले ॥ २० ॥

---

* "परिदद्या हि धर्मज्ञ ! भरते मम मातरम्" इति वा पाठः * ।

† "तामप्येतत्" इति वा पाठः ।

---

* भरते मम मातरं परिदद्याः समर्पय इत्यर्थः ।

मा स्म सीमन्तिनी काचिज्जनयेत् पुत्रमीदृशम्।
सौमित्रे! योऽहमम्बाया दद्मि शोकमनन्तकम्॥ २१॥
मन्ये प्रीतिविशिष्टा सा मत्तो लक्ष्मण! सारिका।
यत्तस्याः श्रूयते वाक्यं शुक! पादमरेर्दश॥ २२॥

कुत इत्यतः सौमित्रे इति॥ २१॥

हे लक्ष्मण अम्बया पालिता कृतवचनशिक्षा च सारिका मत्तोऽम्बायां प्रति विशिष्टा अधिकप्रीतियुक्ता इति मन्ये। यद्यस्मात् तस्याः सारिकायाः सकाशात् एवं शत्रुनिग्रहविषयं शुक पादमरेर्दशेति वाक्यं श्रूयते कौसल्ययेति शेषः अस्मत्तस्तु तदपि नेत्यर्थः। अत्रेदं वाक्यम्। अरेर्विड़ालस्य पादं हे शुक दशेत्यर्थकतया लोकप्रसिद्धम्। अरेर्मत्पालयितुः कौसल्यायाः शत्रोः पादं दशेत्यर्थकतया रामेण योजितमिति वक्रोक्तिरलङ्कारः *॥ २२॥

---

* सर्वथा मम जननं मदम्बापातसुखप्रयोजनकमित्याद्[illegible] इति। हे लक्ष्मण यस्या मातृवर्द्धितसारिकायाः हे शुक अरेः [illegible] भूतस्य विड़ालस्य पादान् दशेत्येवं रूपं तत्तादृशं प्रियजनकं [illegible] अम्बयेति शेषः। सा सारिका मत्तः प्रीतिविशिष्टा प्रीतिजनने[illegible] कतरा अम्बाया इति शेषः। अम्बया वर्द्धिततिर्य्यग्जाति[illegible] प्रीतिदानमात्रमपि न मया कृतमिति भावः। यद्वा हे लक्[illegible] पालिता सारिका मत्तोऽम्बायां प्रीतिविशिष्टा अधिकप्रीति[illegible] मन्ये यद्यस्मात् तस्याः सारिकायाः सकाशादेवं शत्रुनिग्र[illegible] पादमरेर्दशेति वाक्यं श्रूयते कौसल्ययेति शेषः। अस्मत्तस्तु तदपि नेति भावः। अत्रेदं वाक्यम् अरेर्विड़ालस्य पादं हे शुक दशेत्यर्थकतया लोकप्रसिद्धं अरेर्मत्पालयितुः कौसल्यायाः शत्रोः पादं दशेत्यर्थकतया

शोचन्त्याश्चाल्पभाग्याया न किञ्चिदुपकुर्वता ।
पुत्रेण किमपुत्राया मया कार्यमरिन्दम ! ॥ २३ ॥
अल्पभाग्या हि मे माता कौशल्या रहिता मया ।
शेते परमदुःखार्त्ता पतिता शोकसागरे ॥ २४ ॥
एकोऽह्यहमयोध्याञ्च पृथिवीञ्चापि लक्ष्मण ! ।
तरेयमिषुभिः क्रुद्धो ननु वीर्यमकारणम् ॥ २५ ॥

अपुत्रायाः पुत्रकृतप्रयोजनरहितायाः ॥ २३ ॥

शेते इदानीमिति शेषः ॥ २४ ॥

नन्वेवं हृदये शोकस्तर्हि मया सर्वनिवारणसहायेनोक्तं राज्यमेव कुतो नाङ्गीकृतमिति चेन्न राज्यकरणं त्वदपेक्षापि मे न किं त्वधर्मभयादेव मया तन्नाङ्गीकृतमित्याह,—एक इत्यादि । तरेयं निरस्ताराति कां ... इत्यर्थः । ननु वीर्य्यमकारणं परलोकहितेऽपि तु धर्म एवेति



...ति वक्रोक्तिरत्रालङ्कारः । यद्वा अत्र सारिकेत्यनेन ...यवता गुरुमूर्त्तिर्लक्ष्यते कथं मूर्त्तिरित्यत आह,—यस्याः ...स्वरूपं तद्वाक्यं श्रूयते, किं तत् ? हे शुक ! समानवर्णा- ...रणयोः पादमिव पादम् अनात्मन्यात्मबुद्धिर्या अस्ते अविद्यातरुसम्भूतिवीजमेकं द्विधाकृतमिति लक्षणा- ...बीजभूताहङ्कारममकाररूपं दश निवर्त्तयेत्यर्थः एवं ...सकाशाच्छ्रूयते सा गुरुमूर्त्तिर्मत्तः प्रीतिविशिष्टा मद्वु- करणवाक्य... स्तानी... मन्ये इत्यप्रस्तुतार्थस्फुरणात् समासोक्तिरत्रालङ्कारः समासोक्तिः परिस्फूर्त्तिः प्रस्तुतेऽप्रस्तुतस्य चेदित्युक्तेः । नागोजीभट्टः ।

अधर्मभयभीतश्च परलोकस्य चानघ ! ।
तेन लक्ष्मण ! नाद्याहमात्मानमभिषेचये ॥ २६ ॥
एतदन्यच्च करुणं विलप्य विजने बहु ।
अश्रुपूर्णमुखो दीनो निशि तूष्णीमुपाविशत् ॥ २७ ॥
विलापोपरतं रामं गतार्चिषमिवानलम् ।
समुद्रमिव निर्वेगमाश्वासयत लक्ष्मणः ॥ २८ ॥
ध्रुवमद्य पुरी राम ! अयोध्यायुधिनां वर ! ।
निष्प्रभा त्वयि निष्क्रान्ते गतचन्द्रेव शर्वरी ॥ २९ ॥
नैतदौपयिकं राम ! यदिदं परितप्यसे ।
विषादयसि सीताञ्च माञ्चैव पुरुषर्षभ ! ॥ ३० ॥
न च सीता त्वया हीना न चाहमपि राघव ! ।
मुहूर्त्तमपि जीवावो जलान् मत्स्याविवोद्धृतौ ॥ ३१ ॥

अधर्मात् कैकेय्यै पितृदत्तवरपालनप्रतिज्ञात्य रूपादधर्माद्भीतः अतएव परलोकस्य च नाशाद्भीत इति शेषः ॥ २६ ॥

अन्यच्च एतज्जातीयम् । विजने इत्यनेन स्वविल ने न लोकदुःखा- भावो ध्वनितः । अश्रुपूर्णमुखत्वं नटवल्लोकव्यवहारा ति रेणेति बोध्यम् ॥ २७ ॥ २८ ॥

आयुधिनामिति च्छेदः ॥ २९ ॥

औपयिकं युक्तं यतस्त्वत्परितापेन सीताया मम च विषादो भवति ॥ ३० ॥

न हि तातं न शत्रुघ्नं न सुमित्रां परन्तप ! ।
द्रष्टुमिच्छेयमद्याहं स्वर्गञ्चापि त्वया विना ॥ ३२ ॥
ततस्तत्र सुखासीनौ नातिदूरे निरीक्ष्य ताम् ।
न्यग्रोधे सुकृतां शय्यां भेजाते धर्मवत्सलौ ॥ ३३ ॥
स लक्ष्मणस्योत्तमपुष्कलं वचो
निशम्य चैवं वनवासमादरात् ।
समाः समस्ता विदधे परन्तपः
प्रपद्य धर्मं सुचिराय राघवः ॥ ३४ ॥

अथ गन्तव्यमिति यदुक्तं तदुत्तरं सीतावदहमप्यवर्जनीय इति ...मात्मनः सीतासाधर्म्यमाह,—न चेति । त्वया हीना सीता त्वया ...नोऽहञ्च जलादुद्धृतौ मत्स्याविव न जीवावो न जीवाव इत्यस्या ...त्यानञ्चानुषङ्गेणान्वयः । जीवनाभावस्य सर्वथा सत्यत्वप्रतिपादनाय

...ठतु मर्हसीत्यस्योत्तरं न हीति नञ्‌ त्रयस्य नेच्छेयं ...मिति प्रकारेणेच्छेयमिति पदावृत्त्यान्वयः । स्वर्गञ्चाप्यद्य प्राप्तं त्वया विना नेच्छेयं किमुत गन्तुमिति भावः ॥ ३२ ॥

ततो लक्ष्मणवचनानन्तरं तत्र तस्मिन्नेव न्यग्रोधमूले समासीनौ ...ीतारामौ न्यग्रोधमूले स्वावस्थानदेशादतिसमीपे लक्ष्मणेन सुकृतां ...म्यग्रचितां शय्यां भेजाते । वत्सला च वत्सलश्च वत्सलौ पुमान् ...स्त्रियेत्येकशेषः ॥ ३३ ॥

ततस्तु तस्मिन्विजने महाबलौ
महावने राघववंशवर्द्धनौ ।
न तौ भयं सम्भ्रममभ्युपेयतु-
र्यथैव सिंहौ गिरिसानुगोचरौ ॥ ३५ ॥

इत्यार्षे रामायणे वाल्मीकीये अयोध्याकाण्डे
रामलक्ष्मणसंवादो नाम त्रिपञ्चाशः
सर्गः ॥ ५३ ॥

स रामः लक्ष्मणस्य वनवासं प्रत्यादरादुच्यमानं एवम्भूतं अतएवो-त्तमपुष्कलं अत्यन्तश्रेष्ठं वचो निशम्य सुचिराय स्वयं वनवासरूपं धर्मं प्रपद्याङ्गीकृत्य समस्ताः समाः वनवासं प्रति विदधे लक्ष्मणस्यानुमति-मिति शेषः ॥ ३४ ॥

भयं तत्कार्यं इतस्तत ईक्षणरूपं सम्भ्रमञ्च नोपेयतुः ॥ ३५ ॥

इति रामाभिरामे श्रीरामीये रामायणतिलके
अयोध्याकाण्डे त्रिपञ्चाशः सर्गः ॥ ५० ॥

## चतुःपञ्चाशः सर्गः ।

ते तु तस्मिन्महावृक्षे उषित्वा रजनीं शुभाम् ।
विमलेऽभ्युदिते सूर्ये तस्माद्देशात्प्रतस्थिरे ॥ १ ॥
यत्र भागीरथीं गङ्गां यमुनाऽभिप्रवर्त्तते ।
जग्मुस्तं देशमुद्दिश्य विगाह्य सुमहद्वनम् ॥ २ ॥
ते भूमिभागान् विविधान् देशांश्चापि मनोहरान् ।
अदृष्टपूर्वान् पश्यन्तस्तत्र तत्र यशस्विनः ॥ ३ ॥
यथाक्षेमेण संपश्यन् पुष्पितान् विविधान् द्रुमान् ।
निवृत्तमात्रे दिवसे रामः सौमित्रिमब्रवीत् ॥ ४ ॥
प्रयागमभितः पश्य सौमित्रे ! धूममुत्तमम् ।
अग्नेर्भगवतः केतुं मन्ये सन्निहितो मुनिः ॥ ५ ॥

गङ्गामभि यमुना प्रवर्त्तते तद्देशं प्रयागं गङ्गाया अतिपुण्यत्वख्यापनायैवमुक्तिः ॥ १ ॥ २ ॥

भूमिभागाः भूमिप्रदेशाः ते पश्यन्तो जग्मुरिति सम्बन्धः ॥ ३ ॥

यथा यथासुखं जनानुमानशङ्काभावात् क्षेमेण उपविश्योत्थाय च शनैः शनैः स्वेच्छानुरोधेन सम्पश्यन् समपश्यन् । निवृत्तमात्रेऽर्धमण्डलमात्रे ॥ ४ ॥

नूनं प्राप्ताः स्म सम्भेदं गङ्गायमुनयोर्वयम् ।
तथाहि श्रूयते शब्दो वारिणोर्वारिघर्षजः ॥ ६ ॥
दारूणि परिभिन्नानि वनजैरुपजीविभिः ।
छिन्नाश्चाप्याश्रमे चैते दृश्यन्ते विविधा द्रुमाः ॥७॥
धन्विनौ तौ सुखं गत्वा लम्बमाने दिवाकरे ।
गङ्गायमुनयोः सन्धौ प्रापतुर्निलयं मुनेः ॥ ८ ॥
रामस्त्वाश्रममासाद्य त्रासयन् मृगपक्षिणः ।
गत्वा मुहूर्त्तमध्वानं भरद्वाजमुपागमत् ॥ ९ ॥
ततस्त्वाश्रममासाद्य मुनेर्दर्शनकाङ्क्षिणौ ।
सीतयानुगतौ वीरौ दूरादेवावतस्थतुः ॥ १० ॥

भगवतोऽग्नेः केतुं लिङ्गं धूमं पश्य यदेवमतोऽत्र मुनिः सन्निहित इति मन्ये ॥ ५ ॥

सम्भेदं सङ्गमं वारिणोर्गङ्गायमुनजलयोः। वारिघर्षो विजातीय वारिसम्बन्धः। घट्ट इति पाठेऽप्येवमेव ॥ ६ ॥

येषां दारूणि भिन्नानि तेद्रुमाद्दृश्यन्त इत्यन्वयः ॥ ७ ॥

धन्विनौ विततावित पाठे तेषां मध्ये विततौ मुख्याविति यावत्। सन्धौ अन्तर्वेदिदेशे निलयं आवासं तत्समीपदेशम् ॥ ८ ॥

आश्रमं तत्समीपवनप्रदेशं त्रासयन् धनुर्धरत्वादि स्वरूपमात्रेण केवलं त्रासयन्। भरद्वाजं तदाश्रमम् ॥ ९ ॥

स प्रविश्य महात्मानमृषिं शिष्यगणैर्वृतम्।
संशितव्रतमेकाग्रं तपसा लब्धचक्षुषम्॥ ११॥
हुताग्निहोत्रं दृष्ट्वैव महाभागः कृताञ्जलिः।
रामः सौमित्रिणा सार्द्धं सीतया चाभ्यवादयत्॥ १२॥
न्यवेदयत चात्मानं तस्मै लक्ष्मणपूर्वजः।
पुत्रौ दशरथस्यावां भगवन्! रामलक्ष्मणौ॥ १३॥
भार्या ममेयं कल्याणी वैदेही जनकात्मजा।
मां चानुयाता विजनं तपोवनमनिन्दिता॥ १४॥
पित्रा प्रव्राजमानं मां सौमित्रिरनुजः प्रियः।
अयमन्वगमद्भ्राता वनमेव व्रतव्रतः॥ १५॥
पित्रा नियुक्ता भगवन्! प्रवेक्ष्याम तपोवनम्।
धर्ममेवाचरिष्यामस्तत्र मूलफलाशनाः॥ १६॥

आश्रमं भरद्वाजस्य दूरादेवावतस्थतुः। कार्यवशान्निर्गतशिष्यद्वारा विज्ञापनपूर्वकानुमतिलाभार्थमिति भावः॥ १०॥

सः तथा लब्धानुमतिः प्रविश्य उटजमिति शेषः। संशितव्रतं तीक्ष्णव्रतं तपसा लब्धचक्षुषं त्रैकालिकसर्वजगद्वृत्तान्ताभिज्ञम्॥ ११॥

दृष्ट्वा अवसरं ज्ञात्वा सौमित्रिणा सार्धमभ्यवन्ददिति शेषः। सीतया च नमस्कारं कारितवान् तदाह,—अभ्यवादयत्॥ १२॥

तत्र मूलफलाशना इत्यन्तेन स्ववृत्तान्तसहितमात्मानं भरद्वाजाय न्यवेदयत्॥ १३॥ १४॥ १५॥

तस्य तद्वचनं श्रुत्वा राजपुत्रस्य धीमतः।
उपानयत धर्मात्मा गामर्घ्यमुदकं ततः॥ १७॥
नानाविधानन्नरसान् वन्यमूलफलाश्रयान्।
तेभ्यो ददौ तप्ततपा वासञ्चैवाभ्यकल्पयत्॥ १८॥
मृगपक्षिभिरासीनो मुनिभिश्च समन्ततः।
राममागतमभ्यर्च्य स्वागतेनागतं मुनिः॥ १९॥
प्रतिगृह्य तु तामर्चामुपविष्टं स राघवम्।
भरद्वाजो ऽब्रवीद्वाक्यं धर्मयुक्तमिदं तदा॥ २०॥
चिरस्य खलु काकुत्स्थ! पश्याम्यहमुपागतम्।
श्रुतं तव मया चैव विवासनमकारणम्॥ २१॥
अवकाशो विविक्तोऽयं महानद्योः समागमे।
पुण्यश्च रमणीयश्च वसत्विह भवान् सुखम्॥ २२॥

धर्ममेव वानप्रस्थधर्ममेव मूलफलग्रहणं मांसस्याप्युपलक्षणम्॥ १६॥
गां मधुपर्काङ्गं महोक्षम्॥ १७॥

अन्नमत्रादनीयमात्रं अतएव मूलफलाश्रयान् इति वक्ष्यति। रसाः पानीयविशेषाः वासं वासस्थानम्॥ १८॥

आगतं आगतं तेजोविशेषात् मर्यादारक्षणाय मध्ये मध्ये स्थित्वा निकटं प्राप्तं रामं मृगपक्षिभिर्मुनिभिश्च सह स्वागतेनाभ्यर्च्य मुनिभिः सह मुनिः रामं समन्तत आसीनोऽभवदिति योजना। मृगपक्षिणामर्चा च प्रदक्षिणगमनादिरूपा वर्णिता॥ १९॥ २०॥

एवमुक्तस्तु वचनं भरद्वाजेन राघवः ।
प्रत्युवाच शुभं वाक्यं रामः सर्वहिते रतः ॥ २३ ॥
भगवन्नित आसन्नः पौरजानपदो जनः ।
सुदर्शमिह मां प्रेक्ष्य मन्येऽहमिममाश्रमम् ॥ २४ ॥
आगमिष्यति वैदेहीं माञ्चापि प्रेक्षको जनः ।
अनेन कारणेनाहमिह वासं न रोचये ॥ २५ ॥
एकान्ते पश्य भगवन्नाश्रमस्थानमुत्तमम् ।
रमते यत्र वैदेही सुखार्हा जनकात्मजा ॥ २६ ॥
एतच्छ्रुत्वा शुभं वाक्यं भरद्वाजो महामुनिः ।

चिरस्य चिरकालस्य इहाश्रमे आगतं त्वां पश्यामि । अनेन पूर्व-मपि कदाचिदागमनं ध्वनितम् । पूर्वरामावतारकालिकमागमनं मनसि निधाय वैषोक्तिः । पश्यामि चक्षुषा एवं रूपं पश्यामि यः केवलं ध्यानगोचर एव सोऽप्येवम्भूत इत्याश्चर्यं व्यङ्ग्यम् अकारणं निर्निमित्तम् ॥ २१ ॥ २२ ॥ २३ ॥

इत आसन्नः एतदाश्रमाददूरवर्त्ती पौरजानपदो जनः मां सुदर्शं सुखेन द्रष्टुं शक्यं प्रेक्ष्य ज्ञात्वा वैदेहीं माञ्च प्रेक्षकी जनः वैदेह्या-दिदर्शनार्थी जनस्तदर्थमिममाश्रममागमिष्यतीत्यहं मन्ये इत्यन्वयः ॥ २४ ॥ २५ ॥

यत्र यस्मिन्नाश्रमस्थाने तादृशमेकान्ते वर्त्तमानं पश्य ज्ञात्वा निर्दि-शेत्यर्थः ॥ २६ ॥

राघवस्य तु तद्वाक्यमर्थग्राहकमब्रवीत् ॥ २७ ॥
दशक्रोश इतस्तात ! गिरिर्यस्मिन्निवत्स्यसि ।
महर्षिसेवितः पुण्यः सर्वतः शुभदर्शनः ॥ २८ ॥
गोलाङ्गूलानुचरितो वानरर्चनिषेवितः ।
चित्रकूट इति ख्यातो गन्धमादनसन्निभः ॥ २९ ॥
यावता चित्रकूटस्य नरः शृङ्गाण्यवेक्षते ।
कल्याणानि समाधत्ते न मोहे * कुरुते मनः ॥ ३० ॥

अत्र भगवन्नित्यादिश्लोकत्रयस्य तीर्थेन वास्तवस्त्वर्थः रावणवधार्थं गूढमवतीर्णं मां मा प्रकटीकुरु । अन्यथा सर्वोऽपि जनः सुदर्शं विष्णुं मां ज्ञात्वा । वैदेहीञ्च मां लक्ष्मीं प्रेक्ष्य ज्ञात्वा तां माञ्च प्रेक्षकः सन्निहागमिष्यति । अतएवंविधं प्रकटवासं न रोचयेऽतो यत्र वैदेही रमते तम् आश्रयतीत्याश्रमं जगत्तस्य स्थानं सर्वोत्तमं मां त्वमेवैकान्ते पश्य मत्स्वरूपं न प्रकटयेत्यन्तेन व्याख्यातम् । तदरुक्तम् । मुनिना रामस्वरूपप्रकटनस्य सर्ववेद्यं यथा भवति तथा प्राक् ज्ञाप्यकरणात् । अक्षरमर्यादयापि तादृशार्थालाभाच्च । पौरजानपदो जन इति पदास्वारस्याच्चेति सुधियो विभावन्तु । एतदिति राघवस्यार्थग्राहकं तदुक्तप्रयोजनप्रतिपादकं तद्वक्ष्यमाणमब्रवीत् ॥ २७ ॥

दशक्रोश इति सम्यन्तं इतो मदाश्रयात् ॥ २८ ॥ २९ ॥

यावता यदा शृङ्गाण्यवेक्षते तदेति शेषः । समाधत्ते मनसा कर्त्तुमाशास्ते ॥ ३० ॥

---

* "पापे" इति वा पाठः ।

ऋषयस्तत्र बहवो विहृत्य शरदां शतम् ।
तपसा दिवमारूढ़ाः कपालशिरसा सह ॥ ३१ ॥
प्रविविक्तमहं मन्ये तं वासं भवतः सुखम् ।
इह वा वनवासाय वस राम ! मया सह ॥ ३२ ॥
स रामं सर्वकामैस्तं भरद्वाजः प्रियातिथिम् ।
सभार्यं सह च भ्रात्रा प्रतिजग्राह हर्षयन् * ॥ ३३ ॥
तस्य प्रयागे रामस्य तं महर्षिमुपेयुषः ।
प्रपन्ना रजनी पुण्या चित्राः कथयतः कथाः ॥ ३४ ॥
सीतातृतीयः काकुत्स्थः परिश्रान्तः सुखोचितः ।

तदुपपादयति । ऋषय इति । बहुदिनमृतनष्टकपालवत् शुष्कं शिरस्तेन सह तेन विद्यमानेनोपलक्षितास्तपसा शरदां शतं विहृत्य अतिवार्धकेऽपि तपसा क्रीड़ीत्वा दिवं स्वर्गमारूढ़ाः केचित्तु कपालशिरसेति शरीरोपलक्षणं सशरीराः स्वर्गं गता इत्याहुः तन्न धर्मपुत्रादीनामपि कियद्दूरमेव धर्मवैभवदर्शनायैतच्छरीरेण गमनं ततस्तन्निरासपूर्वकमेव स्वर्गगमनश्रवणात् इति कतकः ॥ ३१ ॥

वनवासाय वनवासनियमसिद्ध्यै इह वेति शिष्टाचारमात्रम् ॥ ३२ ॥

रामं तदजन्यां तत्र वसन्तं प्रतिजग्राह,—अतिथियोग्यसत्कारैर्वशीकृतवान् ॥ ३३ ॥

---

* "धर्मवित्" इति वा पाठः ।

भरद्वाजाश्रमे रम्ये तां रात्रिमवसत्सुखम् ॥ ३५ ॥
प्रभातायान्तु शर्वर्य्यां भरद्वाजमुपागमत् ।
उवाच नरशार्दूलो मुनिं ज्वलिततेजसम् ॥ ३६ ॥
शर्वरी भगवन्नद्य सत्यशील ! तवाश्रमे ।
उषितास्मेह वसतिमनुजानातु नो भवान् ॥ ३७ ॥
रात्र्यान्तु तस्यां व्युष्टायां भरद्वाजोऽब्रवीदिदम् ।
मधुमूलफलोपेतं चित्रकूटं व्रजेति ह ॥ ३८ ॥
वासमौपयिकं मन्ये तव राम ! महाबल ! ।
नानानगगणोपेतः किन्नरोरगसेवितः ॥ ३९ ॥
मयूरनादाभिरतो गजराजनिषेवितः ।
गम्यतां भवता शैलश्चित्रकूटः स विश्रुतः ॥ ४० ॥
पुण्यश्च रमणीयश्च बहुमूलफलायुतः ।
तत्र कुञ्जरयूथानि मृगयूथानि चैव हि ॥ ४१ ॥

रजनी प्रपन्ना प्राप्ता ॥ ३४ ॥ ३५ ॥ ३६ ॥

इहाश्रमे शर्वरीमुषिताःस्म अद्य अर्थेत्यर्थे वसतिं गन्तव्यां चित्रकूटस्थां तद्गमनं प्रत्यनुजानातु ॥ ३७ ॥

भरद्वाजः तथा रामेण प्रार्थित इति शेषः । व्रज इत्यनुजगाविति शेषः ॥ ३८ ॥

औपयिकमुचितं नगाः वृक्षाः ॥ ३९ ॥ ४० ॥ ४१ ॥

विचरन्ति वनान्तेषु तानि द्रक्ष्यसि राघव ! ।
सरित्प्रस्रवणप्रस्थान् दरीकन्दरनिर्झरान् ॥
चरतः सीतया सार्धं नन्दिष्यन्ति मनस्तव ॥ ४२ ॥ ४३ ॥

प्रहृष्टकोयष्टिभकोकिलस्वनै-
र्विनोदयन्तं वसुधाधरं शिवम् * ।
मृगैश्च मत्तैर्बहुभिश्च कुञ्जरैः
सुरम्यमासाद्य समावसाश्रमम् ॥ ४४ ॥

इत्यार्षे रामायणे वाल्मीकीये अयोध्याकाण्डे
रामस्य भरद्वाजसमागमो नाम चतुः-
पञ्चाशः सर्गः ॥ ५४ ॥

सरितो नद्यः प्रस्रवणास्तनुतरजलप्रवाहास्तद्युताः प्रस्थाः सानूनि दरी पाषाणनिर्भेदः । कन्दरा गिरिगुहाः निर्झराः घनप्रवाहाः तान् द्रक्ष्यसीत्यन्वयः एते कुञ्जरादयः । सीतया सार्धं चरतस्तवेत्यन्वयः ॥ ४२ ॥ ॥ ४३ ॥

कोयष्टिभः टिट्टिभः ॥ ४४ ॥

* "सुखं परं शिवम्" इति वा पाठः ।

इति रामाभिरामे श्रीरामीये रामायणतिलके
अयोध्याकाण्डे चतुःपञ्चाशः सर्गः ॥ ५४ ॥

## पञ्चपञ्चाशः सर्गः ।

उषित्वा रजनीं तत्र राजपुत्रावरिन्दमौ ।
महर्षिमभिवाद्याथ जग्मतुस्तं गिरिं प्रति ॥ १ ॥
तेषां स्वस्त्ययनञ्चैव महर्षिः स चकार ह ।
प्रस्थितान् प्रेक्ष्य तांश्चैव पिता पुत्रानिवौरसान् ॥ २ ॥
ततः प्रचक्रमे वक्तुं वचनं स महामुनिः ।
भरद्वाजो महातेजा रामं सत्यपराक्रमम् ॥ ३ ॥
गङ्गायमुनयोः सन्धिमादाय मनुजर्षभौ ! ।
कालिन्दीमनुगच्छेतां नदीं पश्चान्मुखाश्रिताम् ॥ ४ ॥

अथ भरद्वाजेन मार्गोपदेशः । उषित्वेति ॥ १ ॥

औरसान् पुत्रान् पितेव तान् प्रस्थितान् प्रेक्ष्य तेषां स्वस्त्ययनं चकार चैवौ पादपूरणार्थौ ॥ २ ॥

प्रचक्रमे मार्गोपदेशार्थमिति शेषः ॥ ३ ॥

पश्चान्मुखाश्रितां गङ्गाजलवेगाभिघातेन किञ्चिद्दूरं पश्चान्मुखं गतामिति तीर्थः । सन्धिः सङ्गमतीर्थं सङ्गमात् पश्चिम प्रदेशएवाश्रितत्वप्रयुक्तव्यवहारां सङ्गमपूर्वभागे तु गङ्गाया एव व्यवहार इति भाव इति कतकः । अन्येतु पश्चान्मुखया गङ्गयाश्रितां कालिन्दीमनुगच्छेतामित्यर्थः । अतएवाग्रे कालिन्दीमासद्येत्युक्तिरित्याहुः ॥ ४ ॥

अथासाद्य तु कालिन्दीं प्रतिस्रोतः समागताम्।
तस्यास्तीर्थं प्रचरितं प्रकामं प्रेक्ष्य राघव ! ॥ ५ ॥
तत्र यूयं प्लवं कृत्वा तरतांशुमतीं नदीम्।
ततो न्यग्रोधमासाद्य महान्तं हरितच्छदम् ॥ ६ ॥
परीतं बहुभिर्वृक्षैः श्यामं सिद्धोपसेवितम्।
तस्मिन् सीताञ्जलिं कृत्वा प्रयुञ्जीताशिषः क्रियाम् *॥७॥
समासाद्य च तं वृक्षं वसेद्वातिक्रमेत वा।
क्रोशमात्रं ततो गत्वा नीलं प्रेक्ष्य च काननम् ॥ ८ ॥
शल्लकीबदरीमिश्रं राम ! वन्यैश्च † यामुनैः।
स पन्था चित्रकूटस्य गतस्य बहुशो मया ॥ ९ ॥

अथ शुद्धां कालिन्दीं प्रतिस्रोतो यथा भवति तथा समागतां विपरीतप्रवाहामासाद्य तस्यास्तीर्थमवतरणप्रदेशं प्रचरितं गमनागमनाभ्यामतिक्षुण्णं दृष्ट्वा ॥ ५ ॥

प्लवं तरणसाधनं अंशुमतीं सूर्यतनयाम् ॥ ६ ॥

श्यामं श्यामनामकं आशिषः क्रियां करणं प्रयुञ्जीत। अस्माकं पुनरागमनं भवत्विति सीता वृक्षं नत्यादिना प्रार्थयेत् ॥ ७ ॥

वसेद्वातिक्रमेतवेत्येकवचनं सीताभिप्रायकं श्रमे सति अन्यथाग्रे गच्छेदित्यर्थः। ततः कालिन्दीदक्षिणतीरवर्त्तिन्यग्रोधात् ॥ ८ ॥

---

* "शिवाः" इति वा पाठः।

† "वंशैश्च" इति वा पाठः।

रम्यो मार्दवयुक्तश्च दावैश्चैव विवर्जितः ।
इति पन्थानमादिश्य महर्षिः संन्यवर्त्तत ॥ १० ॥
अभिवाद्य तथेत्युक्त्वा रामेण विनिवर्त्तितः ।
उपावृत्ते मुनौ तस्मिन् रामो लक्ष्मणमब्रवीत् ॥ ११ ॥
कृतपुण्याःस्म भद्रन्ते मुनिर्यन्नोऽनुकम्पते ।
इति तौ पुरुषव्याघ्रौ मन्त्रयित्वा मनस्विनौ ॥ १२ ॥
सीतामेवाग्रतः कृत्वा कालिन्दीं जग्मतुर्नदीम् ।
अथासाद्य तु कालिन्दीं शीघ्रस्रोतस्विनीं नदीम् ॥ १३ ॥
चिन्तामापेदिरे सद्यो नदीजलतितीर्षवः ।
तौ काष्ठसङ्घाटमथो चक्रतुः सुमहाप्लवम् ॥ १४ ॥
शुष्कैर्वन्यैः * समाकीर्णमुशीरैश्च समावृतम् ।
ततो वेतसशाखाश्च जम्बुशाखाश्च वीर्यवान् ॥ १५ ॥

यामुनैर्यमुनातीरजैः ॥ ९ ॥

मार्दवयुक्तः बालुकोपेतत्वात् । कण्टकपाषाणादिरहितत्वाच्च दावैर्विवर्जितः वनाग्निरहितः ॥ १० ॥

तथेत्युक्त्वा त्वदुपदिष्टमार्गेणैव गमिष्याम इत्युक्त्वा ॥ ११ ॥ १२ ॥ १३ ॥

काष्ठसङ्घाटः काष्ठसङ्घातस्तद्रूपं महाप्लवं उडुपम् ॥ १४ ॥

उशीरैर्नलदैः वेतसरित्यर्थ इति कतकोक्तमयुक्तम् ॥ १५ ॥

---

* "वंशैः" इति वा पाठः ।

चकार लक्ष्मणश्छित्वा सीतायाः सुखमासनम् ।
तत्र श्रियमिवाचिन्त्यां रामो दाशरथिः प्रियाम् ॥ १६ ॥
ईषत् स लज्जमानां तामध्यारोपयत प्लवम् ।
पार्श्वे तत्र च वैदेह्या वसने भूषणानि च ॥ १७ ॥
प्लवे कठिनकाजञ्च रामश्चक्रे समाहितः * ।
आरोप्य सीतां प्रथमं सङ्घाटं परिगृह्य तौ ॥ १८ ॥
ततः प्रतेरतुर्यत्तौ प्रीतौ दशरथात्मजौ ।
कालिन्दीमध्यमायाता सीता त्वेनामवन्दत ॥ १९ ॥
स्वस्ति देवि ! तरामि त्वां पारयेन्मे पतिर्व्रतम् ।
यक्ष्ये त्वां गोसहस्रेण सुराघटशतेन च ॥ २० ॥
स्वस्ति प्रत्यागते रामे पुरीमिक्ष्वाकुपालिताम् ।
कालिन्दीमथ सीता तु याचमाना कृताञ्जलिः ॥ २१ ॥

अचिन्त्यां अचिन्त्यप्रभावाम् ॥ १६ ॥

सः रामः ॥ १७ ॥

कठिनं खनित्रं काजं पेटकं द्वन्द्व एकवद्भावः । कठिनकं खनित्रम् । आजं अजचर्मपिनद्धं पेटकमित्यर्थमन्ये सङ्घाटं प्लवम् ॥ १८ ॥ १९ ॥

पतिः व्रतं चतुर्दशवर्षावधिकं पारयेत समापयेत् ॥ २० ॥

स्वस्तिप्रत्यागते यक्ष्य इति सम्बन्धः ॥ २१ ॥

---

* "महायुधैः" इति वा पाठः ।

तीरमेवाभिसंप्राप्ता दक्षिणं वरवर्णिनी।
ततः प्लवेनांशुमतीं शीघ्रगामूर्मिमालिनीम् ॥ २२ ॥
तीरजैर्बहुभिर्वृक्षैः सन्तेरुर्यमुनां नदीम्।
तेषु ते प्लवमुत्सृज्य * प्रस्थाय यमुनावनात् ॥ २३ ॥
श्यामं न्यग्रोधमासेदुः शीतलं हरितच्छदम्।
न्यग्रोधं तमुपागम्य वैदेही चाभ्यवन्दत † ॥ २४ ॥
नमस्तेऽस्तु महावृक्ष! पारयेन्मे पतिर्व्रतम्।
कौशल्याञ्चैव पश्येम सुमित्राञ्च यशस्विनीम् ॥ २५ ॥
इति सीताञ्जलिं कृत्वा पर्यगच्छन् मनस्विनी ‡।
अवलोक्य ततः सीतामायाचन्तीमनिन्दिताम् ॥ २६ ॥
दयिताञ्च विधेयाञ्च रामो लक्ष्मणमब्रवीत्।
सीतामादाय गच्छ त्वमग्रतो भरतानुज! ॥ २७ ॥

उक्तमेवोपसंहरति। तत इति ॥ २२ ॥
तीरजैर्वृक्षैरुपलक्षितां यमुनातीरसम्बन्धिवनात् ॥ २३ ॥ २४ ॥ २५ ॥
पर्यगच्छत्परितो गच्छत् प्रदक्षिणं चकारेति यावत् ॥ २६ ॥

---

* "ते तीर्णाः प्लवमुत्सृज्य" इति वा पाठः।
† "वैदेहीत्विदमब्रवीत्" इति वा पाठः।
‡ "पर्य्यगच्छद्वनस्पतीम्" इति वापाठः।

पृष्ठतोऽनुगमिष्यामि सायुधो द्विपदां वर ! ।
यद्यत् फलं प्रार्थयते पुष्पं वा जनकात्मजा ॥ २८ ॥
तत्तत् प्रयच्छ वैदेह्या यत्रास्या रमते मनः * ।
एकैकं पादपं गुल्मं लतां वा पुष्पशालिनीम् ॥ २९ ॥
अदृष्टरूपां पश्यन्ती रामं पप्रच्छ साबला ।
रमणीयान् बहुविधान् पादपान् कुसुमोत्करान् ॥ ३०॥
सीतावचनसंरब्ध आनयामास लक्ष्मणः ।
विचित्रवालुकजलां हंससारसनादिताम् ॥ ३१ ॥
रेमे जनकराजस्य सुता प्रेक्ष्य तदा नदीम् ।

विधेयामनुकूलां सीतामायाचन्तीं प्रार्थयन्तीमवलोक्याब्रवीदित्यन्वयः ॥ २७ ॥ २८ ॥ २९ ॥

सा अबला सीता पप्रच्छ कोऽयं वृक्ष इत्यादि रमणीयान् रम्यान्। कुसुमोत्करान् पादपान् कुसुमस्तोमविशिष्टवृक्षावयवान् ॥ ३० ॥

सीतावचनेन संरब्धस्त्वरावानानयामासेत्यन्वयः। आनयामासेत्यानिन्ये इत्यर्थे आर्षम्। विचित्रेत्यादि नदीविशेषणम् ॥ ३१ ॥

---

* 'गच्छतस्तु तयोर्मध्ये बभूव जनकात्मजा ।
मातङ्गयोर्मध्यगता शुभा नागवधूरिव' ॥
पाश्चात्येषु इत्यधिकम् ।

क्रोशमात्रं ततो गत्वा भ्रातरौ रामलक्ष्मणौ ।
बहून् मेध्यान् मृगान् हत्वा चेरतुर्यमुनावने ॥ ३२ ॥

विहृत्य ते बर्हिणपूगनादिते
शुभे वने वारणवानरायुते ।
समं नदीवप्रमुपेत्य सत्वरं
निवासमाजग्मुरदीनदर्शनाः ॥ ३३ ॥

इत्यार्षे रामायणे वाल्मीकीये अयोध्याकाण्डे
यमुनासमुत्तरणं नाम पञ्चपञ्चाशः
सर्गः ॥ ५५ ॥

नदीं यमुनाम् । चेरतुः भुक्तवन्तौ ॥ ३२ ॥
वप्रं तीरम् ॥ ३३ ॥

इति रामाभिरामे श्रीरामीये रामायणतिलके
अयोध्याकाण्डे पञ्चपञ्चाशः सर्गः ॥ ५५ ॥

## षट्पञ्चाशः सर्गः ।

अथ रात्र्यां व्यतीतायामवसुप्तमनन्तरम् ।
प्रबोधयामास शनैर्लक्ष्मणं रघुनन्दनः ॥ १ ॥
सौमित्रे ! शृणु वन्यानां वल्गु व्याहरतां स्वनम् ।
संप्रतिष्ठामहे कालः प्रस्थानस्य परन्तप ! ॥ २ ॥
प्रसुप्तस्तु ततो भ्राता समये प्रतिबोधितः ।
जहौ निद्राञ्च तन्द्राञ्च प्रसक्तञ्च परिश्रमम् ॥ ३ ॥
तत उत्थाय ते सर्वे स्पृष्ट्वा नद्याः शिवं जलम् ।
पन्थानमृषिभिर्जुष्टं * चित्रकूटस्य तं ययुः ॥ ४ ॥

अथावसुप्तं स्वप्रबोधानन्तरमपि ईषत् सुप्तम् । एतेन चतुर्दशवर्षपर्यन्तं लक्ष्मणः स्वापहीनोऽनाहारश्चेति लोकप्रवादोऽपास्तः ॥ १ ॥

वन्यानां शुकपिकादीनां स्वनं शृणु प्रस्थानस्य कालो जातोऽतः संप्रतिष्ठामहे गच्छामः संप्रतीक्षामहे कालमिति पाठे प्रस्थानकालं जानीम इत्यर्थः ॥ २ ॥

समये प्रबोधसमये । तन्द्रां आलस्यम् ॥ ३ ॥

---

* "पन्थानमृषिणोद्दिष्टं" इति वा पाठः ।

ततः संप्रस्थितः काले रामः सौमित्रिणा सह।
सीतां कमलपत्राक्षीमिदं वचनमब्रवीत्॥ ५॥
आदीप्तानिव वैदेहि! सर्वतः पुष्पितान्नगान्।
स्वैः पुष्पैः किंशुकान् पश्य मालिनः शिशिरात्यये॥ ६॥
पश्य भल्लातकान् बिल्वान्नरैरनुपसेवितान्।
फलपुष्पैरवनतान्नूनं शक्ष्याम जीवितुम्॥ ७॥
पश्य द्रोणप्रमाणानि लम्बमानानि लक्ष्मण!।
मधूनि मधुकारीभिः सम्भृतानि नगे नगे॥ ८॥
एष क्रोशति नत्यूहस्तं शिखी प्रतिकूजति।
रमणीये वनोद्देशे पुष्पसंस्तरसङ्कटे॥ ९॥
मातङ्गयूथानुसृतं पक्षिसङ्घानुनादितम्।
चित्रकूटमिमं पश्य प्रवृद्धशिखरं गिरिम्॥ १०॥
समभूमितले रम्ये द्रुमैर्बहुभिरावृते।
पुण्ये रंस्यामहे तात! चित्रकूटस्य कानने॥ ११॥

नद्याः कालिन्द्याः जलं स्पृष्ट्वा स्नानाद्यन्तं नित्यकृत्यं कृत्वा॥ ४॥ ५॥

आदीप्तानिव ज्वलितानिव। मालिनः स्वैः पुष्पैर्मालावत इव स्थितान्। शिशिरात्यये वसन्ते॥ ६॥

शक्ष्याम जीवितुं जीवनसाधनफलादिसम्पत्तेः॥ ७॥

आढकचतुष्टयं द्रोणः। तत्प्रमाणमधुपूर्णानि मधूनि मधुपटलानि मधुकारीभिः मधुमक्षिकाभिः। नगे वृक्षे॥ ८॥

ततस्तौ पादचारेण गच्छन्तौ सह सीतया।
रम्यमासेदतुः शैलं चित्रकूटं मनोरमम्॥ १२॥
तं तु पर्वतमासाद्य नानापक्षिगणायुतम्।
बहुमूलफलं रम्यं सम्पन्नसरसोदकम्॥ १३॥
मनोज्ञोऽयं गिरिः सौम्य! नानाद्रुमलतायुतः।
बहुमूलफलो रम्यः स्वाजीवः प्रतिभाति मे॥ १४॥
मुनयश्च महात्मानो वसन्त्यस्मिन् शिलोच्चये।
अयं वासो भवेत्तात! वयमत्र वसेमहि *॥ १५॥
इति सीता च रामश्च लक्ष्मणश्च कृताञ्जलिः।
अभिगम्याश्रमं सर्वे वाल्मीकिमभिवादयन्॥ १६॥

नद्यूहः दात्यूहः। पुष्पसंस्तरसङ्कटे। पुष्पैः कृतेन संस्तरेण आच्छादनेन सङ्कटे निविड़े वनोद्देशे॥ ९॥ १०॥ ११॥ १२॥

सम्पन्नसरसोदकं स्वादूदकसहितम्॥ १३॥

सुतरां आजीवो जीवनोपायो यस्मिन्॥ १४॥

अयं वासो भवेत् वासयोग्यो भवेत्॥ १५॥

वाल्मीकिमभिवादयन् अभ्यवादयन्। चित्रकूटे स्थित एव वाल्मीकी रामराज्यप्राप्तिसमये तमसातीरं गत इति न विरोध इति प्राञ्चः। प्राचेतसादयं वाल्मीकिरन्य एवेति तत्त्वम्॥ १६॥

* "अयं वासो भवेत्तावदत्र सौम्य! रमेमहि" इति वा पाठः।

तान् महर्षिः प्रमुदितः पूजयामास धर्मवित्।
आस्यतामिति चोवाच स्वागतं तं निवेद्य च ॥ १७ ॥
ततोऽब्रवीन् महाबाहुर्लक्ष्मणं लक्ष्मणाग्रजः।
सन्निवेद्य यथान्यायमात्मानमृषये प्रभुः ॥ १८ ॥
लक्ष्मणानय दारूणि दृढ़ानि च वराणि च।
कुरुष्वावसथं सौम्य! वासे मेऽभिरतं मनः ॥ १९ ॥
तस्य तद्वचनं श्रुत्वा सौमित्रिर्विविधान् द्रुमान्।
आजहार ततश्चक्रे पर्णशालामरिन्दमः ॥ २० ॥
तां निष्ठितां बद्धकटां दृष्ट्वा रामः सुदर्शनाम्।
शुश्रूषमाणमेकाग्रमिदं वचनमब्रवीत् ॥ २१ ॥
ऐणेयं मांसमाहृत्य शालां यक्ष्यामहे वयम् ॥ २२ ॥
कर्त्तव्यं वास्तुशमनं सौमित्रे! चिरजीविभिः।
मृगं हत्वा नय क्षिप्रं लक्ष्मणेह शुभेक्षण! ॥ २३ ॥

तं रामं प्रति स्वागतं स्वागतप्रश्नं निवेद्य विज्ञाप्य ॥ १७ ॥

आत्मानं संनिवेद्य। अमुकपुत्रः अमुकहेतोरागतोऽस्मीत्युक्त्वा ॥ १८ ॥
॥ १९ ॥ २० ॥

निष्ठितां अन्तर्बहिःकाष्ठभित्त्या सुप्रतिष्ठापिताम्। बद्धकटां बद्ध-कवाटाम्। छान्दसो वर्णलोपः। यद्वा बद्धच्छदिषं बद्धः कटो वर्षवार-कोयस्यामित्यर्थात्। एकाग्रं लक्ष्मणम् ॥ २१ ॥

शालां पर्णशालाधिष्ठातृदेवताम् ॥ २२ ॥

कर्त्तव्यः शास्त्रदृष्टो हि विधिर्धर्ममनुस्मर।
भ्रातुर्वचनमाज्ञाय लक्ष्मणः परवीरहा ॥ २४ ॥
चकार च यथोक्तं हि तं रामः पुनरब्रवीत्।
ऐणेयं श्रपयस्वैतत् शालां यक्ष्यामहे वयम् ॥ २५ ॥
त्वर सौम्य! मुहूर्त्तोऽयं ध्रुवश्च दिवसोऽप्ययम्।
स लक्ष्मणः कृष्णमृगं हत्वा मेध्यं प्रतापवान् ॥ २६ ॥
अथ चिक्षेप सौमित्रिः समिद्धे जातवेदसि।
तत्तु पक्वं समाज्ञाय निष्टप्तं च्छिन्नशोणितम् ॥ २७ ॥
लक्ष्मणः पुरुषव्याघ्रमथ राघवमब्रवीत्।
अयं सर्वः समस्ताङ्गः * श्रितः कृष्णमृगो मया ॥ २८ ॥

वास्तुशमनं वास्तुशान्तिः चिरजीविभिः चिरजीवित्वेच्छावद्भिः ॥ २३ ॥

पशुवधदोषशङ्कां वारयति। कर्त्तव्य इति। यज्ञार्थपशुहिंसा न दोष इति भावः। शास्त्रदृष्टः शास्त्रबोधितः धर्मशास्त्रबोधितकर्त्तव्यत्वरूपः ॥ २४ ॥

ऐणेयं मृगमांसम्। एतच्छालां एनां शालां तदधिष्ठातृशिखिपर्जन्यादिपञ्चाशद्देवताः। अयं सौम्यो मुहूर्त्तः। दिवसश्चायं ध्रुवसंज्ञकः ॥ २५ ॥ २६ ॥

निष्टप्तं नितरान्तप्तम्। छिन्नशोणितं उपरतरुधिरस्पन्दम् ॥ २७ ॥

* "अयं कृष्णः समाप्ताङ्ग" इति वा पाठः।

दैवता देवसङ्काश ! यजस्व कुशलोह्यसि ।
रामः स्नात्वा तु नियतो गुणवान् जपकोविदः ॥ २९ ॥
संग्रहेणाकरोत् सर्वान् मन्त्रान् सत्रावसानिकान् ।
इष्ट्वा देवगणान् सर्वान् विवेशावसथं शुचिः ॥ ३० ॥
बभूव च मनोह्लादो रामस्यामिततेजसः ।
वैश्वदेवबलिं कृत्वा रौद्रं वैष्णवमेव च ॥ ३१ ॥
वास्तुसंशमनीयानि मङ्गलानि प्रवर्त्तयन् ।
जपञ्च न्यायतः कृत्वा स्नात्वा नद्यां यथाविधि ॥ ३२ ॥
पापसंशमनं रामश्चकार बलिमुत्तमम् ।
वेदिस्थलविधानानि चैत्यान्यायतनानि च ।

सर्वः सर्वकर्मार्हः । समस्ताङ्गः शिरः पादादिसर्वाङ्गोपेतः शितः पक्वः ॥ २८ ॥

गुणवान् । कर्मापेक्षितप्रायत्यादिगुणवान् ॥ २९ ॥

सत्रावसानिकान् । यागसमाप्तिप्रयोजनान् मन्त्रान् गृहीत्वा संग्रहेण वास्तुशान्त्याद्यकरोत् ॥ ३० ॥

एवं गृहाधिष्ठितदेवतापूजामुक्त्वा पुनः स्नानपूर्वकं वैश्वदेवादिप्रकारमाह,—वैश्वदेवेत्यादि ॥ ३१ ॥

वास्तुसंशमनीयानि वास्तुदोषशमनार्थं मङ्गलानि मङ्गलपाठादीनि ॥ ३२ ॥

आश्रमस्यानुरूपाणि स्थापयामास राघवः * ॥ ३३ ॥

तां वृक्षपर्णच्छदनां मनोज्ञां
यथाप्रदेशं सुकृतां निवाताम् ।
वासाय सर्वे विविशुः समेताः
सभां यथा देवगणाः सुधर्माम् † ॥ ३४ ॥

पापसंशमनं पापशमनसाधनं बलिं वैश्वदेवबलिमित्युपसंहारेण वादः वेदिस्थलानां बलिहरणवेदिस्थलानां अष्टदिग्वर्त्तिनां विधानानि । चैत्यं गणपत्यायतनम् । आयतनानि विष्णवादेः अनुरूपाणि सूत्रमार्गेणेति यावत् ॥ ३३ ॥

वृक्षपर्णैः कृतं छदनं छादनं यस्यां ताम् ॥ ३४ ॥

---

* वन्यैर्माल्यैः फलैर्मूलैः पक्वैर्मांसैर्यथाविधि ।
अद्भिर्जपैश्च वेदोक्तैर्दर्भैश्च ससमिद्गणैः ॥
तौ तर्पयित्वा भूतानि राघवौ सह सीतया ।
तदा विविशतुः शालां सुशुभां शुभलक्षणौ ॥

† अनेकनानामृगपक्षिसङ्कुले
विचित्रपुष्पस्तवकद्रुमैर्युते ।
वनोत्तमे व्यालमृगानुनादिते
तदा विजह्रुः सुसुखं जितेन्द्रियाः ॥

इति पाश्चात्याः ।

सुरम्यमासाद्य तु चित्रकूटं
नदीञ्च तां माल्यवतीं सुतीर्थाम्।
ननन्द हृष्टो मृगपक्षिजुष्टां
जहौ च दुःखं पुरविप्रवासात्॥ ३५॥

इत्यार्षे रामायणे वाल्मीकीये अयोध्याकाण्डे
रामस्य चित्रकूटगमनं नाम षट्-
पञ्चाशः सर्गः॥ ५६॥

मृगपक्षिजुष्टां तां नदीमासाद्य हृष्टः॥ ३५॥

इति रामाभिरामे श्रीरामीये रामायणतिलके
अयोध्याकाण्डे षट्पञ्चाशः सर्गः॥ ५६॥

---

## सप्तपञ्चाशः सर्गः ।

कथयित्वा तु दुःखार्त्तः सुमन्त्रेण चिरं सह ।
रामे दक्षिणकूलस्थे जगाम स्वगृहं गुहः ॥ १ ॥
भरद्वाजाभिगमनं प्रयागे च सभाजनम् ।
आगिरेर्गमनं तेषां तत्रस्थैरभिलक्षितम् ॥ २ ॥

एवं रामव्यापारमुक्त्वा विशिष्टसुमन्त्रव्यापारमाह,—कथयित्वेति । रामे दक्षिणतीरस्थे सुमन्त्रेण सह दुःखार्त्तो गुहश्चिरं रामगुणान् कथयित्वा रामभद्रे दृष्टिपथादतिक्रान्ते तेन सह स्वगृहं जगाम ॥ १ ॥

भरद्वाजाभिगमनं रामादीनां भरद्वाजमुद्दिश्य गमनम् । सभाजनं भरद्वाजेनेति शेषः । सहासनं इति पाठान्तरम् । तत्रस्थैः शृङ्गवेरपुरस्थैः गुहप्रेषितचारैः करणभूतैस्तन्मुखेनाभिलक्षितं ज्ञातं कृत्वा गुहानुज्ञातः सुमन्त्रो ययौ इत्यन्वयः । गङ्गोत्तरणात्तृतीयदिवसे भरद्वाजाश्रमात्प्रतिनिवृत्तदूतमुखात्तावत्पर्यन्तं तद्वृत्तं ज्ञात्वा तद्दिन एव शृङ्गवेरात्सुमन्त्रस्य प्रतिनिवृत्तिरिति बोध्यम् । अतएव रामस्य निर्गमदिनात् 'दिने षष्ठेऽर्द्धरात्रके । हाहा लक्ष्मण हा सीते हा रामेति मृतो नृप' इति पाद्मं सङ्गच्छते । दिनद्वयेन शृङ्गवेर पुरे रामागमनं तद्द्वितीयदिने गङ्गोत्तरणं तदा दिनत्रयं सुमन्त्रस्य तत्र स्थितिः तत्र तृतीयदिवसे

अनुज्ञातः सुमन्त्रोऽथ योजयित्वा हयोत्तमान्।
अयोध्यामेव नगरीं प्रययौ गाढदुर्मनाः॥ ३॥
स वनानि सुगन्धीनि सरितश्च सरांसि च।
पश्यन् यत्तो ययौ शीघ्रं ग्रामाणि नगराणि च॥ ४॥
ततः सायाह्नसमये तृतीयेऽहनि सारथिः।
अयोध्यां समनुप्राप्य निरानन्दां ददर्श ह॥ ५॥
स शून्यामिव निःशब्दां दृष्ट्वा परमदुर्मनाः।
सुमन्त्रश्चिन्तयामास शोकवेगसमाहतः॥ ६॥
कच्चिन्न सगजा साश्वा सजना सजनाधिपा।
रामसन्तापदुःखेन दग्धा शोकाग्निना पुरी॥ ७॥
इति चिन्तापरः सूतो वाजिभिः शीघ्रयायिभिः।
नगरद्वारम् आश्च त्वरितः प्रविवेश ह॥ ८॥

मध्याह्ने प्रयागात् आगतचारेभ्यो रामवृत्तान्तं लब्धा ततः प्रस्थाय मध्येऽवस्थानम्। ततः षष्ठे पराह्णेऽयोध्याप्रवेशः सुमन्त्रस्य तदर्द्धरात्रे राज्ञो मरणमिति॥ २॥

अनुज्ञातः गुहेनेति शेषः॥ ३॥

यत्तः सावधानः शीघ्रमतिवेगेन॥ ४॥

तृतीयेऽहनि शृङ्गवेरपुरतः प्रतिनिवृत्तिदिवसात्॥ ५॥

शून्यामिव शून्यनगरीमिव॥ ६॥

सुमन्त्रमभिधावन्तः शतशोऽथ सहस्रशः ।
क्व राम इति पृच्छन्तः सूतमभ्यद्रवन्नराः ॥ ९ ॥
तेषां शशंस गङ्गायामहमापृच्छ्य राघवम् ।
अनुज्ञातो निवृत्तोऽस्मि धार्मिकेण महात्मना ॥ १० ॥
ते तीर्ण इति विज्ञाय बाष्पपूर्णमुखा नराः ।
अहो धिगिति निःश्वस्य हा रामेति विचुक्रुशुः ॥ ११ ॥
शुश्राव च वचस्तेषां वृन्दं वृन्दञ्च तिष्ठताम् ।
हताः स्म खलु ये नेह पश्याम इति राघवम् ॥ १२ ॥
दानयज्ञविवाहेषु समाजेषु * महत्सु च ।
न द्रक्ष्यामः पुनर्जातु धार्मिकं राममन्तरा ॥ १३ ॥

चिन्ताप्रकारमाह,—क्वचिदिति । न शब्दो वितर्के ॥ ७॥ ८ ॥

अभ्यद्रवन् सूतसम्मुखमाजग्मुः ॥ ९ ॥

गङ्गायां शृङ्गवेर पुरे रामेणानुज्ञातस्तमापृच्छ्य निवृत्तोऽस्मि ततः-परं वृत्तान्तं न जानामीति शशंस ॥ १० ॥

तीर्णाः गङ्गामुत्तीर्य्य गताः ॥ ११ ॥

वृन्दं वृन्दं सङ्घशस्तिष्ठतां तेषां जनानां ये इह रथे रामं न पश्यामस्ते हताः खलु इति वचः शुश्राव ॥ १२ ॥

---

* "समाधिषु" इति वा पाठः ।

किं समर्थं जनस्यास्य किं प्रियं किं सुखावहम् ।
इति रामेण नगरं पित्रेव परिपालितम् ॥ १४ ॥
वातायनगतानाञ्च स्त्रीणामन्वन्तरापणम् ।
राममेवाभितप्तानां शुश्राव परिदेवनम् ॥ १५ ॥
स राजमार्गमध्येन सुमन्त्रः पिहिताननः ।
यत्र राजा दशरथस्तमेवोपययौ गृहम् ॥ १६ ॥
सोऽवतीर्य्य रथाच्छीघ्रं राजवेश्म प्रविश्य च ।
कक्ष्याः सप्ताभिचक्राम महाजनसमाकुलाः ॥ १७ ॥
हर्म्यैर्विमानैः प्रासादैरवेक्ष्याथ समागतम् ।
हाहाकारकृता नार्यो रामादर्शनकर्शिताः ॥ १८ ॥

दानादिव्यवहारेषु धार्मिकं रामं वयमन्तरा दानादिव्यवहारमध्ये जातु पुनर्न द्रक्ष्याम इति शुश्राव ॥ १३ ॥

पित्रेव रामेण परिपालितं नगरम् । अस्य जनस्य किं समर्थमुचितं किं प्रियं तत्कारं वस्तु किमिहामुत्र सुखावहं वस्त्विति चिन्ताव्याप्तं बभूवेति शेषः ॥ १४ ॥

अनु अनन्तरं वातायनगतानां स्त्रीणां राममुद्दिश्य अभितप्तानां परिदेवनं अन्तरापणं आपणमध्ये गच्छन् शुश्राव ॥ १५ ॥ १६ ॥

कक्ष्या द्वाराणि ॥ १७ ॥

हाहाकारः कृतो याभिस्ताः । हर्म्यं धनिकगृहं विमानं सप्तभूमिकं गृहम् । प्रासादो राजगृहं त्रिभूमिकं गृहमित्यन्ये । तदुपलक्षिता-

आयतैर्विमलैर्नेत्रैरश्रुवेगपरिप्लुतैः ।
अन्योऽन्यमभिवीक्षन्तेऽव्यक्तमार्त्ततराः स्त्रियः ॥ १९ ॥
ततो दशरथस्त्रीणां प्रासादेभ्यस्ततस्ततः ।
रामशोकाभितप्तानां मन्दं शुश्राव जल्पितम् ॥ २० ॥
सह रामेण निर्यातो विनाराममिहागतः ।
सूतः किं नाम कौशल्यां क्रोशन्तीं प्रतिवक्ष्यति ॥ २१ ॥
यथा च मन्ये दुर्जीवमेवं न सुकरं ध्रुवम् ।
आच्छिद्य पुत्रे निर्याते कौशल्या यत्र जीवति ॥ २२ ॥
सत्यरूपन्तु तद्वाक्यं राजस्त्रीणां निशामयन् ।

मयोध्यां समागतमवेक्ष्येत्यन्वयः । यद्वा तैः करणैरवेक्ष्य तत्रारोहण-पूर्वकमवेक्ष्येत्यन्वयः ॥ १८ ॥

अन्योन्यं अव्यक्तं यथा भवति तथा वीक्ष्यन्ते इति कर्त्तव्यतामोहा-दिति शेषः ॥ १९ ॥

प्रासादेभ्यः सुमन्त्रस्य राजवेश्मप्रवेशं दृष्ट्वा प्रासादेभ्योऽवतीर्णाना-मित्यर्थः । मन्दं राजसान्निध्यान्मन्दत्वम् ॥ २० ॥

किं नाम प्रतिवक्ष्यति अतिघोरत्वान्न किमपि वक्तुं शक्यमिति भावः ॥ २१ ॥

अथ प्रत्येकं राममातॄणां दुःखप्रलापः । यथा चेति । यथा जीवं जीवनं दुःखजनकं मन्ये । एवं ध्रुवं निश्चयेन सुकरं सुकरनाशं नेति मन्ये । यत्र यतः पुत्रे रामे आच्छिद्य न्यायप्राप्तमभिषेकमाच्छिद्य त्यक्त्वा

प्रदीप्त इव शोकेन विवेश सहसा गृहम् ॥ २३ ॥
स प्रविश्याष्टमीं कक्ष्यां राजानं दीनमातुरम्।
पुत्रशोकपरिद्यूनमपश्यत् पाण्डुरे गृहे ॥ २४ ॥
अभिगम्य तमासीनं राजानमभिवाद्य च।
सुमन्त्रो रामवचनं यथोक्तं प्रत्यवेदयत् ॥ २५ ॥
स तूष्णीमेव तत् श्रुत्वा राजा विद्रुतमानसः।
मूर्च्छितोऽन्यपतद्भूमौ रामशोकाभिपीडितः ॥ २६ ॥
ततोऽन्तःपुरमाविद्धं मूर्च्छिते पृथिवीपतौ।
उच्छ्रित्य बाहू चुक्रोश नृपतौ पतिते क्षितौ ॥ २७॥
सुमित्रया तु सहिता कौशल्या पतितं पतिम्।
उत्थापयामास तदा वचनञ्चेदमब्रवीत् ॥ २८ ॥
इमं तस्य महाभाग! दूतं दुष्करकारिणः।

निर्याते सत्यपि कौशल्या जीवति। मन्ये इत्येकैकव्यक्त्यपेक्षयैक वचनम् ॥ २२ ॥

सत्यरूपं परमार्थरूपं तत् स्त्रीणां वाक्यं निशामयन् शोकेन प्रदीप्त इव सन् राजगृहं विवेश ॥ २३ ॥

अत्र श्लोकद्वये तीर्थकतकादिव्याख्यानात्यन्तं समञ्जसेत्युपेक्षिता। स इति परिद्यूनं म्लानम् ॥ २४ ॥

प्रत्यवेदयत्। विस्तरेण प्रतिपादनमग्रे भविष्यति ॥ २५ ॥ २६ ॥

वनवासादनुप्राप्तं कस्मान्न प्रतिभाषसे ॥ २९ ॥
अद्येममनयं कृत्वा व्यपत्रपसि राघव ! ।
उत्तिष्ठ सुकृतं तेऽस्तु शोके न स्यात्सहायता ॥ ३० ॥
देव ! यस्या भयाद्रामं नानुपृच्छसि सारथिम् ।
नेह तिष्ठति कैकेयी विस्रब्धं प्रतिभाष्यताम् ॥ ३१ ॥
सा तथोक्त्वा महाराजं कौशल्या शोकलालसा ।
धरण्यां निपपाताशु बाष्पविप्लुतभाषिणी ॥ ३२ ॥
विलपन्तीं तथा दृष्ट्वा कौशल्यां पतितां भुवि ।
पतिञ्चावेक्ष्य ताः सर्वाः समन्तात् रुरुदुः स्त्रियः ॥ ३३ ॥
ततस्तमन्तःपुरनादमुत्थितं
समीक्ष्य वृद्धास्तरुणाश्च मानवाः ।

आविद्धं दुःखाभिहतम् ॥ २७ ॥ २८ ॥ २९ ॥

अद्येति । इमं दुःखसाधनं पुत्रप्रवासनरूपमनयं कृत्वा अद्य किं व्यपत्रपसि लज्जसे यन्न प्रतिभाषसे तस्माच्छोकं विधूयोत्तिष्ठ ते सुकृतं सत्यपरिपालनरूपं पुण्यमस्तु । किञ्च एवं शोके त्वया क्रियमाणे तव सहायता सहायसमूहः परिजनः सर्वोऽपि न स्यात् त्वच्छोकेन सर्वोऽपि नश्येदित्यर्थः ॥ ३० ॥

कैकेयीभयान्न पृच्छामीति चेत्तत्राह,—देवेति । विस्रब्धं निःशङ्कम् ॥ ३१ ॥

स्त्रियश्च सर्वा रुरुदुः समन्ततः
पुरं तदासीत् पुनरेव सङ्कुलम् ॥ ३४ ॥

इत्यार्षे रामायणे वाल्मीकीये अयोध्याकाण्डे
सुमन्त्रप्रत्यागमनं नाम सप्तपञ्चाशः
सर्गः ॥ ५७ ॥

विप्लुतभाषिणी गद्गदभाषिणी ॥ ३२ ॥ ३३ ॥ ३४ ॥

इति रामाभिरामे श्रीरामीये रामायणतिलके
अयोध्याकाण्डे सप्तपञ्चाशः सर्गः ॥ ५७ ॥

---

## अष्टपञ्चाशः सर्गः ।

प्रत्याश्वस्तो यदा राजा मोहात्प्रत्यागतस्मृतिः ।
तदा जुहाव तं सूतं रामवृत्तान्तकारणात् ॥ १ ॥
अथ सूतो महाराजं कृताञ्जलिरुपस्थितः ।
राममेवानुशोचन्तं दुःखशोकसमन्वितम् ॥ २ ॥
वृद्धं परमसन्तप्तं नवग्रहमिव द्विपम् ।
विनिःश्वसन्तं ध्यायन्तमस्वस्थमिव कुञ्जरम् ॥ ३ ॥
राजा तु रजसा सूतं ध्वस्ताङ्गं समुपस्थितम् ।
अश्रुपूर्णमुखं दीनमुवाच परमार्त्तवत् ॥ ४ ॥
क्व नु वत्स्यति धर्मात्मा वृक्षमूलमुपाश्रितः ।

प्रत्याश्वस्त इति । प्रत्याश्वस्तः कृतोपचारः मोहात् मोहं परित्यज्य प्रत्यागतस्मृतिः प्रत्यागतसंज्ञः । प्रत्यागतः पुनरिति पाठेऽप्ययमेवार्थः । रामवृत्तान्तकारणात् आजुहाव रामवृत्तान्तं प्रष्टुम् ॥ १ ॥ २ ॥

नवग्रहं नवं नूतनं ग्रहो ग्रहणं यस्य तं द्विपमिव विनिःश्वसन्तं अस्वस्थं स्वीयमध्येन स्थितं कुञ्जरमिव ध्यायन्तम् ॥ ३ ॥

रजसा मार्गरजसा परमार्त्तवत् परमार्त्तार्हं वच उवाच ॥ ४ ॥

सोऽत्यन्तसुखितः सूत ! किमशिष्यति राघवः ॥ ५ ॥
दुःखस्यानुचितो दुःखं सुमन्त्र ! शयनोचितः ।
भूमिपालात्मजो भूमौ शेते कथमनाथवत् ॥ ६ ॥
यं यान्तमनुयान्ति स्म पदातिरथकुञ्जराः ।
स वत्स्यति कथं रामो विजनं वनमाश्रितः ॥ ७ ॥
व्यालैर्मृगैराचरितं कृष्णसर्पनिषेवितम् ।
कथं कुमारौ वैदेह्या सार्द्धं वनमुपाश्रितौ ॥ ८ ॥
सुकुमार्य्या तपस्विन्या सुमन्त्र ! सह सीतया ।
राजपुत्रौ कथं पादैरवरुह्य रथाद्गतौ ॥ ९ ॥
सिद्धार्थः खलु सूत ! त्वं येन दृष्टौ ममात्मजौ ।
वनान्तं प्रविशन्तौ तौ अश्विनाविव मन्दरम् ॥ १० ॥
किमुवाच वचो रामः किमुवाच च लक्ष्मणः ।
सुमन्त्र ! वनमासाद्य किमुवाच च मैथिली ॥ ११ ॥
आसितं शयितं भुक्तं सूत ! रामस्य कीर्त्तय ।

वत्स्यति वनवासकालस्य बहुदीर्घत्वाद्भविष्यप्रयोगः ॥ ५ ॥
दुःखस्यानुचितोऽपि दुःखं प्राप्तः शयनमुत्तमम् ॥ ६ ॥ ७ ॥
व्यालैरजगरैः मृगैर्व्याघ्रादिभिः ॥ ८ ॥
रथादवरुह्य कथं पादैर्गतौ ॥ ९ ॥
अश्विनाविव मन्दरं मन्दरस्य कामुकत्वमात्रात् वनसादृश्यम् ॥ १० ॥
॥ ११ ॥

जीविष्याम्यहमेतेन ययातिरिव साधुषु ॥ १२ ॥
इति सूतो नरेन्द्रेण चोदितः सज्जमानया ।
उवाच वाचा राजानं सवाष्पपरिबद्धया ॥ १३ ॥
अब्रवीन् मे महाराज ! धर्ममेवानुपालयन् ।
अञ्जलिं राघवः कृत्वा शिरसाभिप्रणम्य च ॥ १४ ॥
सूत ! मद्वचनात्तस्य तातस्य विदितात्मनः ।
शिरसा वन्दनीयस्य वन्द्यौ पादौ महात्मनः ॥ १५ ॥
सर्वमन्तःपुरं वाच्यं सूत ! मद्वचनात्त्वया ।

आसितादयो भावे निष्ठान्ताः । एतेन आसनादिव्यापारश्रवणेन ययातिरिव साधुषु स्वर्गात् पतन् ययातिर्मां साधुषु पातयेतीन्द्रं प्रार्थयित्वा यथा साधुषु पतितस्तद्वार्तया सुखजीवनो जातः एवं स्वर्गतुल्यात् पुत्रसंयोगाद्भ्रष्टस्य भवत्सदृशसाधुसमागमात्पुत्रवार्ताश्रवणेन जीविष्यामीति भावः ॥ १२ ॥

सज्जमानया स्खलन्त्या वाष्पपरिबद्धया कण्ठगतवाष्पनिबद्धया ॥ १३ ॥

हे महाराज ! राघवो धर्ममेवानुपालयन् तत्पालनार्थेनोः अब्रवीद्वक्ष्यमाणं वचः तदाह,—हे सूत ! मत्प्रतिनिधित्वेन राज्ञेऽञ्जलिं कृत्वा तथैव शिरसा नत्वा विदितात्मनः लोके धर्मिष्ठत्वेन प्रसिद्धस्य शिरसा वन्दनयोग्यस्य राज्ञः पादौ मद्वचनाद्रामोऽभिवादयत इति उक्त्वा मत्प्रतिनिधित्वेन वन्द्यौ ॥ १५ ॥

आरोग्यमविशेषेण यथार्हमभिवादनम् ॥ १६ ॥
माता च मम कौशल्या कुशलञ्चाभिवादनम्।
अप्रमादञ्च वक्तव्यां ब्रूयाश्चैनामिदं वचः ॥ १७ ॥
धर्मनित्या यथाकालमग्न्यगारपरा भव।
देवि ! देवस्य पादौ च देववत्परिपालय ॥ १८ ॥
अभिमानञ्च मानञ्च त्यक्त्वा वर्त्तस्व मातृषु।
अनुराजानमार्याञ्च कैकेयीमम्ब ! कारय ॥ १९ ॥
कुमारे भरते वृत्तिर्वर्त्तितव्या च राजवत्।
अर्थज्येष्ठा हि राजानो राजधर्ममनुस्मर ॥ २० ॥

ततः सर्वमन्तःपुरं त्वया मद्वचनात् रामो वः सर्वाः अविशेषेणा-रोग्यं पृच्छतीति वाच्यम्। यथार्हं यथायोग्यं तासां मदभिवादनञ्च वाच्यम् ॥ १६ ॥

ततो मम माता कौशल्या मद्वचनात्कुशलं प्रणामं धर्मेऽप्रमादञ्च वक्तव्या किञ्चैनामिदं वक्ष्यमाणं विशिष्य ब्रूयाः। किं तदित्याह,—धर्मेत्यादि ॥ १७ ॥ १८ ॥

अभिमानः प्रधानमहिषीत्वप्रयुक्तोऽहङ्कारः मानस्तत्प्रयुक्त इतर-तिरस्कारकश्चित्तविकारः। मातृष्वित्यस्य मदीयास्विति शेषः। अनु-गतो राजा यस्यास्तां कैकेयीं हे अम्ब ! आर्यां श्लाघ्यां कारय। धार-येति पाठेऽप्ययमेवार्थः तया सह मा विरोत्सीरित्यर्थः ॥१९॥

भरते च राजवत् वृत्तिः कार्या तत्र हेतुः अज्येष्ठा अपि राजानो

भरतः कुशलं वाच्यो वाच्यो मद्वचनेन च ।
सर्वास्वेव यथान्यायं वृत्तिं वर्त्तस्व मातृषु ॥ २१ ॥
वक्तव्यश्च महाबाहुरिक्ष्वाकुकुलनन्दनः ।
पितरं यौवराज्यस्थो राज्यस्थमनुपालय ॥ २२ ॥
अतिक्रान्तवया राजा मास्मैनं व्यपरोरुधः ।
कुमार ! राज्ये जीवस्व तस्यैवाज्ञा प्रवर्त्तताम् ॥ २३ ॥
अब्रवीच्चापि मां भूयो भृशमश्रूणि वर्त्तयन् ।
मातेव मम माता ते द्रष्टव्या पुत्रगर्धिनी ॥ २४ ॥

हि निश्चयेन पूज्या इति यावत्। राजधर्ममनुस्मर। अर्थज्येष्ठा हीति पाठे अर्थेन राजत्वपार्थेन ज्येष्ठा हि यतोऽतः पूज्या इति शेषः। इति राजधर्ममनुस्मरेति। कतकक्कत् तु राजानमनु राज्ञः पश्चात् आर्यां कैकेयीमभिवादयेत्यर्थः। कैकेयीमभिवादयेति पाठः। कुमारे चेत्यादि-प्राग्वत्। कैकेय्यावरबलेनाधिकत्वात् भरतस्य च राजदत्तार्थवत्त्वेन ज्येष्ठत्वात् तयोरभिवादनमम्बाया युक्तम्। तद्भ्रमस्यनिवृत्तये च राजधर्म-मनुस्मरेत्याह ॥ २० ॥

भरतो मद्वचनेन कुशलं वाच्यः। सर्वासु मातृषु न्यायमनतिक्रम्य वृत्तिं वर्त्तस्वेति वाच्यः ॥ २१ ॥

वक्तव्यश्चेति भरत इति शेषः। राज्यस्थं प्रधानराज्यस्थम् ॥ २२ ॥

व्यपरोरुधः राज्यात् भ्रंशयेत्यर्थः। तस्यैवाज्ञाप्रवर्त्तनात् मदनुग्रहाय तस्यैवाज्ञां प्रवर्त्तयन्। कुमारराज्ये जीवस्व तोषं कुरु ॥ २३ ॥

इत्येवं मां महाबाहुर्ब्रुवन्नेव महायशाः।
रामो राजीवपत्राक्षो भृशमश्रूण्यवर्त्तत ॥ २५ ॥
लक्ष्मणस्तु सुसंक्रुद्धो निश्वसन् वाक्यमब्रवीत्।
केनायमपराधेन राजपुत्रो विवासितः ॥ २६ ॥
राज्ञा तु खलु कैकेय्या लघुत्वाश्रित्य शासनम्।
कृतं कार्य्यमकार्य्यं वा वयं येनाभिपीड़िताः ॥ २७ ॥
यदि प्रव्राजितो रामो लोभकारणकारितम्।
वरदाननिमित्तं वा सर्व्वथा दुष्कृतं कृतम् ॥ २८ ॥
इदं तावद्यथा काममीश्वरस्य कृते कृतम्।

अब्रवीदित्यादिवाक्यं भरतं प्रत्येव अब्रवीदित्यादिश्लोकद्वयं प्रक्षिप्तमिति कतकः ॥ २४ ॥ २५ ॥

अथ लक्ष्मणवाक्यमाह,—लक्ष्मण इति। केनेत्यादिसार्धसप्तश्लोकास्तद्वचः ॥ २६ ॥

येन विवासनेन वयं पीड़िताः तद्विवासनं राज्ञा तु कार्य्यं वा कार्य्यमिवाकार्य्यं कृतं कैकेय्या लघुशासनम् आश्रुत्य प्रतिज्ञाय कृतम्। यद्वा तद्विवासनं कृतं कार्य्यं कर्त्तुं योग्यं वा भवतु अकार्य्यमकर्त्तुं योग्यं वा भवतु अस्माकं तु पीड़ा सर्व्वथैवेत्यर्थः ॥ २७ ॥

उक्तमेवार्थं प्रकारान्तरेणाह,—यदीति। यदि यत् रामः प्रव्राजितः तत् लोभरूपेण कारणेन कैकेय्या कारितम्। यद्वा कैकेय्यै प्रतिश्रुतवरदाननिमित्तकं वा भवतु। सर्व्वथा दुष्कृतं कृतं अनुचितं कृतम्।

रामस्य तु परित्यागे न हेतुमुपलक्षये ॥ २९ ॥
असमीक्ष्य समारब्धं विरुद्धं बुद्धिलाघवात् ।
जनयिष्यति संक्रोशं राघवस्य विवासनम् ॥ ३० ॥
अहं तावन्महाराजे पितृत्वं नोपलक्षये ।
भ्राता भर्त्ता च बन्धुश्च पिता च मम राघवः ॥ ३१ ॥
सर्वलोकप्रियं त्यक्त्वा सर्वलोकहिते रतम् ।

एतत् व्यतिरिक्तं वरयेति सुवचत्वात् । वरदानकाले वशिष्ठ्यनियोगा-भावाच्च । पतित्वेन भार्याशिक्षणे समग्राधिकाराच्च ॥ २८ ॥

ननु दैवप्रेरणयेदं जातमिति न दोषो राज्ञ इत्याशङ्क्य निरपराध-पुत्रत्यागे दोषस्त्ववश्यं राज्ञ इत्याह,— इदमिति । ईश्वरस्य कृते ईश्वर-प्रेरणायां सत्यां यथाकामं ईश्वरेच्छामनतिक्रम्येदन्तावत् कृतं भवतु-नाम तथापि तु रामस्य परित्यागे हेतुभूतं दोषं न पश्यामि । अतः केवलं बुद्धिलाघवात् असमीक्ष्य उचितानुचितमनवेक्ष्य विरुद्धं धर्म-शास्त्रविरुद्धमारब्धं रामविवासनं संक्रोशं इह परत्र च दुःखं जनयिष्य-त्येव निर्हेतुकपुत्रदारत्यागस्योपपातकेषु गणनादिति भावः ॥ २९ ॥ ३० ॥

"गुरोरप्यवलिप्तस्य कार्याकार्यमजानतः । उत्पथप्रतिपन्नस्य परि-त्यागो विधीयते" इति वचनार्थं हृदि निधायाह,—अहमिति । "भर्त्ता स्वामी पिता चेति ज्येष्ठो भ्राता पितुः समः" इत्युक्तेः वस्तुतस्तु केवलमायिकत्वाल्लक्ष्मणादिशरीराणां तेषामेवमुक्तौ न दोष इति बोध्यम् ॥ ३१ ॥

सर्वलोकोऽनुरज्येत कथञ्चानेन कर्मणा ॥ ३२ ॥
सर्वप्रजाभिरामं हि रामं प्रव्राज्य धार्मिकम् ।
सर्वलोकविरोधेन कथं राजा भविष्यसि ॥ ३३ ॥
जानकी तु महाराज ! निश्वसन्ती तपस्विनी ।
भूतोपहतचित्तेव विष्ठिता विस्मृता स्थिता ॥ ३४ ॥
अदृष्टपूर्वव्यसना राजपुत्री यशस्विनी ।
तेन दुःखेन रुदती नैव मां किञ्चिदब्रवीत् ॥ ३५ ॥
उद्वीक्ष्यमाणा भर्त्तारं मुखेन परिशुष्यता ।
मुमोच सहसा वाष्पं प्रजान्तमुपवीक्ष्य सा ॥ ३६ ॥
तथैव रामोऽश्रुमुखः कृताञ्जलिः
स्थितोऽब्रवील्लक्ष्मणबाहुपालितः ।

सर्वलोकप्रियं रामं त्यक्त्वा स्थिते त्वयि प्राक् सर्वलोकहिते रते । सम्प्रति सर्वलोकाहिते अरते वा अनेन क्रूरेण कर्मणा सर्वलोकः कथमनुरज्येत । सर्वलोकहिते रतं इति पाठे रामविशेषणं सर्वलोकप्रियत्वे हेतुतयेति बोध्यम् ॥ ३२ ॥

कथं राजा भविष्यति पितेति शेषः । इत्येवं राजानं ब्रूहीति लक्ष्मणोऽवोचदित्यर्थः ॥ ३३ ॥

विस्मृता विस्मृतसर्वप्रयोजनेव स्थिता आश्चर्यं मन्यमानेव विष्ठिता स्थिता ॥ ३४ ॥ ३५ ॥ ३६ ॥

तथैव सीता रुदती तपस्विनी
निरीक्षते राजरथं तथैव माम् ॥ ३७ ॥

इत्यार्षे रामायणे वाल्मीकीये अयोध्याकाण्डे
सुमन्त्रस्य रामवृत्तान्तवर्णनं नाम अष्ट-
पञ्चाशः सर्गः ॥ ५८ ॥

लक्ष्मणबाहुपालितः लक्ष्मणेन सेव्यमानः। अब्रवीत् उक्तमिति शेषः। निरीक्षते राजस्तव रथं माञ्च ॥ ३७ ॥

इति रामाभिरामे श्रीरामीये रामायणतिलके
अयोध्याकाण्डे अष्टपञ्चाशः सर्गः ॥ ५८ ॥

## एकोनषष्टितमः सर्गः ।

मम त्वश्वा निवृत्तेऽपि न प्रावर्त्तन्त वर्त्मनि ।
उष्णमश्रु विमुञ्चन्तो रामे संप्रस्थिते वनम् ॥ १ ॥
उभाभ्यां राजपुत्राभ्यामथ कृत्वाहमञ्जलिम् ।
प्रस्थितो रथमास्थाय तद्दुःखमपि धारयन् ॥ २ ॥
गुहेन सार्द्धं तत्रैव स्थितोऽस्मि दिवसान् बहून् ।
आशया यदि मां रामः पुनः शब्दापयेदिति ॥ ३ ॥
विषये ते महाराज ! रामव्यसनकर्शिताः ।

एवं रामवृत्तान्तमुक्त्वा प्रत्यागतिसमयानुभूतस्वदेशपुरवृत्तान्तमाह,—ममत्विति । ममाश्वा मन्नियम्याश्वाः न प्रावर्त्तन्त यथापूर्वं रथवहनोन्मुखानाभूवन् इत्यर्थः । जात्यश्वस्वभाववर्णनेन स्वभावोक्तिरत्नालङ्कारः ॥ १ ॥

तद्दुःखं तद्वियोगदुःखम् ॥ २ ॥

बहून् रामस्य गङ्गोत्तरणादिनादिदिनत्रयं यद्यपि भरद्वाजाश्रमाद्वारप्रतिनिवृत्तिमत्तृतीयदिवस एव सुमन्त्रप्रस्थानं तथापि तद्दिनेऽल्पावशिष्टदिनपर्यन्तं स्थित्वा बहूनित्युक्तम् । किमर्थं तत्र स्थितिस्तत्राह,—शब्दापयेदिति । तत्समीपचरद्गुहमनुष्यमुखेनाकारयेदित्यर्थः ॥ ३ ॥

अपि वृक्षाः परिम्लानाः सपुष्पाङ्कुरकोरकाः ॥ ४ ॥
उपतप्तोदका नद्यः पल्वलानि सरांसि च ।
परिशुष्कपलाशानि वनान्युपवनानि च ॥ ५ ॥
न च सर्पन्ति सत्वानि व्याला न प्रसरन्ति च ।
रामशोकाभिभूतं तु निष्कूजमिव तद्वनम् ॥ ६ ॥
लीनपुष्करपत्राश्च नद्यश्च कलुषोदकाः ।
सन्तप्तपद्माः पद्मिन्यो लीनमीनविहङ्गमाः ॥ ७ ॥
जलजानि च पुष्पाणि माल्यानि स्थलजानि च ।
नातिभान्त्यल्पगन्धीनि फलानि च यथापुरम् ॥ ८ ॥

कैकेयीनिमित्तं रामविवासनं सर्वक्षोभकरमभूदित्याह,—विषये ते इति । तत्र देशे पुष्पमपि न विकसितं, अङ्कुरः शाखासु पल्लवोद्भेदः, कोरकाः पुष्पमुकुलानि तैः सहिताः वृक्षाः । अत्र सर्वत्र हेत्वंशोत्प्रेक्षा बोध्या ॥ ४ ॥

उपतप्तोदकाः शुष्कोदकाः । पलाशः पर्णम् ॥ ५ ॥

सत्वानि प्राणिनः न सर्पन्ति न प्रसरन्तीत्यादावाद्यार्थमपीति शेषः । यतस्तत्प्राणिजातं रामशोकाभिभूतं तद्वनं मार्गस्थमत्यन्तं पक्षिशब्दवत् निष्कूजमिव पक्षिशब्दरहितम् ॥ ६ ॥

लीनं सङ्कुचितं पुष्करपत्रं नलिनीदलं यासु ताः सन्तप्तपद्माः शुष्कपद्माः पद्मिन्यः सरांसि विहङ्गमा अत्र जलपक्षिणः ॥ ७ ॥

स्थलजानि माल्यानि पुष्पाणि यथा पुरं यथापूर्वम् ॥ ८ ॥

अतोद्यानानि शून्यानि प्रलीनविहगानि च।
न चाभिरामानारामान् पश्यामि मनुजर्षभ! ॥ ९ ॥
प्रविशन्तमयोध्यायां न कश्चिदभिनन्दति।
नरा राममपश्यन्तो निश्वसन्ति मुहुर्मुहुः ॥ १० ॥
देव! राजरथं दृष्ट्वा विना राममिहागतम्।
दुःखादश्रुमुखः सर्वो राजमार्गगतो जनः ॥ ११ ॥
हर्म्यैर्विमानैः प्रासादैरवेक्ष्य रथमागतम्।
हाहाकारकृता नार्यो रामादर्शनकर्शिताः ॥ १२ ॥
आयतैर्विमलैर्नेत्रैरश्रुवेगपरिप्लुतैः।
अन्योऽन्यमभिवीक्षन्ते व्यक्तमार्ततराः स्त्रियः ॥ १३ ॥
नामित्राणां न मित्राणाम् उदासीनजनस्य च।
अहमार्ततया कञ्चिद्विशेषं नोपलक्षये ॥ १४ ॥

उद्यानानि पुष्पवाटिकाः आरामान् कृत्रिमवनानि ॥ ९ ॥

अनेन मनुष्याणां सर्वशोऽत्यन्तदुःखवत्त्वं कैमुतिकन्यायेनैव प्रतिपादितं बोध्यम्। तदेवाह,—प्रविशन्तमिति ॥ १० ॥

देवेति संबुद्धिः। राजरथं राज्ञस्तव रथम्। अश्रुमुखः अभूदिति शेषः ॥ ११ ॥ १२ ॥

अव्यक्तमिति च्छेदः। रामप्रवासजनितपीड़यार्त्ताः परस्परं सम्यक् नेक्षन्ते इत्यर्थः ॥ १३ ॥

अन्योन्यं शत्रूणां तथा मित्राणां उदासीनजनस्य चार्त्ततयार्त्तत्व-

अप्रहृष्टमनुष्या च दीननागतुरङ्गमा ।
आर्तस्वरपरिम्लाना विनिश्वसितनिस्वना ॥ १५ ॥
निरानन्दा महाराज ! रामप्रव्राजनातुरा ।
कौशल्या पुत्रहीनेव अयोध्या प्रतिभाति मे । १६ ॥
सूतस्य वचनं श्रुत्वा राजा परमदीनवत् ।
बाष्पोपहतया वाचा तं सूतमिदमब्रवीत् ॥ १७ ॥
कैकेय्या विनियुक्तेन पापाभिजनभावया ।
मया न मन्त्रकुशलैर्वृद्धैः सह समर्थितम् * ॥ १८ ॥

गुणसाम्येन विशेषं नोपलक्षये इत्यन्वयः । यद्यपि रामस्य सुतोऽरिमित्रा-सम्भवः कैकेयी कुब्जयोस्तत्त्वस्य दैववशात् सम्भवेऽपि तयोरात्तत्वाभावः तथाप्यनयोः शत्रुत्वमनयोर्मित्रत्वमयमुदासीन इति भेदो न ज्ञायत इति तात्पर्यम् ॥ १४ ॥

आर्त्तस्वरपरिम्लाना विनिश्वसितनिस्वना दीर्घशब्दवन्निश्वासयुक्तेति यावत् ॥ १५ ॥

पुत्रहीना पुत्रवियुक्ता कौशल्येव अनेन सर्वेषां रामे पुत्रवत्प्रेम ध्वनितम् ॥ १६ ॥ १७ ॥

राजा, सर्वथा त्वया महदकार्यं कृतमिति सुमन्त्राभिप्रायं तदीया-त्युक्तिवचननिर्णयाङ्गीकारेणोत्तरमाह,—कैकेयेति । पापाभिजनभा-वया पापकुलजया पापदेशजया पापाभिप्रायया च । कुलेऽप्यभिजनो

---

* "सुमन्त्रितम्" इति वा पाठः ।

न सुहृद्भिर्न चामात्यैर्मन्त्रयित्वा न नैगमैः।
मयायमर्थः संमोहात् स्त्रीहेतोः सहसा कृतः ॥ १९ ॥
भवितव्यतया नूनमिदं वा व्यसनं महत्।
कुलस्यास्य विनाशाय प्राप्तं सूत! यदृच्छया ॥ २० ॥
सूत! यद्यस्ति ते किञ्चिन्मयापि सुकृतं कृतम्।
त्वं प्रापयाशु मां रामं प्राणाः संत्वरयन्ति माम् ॥ २१ ॥
यद्यद्यापि ममैवाज्ञा निवर्त्तयतु राघवम्।
न शक्ष्यामि विना रामं मुहूर्त्तमपि जीवितुम् ॥ २२ ॥
अथवापि महाबाहुर्गतो दूरं भविष्यति।

जन्मभूम्यामित्यमरः। विनियुक्तेन रामप्रव्राजने इति शेषः। न समर्थितं न विचारितम् ॥ १८ ॥

नञोऽनेकधा प्रयोगः शोकेन चित्तवैक्लव्यात्। सहसा झटित्यविचारेणैव ॥ १९ ॥

भवितव्यतया अवश्यप्रापकदुरदृष्टवशात्। वा इति वैशब्द्समानार्थम्। यदृच्छया दैवेच्छया ॥ २० ॥

सुकृतं प्रियम्। संत्वरयन्ति निष्क्रमितुमिच्छन्तीति यावत् ॥ २१ ॥

यदि यदि वा अथ वेति यावत्। मदाज्ञया भवान् गत्वा राघवं निवर्त्तयतु। ननु भरताय त्वया राज्यस्य दत्तत्वात्त्वदाज्ञया मया कथं गन्तव्यं तत्राह,—अद्यापि ममैवाज्ञा यावद्भरतागमनमिति भावः। निवृत्तौ हेतुर्नेत्यादि ॥ २२ ॥

मामेव रथमारोप्य शीघ्रं रामाय दर्शय ॥ २३ ॥
वृत्तदंष्ट्रो महेष्वासः क्वासौ लक्ष्मणपूर्वजः।
यदि जीवामि साध्वेनं पश्येयं सीतया सह * ॥ २४ ॥
अतोनु किं दुःखतरं योऽहमिक्ष्वाकुनन्दनम्।
इमामवस्थामापन्नो नेह पश्यामि राघवम् ॥ २५ ॥
हा राम! रामानुज! हा हा वैदेहि! तपस्विनि!।
न मां जानीत दुःखेन म्रियमाणमनाथवत् ॥ २६ ॥
स तेन राजा दुःखेन भृशमर्पितचेतनः।
अवगाढः सुदुष्पारं शोकसागरमब्रवीत् ॥ २७ ॥
रामशोकमहावेगः सीताविरहपारगः।

पुनरपि रामनिवर्तनस्याशक्यत्वात् स्वनयनमेवाह,—अथवापीति ॥ २३ ॥

वृत्तदंष्ट्रः कुन्दकुड्मलाकारदंष्ट्रः यदि जीवामि इति तत्समीपगमनपर्य्यन्तमपि जीवने सन्देह इति भावः ॥ २४ ॥

अतोन्वित्यतः शब्दार्थमाह,—इमामिति। एवमत्यन्तसन्निहितमरणकाले उत्तमलोकदस्वस्मरणाभ्याससंपादनाय भगवतात्मवियोगः पितुः संपादित इति तत्त्वम् ॥ २५ ॥ २६ ॥

---

* "लोहिताक्षं महाबाहुं समुक्तमणिकुण्डलम्।
रामं यदि न पश्यामि गमिष्यामि यमक्षयम् ॥"
इत्यधिकं पाठान्तः।

श्वसितोर्म्मिमहावर्त्तो बाष्पवेगजलाविलः ॥ २८ ॥
बाहुविक्षेपमीनौघो विक्रन्दितमहास्वनः ।
प्रकीर्णकेशशैवालः कैकेयीवड़वामुखः ॥ २९ ॥
ममाश्रुवेगप्रभवः कुब्जावाक्यमहाग्रहः ।
वरवेलो नृशंसाया रामप्रव्राजनायतः ॥ ३० ॥
यस्मिन् बतनिमग्नोऽहं कौशल्ये राघवं विना ।
दुस्तरो जीवता देवि ! मयाऽयं शोकसागरः ॥ ३१ ॥
अशोभनं योऽहमिहाद्य राघवं
दिदृक्षमाणो न लभे सलक्ष्मणम् ।

अर्पितचेतनः गतचेतनः सुदुष्पारं शोकसागरमवगाढ़ः प्रविष्ट अब्रवीत् शोकं सागरत्वेनावर्णयदित्यर्थः ॥ २७ ॥

तदाह,—रामेत्यादि । रामशोकरूपो महानावेगो वैपुल्यं यस्य । सीताविरहरूपपारगतः तत्पारसम्बन्धः श्वसितरूप ऊर्मियुक्तो महावर्तो यस्य सः । बाष्पवेगरूपनदीजलैः आविलः ॥ २८ ॥

शोचिष्टणां प्रकीर्णकेशा एव शैवालं यत्र कैकेय्येव वड़वामुखं यत्र ॥ २९ ॥

अश्रुवेगप्रभवः षष्ठीतत्पुरुषः अश्रुवेगोत्पादक इत्यर्थः । नृशंसायाः कैकेय्याः वर एव वेला मर्य्यादा यस्य । यतः रामप्रव्राजनसमुद्रात् काल-कूटमिव जातेति कतकः । अन्ये तु रामप्रव्राजनमेव आयतं विस्तारो यस्य स रामप्रव्राजनायतः इत्यर्थमाहुः ॥ ३० ॥ ३१ ॥

इतीव राजा विलपन् महायशाः
पपात तूर्णं शयनेसु मूर्च्छितः ॥ ३२ ॥
इति विलपति पार्थिवे प्रनष्टे
करुणतरं द्विगुणञ्च रामहेतोः ।
वचनमनुनिशम्य तस्य देवी
भयमगमत् पुनरेव राममाता ॥ ३३ ॥

इत्यार्षे रामायणे वाल्मीकीये अयोध्याकाण्डे
दशरथविलापो नाम एकोनषष्टि-
तमः सर्गः ॥ ५९ ॥

दिदृक्षमाणो यद्राघवं द्रष्टुं न लभे तदशोभनं मम महत् पापं पाप-जन्यं तददर्शनमिति यावत् ॥ ३२ ॥

रामहेतोरिति विलपति पार्थिवे प्रनष्टे मूर्च्छिते सति तस्य करुणा-तरं वचनं निशम्य देवी द्विगुणं भयमुपागमत् । भर्तृवियोगदुःखस्या-पारस्य संभावनया ॥ ३३ ॥

## षष्टितमः सर्गः ।

ततो भूतोपसृष्टेव वेपमाना पुनः पुनः ।
धरण्यां गतसत्त्वेव कौशल्या सूतमब्रवीत् ॥ १ ॥

नय मां यत्र काकुत्स्थः सीता यत्र च लक्ष्मणः ।
तान् विना क्षणमप्यद्य जीवितुं नोत्सहे ह्यहम् ॥ २ ॥

निवर्त्तय रथं शीघ्रं दण्डकान्नय मामपि ।
अथ तान्नानुगच्छामि गमिष्यामि यमक्षयम् ॥ ३ ॥

बाष्पवेगोपहतया स वाचा सज्जमानया ।
इदमाश्वासयन् देवीं सूतः प्राञ्जलिरब्रवीत् ॥ ४ ॥

त्यज शोकञ्च मोहञ्च सम्भ्रमं दुःखजं तथा ।
व्यवधूय च सन्तापं वने वत्स्यति राघवः ॥ ५ ॥

लक्ष्मणश्चापि रामस्य पादौ परिचरन् वने ।
आराधयति धर्मज्ञः परलोकं जितेन्द्रियः ॥ ६ ॥

तत इति । भूतोपसृष्टेव भूताविष्टेव गतसत्त्वेव गतासुरिव धरण्यां पतितेति शेषः ॥ १ ॥ २ ॥

अथ यदि ॥ ३ ॥ ४ ॥

संभ्रममावेगम् ॥ ५ ॥

विजनेपि वने सीता वासं प्राप्य गृहेष्विव ।
विस्रम्भं लभते भीता रामे विन्यस्तमानसा ॥ ७ ॥
नास्या दैन्यकृतं किञ्चित्सुसूक्ष्ममपि लक्ष्यते ।
उचितेव प्रवासानां वैदेही प्रतिभाति मे ॥ ८ ॥
नगरोपवनं गत्वा यथा स्म रमते पुरा ।
तथैव रमते सीता निर्जनेषु वनेष्वपि ॥ ९ ॥
बालेव रमते सीता बालचन्द्रनिभानना ।
रामारामे ह्यदीनात्मा विजनेपि वने सती ॥ १० ॥
तद्गतं हृदयं ह्यस्यास्तदधीनञ्च जीवितम् ।
अयोध्या हि भवेदस्या रामहीना तथा वनम् ॥ ११ ॥
परिपृच्छति वैदेही ग्रामांश्च नगराणि च ।
गतिं दृष्ट्वा नदीनाञ्च पादपान् विविधानपि ॥ १२ ॥

रामस्य पादौ परिचरन् परलोकमाराधयति सम्पादयति ॥ ६ ॥

अभीतेति छेदः । विस्रम्भः प्रणयः ॥ ७ ॥

कृतं वनवासकृतं दैन्यमित्यर्थः ॥ ८ ॥ ९ ॥

बालेवेति । दुःखापरिज्ञानेनोपमा तस्या देहाद्यभिमानाभावान्नाधिजं दुःखमिति भावः । अबालचन्द्रेत्यादि छेदः । रामारामे रामरूपे आरामे इत्यर्थः । भिन्नपदे वा ॥ १० ॥

रामहीना अयोध्या यथा वनं तथा भवेदित्यन्वयः ॥ ११ ॥

नदीनां गतिं ग्रामनगरवृक्षान् दृष्ट्वा रामं वा लक्ष्मणं वा पृच्छति

रामं वा लक्ष्मणं वापि दृष्ट्वा जानाति जानकी।
अयोध्या कोशमाले तु विहारमिव संश्रिता॥ १३॥
इदमेव स्मराम्यस्याः सहसैवोपजल्पितम्।
कैकेयीसंश्रितं जल्पं नेदानीं प्रतिभाति माम्॥ १४॥
ध्वंसयित्वा तु तद्वाक्यं प्रमादात्पर्युपस्थितम्।
ह्लादयन् वचनं सूतो देव्या मधुरमब्रवीत्॥ १५॥
अध्वना वातवेगेन सम्भ्रमेणातपेन च।
न विगच्छति वैदेह्याश्चन्द्रांशुसदृशी प्रभा॥ १६॥
सदृशं शतपत्रस्य पूर्णचन्द्रोपमप्रभम्।

दृष्ट्वा च जानाति। अयोध्यातः क्रोशमात्रे विद्यमानं विहारं संश्रिता यथा रमते स्म तथैव वनेपि अरमतेत्यर्थः॥ १२॥ १३॥

इदमेव सीतायाः सम्बन्धि इदमेव प्रस्तुतवृत्तान्तजातमेव स्मरामि। कैकेयीसंश्रितं कैकेयीमुद्दिश्य प्रवृत्तं सहसा हठेन सीतया तस्याः परमदुःखकारिणीत्वात् मां प्रति यत्तद्विषयं जल्पं वाक्यमुपजल्पितमुक्तं तदिदानीं मां न प्रतिभात्येव इत्येवं रूपेण प्रमादात् पर्युपस्थितं मुखान्निर्गतं कैकेयीविषयं सीतावाक्यं ध्वंसयित्वा व्यवहारान्तरेणानुक्तप्रायमिव कृत्वा देव्या कौशल्यायाः ह्लादनं मधुरं वचनं सूतोऽब्रवीदित्याह,—कविः॥ १४॥ १५॥ १६॥

वदान्यायाः दात्र्याः वल्गुवाचश्च वदान्यो वल्गुवागपि न विकम्पते म्लानतां न याति॥ १७॥

वदनं तद्वदान्याया वैदेह्या न विकम्पते ॥ १७ ॥
अलक्तरसरक्ताभावलक्तरसवर्जितौ ।
अद्यापि चरणौ तस्याः पद्मकोशसमप्रभौ ॥ १८ ॥
नूपुरोत्कृष्टहेलेव खेलं गच्छति भामिनी ।
इदानीमपि वैदेही तद्रागान्यस्तभूषणा ॥ १९ ॥
गजं वा वीक्ष्य सिंहं वा व्याघ्रं वा वनमाश्रिता ।
नाहारयति संत्रासं बाहू रामस्य संश्रिता ॥ २० ॥
न शोच्यास्तेन चात्मा ते शोच्यो नापि जनाधिपः ।
इदं हि चरितं लोके प्रतिष्ठास्यति शाश्वतम् ॥ २१ ॥

अलक्तरसवर्जितावपि तद्रसरक्तकान्तीस्वभावरक्ततया पद्मकोश-समप्रभौ ननु मार्गगतिप्रयुक्तकाठिन्यभाजौ ॥ १८ ॥

नूपुरेणोत्कृष्टा तिरस्कृता हंसादि लीला यया सेव । खेलं विला-सयुक्तम् । अशं आद्यजन्तम् । तद्रागेण भर्तृप्रीतियोजकभूषणानुरागेणा-न्यस्तानि अत्यक्तानि भूषणानि यया ॥ १९ ॥

नाहारयति न करोति न संप्राप्नोतीति वा ॥ २० ॥

अतस्ते रामादयो न शोच्याः ते तवात्माप्यतएव न शोच्यः न राजापि तेषां सुखश्रवणेन तस्यापि जीवनसम्भवात् इतोपि न शोच्यांश इत्याह, —इदं हीत्यादि । प्राप्तमपि राज्यं महाबलोपि परित्यज्य पितृ-वचनमपालयदित्येवमादि रामचरितं स्वार्थमुद्दिश्य भर्तारमपि परि-त्यज्यातिघोरं कृतवती कैकेयीत्यादि इदं रामचरितं शाश्वतं प्रतिष्ठा-

विधूय शोकं परिहृष्टमानसा
महर्षियाते पथि सुव्यवस्थिता:।
वने रता वन्यफलाशना पितु:
शुभां प्रतिज्ञां प्रतिपालयन्ति ते ॥ २२ ॥
तथापि सूतेन सुयुक्तवादिना
निवार्यमाणा सुतशोककर्शिता।
न चैव देवी विरराम कूजितात्
प्रियेति पुत्रेति च राघवेति च ॥ २३ ॥

इत्यार्षे रामायणे वाल्मीकीये अयोध्याकाण्डे
कौशल्यासुमन्त्रसंवादो नाम
षष्टितमः सर्गः ॥ ६० ॥

स्यतीत्यनेन तन्नामवदेवास्य सुस्थिरत्वं वदता तस्येश्वरत्वं ध्वनितम्। नह्यन्यचरित्रं शाश्वतं प्रतिष्ठां लभते ॥ २१ ॥

महर्षिभिर्याते प्राप्ते ॥ २२ ॥

तथापीति। सूतेन निवार्यमाणा सूतोक्तं गृहीतवत्यपि न विरराम दुःखप्राबल्यादिति शेषः ॥ २३ ॥

इति रामाभिरामे श्रीरामीये रामायणतिलके
अयोध्याकाण्डे षष्टितमः सर्गः ॥ ६० ॥

## एकषष्टितमः सर्गः ।

वनं गते धर्मरते रामे रमयतां वरे ।
कौशल्या रुदती चार्त्ता भर्त्तारमिदमब्रवीत् ॥ १ ॥
यद्यपि त्रिषु लोकेषु प्रथितं ते महद्यशः ।
सानुक्रोशो वदान्यश्च प्रियवादी च राघवः ॥ २ ॥
कथं नरवरश्रेष्ठौ पुत्रौ तौ सह सीतया ।
दुःखितौ सुखसंवृद्धौ कथं दुःखं सहिष्यतः ॥ ३ ॥
सा नूनं तरुणी श्यामा सुकुमारी सुखोचिता ।

परम पतिव्रतापि कौशल्या दुःखातिशयात् पूर्वं जानत्यपि व्रताश्रय-व्यवहारवल्लोकाश्रयेण राजानमुपालभते । वनमिति आर्त्ता खिन्ना चार्त्तेति पाठे सुतरामार्त्ता । रुदतीवेति पाठे इव एवार्थे । यद्वा उक्ता-र्थध्वननायैव शब्दः ॥ १ ॥

अनुक्रोशादिविशिष्टो राघव इति ते महद्यशः प्रथितमिति योजना ॥ २ ॥

अथापि । हे नरवरश्रेष्ठ ! सीतया सह तौ पुत्रौ कथं त्यक्तवा-निति शेषः । अथ तान् शोचति दुःखितावित्यादि दुःखं प्राप्ता-वित्यर्थः ॥ ३ ॥

कथमुष्णञ्च शीतञ्च मैथिली विषहिष्यते ॥ ४ ॥
भुक्ताशनं विशालाक्षी सूपदंशान्वितं शुभम्।
वन्यं नैवारमाहारं कथं सीतोपभक्ष्यते ॥ ५ ॥
गीतवादित्रनिर्घोषं श्रुत्वा शुभसमन्विता।
कथं क्रव्यादसिंहानां शब्दं श्रोष्यत्यशोभनम् ॥ ६ ॥
महेन्द्रध्वजसङ्काशः क्वनु शेते महाभुजः।
भुजं परिघसङ्काशमुपधाय महाबलः * ॥ ७ ॥
पद्मवर्णं सुकेशान्तं पद्मनिश्वासमुत्तमम्।
कदा द्रक्ष्यामि रामस्य वदनं पुष्करेक्षणम् ॥ ८ ॥
वज्रसारमिदं नूनं हृदयं मे न संशयः।
अपश्यन्त्या न तं यद्वै फलतीह सहस्रधा ॥ ९ ॥

तरुणी अतिक्रान्तकौमारा। श्यामा प्राप्तयौवना ॥ ४ ॥

सूपदंशान्वितं शोभनव्यञ्जनसहितं नैवारं नीवारसम्बन्धिनम् ॥ ५ ॥ ६ ॥

महेन्द्रध्वजसङ्काशः तद्वत्सर्वलोकस्योत्सवदः ॥ ७ ॥

पद्मवर्णं पद्मदलवर्णं पद्मनिश्वासं पद्मपत्रगन्धिनिश्वासम् ॥ ८ ॥

यत् यतस्तं अपश्यन्त्या इदं सहस्रधा न फलति न विशीर्य्यतेऽतस्तत् वज्रसारं वज्रवत्कठिनं नूनमित्युत्प्रेक्षा ॥ ९ ॥

---

* "महानुजः" इति वा पाठः।

यत्त्वया करुणं कर्म व्यपोह्य मम बान्धवाः।
निरस्ताः परिधावन्ति सुखार्हाः कृपणा वने॥ १०॥
यदि पञ्चदशे वर्षे राघवः पुनरेष्यति।
जह्याद्राज्यञ्च कोशञ्च भरतो नोपलक्ष्यते॥ ११॥
भोजयन्ति किल श्राद्धे केचित् स्वानेव बान्धवान्।
ततः पश्चात्समीक्षन्ते कृतकार्या द्विजोत्तमान्॥ १२॥
तत्र ये गुणवन्तश्च विद्वांसश्च द्विजातयः।

त्वया व्यपोह्य बुद्धेरविचार्य्य यत्करुणं शोचनीयं कर्मानुचितवर-दानरूपं त्वया कृतं तेन हेतुना मम बान्धवाः कौशल्या निरस्ताः सुखार्हा अपि कृपणाः सन्तो वने धावन्ति। यद्वा व्यपोह्य अनादृत्य राज्यात्प्रभ्रंश्य वा त्वया निरस्ता वने परिधावन्तीति यत्तदकरुणं क्रूरं कर्म त्वया कृतमित्यर्थः॥ १०॥

ननु चतुर्दशवर्षानन्तरं तव पुत्रस्यैव राज्यं भविष्यति तत्राह,— यदीति। तावत्पर्य्यन्तं वने जीवनमेव न सम्भाव्यते तथापि यदि जीवन् पुनरेष्यति तथापि भरतो राज्यं जह्यादिति नोपलक्ष्यते न सम्भाव्यत इत्यर्थः॥ ११॥

अथापि कदाचिद्भरतो जह्यात् तथापि रामस्तन्नाङ्गीकरिष्यतीति सदृष्टान्तमाह,—भोजयन्तीत्यादिना। केचिच्छ्राद्धकर्त्तारो वयोगुणै-रधिकान् विप्रान् श्राद्धे निमन्त्र्य वयोगुणहीनानपि स्वान् बान्धवान् श्राद्धे भोजयन्ति। ततः कृतकार्याः सन्तो निमन्त्रितान् द्विजर्षभान् पश्चादिष्टपङ्क्त्या भोजयितुं समीक्षन्ते विचारयन्ति॥ १२

न पश्चात्तेऽभिमन्यन्ते सुधामपि सुरोपमाः ॥ १३ ॥
ब्राह्मणेष्वपि वृत्तेषु * पश्चाद्भुक्तं द्विजोत्तमाः ।
नाभ्युपैतु मलं प्राज्ञाः शृङ्गच्छेदमिवर्षभाः ॥ १४ ॥
एवं कनीयसा भ्रात्रा भुक्तं राज्यं विशाम्पते ! ।
भ्राता ज्येष्ठो वरिष्ठश्च किमर्थं नावमंस्यते ॥ १५ ॥
न परेणाहृतं भक्ष्यं व्याघ्रः खादितुमिच्छति ।
एवमेव नरव्याघ्रः परलीढं न मन्यते ॥ १६ ॥

तत्र निमन्त्रितेषु ये गुणवन्तः श्राद्धापेक्षितगुणवन्तस्तेसुरोपमाः पश्चात्तं तौ सुधासदृशं स्वादन्नमपि नानुमन्यन्ते ॥ १३ ॥

ननु कुतो नानुमन्यन्ते। ब्राह्मणशेषभोजने शूद्रशेषभोजनवद्दोषाभावादत आह,—ब्राह्मणेष्वपीति। ब्राह्मणेषु वृत्तेषु भुक्तवत्सु तद्भुक्तशेषमपि यतो द्विजोत्तमाः प्राज्ञास्तातस्तद्भोजनमभ्युपेतु मङ्गीकर्तुं नालम् अवमाननात्। ऋषभाः स्वशृङ्गच्छेदमिव शृङ्गस्थानीयो हि सतां मानः ॥ १४ ॥

दार्ष्टान्तिके योजयति। एवमिति। कनीयोपभुक्तत्वात् स्वयं ज्येष्ठो वयसा गुणैश्च वरिष्ठः सन् तेन त्यक्तमपि राज्यं किमर्थं नावमंस्यते सर्वथा तिरस्करिष्यत्येवेत्यर्थः। मद्दर्शनानुरोधेनागतोमज्जीवनपर्यन्तमेव स्थास्यति तूष्णीं न पुनराज्यं करिष्यतीत्यर्थः ॥ १५ ॥

परेणाहृतं क्रोष्ट्रादिखादितशेषं परलीढं पराखादितं न मन्यते न मंस्यते ॥ १६ ॥

---

* "दृष्टेषु" इति वा पाठः।

हविराज्यं पुरोडाशः कुशा यूपाश्च खादिराः ।
नैतानि यातयामानि कुर्वन्ति पुनरध्वरे ॥ १७ ॥
तथा ह्यात्तमिदं राज्यं हृतसारां सुरामिव ।
नाभिमन्तुमलं रामो नष्टसोममिवाध्वरम् ॥ १८ ॥
नैवंविधमसत्कारं राघवो मर्षयिष्यति ।
बलवानिव शार्दूलो बालधेरभिमर्शनम् ॥ १९ ॥
नैतस्य सहिता लोका भयं कुर्युर्महामृधे ।
अधर्मन्त्विह धर्मात्मा लोकं धर्मेण योजयेत् ॥ २० ॥

एतानि हविरादीनि एकत्राध्वरे विनियोगाद्यातयामानि पुनरध्वरे अध्वरान्तरे विनियुक्तानि न कुर्वन्ति । जीर्णञ्च परिभुक्तञ्च यातयाममिदन्द्वयमित्यमरः । यद्यपि "मन्त्राः कृष्णाजिनं दर्भा" इति स्मृत्या कुशानां यातयामत्वदोषो नेत्युक्तं तथापि तज्जीर्णत्वरूपयातयामत्वदोषाभावपरं नतु विनियुक्त विनियोगपरम् । "ब्रह्मयज्ञेषु ये दर्भा विनियुक्ता न तेऽन्यत" इत्यनेन विनियुक्तनियोगनिषेधस्य न्यायेन सर्वत्रलाभादित्याहुः ॥१७॥

तथैवान्येनात्तमुपभुक्तपूर्वमिदं राज्यं रामोऽभिमन्तुमङ्गीकर्त्तुं नालम् । नष्टसोमं भुक्तसोमं अध्वरं तत्स्थं सोमरूपं हविः ॥ १८ ॥

बालधेः पुच्छस्य ॥ १९ ॥

शार्दूलवद्बलवत्त्वमेव दर्शयति । नैतस्येति, सहिताः सुरासुरैः सहिताः । लोकाः प्रतियोधाः । किमर्थं तर्हि मामाक्रम्य राज्यं न कृतवान् तत्राह,—अधर्मन्त्विति । अधर्मन्तु मत्वा न तथाकृतवानिति भावः । नन्वेवं तस्य धर्मनिष्ठता कथमत आह,—इहेति । यो धर्मात्मा

नन्वसौ काञ्चनैर्बाणैर्महावीर्यो महाभुजः।
युगान्त इव भूतानि सागरानपि निर्दहेत्॥ २१॥
स तादृशः सिंहबलो वृषभाक्षो नरर्षभः।
स्वयमेव हतः पित्रा जलजेनात्मजो यथा॥ २२॥
द्विजातिचरितो धर्मः शास्त्रे दृष्टः सनातनैः।
यदि ते धर्मनिरते त्वया पुत्रे विवासिते॥ २३॥
गतिरेका पतिर्नार्या द्वितीया गतिरात्मजः।
तृतीया ज्ञातयो राजन्! चतुर्थी नैव विद्यते॥ २४॥

इह मनुष्यलोके। लोकं धर्मेण योजयेत्। एवं धर्मप्रवर्तकस्य तस्य धर्मनिष्ठता अनुक्तिसिद्धैवेति भावः। यद्वा तुरप्यर्थेऽधर्ममधर्मप्रवृत्तमपि लोकं दण्डादिना यो धर्मेण योजयेत् स कथं स्वयमधर्मं कुर्यादित्यर्थः॥२०॥

रामेऽशक्तिशङ्कापि नेत्याह,—नन्विति। काञ्चनैः काञ्चनभूषित-पुङ्खैः युगान्ते युगान्तकाले ईश्वर इव भूतानि समुद्रांश्च निर्दहेत् नाशयेच्छोषयेच्च॥ २१॥

पित्रा त्वया स्वयमेव स्वपुत्रोहतः भ्रष्टराज्यः कृतः। जलजेन मत्स्येन स यथात्मजानेव भक्षयति तद्वदित्यर्थः॥ २२॥

एवञ्चाहमेव हतेत्याह श्लोकत्रयेण। द्विजातीत्यादि। सनातनै-र्ऋषिभिः शास्त्रे वेदे दृष्टस्त्रैवर्णिकैर्द्विजातिभिश्चरितो धर्मः यदि ते स सत्यः स्यात् तर्हि पुत्रो न विवासितः स्यादिति शेषः। एवं धर्ममुपेक्ष्य धर्मनिरते पुत्रे त्वया विवासिते सति॥ २३॥

शास्त्रेणोच्यमाना स्त्रियास्तिस्रोगतयः। तत्र तासु प्रथमगतिभूतस्त्वं

तत्र त्वं मम नैवासि रामश्च वनमाहितः ।
न वनं गन्तुमिच्छामि सर्वथा हा हता त्वया ॥ २५ ॥
हतं त्वया राष्ट्रमिदं सराज्यं
हताःस्म सर्वाः सह मन्त्रिभिश्च ।
हता सपुत्रा स्मि हताश्च पौराः
सुतश्च भार्या च तव प्रहृष्टौ ॥ २६ ॥
इमां गिरं दारुणशब्दसंहितां
निशम्य रामेति मुमोह दुःखितः ।
ततः स शोकं प्रविवेश पार्थिवः
स्वदुष्कृतञ्चापि पुनस्तथास्मरत् ॥ २७ ॥

इत्यार्षे रामायणे वाल्मीकीये अयोध्याकाण्डे कौशल्या-विलापो नाम एकषष्टितमः सर्गः ॥ ६१ ॥

मम नास्येव सपत्नीवशत्वात् । नास्तीति पाठे आर्षत्वं बोध्यम् । द्वितीय-गति भूतो रामश्च वनमाहितः वनं प्रति प्रहितः त्वया । नच तत्प्राप्तये वनं गन्तुमिच्छामि सपतिकात्वात् । तृतीया ज्ञातयस्त्वसन्निहिताः तस्मात् सर्वथा हता त्वया ॥ २४ ॥ २५ ॥

सुतश्च भार्य्या च भरतकैकेय्यौ प्रहृष्टौ ॥ २६ ॥

दारुणशब्दसंहितां दारुणशब्दयुक्ताम् । स्वदुष्कृतं वक्ष्यमाणम् ॥२७॥

इति रामाभिरामे श्रीरामीये रामायणतिलके
अयोध्याकाण्डे एकषष्टितमः सर्गः ॥ ६१ ॥

## द्विषष्टितमः सर्गः ।

एवन्तु क्रुद्धया राजा राममात्रा सशोकया ।
श्रावितः परुषं वाक्यं चिन्तयामास दुःखितः ॥ १ ॥
चिन्तयित्वा स च नृपो मोहव्याकुलितेन्द्रियः ।
अथ दीर्घेण कालेन संज्ञामाप परन्तपः ॥ २ ॥
स संज्ञामुपलभ्यैव दीर्घमुष्णञ्च निश्वसन् ।
कौशल्यां पार्श्वतो दृष्ट्वा ततश्चिन्तामुपागमत् ॥ ३ ॥
तस्य चिन्तयमानस्य प्रत्यभात्कर्म दुष्कृतम् ।
यदनेन कृतं पूर्वमज्ञानाच्छब्दवेधिना ॥ ४ ॥
अमनास्तेन शोकेन रामशोकेन च प्रभुः ।

एवं कौसल्या क्रूरवचोभीतस्य राज्ञोऽञ्जलिपर्य्यन्तं दैन्यं दृष्ट्वा राजानमनुनयति । एवन्त्विति । चिन्तयामास अनयोच्यमानं सर्वं सत्यं किमिह कर्त्तव्यमिति विचारयामास ॥ १ ॥

मोहव्याकुलितेन्द्रियो जात इति शेषः ॥ २ ॥

चिन्तामुपागमत् पुत्रविश्लेषजदुःखसाधनं कर्म ममेति चिन्तामाप ॥३

प्रत्यभात्प्रतिभातम् । दुष्कृतं कर्म मुनिकुमारबधरूपम् । शब्दमेव लक्ष्यदेशस्थं प्राप्य विध्यतीति शब्दवेधी ॥ ४ ॥

द्वाभ्यामपि महाराजः शोकाभ्यामभितप्यते ॥ ५ ॥
दह्यमानस्तु शोकाभ्यां कौशल्यामाह दुःखितः।
वेपमानोऽञ्जलिं कृत्वा प्रसादार्थमवाङ्मुखः ॥ ६ ॥
प्रसादये त्वां कौशल्ये ! रचितोयं मयाञ्जलिः।
वत्सला चानृशंसा च त्वं हि नित्यं परेष्वपि ॥ ७ ॥
भर्त्ता तु खलु नारीणां गुणवान्निर्गुणोऽपि वा।
धर्मं विमृशमानानां प्रत्यक्षं देवि ! दैवतम् ॥ ८ ॥
सा त्वं धर्मपरा नित्यं दृष्टलोकपरावरा।
नार्हसे विप्रियं वक्तुं दुःखितापि सुदुःखितम् ॥ ९ ॥
तद्वाक्यं करुणं राज्ञः श्रुत्वा दीनस्य भाषितम्।
कौशल्या व्यसृजद्वाक्यं प्रणालीव नवोदकम् ॥ १० ॥
सा मूर्ध्नि बध्वा रुदती राज्ञः पद्ममिवाञ्जलिम्।

अमना दुर्मनाः तेन शोकेन मुनिकुमारवधजेन शोकेन ॥ ५ ॥

अवाङ्मुखः स्वकृततदप्रियस्मरणाल्लज्जया ॥ ६ ॥

परेष्वपि शत्रुष्वपि ॥ ७ ॥

विमृशमानानां जानतीनाम् ॥ ८ ॥

दृष्टौ लोके परावरावुत्कर्षापकर्षौ यया सा। अपकृष्टा अपि भर्त्तारमेवं न वदन्तीति भावः ॥ ९ ॥

प्रणाली प्रासादादौ जलनिर्गममार्गः। नवोदकं वर्षजलम् ॥ १० ॥

स्वानुनयाय राज्ञा कृतं रामोञ्जलिं पाणिभ्यां गृहीत्वा पद्ममिव

सम्भ्रमादब्रवीत्त्रस्ता त्वरमाणाक्षरं वचः ॥ ११ ॥
प्रसीद शिरसा याचे भूमौ निपतितास्मि ते ।
याचितास्मि हता देव ! चन्तव्याहं न हि त्वया ॥ १२ ॥
नैषा हि सास्त्री भवति श्लाघनीयेन धीमता ।
उभयोर्लोकयोर्लोके पत्या या संप्रसाद्यते ॥ १३ ॥
जानामि धर्मं धर्मज्ञ ! त्वां जाने सत्यवादिनम् ।
पुत्रशोकार्त्तया तत्तु मया किमपि भाषितम् ॥ १४ ॥
शोको नाशयते धैर्यं शोको नाशयते श्रुतम् ।
शोको नाशयते सर्वं नास्ति शोकसमो रिपुः ॥ १५ ॥
शक्यमापतितः सोढुं प्रहारो रिपुहस्ततः ।
सोढुमापतितः शोकः सुसूक्ष्मोपि न शक्यते ॥ १६ ॥

मूर्च्छि वध्वा रुदती त्रस्ता अहमपि कैकेयीवत् पतिशोककारिवचनादि प्राप्नवतीति भीता सम्भ्रमाद्राज्ञि अत्यादरात् वच आह ॥ ११ ॥

भूमौ निपतितास्मि साष्टाङ्गं प्रणमामि । हे देव ! त्वया याचि ताहम् अनुनीताहं हतास्मि ईश्वरेप्सितवैपरीत्यस्यान्याय्यत्वात् अत स्त्वया चन्तव्या न किन्तु दासीवत्प्रहर्त्तव्येत्यर्थः ॥ १२ ॥

एषा हि लोके सास्त्री कुलस्त्री न भवति या उभयोर्लोकयोः श्लाघ नीयेन पत्या सम्प्रसाद्यते ॥ १३ ॥

किमपि अत्यनुचितं भाषितं तत् चन्तव्यमिति शेषः ॥ १४ ॥

शोक एवमाद्यनुचितव्यवहारप्रवर्त्तक इत्याह,—शोक इत्यादि ॥१५

वनवासाय रामस्य पञ्चरात्रोऽत्र गण्यते।
यः शोकहतहर्षायाः पञ्चवर्षोपमो मम ॥ १७ ॥
तं हि चिन्तयमानायाः शोकोऽयं हृदि वर्धते।
नदीनामिव वेगेन समुद्रसलिलं महत् ॥ १८ ॥
एवं हि कथयन्त्यास्तु कौशल्यायाः शुभं वचः।
मन्दरश्मिरभूत्सूर्यो रजनी चाभ्यवर्त्तत ॥ १९ ॥

सुसूक्ष्मोऽपि शोकः सोढुं न शक्यते किं पुनर्महानिति शेषः ॥ १६ ॥

स्वशोकस्य महत्त्वं दर्शयति। वनेति। पञ्चरात्रइत्यस्य गत इति शेषः। तत्र प्रथमा तमसातीरे द्वितीया गुहपुरे तृतीया गङ्गातीरे चतुर्थी प्रयागे पञ्चमी यमुनातीरे षष्ठी चित्रकूटे। तद्दिने सुमन्त्रस्या-योध्याप्राप्तिः। अतएवाग्रे षष्ठीति दशरथोक्तिः। अथवाद्यदिने सम्पूर्णदिनं स्वनिकटे स्थितत्वेन स्वदेशे तमसातीरे एव स्थितत्वेन तद्दिनमगणय्य कौसल्ययाद्य पञ्चरात्रो गण्यत इत्युक्तम्। राजा तु तमपि गृहीत्वा षष्ठीति वक्ष्यति। यत्तु कतकेन निर्गमनात् सप्तरात्रः सुमन्त्रागमनदिने इत्युक्तं तदज्ञानाद्गङ्गोत्तरणदिनात् तृतीयेऽह्नि चार-प्रतिनिवृत्त्युत्तरं सायाह्ने तद्दिने एव सुमन्त्रप्रस्थानस्य वक्तुं शक्यत्वात्। रामस्य निर्गमदिनाद्दिने षष्ठे इति पूर्वलिखितपाठविरोधाच्च ॥ १७ ॥

नदीनां वेगेन समुद्रसलिलमिवेति उत्प्रेक्षामात्रं न तु तस्य तेन वृद्धिरित्याहुः। परे तु महत्समुद्रसलिलं वेगेन चन्द्रोदयवृद्धिवेगेन नदीनां हृदि तटद्वयान्तरे यथा वर्धत इत्यर्थः। समुद्रगामिनदीनां चन्द्रोदयकालिकसमुद्रवृद्ध्या वृद्धेः कियद्दूरमप्युपलम्भादित्याहुः ॥ १८ ॥

अथ प्रह्लादितो वाक्यैर्देव्या कौशल्यया नृपः ।
शोकेन च समाक्रान्तो निद्राया वशमेयिवान् ॥ २० ॥

इत्यार्षे रामायणे वाल्मीकीये अयोध्याकाण्डे
कौशल्याविलापो नाम द्विषष्टि-
तमः सर्गः ॥ ६२ ॥

शुभं वचः अतिदुःखिताया अपि पत्यनुनयपरत्वाद्वचसः शुभत्वम् ॥ १९ ॥ २० ॥

इति रामाभिरामे श्रीरामीये रामायणतिलके
अयोध्याकाण्डे द्विषष्टितमः सर्गः ॥ ६२ ॥

---

# त्रिषष्टितमः सर्गः ।

प्रतिबुद्धो मुहूर्त्तेन शोकोपहतचेतनः ।
अथ राजा दशरथः स चिन्तामभ्यपद्यत ॥ १ ॥
रामलक्ष्मणयोश्चैव विवासाद्वासवोपमम् ।
आविवेशोपसर्गस्तं तमः सूर्य्यमिवासुरम् ॥ २ ॥
सभार्य्ये हि गते रामे कौशल्यां कोशलेश्वरः ।
विवक्षुरसितापाङ्गीं स्मृत्वा दुष्कृतमात्मनः ॥ ३ ॥
स राजा रजनीं षष्ठीं रामे प्रव्राजिते वनम् ।
अर्द्धरात्रे दशरथः सोऽस्मरद्दुष्कृतं कृतम् ॥ ४ ॥
स राजा पुत्रशोकार्त्तः स्मृत्वा दुष्कृतमात्मनः ।
कौशल्यां पुत्रशोकार्त्तामिदं वचनमब्रवीत् ॥ ५ ॥

प्रतिबुद्ध इति ॥ १ ॥

वासवोपमम् तं दशरथम् । उपसर्गः उपप्लवः शोक इति यावत् । आसुरन्तमः असुरस्य राहोः सम्बन्धि तम आवरणशक्तिः यथा सूर्य-माप्नोति तद्वत् ॥ २ ॥

आत्मनो दुष्कृतं स्मृत्वा असितापाङ्गीं विवक्षुरभवत् ॥ ३ ॥

षष्ठीं रजनीं प्राप्येति शेषः ॥ ४ ॥ ५ ॥

यदाचरति कल्याणि ! शुभं वा यदि वाऽशुभम् ।
तदेव लभते भद्रे ! कर्त्ता कर्मजमात्मनः ॥ ६ ॥
गुरुलाघवमर्थानामारम्भे कर्मणां फलम् ।
दोषं वा यो न जानाति स बाल इति होच्यते ॥ ७ ॥
कश्चिदाम्रवणं छित्वा पलाशांश्च निषिञ्चति ।
पुष्पं दृष्ट्वा फले गृध्नुः स शोचति फलागमे ॥ ८ ॥
अविज्ञाय फलं यो हि कर्मत्वेवानुधावति ।
स शोचेत् फलवेलायां यथा किंशुकसेचकः ॥ ९ ॥

तदेव लभते तल्लभत एवेति च ॥ ६ ॥

अर्थानामैहिकानां कर्मणां पारलौकिकानामारम्भे आरम्भकाले फलं प्रति यो गुरुलाघवं गौरवं लाघवञ्च दोषं वा अदोषं गुणं वा न जानाति। केनचिदल्पेन हत्यादिना महदनिष्टं केनचिन्महतापि यागादिनाल्पफलम्। तथा इदं कर्माल्पदोषं बहुगुणं इदञ्च बहुदोषमल्पगुणमित्येवं न जानाति स बाल इत्युच्यते न स्तनन्धयः ॥ ७ ॥

छित्वा पलाशोपरोधनिवृत्त्यर्थमिति शेषः। पुष्पं दृष्ट्वा पुष्पमहत्त्वं दृष्ट्वा फलमहत्त्वमनुमीयेत्यर्थः। गृध्नुः लिप्सुः शोचति स्वतर्कितफलाभावात् ॥ ८ ॥

दृष्टान्तं दार्ष्टान्तिके योजयति। अविज्ञायेति फलं क्रियमाणकर्मणो भावि फलं अविज्ञायाविचार्य कर्मत्वेव कर्मैव तु लौकिकं वैदिकं वा अनुधावति अनुतिष्ठति। शोचेत्तप्येदित्यर्थः ॥ ९ ॥

सोऽहमाम्रवणं छित्वा पलाशांश्च न्यषेचयम् ।
रामं फलागमे त्यक्त्वा पश्चाच्छोचामि दुर्मतिः ॥ १० ॥
लब्धशब्देन कौशल्ये ! कुमारेण धनुष्मता ।
कुमारः शब्दवेधीति मया पापमिदं कृतम् ॥ ११ ॥
तदिदं मेऽनुसंप्राप्तं देवि ! दुःखं स्वयं कृतम् ।
संमोहादिह बालेन यथा स्याद्भक्षितं विषम् ॥ १२ ॥
यथान्यः पुरुषैः कश्चित् पलाशैर्मोहितो भवेत् ।
एवं मयाप्यविज्ञातं शब्दवेध्यमिदं फलम् ॥ १३ ॥

अस्तु प्रकृते किं तत्राह,—सोऽहमिति । फलागमे रामकृतस्वोत्तरक्रियया लभ्यपारलौकिकफलप्राप्तिसमये रामाभिषेकजसुखप्राप्तिसमये वा ॥ १० ॥

यदाचरतीत्याद्युक्तविषयमाह,—लब्धेति । कुमारो राजकुमारः शब्दवेधीति लब्धः शब्दो येन तादृशेन मया शब्दवेधीत्येवं लब्धकीर्त्तिनेति यावत् । कुमारेण जीवत्पितृकेण इदं वक्ष्यमाणम् ॥ ११ ॥

तदिदं तत्फलमिदं दुःखम् । अज्ञानात्कृतकर्मणः कथमेवं फलं तत्राह,—संमोहादिति । अज्ञानेनापि भक्षितं विषं यथा बालमपि हन्ति तद्वदित्यर्थः ॥ १२ ॥

शब्दवेध्यं शब्दवेधित्वमित्यथ आर्षम् । इदं फलं एवं दुष्टफलमिति मयाप्यविज्ञातम्, अयं भावः यथान्यः प्राकृतः पुरुषः पलाशैः पलाशपुष्पैर्मोहितस्तत्फलं न जानाति तथाहमपि शब्दवेधित्वं लोकपूज्यत्वं ज्ञात्वा तत्फलमेवं क्रूरमिति न ज्ञातवानिति । कतकस्तु यथा पलाश-

देव्यनूढा त्वमभवो युवराजो भवाम्यहम्।
ततः प्रावृडनुप्राप्ता मम कामविवर्द्धिनी॥ १४॥
अपास्य हि रसान् भौमांस्तप्त्वा च जगदंशुभिः।
परेताचरितां भीमां रविराचरते दिशम्॥ १५॥
उष्णमन्तर्दधे सद्यः स्निग्धा ददृशिरे घनाः।
ततो जहृषिरे सर्वे भेकसारङ्गबर्हिणः॥ १६॥
क्लिन्नपक्षोत्तराः स्नाताः कृच्छ्रादिव पतत्त्रिणः।
वृष्टिवातावधूताग्रान् पादपानभिपेदिरे॥ १७॥

पुष्पैरन्धो मोहितो भवति तथाहं कैकेयीवाक्यैरिति शेषः। यथाज्ञानकृतस्यापि विषपानवदावश्यकं फलमित्युपसंहरति एवमिति। शब्दवेधित्वरूपं सामर्थ्यं प्राप्य यत्कर्माविज्ञातं सत्कृतं तस्य कर्मण इदं फलं कैकेयीवाक्यकृतो मोह इत्यर्थ इत्याह॥ १३॥

तादृशदुष्कर्मप्राप्तिःकदेत्यत्राह,—देवीति॥ १४॥

प्रावृषं वर्णयति। अपास्येति। भौमान् रसानपास्य निरस्य शोषयित्वेति यावत्। तेनैव हेतुना जगत्तप्त्वा परेताचरितां अतएव भीमां दिशं दक्षिणां दिशम् आचरते गच्छति। आविशत इति पाठान्तरम्। उपास्येति पाठेऽपि सेवित्वेत्यर्थद्वारा शोषयित्वेत्यत्रैव पर्यवसानं बोध्यम्॥ १५॥

सारङ्गा हरिणाश्चातका वा॥ १६॥

क्लिन्नाः पक्षोत्तराः पक्षोपरिभागा येषाम्। अतएव कृच्छ्रात कृच्छ्राद्याचरणनिमित्तं स्नाता इव वृष्टियुक्तवातेन कम्पिताग्रान्॥ १७॥

पतितेनाम्भसाच्छन्नः पतमानः स्वापकृतं मया ।
आबभौ मत्तसारङ्गस्तोयराशिरिवोत्थितम् ॥ १८ ॥
पाण्डुरारुणवर्णानि स्रोतांसि ——
सुस्रुवुर्गिरिधातुभ्यः [illegible]ने भुजङ्गवत् ॥ १९ ॥
तस्मिन्नतिसुखे का[illegible]निपुमान् रथी ।
व्यायामकृतसङ्कल्प[illegible]न्वगान्नदी ॥ २० ॥
निपाने महिषं रा[illegible]भ्यागतं मृगम् ।
अन्यद्वा श्वापदं कि[illegible]सुरजितेन्द्रियः ॥ २१ ॥
अथान्धकारे त्वश्रौषं [illegible]स्य पूर्य्यतः ।
अचक्षुर्विषये घोषं वा[illegible] नर्दतः ॥ २२ ॥
ततोऽहं शरमुद्धृत्य द[illegible]विषोपमम् ।

पतमानेन पतता, मत्ताः सा[illegible] ताट्शोऽचलस्तोयराशि-रिवाबभौ ॥ १८ ॥

गिरिधातुभ्यः धातुरूपहेतुभ[illegible]चित् पाण्डुरधातुसंयोगात् पाण्डुराणि । क्वचिदरुणधातुसंयोगा[illegible] । क्वचित् सभस्मानि भस्मसंबन्धात् भुजङ्गवत् कुटिलानीति ॥ १९ ॥ [illegible]

व्यायामो मृगयाविहारः ॥ [illegible]

जिघांसुरन्वगामित्यन्वयः ॥ [illegible]तः मद्वधेन तयोर्वधस्य सिद्धत्वा-पूर्य्यतः शब्दन्तत्वमाधम् ॥ २२ ॥

शब्दं प्रति शब्दं लक्ष्यं कृ[illegible]नुकाङ्क्षिणः धर्मप्रतीक्षाशीलस्य

७

को वधेन ममार्थी स्यात् किञ्चास्यापकृतं मया ।
एवं निष्फलमारब्धं केवलानर्थसंहितम् ॥ २९ ॥
(न क्वचित् साधु मन्येत यथैव गुरुतल्पगम् ।
नेमं तथानुशोचामि जीवितक्षयमात्मनः ॥ ३० ॥)
मातरं पितरञ्चोभौ अनुशोचामि मद्वधे ।
तदेतन्मिथुनं वृद्धं चिरकालभृतं मया ॥ ३१ ॥
मयि पञ्चत्वमापन्ने कां वृत्तिं वर्त्तयिष्यति ।
वृद्धौ च माता पितरावहञ्चैकेषुणा हतः ॥ ३२ ॥
केन स्म निहताः सर्वे सुबालेनाकृतात्मना ।
तां गिरं करुणां श्रुत्वा मम धर्मानुकाङ्क्षिणः ॥ ३३ ॥

जटाभारेत्यादिना हन्तुरपि लाभाभावः सूचितः ॥ २८ ॥

मम वधेन कः पुमानर्थी । मनुष्यमांसेन न कस्यापि प्रयोजनमिति व्यर्थ एव मद्वध इति भावः । परलोकनाशकत्वात्केवलानर्थसंहितम् इह लोके च फलरहितम् ॥ २९ ॥

क्वचित् इह लोके परत्र ना । यथा गुरुतल्पगं न साधु मन्यन्ते एवमेनं न मन्येत कोऽपीत्यर्थः । [illegible]त्मन इमं जीवितक्षयं नानुशोचामि ॥ ३० ॥ ३१ ॥

एकेनेषुणा वृद्धौ हतौ । अह[illegible]तः मद्वधेन तयोर्वधस्य सिद्धत्वादित्याशयः ॥ ३२ ॥

अकृतात्मना अजितेन्द्रियेण । धर्मानुकाङ्क्षिणः धर्मप्रतीक्षाशीलस्य

७

करोभ्यां सशरश्चापं व्यथितस्यापतद्भुवि।
तस्याहं करुणं श्रुत्वा ऋषेर्विलपतो निशि॥ ३४॥
सम्भ्रान्तः शोकवेगेन भृशमासं विचेतनः।
तं देशमहमागम्य दीनसत्त्वः सुदुर्मनाः॥ ३५॥
अपश्यमिषुणा तीरे सरय्वास्तापसं हतम्।
अवकीर्णजटाभारं प्रविद्धकलशोदकम्॥ ३६॥
पांसुशोणितदिग्धाङ्गं शयानं शरपीडितम्।
स मामुद्वीक्ष्य नेत्राभ्यां त्रस्तमस्वस्थचेतनम्॥ ३७॥
इत्युवाच वचः क्रूरं दिधक्षन्निव तेजसा।
किन्तवापकृतं राजन्वने निवसता मया॥ ३८॥
जिहीर्षुरम्भो गुर्वर्थं यदहं ताडितस्त्वया।
एकेन खलु बाणेन मर्मण्यभिहते मयि॥ ३९॥
द्वावन्धौ निहतौ वृद्धौ माता जनयिता च मे।

मम कराभ्यामित्यन्वयः। करुणं कं जनक वचः श्रुत्वा विलपतः। लालप्यत इति पाठे तु यङन्तात् आर्षः॥ ३३॥ ३४॥ ३५॥
प्रविद्धं ध्वस्तं पर्यस्तं वा॥ ३६॥
त्रस्तं नेत्राभ्यामुद्वीक्ष्य॥ ३७।३८॥ * ३९॥

---

* जिहीर्षुः आहर्त्तुमिच्छुः अर्थं माता पितृ निमित्तम्।

तौ नूनं दुर्बलावन्धौ मत्प्रतीचौ पिपासितौ ॥ ४० ॥
चिरमाशां कृतां कष्टां तृष्णां सन्धारयिष्यतः ।
न नूनं तपसो वास्ति फलयोगः श्रुतस्य वा ॥ ४१ ॥
पिता यन्मां न जानीते शयानं पतितं भुवि ।
जानन्नपि च किं कुर्य्यादशक्तश्चापरिक्रमः ॥ ४२ ॥
भिद्यमानमिवाशक्तस्त्रातुमन्यो नगो नगम् ।
पितुस्त्वमेव मे गत्वा शीघ्रमाचक्ष्व राघव ! ॥ ४३ ॥
न त्वामनुदहेत् क्रुद्धो वनमग्निरिवैधितः * ।
इयमेकपदी राजन् ! यतो मे पितुराश्रमः ॥ ४४ ॥

जनयिता पिता। नूनं निश्चयेन। मत्प्रतीचौ कृतामाशां पुत्रो जलमानेष्यतीत्येवं रूपां ममागमनात् तृष्णां पिपासाञ्च चिरं धारयिष्यतः तपसः श्रुतस्य वेत्यत्र मामकस्य पित्र्यस्य चेति शेषः। फलयोगः फलसम्बन्धो नास्ति ॥ ४० ॥ ४१ ॥

अपरिक्रमः सञ्चाराद्यसमोऽधत्वात् ॥ ४२ ॥

अशक्तस्तद्वत्वात्। वातादिना भिद्यमानं नगं वृक्षम्। अन्यो नग इव मां त्रातुमशक्तस्त्वमेव मे पितुराचक्ष्व ॥ ४३ ॥

एधितो वर्धितो वह्निर्वना त्वां न दहेत् मादहत्वित्यर्थः।

---

* "वनमग्निरिवोद्धतः" इति क्वचित् पाठः ।

तं प्रसादय गत्वा त्वं न त्वां स कुपितः शपेत्।
विशल्यं कुरु मां राजन्! मर्म मे निशितः शरः ॥ ४५ ॥
रुणद्धि मृदु सोत्सेधं तीरमम्बुरयो यथा।
सशल्यः क्लिश्यते प्राणैर्विशल्यो विनशिष्यति ॥ ४६ ॥
इति मामाविशच्चिन्ता तस्य शल्यापकर्षणे।
दुःखितस्य च दीनस्य मम शोकातुरस्य च ॥ ४७ ॥
लक्षयामास स ऋषिश्चिन्तां मुनिसुतस्तदा।
ताम्यमानं स मां कृच्छ्रादुवाच परमार्थवि[illegible]त् ॥ ४८ ॥
सीदमानो विवृत्ताङ्गो चेष्टमानो गतः क्षयम्।

एकपदी सूक्ष्ममार्गः यतः यया एकपद्या मे पितुराश्रमः प्राप्यते सेयमेकपदी ॥ ४४ ॥

तया गत्वा तथा प्रसादय यथा त्वां न शपेत्। मां विशल्यं कुरु ते शर मे मर्म ॥ ४५ ॥

रुणद्धि पीड़यति। मृदु सिकताप्रायम्। सोत्सेधमुच्छ्रायवत्तीरम्। अम्बुरयो नदीवेग इव ॥ ४६ ॥ ४७ ॥

मम चिन्तां लक्षयामासेत्यन्वयः। एवं चिन्तया शल्यमोद्धर[illegible] ज्ञातवान् परमार्थः शास्त्र[illegible] परमार्त्तवदिति पाठे परमार्त्तः सन्नित्यर्थः ॥ ४८ ॥ ३९

क्षयं शक्तिक्षयं गतः प्राप्त[illegible]वृत्ताङ्गः परावृत्तनेत्रः। अचेष्ट-

संस्तभ्य शोकं धैर्य्येण स्थिरचित्तो भवाम्यहम् ॥ ४९ ॥
ब्रह्महत्याकृतं तापं हृदयादपनीयताम् ।
न द्विजातिरहं राजन्! मा भूत्ते मनसो व्यथा ॥ ५० ॥
शूद्रायामस्मि वैश्येन जातो नरवराधिप! ।
इतीव वदतः कृच्छ्राद्बाणाभिहतमर्मणः ॥ ५१ ॥
विघूर्णतो विचेष्टस्य वेपमानस्य भूतले ।
तस्य त्वाताम्यमानस्य तं बाणमहमुद्धरम् ॥ ५२ ॥
स मामुद्वीक्ष्य सन्त्रस्तो जहौ प्राणांस्तपोधनः ॥ ५३ ॥

जलार्द्रगात्रन्तु विलप्य कृच्छ्रं
मर्मव्रणं सन्ततमुच्छ्वसन्तम् ।

मानः हस्तपादादि चेष्टारहितः । धैर्य्येण शोकं संस्तभ्याहं स्थिरचित्तो भवामि मम चित्ते मोहोनास्तीत्यर्थः । अतो यद्वदामि तत् शृणु इत्यर्थः । शोकं ब्रह्महत्याभिजं संस्तभ्य त्यक्त्वा अधुना स्थिरचित्तो भवेति पाठान्तरेऽर्थः ॥ ४९ ॥

अतो ब्रह्महत्याकृतं तापं ॥ अर्धर्चादिस्ताप शब्दः ॥ ५० ॥

वैश्येन शूद्रायां जातः करणः कृतीव इत्येवं जातीयकम् ॥ ५१ ॥

आताम्यमानस्य ताम्यतः व्यथया सङ्कुचिताङ्गस्येति यावत् । उद्धरम् अडभाव आर्षः ॥ ५२ ॥

सन्त्रस्तः प्राणहरत्वात् । तपे स्तत्कुमारः ॥ ५३ ॥

कृच्छ्रं मर्मव्रणं प्राप्य विलप्य च सन्ततमुच्छ्वसन्तं सरयूतीरे

ततः स्मरन्तीं तमहं प्रयानं
समीक्ष्य भद्रे ! सुभृशं विषण्णः ॥ ५४ ॥

इत्यार्षे रामायणे वाल्मीकीये अयोध्याकाण्डे
अन्धमुनिपुत्रवधवर्णनं नाम त्रिषष्टि-
तमः सर्गः ॥ ६३ ॥

स्मृत्वा प्रयानं वीक्ष्याहं भृशं विषण्णो भवमिति कौशल्यां प्रति उक्तानु-
वादः ॥ ५४ ॥

इति रामाभिरामे श्रीरामीये रामायणतिलके
अयोध्याकाण्डे त्रिषष्टितमः सर्गः ॥ ६३ ॥

## चतुःषष्टितमः सर्गः ।

वधमप्रतिरूपं तु महर्षेस्तस्य राघवः ।
विलपन्नेव धर्मात्मा कौसल्यामिदमब्रवीत् ॥ १ ॥
तदज्ञानात् महत् पापं कृत्वा संकुलितेन्द्रियः ।
एकस्त्वचिन्तयं बुद्ध्या कथं नु सुकृतं भवेत् ॥ २ ॥
ततस्तं घटमादाय पूर्णं परमवारिणा ।
आश्रमं तमहं प्राप्य यथाख्यातपथं गतः ॥ ३ ॥
तत्राहं दुर्बलौ वृद्धौ दीनावपरिणायकौ ।
अपश्यन्तस्य पितरौ लूनपक्षाविव द्विजौ ॥ ४ ॥
तन्निमित्ताभिरासीनौ कथाभिरपरिक्रमौ ।

वधमिति । राघवो दशरथः वधं स्मृत्वा पुत्रं प्रति विलपन्नेव कौसल्यामिदमब्रवीदवदत् ॥ १ ॥

सङ्कुलितेन्द्रियः क्षुभितेन्द्रियः कथं नु सुकृतं भवेदिति अचिन्तयम् ॥ २ ॥

१६

ततः एवं चिन्तानन्तरम् । यथाख्यातपथं मुनिकुमारोपदिष्टं गं प्राप्याहम् आश्रमं गतः ॥३॥

तत्र आश्रमे अपरिणायकौ सञ्चारयितृपुरुषान्तररहितौ ॥ ४ ॥

तामासां मत्कृते हीनौ उपासीनावनाथवत् ॥ ५ ॥
शोकोपहतचित्तश्च भयसन्त्रस्तचेतनः ।
तच्चाश्रमपदं गत्वा भूयः शोकमहं गतः ॥ ६ ॥
पदशब्दन्तु मे श्रुत्वा मुनिर्वाक्यमभाषत ।
किञ्चिरायसि मे पुत्र ! पानीयं क्षिप्रमानय ॥ ७ ॥
यन्निमित्तमिदं तात ! सलिले क्रीड़ितं त्वया ।
उत्कण्ठिता ते मातेयं प्रविश क्षिप्रमाश्रमम् ॥ ८ ॥
यद्व्यलीककृतं पुत्र ! माता ते यदि वा मया ।
न तन्मनसि कर्त्तव्यं त्वया तात ! यशस्विना ॥ ९ ॥

तन्निमित्ताभिः पुत्रनिमित्ताभिः कथाभिः हेतुभिरपरिश्रमावासीनौ पुत्रो जलमानेष्यतीत्येवं रूपां तामाशाम् उपासीनौ सेवमानौ मत्कृते मतकृतदुष्कर्मनिमित्तं तामाशां प्रति हीनावपि तां सेवमानावपश्यमिति पूर्वेणान्वयः। उदासीनाविति पाठेऽनाथवदुदासीनौ दुःखिताविव ॥५॥

तौ दृष्ट्वा शोकोपहतचित्त इत्यादि। भूयः अधिकम् ॥ ६ ॥

चिरायसि विलम्बयसि ॥ ७ ॥

यन्निमित्तं येन हेतुना एतावत्कालं त्वया सलिले क्रीड़ितम्। तेन ते माता उत्कण्ठिता सशोकस्मरणवत्यभूत्। यन्न दत्तमिति पाठे यत्त्वया शीघ्रं जलमानयेति न दत्तं। तत्त्वया सलिले क्रीड़ितं तेन ते मातोत्कण्ठितेत्यन्वयः ॥ ८ ॥

व्यलीकमप्रियम् ॥ ९ ॥

त्वं गतिस्त्वगतीनाञ्च चक्षुस्त्वं हीनचक्षुषाम् ।
समासक्तास्त्वयि प्राणाः कथं त्वं नाभिभाषसे ॥ १० ॥
मुनिमव्यक्तया वाचा तमहं सज्जमानया ।
हीनव्यञ्जनया प्रेक्ष्य भीतचित्त इवाब्रुवम् ॥ ११ ॥
मनसः कर्म्मचेष्टाभिरभिसंस्तभ्य वाग्बलम् ।
आचचक्षे त्वहं तस्मै पुत्रव्यसनजं भयम् ॥ १२ ॥
क्षत्रियोऽहं दशरथो नाहं पुत्रो महात्मनः ।
सज्जनावमतं दुःखमिदं प्राप्तं स्वकर्मजम् ॥ १३ ॥
भगवंश्चापहस्तोऽहं सरयूतीरमागतः ।
जिघांसुः श्वापदं किञ्चिन्निपाने वागतं गजम् ॥ १४ ॥

अगतीनां त्वं गतिः। हीनचक्षुषां त्वं चक्षुः। अतो यन्न भाषसे तत्कथं कस्मात् ॥ १० ॥

सुतपदशब्दतइव सुतधिया सज्जमानया गद्गदया अतएव हीनव्यंजनया व्यञ्जनाक्षरव्यक्तिरहितया अतएवाव्यक्तया वाचा वदन्तं मुनिं प्रेक्ष्य भीतचित्त इवाहं तादृश्यैव वाचाऽब्रुवमित्यन्वयः ॥ ११ ॥

मनस इति मनसः कर्म भीतिरूपं वाग्बलमाश्रित्य। चेष्टाभिरभीतिसाध्यव्यवहारैरभि अभितः संस्तभ्य भीताकारतामाच्छाद्य अभीत इवाचचक्षे ॥ १२ ॥

महात्मनस्तव पुत्रो नाहमिति योजना। सज्जनावमतं सज्जनगर्हितं मया भवता चेति शेषः ॥ १३ ॥

ततः श्रुतो मया शब्दो जले कुम्भस्य पूर्य्यतः ।
द्विपोऽयमिति मत्वा हि बाणेनाभिहतो मया ॥ १५ ॥
गत्वा तस्यास्ततस्तीरमपश्यमिषुणा हृदि ।
विनिर्भिन्नं गतप्राणं शयानं भुवि तापसम् ॥ १६ ॥
ततस्तस्यैव वचनादुपेत्य परितप्यतः ।
स मया सहसा बाण उद्धृतो मर्मतस्तदा ॥ १७ ॥
स चोद्धृतेन बाणेन सहसा स्वर्गमास्थितः ।
भगवन्तावुभौ शोचन् वृद्धाविति विलप्य च ॥ १८ ॥
अज्ञानाद्भवतः पुत्रः सहसाभिहतो मया ।
शेषमेवं गते यत् स्यात् तत् प्रसीदतु मे मुनिः ॥ १९ ॥

तदेवाह,—भगवन्निति । निपाने आगतं श्वापदं व्याघ्रादिगजं वा जिघांसुरित्यन्वयः ॥ १४ ॥

अयं शब्दहेतुः पदार्थ इत्यर्थः । द्विप इति मत्वाहं स्थितस्ततो मया स बाणेन हतः ॥ १५ ॥

गतप्राणं गतकल्पप्राणं ॥ १६ ॥

तस्यैव त्वत्पुत्रस्यैव वचनाद्बाण उद्धृत इत्यन्वयः ॥ १७ ॥

अन्धौ मातापितरौ कोऽतः परं रक्षिष्यतीति भगवन्तौ शोचन् विलप्य च स्वर्गमास्थित इत्यन्वयः ॥ १८ ॥

युष्मदत्तके पुत्रे एवं गते सति शेषं कर्त्तव्यं यत् स्यात् तत्तत्र मह्यं

स तच्छ्रुत्वा वचः क्रूरं मयोक्तमघशंसिना ।
नाशकत्तीव्रमायासं स कर्तुं भगवानृषिः ॥ २० ॥
स वाष्पपूर्णवदनो निश्वसञ्छोकमूर्च्छितः ।
मामुवाच महातेजाः कृताञ्जलिमुपस्थितम् ॥ २१ ॥
यद्येतदशुभं कर्म न स्म मे कथयेः स्वयम् ।
फलेन्मूर्धा स्म ते राजन् ! सद्यः शतसहस्रधा ॥ २२ ॥
क्षत्रियेण बधो राजन् ! वानप्रस्थे विशेषतः ।
ज्ञानपूर्वं कृतः स्थानाच्च्यावयेदपि वज्रिणम् ॥ २३ ॥
सप्तधा तु भवे*न्मूर्धा मुनौ तपसि तिष्ठति ।
ज्ञानाद्विसृजतः शस्त्रं तादृशे ब्रह्मवादिनि ॥ २४ ॥

भगवन् प्रसीदतु तदुद्दिश्य मामाज्ञापयत्वित्यन्वयः । युष्मद्रक्षणमपि मया कर्तुं शक्यमिति भावः ॥ १९ ॥

एवमज्ञानकृतत्वबोधनात् शेषायुःपर्य्यन्तं रक्षणस्यापि कर्त्तव्यताबोधनाच्च मां दैवान्न भस्मसादकरोदित्याह,—स इति ; तीव्रमायासं भस्मीभावफलकशापदानम् ॥ २० ॥ २१ ॥

स्मशब्दौ वाक्यालङ्कारे । फलेत् विशीर्य्येत ॥ २२ ॥

ज्ञानपूर्वत्वे सद्योऽनर्थप्राप्तिः स्यादित्याह,—क्षत्रियेणेति । विशेषतः अन्धत्वानाथत्वादेः ज्ञानपूर्वं कृतो यद्ययं वधः स्यात्तदा तच्छ्रवणजो

* "फलेत्" इति वा पाठः ।

अज्ञानाद्धि कृतं यस्मादिदं ते तेन जीवसे।
अपि ह्यद्य कुलं न स्याद्राघवाणां कुतो भवान्॥ २५॥
नय नौ नृप! तं देशमिति माञ्चाभ्यभाषत।
अद्य तं द्रष्टुमिच्छावः पुत्रं पश्चिमदर्शनम्॥ २६॥
रुधिरेणावसिक्ताङ्गं प्रकीर्णाजिनवाससम्।
शयानं भुवि निःसंज्ञं धर्मराजवशं गतम्॥ २७॥
अथाहमेकस्तं देशं नीत्वा तौ भृशदुःखितौ।
अस्पर्शयमहं पुत्रं तं मुनिं सह भार्यया॥ २८॥
तौ पुत्रमात्मनः स्पृष्ट्वा तमासाद्य तपस्विनौ।

मत्कोपो वज्रिणमपि स्थानात् च्यावयेत् पातयेत् किमु त्वादृशमित्यर्थः ॥ २३॥

पुत्रकोपेनापि तत्कालनाशाभावो अज्ञानादेवेत्याह,—समधातु इति। स्वापेक्षया तपोन्यूनत्वात् समधेति। ब्रह्मवादिनि ब्रह्मवादिसमे। ब्रह्मचारिणीति पाठान्तरम्॥ २४॥

जीवसे जीवसि ते तव यस्मादिदं कर्माज्ञानात् कृतं तेन जीवसि। हिः पादपूरणार्थः। यदि ज्ञानपूर्वं कृतमिदं स्यात् तदा राघवाणां कुलमेव न स्यात् कुतो भवान् जीवेदिति शेषः॥ २५॥

पश्चिमदर्शनमन्तदर्शनं द्रष्टुमिच्छावोतस्तं देशं नयेति मामभाषत ॥ २६॥ २७॥

अहं तं देशं नीत्वा तं पुत्रमस्पर्शयम्॥ २८॥

निपेततुः शरीरेऽस्य पिता चैनमुवाच ह ॥ २९ ॥
नाभिवादयसे माद्य न च मामभिभाषसे ।
किञ्च शेषे तु भूमौ त्वं वत्स ! किं कुपितो ह्यसि ॥ ३० ॥
न त्वहं तेऽप्रियः पुत्र ! मातरं पश्य धार्मिकीम् ।
किञ्च नालिङ्गसे पुत्र ! सुकुमारवचो वद ॥ ३१ ॥
कस्य वा पररात्रेऽहं श्रोष्यामि हृदयङ्गमम् ।
अधीयानस्य मधुरं शास्त्रं वान्यद्विशेषतः ॥ ३२ ॥
को मां सन्ध्यामुपास्यैव स्नात्वा हुतहुताशनः ।
श्लाघयिष्यत्युपासीनः पुत्रशोकभयार्दितम् ॥ ३३ ॥

तं तदवस्थमात्मनः पुत्रमासाद्य स्पृष्ट्वाऽस्य शरीरे निपेततुः । पितैन-मुवाच च ॥ २९ ॥

कुपितो जातकोपः ॥ ३० ॥

न त्वहमिति पाठः । अप्रिय इति छेद इति कतकः । न त्विहमिति पाठः अहं यदि तव प्रियो न तथापि मातरं पश्येति सम्बन्ध इति तीर्थः ॥ ३१ ॥

अन्यदा पुराणम् । वैश्याच्छूद्रायां जातत्वेन संकरत्वाद्वेदप्रसङ्गो नोक्तः ॥ ३२ ॥

सन्ध्यामिति । तत्क्रमागतेति शेषः । हुतहुताशनः नमस्कारेण मन्त्रेण पञ्चयज्ञान् समापयेदित्युक्तरीत्या श्लाघयिष्यति । श्लाघनमुद्वर्तनं तत्पूर्वकं स्नापयिष्यति । नाप्सु श्लाघमानः स्नायादिति ब्रह्मचारिप्रकर-णस्थापस्तम्बस्मृतौ तथा व्याख्यानात् ॥ ३३ ॥

कन्दमूलफलं हृत्वा यो मां प्रियमिवातिथिम्।
भोजयिष्यत्यकर्मण्यमप्रग्रहमनायकम् ॥ ३४ ॥
इमामन्धाञ्च वृद्धाञ्च मातरं ते तपस्विनीम्।
कथं पुत्र! भरिष्यामि कृपणां पुत्रगर्धिनीम् ॥ ३५ ॥
तिष्ठ मा मागमः पुत्र! यमस्य सदनं प्रति।
श्वो मया सह गन्तासि जनन्या च समेधितः ॥ ३६ ॥
उभावपि च शोकार्त्तावनाथौ कृपणौ वने।
क्षिप्रमेव गमिष्यावस्त्वया हीनौ यमक्षयम् ॥ ३७ ॥
ततो वैवस्वतं दृष्ट्वा तं प्रवक्ष्यामि भारतीम्।
क्षमतां धर्मराजो मे बिभृयात् पितरावयम् ॥ ३८ ॥

कन्दं जलोद्भवपद्मादीनाम्। मूलं स्थलोद्भवानामिति तीर्थः। अकर्मण्यं कर्मानुष्ठानाक्षमम्। अप्रग्रहं नीवारादिसंग्रहरहितम्। अनायकं पालकहीनमित्यर्थं तीर्थः। कर्मणि साधुकर्मण्यमित्यतिथिविशेषणं भोजयिष्यति कर्मण्यमित्येव च पाठः। अप्रग्रहं यष्टिग्रहणपूर्वकं मार्गप्रदर्शकरहितम् अतएवानायकं स्नानादिकर्मप्रवर्त्तकहीनमित्यर्थं कतकः ॥३४॥

भरिष्यामि स्वयमन्ध इति शेषः ॥ ३५ ॥

मामेत्याबाधे द्विर्वचनं मामुद्दिश्य तिष्ठ मा गमः मा गच्छेति वा समेधितः ॥ ३६ ॥

यमक्षयं यमगृहम् ॥ ३७ ॥

यमगृहगमने स्वप्रयोजनमाह,— तत इति। धर्मराजो मे क्षमताम्

दातुमर्हति धर्मात्मा लोकपालो महायशाः ।
ईदृशस्य ममाक्षय्यामेकामभयदक्षिणाम् ॥ ३९ ॥
अपापोऽसि यथा पुत्र ! निहतः पापकर्मणा ।
तेन सत्येन गच्छाशु ये लोकाः शस्त्रयोधिनाम् ॥ ४० ॥
यां हि शूरा गतिं यान्ति संग्रामेष्वनिवर्त्तिनः ।
हतास्त्वभिमुखाः पुत्र ! गतिं तां परमां व्रज ॥ ४१ ॥

पुत्रवियोगजनकं पूर्वकृतापराधम् । अयं मे पुत्रः पितरौ बिभ्रयात् पालयतु ॥ ३८ ॥

ननु त्वया याचितोऽपि कथमेतल्लभ्यतेऽत आह,—दातुमिति । लोकपालो यमः ईदृशस्य अनाथस्य अभयदक्षिणां पुत्रदानेन । तदभावेन महाभयप्राप्तेरिति भावः । कतकस्तु यतोऽयं मे पुत्रः पितरौ बिभ्रयात् अतोऽस्य धर्मराजो भवान् क्षमताम् । शस्त्रघातजन्यदुर्मरणजनकं पापं क्षमतामेवं मया प्रार्थितो दुर्मरणजं दुर्गतिं दूरीकृत्य त्वां स्वर्गं नयिष्यति ईदृशस्य तपस्विनो ममैकां पुत्रतारणरूपाभयदक्षिणां लोकपालत्वात् दातुमर्हतीत्यर्थमाह ॥ ३९ ॥

अथ मृतस्य पुनर्लाभमशक्यं मत्वा विश्वामित्र इव त्रिशङ्कुं स्वमहिम्ना सुतं स्वर्गं प्रापयति,—अपापोऽसीत्यादि । अपापस्त्वं पुत्र ! पापकर्मणाऽनेन क्षत्रियेण यथानिहतोऽसि तेन हननेन प्रायश्चित्तरूपेण शुद्धः सत्येन मदीयेनास्त्रयोधिनां शूराणां लोकान् गच्छेत्यर्थः । यद्वा हे पुत्र ! पापेन कर्मणा शस्त्रबधलक्षणेन निहतो यथा यद्यपि त्वमसि तथापि तेन मदीयेन सत्येनापापो भूत्वाऽस्त्रयोधिनां लोकान् गच्छ ॥ ४० ॥

यां गतिं सगरः शैब्यो दिलीपो जनमेजयः।
नहुषो धुन्धुमारश्च प्राप्तास्तां गच्छ पुत्रक ! ॥ ४२ ॥
या गतिः सर्वभूतानां स्वाध्यायात्तपसश्च या।
भूमिदस्याहिताग्नेश्च एकपत्नीव्रतस्य च ॥ ४३ ॥
गोसहस्रप्रदातॄणां गुरुसेवाभृतामपि।
देहन्यासकृतां या च तां गतिं गच्छ पुत्रक ! ॥ ४४ ॥
न हि त्वस्मिन् कुले जातो गच्छत्यकुशलां गतिम्।
स तु यास्यति येन त्वं निहतो मम बान्धवः ॥ ४५ ॥
एवं स कृपणं तत्र पर्य्यदेवयतासकृत्।
ततोऽस्मै कर्तुमुदकं प्रवृत्तः सह भार्य्यया ॥ ४६ ॥
स तु दिव्येन रूपेण मुनिपुत्रः स्वकर्मभिः।
स्वर्गमध्यारुहत् क्षिप्रं शक्रेण सह धर्मवित् ॥ ४७ ॥

उक्तमेवार्थं पुनराह ॥ ४१ ॥

तमेवार्थं विशेषत आह,—यां गतिमिति ॥ ४२ ॥

सर्वभूतानां गतिराश्रयो ब्रह्म। एकपत्नीव्रता रामादयः ॥ ४३ ॥

गुरुसेवाभृतः तत्सेवाकर्तारः। देहन्यासकृतः महाप्रस्थानादिना परलोकार्थं तनुत्यजः ॥ ४४ ॥

अस्मिन् कुले मदीये नित्यतपस्विकुले। यास्यति अकुशलां गतिमित्यनुकर्षः ॥ ४५ ॥

उदकं संस्कारपूर्वकम् ॥ ४६ ॥

आबभाषे च तौ वृद्धौ शक्रेण सह तापसः ।
आश्वस्य च मुहूर्त्तन्तु पितरौ वाक्यमब्रवीत् ॥ ४८ ॥
स्थानमस्मि महत् प्राप्तो भवतोः परिचारणात् ।
भवन्तावपि च क्षिप्रं मम मूलमुपैष्यथः ॥ ४९ ॥
एवमुक्त्वा तु दिव्येन विमानेन वपुष्मता ।
आरुरोह दिवं क्षिप्रं मुनिपुत्रो जितेन्द्रियः ॥ ५० ॥
स कृत्वाथोदकं तूर्णं तापसः सह भार्य्यया ।
मामुवाच महातेजाः कृताञ्जलिमुपस्थितम् ॥ ५१ ॥
अद्यैव जहि मां राजन् ! मरणे नास्ति मे व्यथा ।
यः शरेणैकपुत्रं मां त्वमकार्षीरपुत्रकम् ॥ ५२ ॥
त्वयापि च यदज्ञानान्निहतो मे स बालकः ।

स्वर्गमध्यारुहत् तेन सत्येनाशु गच्छेति वचनानन्तरमेवेति शेषः । शक्रेण सहेत्यनेन मुनिपुत्रं स्वर्गं नेतुं शक्रः समागत इति ध्वनितम् ॥४७॥

आरुह्य पुनः शक्रेण सहागत्याबभाषे इत्यन्वयः । अस्यैव प्रपञ्च आश्वस्येत्यादि । अत्र वक्तुः शोकग्रस्ततयाबभाषेऽब्रवीदिति पौनरुक्त्यं न दोषाय ॥ ४८ ॥

भवतोः इति । अनेन माता पितृसेवाधर्मान्तराभावेऽपि सैवेन्द्र-सालोक्यदेति ध्वनितम् । मूलं समीपम् ॥ ४९ ॥

वपुष्मता पुष्पकादिवत् प्रशस्ताकारेण ॥ ५० ॥ ५१ ॥

जहि प्राणैर्वियोजय ॥ ५२ ॥

तेन त्वामपि शप्स्येऽहं सुदुःखमतिदारुणम् ॥ ५३ ॥
पुत्रव्यसनजं दुःखं यदेतन्मम साम्प्रतम् ।
एवं त्वं पुत्रशोकेन राजन्! कालं करिष्यसि ॥ ५४ ॥
अज्ञानात्तु हतो यस्मात् क्षत्रियेण त्वया मुनिः ।
तस्मात्त्वां नाविशत्याशु ब्रह्महत्या नराधिप! ॥ ५५ ॥
त्वामप्येतादृशो भावः क्षिप्रमेव गमिष्यति ।
जीवितान्तकरो घोरो दातारमिव दक्षिणाम् ॥ ५६ ॥
एवं शापं मयि न्यस्य विलप्य करुणं बहु ।
चितामारोप्य देहं तन्मिथुनं स्वर्गमभ्ययात् ॥ ५७ ॥
तदेतच्चिन्तयानेन स्मृतं पापं मया स्वयम् ।

यदज्ञानान्निहतोऽतः शप्स्ये नतु प्रत्यक्षमेव भस्मीकरोमि सुदुःखमतिदारुणमिति क्रियाविशेषणे ॥ ५३ ॥

दुःखं मरणपर्यवसायि साम्प्रतं वर्त्तते त्वन्निमित्तमिति शेषः। कालं करिष्यसि मृत्युं प्राप्स्यसि ॥ ५४ ॥

ब्रह्महत्या तत्समं पापम् ॥ ५५ ॥

एतादृशो भावः पुत्रशोकेन मरणरूपः। यथा तत्तद्वस्तु दक्षिणां दातारं, यथा सा दक्षिणान्यतः प्राप्ता भवति तद्वत् ॥ ५६ ॥

देहं देहौ ॥ ५७ ॥

शब्दवेध्यनुकर्षिणा प्रथमं शब्दवेधिना पश्चाद्विद्धशल्यानुकर्षण-

तदा बाल्यात् कृतं देवि ! शब्दवेध्यनुकर्षिणा ॥ ५८ ॥
तस्यायं कर्मणो देवि ! विपाकः समुपस्थितः ।
अपथ्यैः सह संभुक्ते व्याधिरन्नरसे यथा ॥ ५९ ॥
तस्मामान्मागतं भद्रे ! तस्योदारस्य तद्वचः ।
इत्युक्त्वा स रुदंस्त्रस्तो भार्य्यामाह तु भूमिपः ॥ ६० ॥
यदहं पुत्रशोकेन संत्यजिष्यामि जीवितम् ।
चक्षुर्भ्यां त्वां न पश्यामि कौसल्ये ! त्वं हि मां स्पृश ॥६१॥
यमक्षयमनुप्राप्ता द्रक्ष्यन्ति न हि मानवाः ।
यदि मां संस्पृशेद्रामः सकृदन्वारभेत वा ॥ ६२ ॥

मपि कृतवता । पापं मुनिकुमारवधरूपम् । तीर्थस्तु शब्दवेध्यानुशिक्षिणेति पाठं शब्देन वेद्धुं योग्यं शब्दवेध्यं तदनुशिक्षितुं शीलं यस्य तेनेत्यर्थश्चाह,—तदसमञ्जसमिति स्पष्टमेव ॥ ५८ ॥

विपाकः फलम् । अपथ्यैर्व्यञ्जनैः सह भुक्तेऽन्नरसे व्याधिर्यथोपतिष्ठते । व्याधिमन्नरसो यथेति पाठे उपस्थापयतीति शेषः ॥ ५९ ॥

उदारस्य श्रेष्ठस्य । तद्वचः तद्वचःफलं त्रस्तो मरणभयादिति शेषः । रुदन् जीवितं त्यक्ष्यामीति भार्यामाहेति सम्बन्धः ॥ ६० ॥

चक्षुर्भ्यां न पश्यामि मुमूर्षुत्वादिति भावः ॥ ६१ ॥

न हि द्रक्ष्यन्तीति । इह विद्यमानान् स्नेहबन्धूनिति शेषः । इतःपरं त्वत्स्पर्शादिकं मे दुर्लभमिति भावः । यदि मामद्य रामः सकृदपि स्पृशेत् । अन्वारभेत किञ्चिद्द्वारा वा स्पृशेत् ॥ ६२ ॥

धनं वा यौवराज्यं वा जीवेयमिति मे मतिः।
न तन्मे सदृशं देवि! यन्मया राघवे कृतम्॥ ६३॥
सदृशं तत्तु तस्यैव यदनेन कृतं मयि।
दुर्वृत्तमपि कः पुत्रं त्यजेद्भुवि विचक्षणः॥ ६४॥
कश्च प्रव्राज्यमानो वा नासूयेत् पितरं सुतः।
चक्षुषा त्वां न पश्यामि स्मृतिर्मम विलुप्यते॥ ६५॥
दूता वैवस्वतस्यैते कौसल्ये! त्वरयन्ति माम्।
ततस्तु किं दुःखतरं यदहं जीवितक्षये॥ ६६॥
न हि पश्यामि धर्मज्ञं रामं सत्यपराक्रमम्।
तस्यादर्शनजः शोकः सुतस्याप्रतिकर्मणः॥ ६७॥
उच्छोषयति वै प्राणान् वारिस्तोकमिवातपः।
न ते मनुष्या देवास्ते ये चारुशुभकुण्डलम्॥ ६८॥
मुखं द्रक्ष्यन्ति रामस्य वर्षे पञ्चदशे पुनः।

यदि वा धनं कोशं यौवराज्यं वा लभेत तदा जीवेयम्। राघव यन्मया कृतं विवासनरूपं तन्मे वृत्तस्य सदृशं न॥ ६३॥

[illegible] यन्मयि कृतं राज्यं त्यक्त्वा मद्वचः परिपालनरूपं त[illegible]सदृशम्। अनन्वयोऽत्रालङ्कारः। मत्सदृशोऽन्यायकृत् रामसदृशउचितकर्त्ता च भुवि नाभूदस्ति भविष्यति वान्य इत्याह,—दुर्वृत्तमपीति॥ ६४॥ ६५॥ ६६॥ ६७॥

पद्मपत्रेक्षणं सुभ्रु ! सुदंष्ट्रञ्चारुनासिकम् ॥ ६९ ॥
धन्या द्रक्ष्यन्ति रामस्य ताराधिपसमं मुखम् ।
सदृशं शारदस्येन्दो फुल्लस्य कमलस्य च ॥ ७० ॥
सुगन्धि मम रामस्य धन्या द्रक्ष्यन्ति तन्मुखम् ।
निवृत्तवनवासन्तमयोध्यां पुनरागतम् ॥ ७१ ॥
द्रक्ष्यन्ति सुखिनो रामं शुक्रं मार्गगतं यथा ।
कौशल्ये ! चित्तमोहेन हृदयं सीदतीव मे ॥ ७२ ॥
वेदये न च संयुक्तान् शब्दस्पर्शरसानहम् ।
चित्तनाशाद्विपद्यन्ते सर्वाण्येवेन्द्रियाणि हि ॥ ७३ ॥
क्षीणस्नेहस्य दीपस्य संरक्ता रश्मयो यथा ।

स्तोकमल्पं वारि आतपो यथा शुष्कं करोति । ये द्रक्ष्यन्ति न ते मनुष्याः किन्तु देवांशा एव ॥ ६८ ॥ ६९ ॥ ७० ॥ ७१ ॥

शुक्रं मार्गगतं यथा मौढ्यादि विहाय स्वोच्चमार्गगतं शुक्रमिवेत्यर्थ इति तीर्थः । कतकस्तु । शुकं मार्गगतं यथेति पाठः । हस्तात्पञ्जरादान्यदेशगतं पुनस्व मार्गं यथास्थानं गतं प्राप्तं शुकं क्रीड़ाशुकमिवेत्यर्थः इत्याह,—चित्तमोहेन दुःखातिशयप्राप्तमूर्च्छया सीदतेतरामतिशयेन शीर्यतीव ॥ ७२ ॥

वेदये जानामि । संयुक्तानिन्द्रियसंयुक्तान् ॥ ७३ ॥

संरक्ता भस्मतां प्राप्ता यथा दीपस्य रश्मयो विपद्यन्ते तथेन्द्रियाणीत्यर्थः ॥ ७४ ॥

अयमात्मभवः शोको मामनाथमचेतनम् ॥ ७४ ॥
संसाधयति वेगेन यथाकूलं नदीरयः।
हा राघव ! महाबाहो ! हा ममायासनाशन ! ॥ ७५ ॥
हा पितृप्रिय ! मे नाथ ! हा ममासि गतः सुतः।
हा कौशल्ये ! न पश्यामि हा सुमित्रे ! तपस्विनि ! ॥७६॥
हा नृशंसे ! ममामित्रे ! कैकेयि ! कुलपांसनि ! ।
इति मातुश्च रामस्य सुमित्रायाश्च सन्निधौ।
राजा दशरथः शोचन् जीवितान्तमुपागमत् ॥ ७७ ॥

तथा तु दीनः कथयन् नराधिपः
प्रियस्य पुत्रस्य विवासनातुरः।
गतेऽर्धरात्रे भृशदुःखपीड़ित-
स्तदा जहौ प्राणमुदारदर्शनः ॥ ७८ ॥

इत्यार्षे रामायणे वाल्मीकीये अयोध्याकाण्डे दशरथमृत्युवर्णनं नाम चतुःषष्टितमः सर्गः ॥ ६४ ॥

संसाधयति नाशयति ॥ ७५ ॥ ७६ ॥ ७७ ॥ ७८ ॥

इति रामाभिरामे श्रीरामीये रामायणतिलके अयोध्याकाण्डे चतुःषष्टितमः सर्गः ॥ ६४ ॥

---

## पञ्चषष्टितमः सर्गः।

अथ रात्र्यां व्यतीतायां प्रातरेवापरेऽहनि।
बन्दिनः पर्युपातिष्ठंस्तत्पार्थिवनिवेशनम्॥ १॥
सूताः परमसंस्कारा मागधाश्चोत्तमश्रुताः।
गायकाः श्रुतिशीलाश्च निगदन्तः पृथक् पृथक्॥ २॥
राजानं स्तुवतां तेषां उदात्ताभिहिताशिषाम्।
प्रासादाभोगविस्तीर्णः स्तुतिशब्दो ह्यवर्त्तत॥ ३॥
ततस्तु स्तुवतां तेषां सूतानां पाणिवादकाः।
अपदानान्युदाहृत्य पाणिवादान्यवादयन्॥ ४॥

अथेति॥ १॥

परमसंस्काराः व्याकरणादिशिक्षावन्तः परमालङ्कारा वा। मागधाः वंशावलीकीर्त्तकाः। मङ्गला इति पाठेऽपि मङ्गलपाठकास्त एव। उत्तमश्रुताः उत्तमं श्रुतं वंशपरम्पराश्रवणमेषां ते मागधाः। श्रुतिशीला गायकाः तन्त्रीनादविभाजनशीला गायकाः पृथक् पृथक् निगदन्तः स्वस्वमार्गानुसारेणेति शेषः॥ २॥

उदात्तं उच्चैःस्वरेणाभिहिता आशिषो यैस्तेषाम्। प्रासादानामाभोगेषु मध्येषु विस्तीर्णः प्रतिध्वनिनेति शेषः॥ ३॥

तेन शब्देन विहगाः प्रतिबुद्धाश्च सस्वनुः।
शाखास्थाः पञ्जरस्थाश्च ये राजकुलगोचराः॥ ५॥
व्याहृताः पुण्यशब्दाश्च वीणानाञ्चापि निःस्वनाः।
आशीर्गेयञ्च गाथानां पूरयामास वेश्म तत्॥ ६॥
ततः शुचिसमाचाराः पर्युपस्थानकोविदाः।
स्त्रीवर्षवरभूयिष्ठा उपतस्थुर्यथा पुरा॥ ७॥
हरिचन्दनसंपृक्तमुदकं काञ्चनैर्घटैः।
आनिन्युः स्नानशिक्षाज्ञा यथाकालं यथाविधि॥ ८॥

पाणिवादकाः पाणिवादनशीलाः अपदानानि राज्ञां वृत्ताद्भुतकर्माणि उदाहृत्य तदनुगतपाणिवादान्यवादयन्॥ ४॥

सस्वनुः फणादित्वात्पक्षे एत्वाभ्यास लोपाभावः। ये राजकुलगोचराः राजकुलवासयोग्या ये शुकादयः॥ ५॥

तैः पूर्वश्लोकोक्तैः शुकादिभिर्व्याहृताः पुण्यशब्दाः काशीगङ्गादिरूपाः। गाथानां केवलगायकानामाशीर्गेयमाशीर्वादप्रधानं गानम्। यद्वा गाथा राज्ञां चरित्रादिप्रतिपादकास्तासामासीर्वादघटितं गानमित्यर्थः॥ ६॥

पर्य्युपस्थानं परिचर्य्या स्त्रीभिः वर्षवरैः षण्ढैश्च भूयिष्ठाः। षण्ढो वर्षवरस्तुल्यौ। परिचारका इति शेषः॥ ७॥

स्नानशिक्षाज्ञाः स्नानविधिज्ञाः। यद्वाऽरुणोदयात् पूर्बमेव उषसि स्नानाय जलान्यानेतव्यमिति शिक्षाज्ञाः॥ ८॥

मङ्गलालम्भनीयानि प्राशनीयान्युपस्करान्।
उपानिन्युस्तथा पुण्याः कुमारीबहुलाः स्त्रियः॥ ९॥
सर्वलक्षणसम्पन्नं सर्वं विधिवदर्चितम्।
सर्वं सुगुणलक्ष्मीवत्तदभूदाभिहारिकम्॥ १०॥
तत्तु सूर्योदयं यावत् सर्वं परिसमुत्सुकम्।
तस्थावनुपसम्प्राप्तं किं स्विदित्युपशङ्कितम्॥ ११॥
अथ याः कोशलेन्द्रस्य शयनं प्रत्यनन्तराः।
ताः स्त्रियस्तु समागम्य भर्त्तारं प्रत्यबोधयन्॥ १२॥

मङ्गलालम्भनीयानि मङ्गलार्थमालम्भनीयानि स्पर्शनीयानि गवादीनि। आलम्भस्पर्शहिंसयोः। प्राशनीयानि गङ्गोदकादीनि। दन्तधावनानन्तरं गण्डूषत्वेन प्राशनीयानि यानि नारिकेलोदकजीरकोदकानि च। उपस्करा दर्पणवस्त्राभरणादयः। कुमारीबहुलाः कुमार्य्यो बहुला यासु ताः स्त्रियो वरनार्य्यः॥ ९॥

आभिहारिकं प्रातःसमये राज्ञो यदभिहर्त्तव्यं मङ्गलार्थमानेतव्यम्। तत्सर्वं सर्वलक्षणयुक्तं सर्वं विधिवदर्चितम्। यथायोग्यं बहूक्तनं सुगुणञ्च तल्लक्ष्मीवच्च॥ १०॥

परिसमुत्सुकं राजदर्शनं प्रतीति शेषः। तस्थौ ततोऽनुपसंप्राप्तं अप्राप्तराजदर्शनम् अतएव किंस्विदित्युपशङ्कितमभूत्॥ ११॥

शयनं प्रति अनन्तराः आसन्नाः कौशल्यादिव्यतिरिक्ताः प्रत्यबोधयन् प्रतिबोधनोचितमृदुर्विनीतवचनैः स्पर्शैश्च॥ १२॥

तथाप्युचितवृत्तास्ता विनयेन नयेन च।
न ह्यस्य शयनं स्पृष्ट्वा किञ्चिदप्युपलेभिरे॥ १३॥
ताः स्त्रियः स्वप्नशीलज्ञाश्चेष्टा सञ्चलनादिषु।
ता वेपथुपरीताश्च राज्ञः प्राणेषु शङ्किताः॥ १४॥
प्रतिस्रोतस्तृणाग्राणां सदृशं सञ्चकाशिरे।
अथ सन्देहमानानां स्त्रीणां दृष्ट्वा च पार्थिवम्॥ १५॥
यत्तदा शङ्कितं पापं तदा जज्ञे विनिश्चयः।
कौशल्या च सुमित्रा च पुत्रशोकपराजिते॥ १६॥
प्रसुप्ते न प्रबुध्येते यथाकालसमन्विते।
निष्प्रभा च विवर्णा च सन्ना शोकेन सन्नता॥ १७॥

उचितवृत्ताः स्पर्शनादिव्यापारोचिताः किञ्चिदपि जीवचेष्टादि॥ १३॥

स्वप्नशीलज्ञाः स्वप्नभावज्ञाः सञ्चलनादिषु हृदयकरमूलनाडिषु चेष्टां नोपलेभिरे। ततो वेपथुयुक्ता राज्ञः प्राणेषु शङ्किता आसन्॥ १४॥

प्रतिस्रोत इति। स्रोतोऽभिमुखस्थितवेतसादितृणाग्राणां सदृशं कम्पं सञ्चकाशिरे प्रकाशितवत्यः प्राप्ता इति यावत्। सन्देहमानानां सन्दिहानानाम्॥ १५॥

यदा शङ्कितं पापं मरणं पूर्वं राज्ञेति शेषः। तस्य निश्चयो जज्ञे जातः॥ १६॥

यथाकालसमन्विते मृते इव। यद्वाऽयथाकालसमन्विते बह्नीषु

न व्यराजत कौशल्या तारेव तिमिरावृता ।
कौशल्यानन्तरं राज्ञः सुमित्रा तदनन्तरम् ॥ १८ ॥
न स्म विभ्राजते देवी शोकाश्रुलुलितानना ।
ते च दृष्ट्वा तदा सुप्ते उभे देव्यौ च तं नृपम् ॥ १९ ॥
सुप्तमेवोद्गतप्राणमन्तःपुरमदृश्यत * ।
ततः प्रचुक्रुशुर्दीनाः सस्वरन्ता वराङ्गनाः ॥ २० ॥
करेणव इवारण्ये स्थानप्रच्युतयूथपाः ।
तासामाक्रन्दशब्देन सहसोद्गतचेतने ॥ २१ ॥
कौशल्या च सुमित्रा च त्यक्तनिद्रे बभूवतुः ।

रात्रिषु दुःखतो जागरणात् अयथाकाले प्रत्युषसि निद्रया समन्विते इत्यर्थः । शोकेन सन्ना उपहृता सन्नता सुप्तिवशसंकुचितहस्तपादादिकरणा ॥ १७ ॥

कौशल्येति । अत्र सुप्तेति शेषः ॥ १८ ॥

न विभ्राजते न विशेषेण भ्राजते तत्र हेतुः शोकेत्यादि । ते उभे देव्यौ प्रश्वासादिना सुप्ते दृष्ट्वा नृपञ्च तं सुप्तमेव सन्तं तदवस्थायामेवोद्गतप्राणं लक्षणतो दृष्ट्वा सर्वमेवान्तःपुरमुद्गतप्राणं तत्कालमदृश्यत । अमन्यतेति पाठेऽन्तःपुरं कर्तृ नृपमुद्गतप्राणममन्यतेत्यर्थः । तीर्थस्तु अदृश्यतेत्येतत् परस्परमपश्यदित्यर्थं व्याचष्टे ॥ १९ ॥ २० ॥

---

* अन्तःपुरं कर्तृ सुप्तं नृपं सुप्ते देव्यौ च दृष्ट्वा तं नृपं उद्गतप्राणम् अदृश्यत इत्यर्थः ।

कौसल्या च सुमित्रा च दृष्ट्वा स्पृष्ट्वा च पार्थिवम् ॥ २२ ॥
हा ! भर्त्तेति परिक्रुश्य पेततुर्द्धरणीतले ।
सा कोशलेन्द्रदुहिता चेष्टमाना महीतले ॥ २३ ॥
न भ्राजते रजोध्वस्ता तारेव गगनच्युता ।
नृपे शान्तगुणे जाते कौसल्यां पतितां भुवि ॥ २४ ॥
अपश्यंस्ताः स्त्रियः सर्वा हतां नागबधूमिव ।
ततः सर्वा नरेन्द्रस्य कैकेयीप्रमुखाः स्त्रियः ॥ २५ ॥
रुदन्त्यः शोकसन्तप्ता निपेतुर्गतचेतनाः ।
ताभिः स बलवान्नादः क्रोशन्तीभिरनुद्रुतः ॥ २६ ॥
येन स्फीतीकृतो भूयस्तद्गृहं समनादयत् ।
तत्परित्रस्तसम्भ्रान्तं पर्युत्सुकजनाकुलम् ॥ २७ ॥

स्थानाद्वासस्थानात्प्रच्युतो यूथपो महागजो यासां ताः करेणव इव प्रचक्रुशुरित्यन्वयः ॥ २१ ॥ २२ ॥

हा भर्त्तेति हा भर्त्तरितीत्यर्थः। अयोध्या जनपदवाची कोशलशब्दस्तालव्यमध्यः कौसल्या पितृदेशवाची तु दन्त्यमध्यः ॥ २३ ॥

शान्तगुणे उपशान्तजीवनधर्म्मे ॥ २४ ॥ २५ ॥

ताभिः कैकेयीप्रभृतिभिः पश्चादन्तःपुरं प्रविष्टाभिः स्वनादेन प्रथमप्रविष्टानां स्त्रीणां बलवान्नादोऽनुद्रुतः युक्तः अभूदिति शेषः ॥ २६ ॥

येनानुद्रवणेन स्फीतीकृतो वर्धितः स नादो भूयोऽधिकं तद्गृहं समनादयत् व्याप्तवान्। तीर्थस्तु येन स्थिरीकृतं भूय इति पठित्वा

सर्वतः सुमुलाक्रन्दं परितापार्त्तबान्धवम् ।
सद्यो निपतितानन्दं दीनं विक्लवदर्शनम् ।
बभूव नरदेवस्य सद्म दिष्टान्तमीयुषः ॥ २८ ॥
अतीतमाज्ञाय तु पार्थिवर्षभम् ।
यशस्विनन्तं परिवार्य्य पत्नय:
भृशं रुदन्त्यः करुणं सुदुःखिताः ।
प्रगृह्य बाहू व्यलपन्ननाथवत् ॥ २९ ॥

इत्यार्षे रामायणे वाल्मीकीये अयोध्याकाण्डे दशरथ-मृत्युवर्णनं नाम पञ्चषष्टितमः सर्गः ॥ ६५ ॥

येन नादेन स्थिरीकृतं मुखरितं तद्गृहं कर्त्तृं भूयोऽत्यर्थं समनादयत् अनददित्यर्थमाह,—पर्युत्सुकजनाकुलं पूर्ववृत्तान्तज्ञानाय पर्युत्सुकजन-निबिड़म् ॥ २७ ॥

दिष्टान्तं कालधर्मम् उपेयुषः प्राप्तस्य सद्म परिवृत्तं सम्भ्रान्तत्वा-दिगुणविशिष्टं बभूव ॥ २८ ॥

अतीतं मृतम् । पत्नयः पत्नाः । बाहू प्रगृह्य अभिहृत्य अनाथ-वत् अनाथार्हम् ॥ २९ ॥

इति रामाभिरामे श्रीरामीये रामायणतिलके बालकाण्डे पञ्चषष्टितमः सर्गः ॥ ६५ ॥

## षट्षष्टितमः सर्गः।

तमग्निमिव संशान्तमम्बुहीनमिवार्णवम्।
गतप्रभमिवादित्यं स्वर्गस्थं प्रेक्ष्य भूमिपम्॥ १॥
कौसल्या बाष्पपूर्णाक्षी विविधं शोककर्शिता।
उपगृह्य शिरो राज्ञः कैकेयीं प्रत्यभाषत॥ २॥
सकामा भव कैकयि! भुङ्क्ष्व राज्यमकण्टकम्।
त्यक्त्वा राजानमेकाग्रा नृशंसे! दुष्टचारिणि!॥ ३॥
विहाय मां गतो रामो भर्त्ता च स्वर्गतो मम।
विपथे सार्थहीनेव नाहं जीवितुमुत्सहे॥ ४॥
भर्त्तारन्तु परित्यज्य का स्त्री दैवतमात्मनः।
इच्छेज्जीवितुमन्यत्र कैकेय्यास्त्यक्तधर्मणः॥ ५॥

तमिति॥ १॥

राज्ञः शिर उपगृह्य अङ्के कृत्वेत्यर्थः॥ २॥

एकाग्रा पुत्रराज्यैकाग्रचित्ता॥ ३॥

राज्यस्याकण्टकत्वं दर्शयति। विहायेति। विपथे कान्तारे। सार्थहीना सहायभूतपथिकसङ्घरहिता॥ ४॥

आत्मनो दैवतं भर्त्तारं परित्यज्य त्यक्तधर्मणः त्यक्तस्त्रीधर्मो यया तादृश्याः कैकेय्या अन्यत्र अन्या पुत्रराज्ये का जीवितुमिच्छेत्। परि-

न लुब्धो बुध्यते दोषान् किंपाकमिव भक्षयन् ।
कुब्जानिमित्तं कैकेय्या राघवाणां कुलं हतम् ॥ ६ ॥
अनियोगे नियुक्तेन राज्ञा रामं विवासितम् ।
सभार्यं जनकः श्रुत्वा परितप्स्यत्यहं यथा ॥ ७ ॥
स मामनाथां विधवां नाद्य जानाति धार्मिकः ।
रामः कमलपत्राक्षो जीवन्नाशमितो गतः ॥ ८ ॥

स्वज्येति पाठे भर्त्तारं परिष्वज्य तेन सह भोगान् भुक्त्वा तं कालान्तरे परित्यज्येति शेषः ॥ ५ ॥

एवं साहसकरणे हेतुमाह,—नेति किंपाको निम्बः। कतकस्तु किंपाको विषभेदः। तं कोपादिना भक्षयन् आत्महत्यादोषं न बुध्यते तद्वदित्यर्थ इत्याह,—तत्र लुब्ध इति नात्यन्तं समञ्जसम्। धनलोभादिना परस्य विषभक्षणं कारयन् यथा हत्यादोषं न बुध्यत इति वक्तुमुचितम्। यत् कैकेय्या राघवाणां कुलं हतं तत् कुब्जा निमित्तं प्रेरकतया * ॥ ६ ॥

अनियोगे अनुचितनियोगे। वरव्याजात् कैकेय्या नियुक्तेन राज्ञा सभार्यं रामं विवासितं श्रुत्वा जनकोऽहमिव परितप्स्यति ॥ ७ ॥

जीवन्नेव नाशमदर्शनं गतः। जीवनाशमितो गत इति पाठे। राज्ञो जीवनाशो यथा भवति तथा गत इत्यर्थः ॥ ८ ॥

---

* किंपाकं कुत्सितपाकं अभक्ष्यं इति यावत् भक्षयन् जनः क्षयं न जानाति तद्वत् कैकेय्या राघवाणां कुलं हतं तत्र कुब्जा निमित्तं प्रेरकतया।

विदेहराजस्य सुता तथा चारु तपस्विनी ।
दुःखस्यानुचिता दुःखं वने पर्युद्विजिष्यति ॥ ९ ॥
नर्दतां भीमघोषाणां निशासु मृगपक्षिणाम् ।
निशम्यमाना सन्त्रस्ता राघवं संश्रयिष्यति ॥ १० ॥
वृद्धश्चैवाल्पपुत्रश्च वैदेहीमनुचिन्तयन् ।
सोऽपि शोकसमाविष्टो नूनं त्यक्ष्यति जीवितम् ॥ ११ ॥
साहमद्यैव दिष्टान्तं गमिष्यामि पतिव्रता ।
इदं शरीरमालिङ्ग्य प्रवेक्ष्यामि हुताशनम् ॥ १२ ॥
तां ततः सम्परिष्वज्य विलपन्तीं तपस्विनीम् ।
व्यपनिन्युः सुदुःखार्त्तां कौसल्यां व्यावहारिकाः ॥ १३ ॥

चारुतपस्विनी भर्तृसेवनादित्याशयः। पर्युद्वेगो भयं वने दुःखं प्राप्स्येति शेषः ॥ ९ ॥

निशम्यमाना नादमिति शेषः। निशम्य नादमिति पाठान्तरम् ॥ १० ॥

अल्पपुत्रश्चेति जनक इति शेषः। अल्पपुत्र इत्यस्य कन्यामात्रसन्ततिरित्यर्थ इति तीर्थः ॥ ११ ॥

दिष्टान्तं मरणम्। शरीरालिङ्गनपूर्वकमग्निप्रवेशे हेतुः पतिव्रतेति ॥ १२ ॥

व्यावहारिकाः व्यवहारे बाह्याभ्यन्तरसकलराज्यकार्ये नियुक्ताः अमात्याः व्यपनिन्युः। अन्तःपुराध्यक्षस्त्रीद्वारा भर्त्रालिङ्गनाद्विमोच्यान्यतो निन्युरित्यर्थः ॥ १३ ॥

तैलद्रोण्यां तदामात्याः संवेश्य जगतीपतिम्।
राज्ञः सर्वाण्यथादिष्टाश्चक्रुः कर्माण्यनन्तरम् ॥ १४ ॥
न तु सङ्कालनं राज्ञो विना पुत्रेण मन्त्रिणः।
सर्वज्ञाः कर्त्तुमीषुस्ते ततो रक्षन्ति भूमिपम् ॥ १५ ॥
तैलद्रोण्यां शायितन्तं सचिवैस्तु नराधिपम्।
हा! मृतोऽयमिति ज्ञात्वा स्त्रियस्ताः पर्य्यदेवयन् ॥ १६ ॥
बाहूनुच्छ्रित्य कृपणा नेत्रप्रस्रवणैर्मुखैः।
रुदत्यः शोकसन्तप्ताः कृपणं पर्यदेवयन् ॥ १७ ॥
हा महाराज! रामेण सततं प्रियवादिना।
विहीनाः सत्यसन्धेन किमर्थं विजहासि नः ॥ १८ ॥
कैकेय्या दुष्टभावाया राघवेण विवर्जिताः।
कथं सपत्न्या वत्स्यामः समीपे विधवा वयम् ॥ १९ ॥

तैलद्रोणी तैलपूर्णकटाहः। आदिष्टा वसिष्ठादिभिराज्ञप्ता अमात्यास्तस्यां नृपं संवेश्य स्थापयित्वाऽनन्तरं कर्त्तव्यानि दुःखपरिपालनादीनि कर्माणि चक्रुः ॥ १४ ॥

पुत्रेण विना सङ्कालनं प्रेतनिर्हारं न कर्त्तुमीषुः। यतः सर्वज्ञाः ततो हेतोस्तैलद्रोण्यां भूपं रक्षन्ति ॥ १५ ॥

शायितं ज्ञात्वा हा मृतोऽयमिति पर्यदेवयन् ॥ १६ ॥

नेत्राणां प्रस्रवणमश्रुप्रवाहो येषु मुखेषु तैः ॥ १७ ॥ १८ ॥ १९ ॥

स हि नाथः स चास्माकं तव च प्रभुरात्मवान्।
वनं रामो गतः श्रीमान् विहाय नृपतिश्रियम्॥ २०॥
त्वया तेन च वीरेण विना व्यसनमोहिताः।
कथं वयं निवत्स्यामः कैकेय्या च विदूषिताः॥ २१॥
यया च राजा रामश्च लक्ष्मणश्च महाबलः।
सीतया सह सन्त्यक्ताः सा कमन्यं न हास्यति॥ २२॥
ता बाष्पेण च संवीताः शोकेन विपुलेन च।
व्यचेष्टन्त निरानन्दा राघवस्य वरस्त्रियः॥ २३॥
निशा नक्षत्रहीनेव स्त्रीव भर्त्तृविवर्जिता।
पुरी नाराजतायोध्या हीना राज्ञा महात्मना॥ २४॥
बाष्पपर्य्याकुलजना हाहाभूतकुलाङ्गना।
शून्यचत्वरवेश्मान्ता न बभ्राज यथा पुरा॥ २५॥

तव प्रभुः तव जीवनस्य प्रभुः॥ २०॥
विदूषिताः राज्यगर्वात्तिरस्कृताः॥ २१॥ २२॥
राघवस्य दशरथस्य॥ २३॥
न अराजतेति छेदः॥ २४॥
शून्यचत्वरवेश्मान्ता सम्मार्जनालेपवल्यादिशून्यचत्वराद्यन्ता। यथा-पुरं यथापूर्वम्॥ २५॥

गते तु शोकात् त्रिदिवं नराधिपे
महीतलस्थासु नृपाङ्गनासु च ।
निवृत्तचारः सहसा गतो रविः
प्रवृत्तचारा रजनी ह्युपस्थिता ॥ २६ ॥
ऋते तु पुत्राद्दहनं महीपते-
र्नारोचयंस्ते सुहृदः समागताः ।
इतीव तस्मिन् शयने न्यवेशयन्
विचिन्त्य राजानमचिन्त्यदर्शनम् ॥ २७ ॥
गतप्रभा द्यौरिव भास्करं विना
व्यपेतनक्षत्रगणेव शर्वरी ।
पुरी बभासे रहिता महात्मना
कण्ठास्रकण्ठाकुलमार्गचत्वरा ॥ २८ ॥
नराश्च नार्य्यश्च समेत्य सङ्घशो
विगर्हमाणा भरतस्य मातरम् ।

राज्ञि शोकात् पुत्रशोकात्त्रिदिवं स्वर्गं गते नृपाङ्गनासु च शोकादेव महीतलस्थासु महीतले लुठन्तीषु निवृत्तचारः निवृत्तकिरणप्रचारः प्रवृत्तचारा प्रवृत्ततमःप्रचारा ॥ २६ ॥

सुहृदो वसिष्ठाद्याः पर्युषितदाहनिषेधवचनानि तु विप्रविषयाणीति न विरोधः । तस्मिन् शयने तैलद्रोण्याम् ॥ २७ ॥

तदा नगर्य्यां नरदेवसङ्क्ष्ये
बभूवुरार्त्ता न च शर्म लेभिरे ॥ १९ ॥

इत्यार्षे रामायणे वाल्मीकीये अयोध्याकाण्डे
तैलद्रोण्यां दशरथमृतदेहस्थापनं नाम
षट्षष्टितमः सर्गः ॥ ६६ ॥

आकण्ठं धाराकल्पेण प्रवहद्भिरस्रैरुपलक्षिताः कण्ठा येषां तैराकुलमार्गाश्चत्वराश्च यस्यां सा ॥ २८ ॥ २९ ॥

इत्यार्षे रामायणे वाल्मीकीये अयोध्याकाण्डे
षट्षष्टितमः सर्गः ॥ ६६ ॥

## सप्तषष्टितमः सर्गः ।

आक्रन्दितनिरानन्दा सास्रकण्ठजनाविला ।
अयोध्यायामवतता सा व्यतीयाय शर्वरी ॥ १ ॥
व्यतीतायान्तु शर्वर्य्यामादित्यस्योदये ततः ।
समेत्य राजकर्त्तारः सभामीयुर्द्विजातयः ॥ २ ॥
मार्कण्डेयोऽथ मौद्गल्यो वामदेवश्च काश्यपः ।
कात्यायनो गौतमश्च जावालिश्च महायशाः ॥ ३ ॥
एते द्विजाः सहामात्यैः पृथक् वाचमुदीरयन् ।
वशिष्ठमेवाभिमुखाः श्रेष्ठं राजपुरोहितम् ॥ ४ ॥
अतीता शर्वरी दुःखं या नो वर्षशतोपमा ।
अस्मिन् पञ्चत्वमापन्ने पुत्रशोकेन पार्थिवे ॥ ५ ॥

सञ्जाताक्रन्दा अतएव निरानन्दा विद्यमानास्रकण्ठैर्जनैराविला आकुला । अवतता दुःखवशात् दीर्घीभूता ॥ १ ॥

राजकर्त्तारः राज्ञो प्रेषकार्यकर्त्तारः ॥ २ ॥ ३ ॥

पृथक् वाचं राजकार्यविषये भिन्नभिन्नप्रस्थाना वाचोऽब्रुवन् । एवञ्च कार्यसिद्धेरयोगाद्वसिष्ठमेवाभिमुखा बभूवुः ॥ ४ ॥

स्वर्गस्थश्च महाराजो रामश्चारण्यमाश्रितः।
लक्ष्मणश्चापि तेजस्वी रामेणैव गतः सह ॥ ६ ॥
उभौ भरतशत्रुघ्नौ केकयेषु परन्तपौ।
पुरे राजगृहे रम्ये मातामहनिवेशने ॥ ७ ॥
इक्ष्वाकूणामिहाद्यैव कश्चिद्राजा विधीयताम्।
अराजकं हि राष्ट्रं नो विनाशं समवाप्नुयात् ॥ ८ ॥
नाराजके जनपदे विद्युन्माली महास्वनः।
अभिवर्षति पर्जन्यो महीं दिव्येन वारिणा ॥ ९ ॥
नाराजके जनपदे वीजमुष्टिः प्रकीर्य्यते।

पुत्रशोकेनास्मिन् पार्थिवे पञ्चत्वं मरणमापन्ने सति दुःखं यथा तथा वर्षशतोपमा शर्वरी अतीतेति सम्बन्धः ॥ ५ ॥ ६ ॥

केकयेषु तदाख्यदेशेषु। अवान्तरभेदापेक्षया बहुवचनमिति कतकः। वस्तुतोऽङ्गा इत्यादिवद्बहुवचनान्त एव जनपदवाचीत्यन्ये। राजगृहे राजगृहाख्ये पुरे ॥ ७ ॥

इक्ष्वाकूणां उत्तेक्ष्वाकूणां मध्ये, विपक्षे बाधकमाह,—अराजकं हीति। हि यतोऽराजकं नो राष्ट्रं विनाशमवाप्नुयादतः कश्चिद्राजा विधीयताम्। राजकंसद्धि राष्ट्रं नो नाशं नावाप्नुयाद्यथेति कतक-सम्मतः पाठः। नोऽस्माकं राष्ट्रं राजकं राजयुतं सन्नाशं नाप्नुयाद्यथा तथा कश्चिद्राजा विधीयतामित्यन्वयः। हिर्वाक्यालङ्कारे ॥ ८ ॥ ९ ॥

वीजमुष्टिः न प्रकीर्यते वीजानामारोपो न क्रियते। फलकाल

नाराजके पितुः पुत्रो भार्य्या वा वर्त्तते वशे ॥ १० ॥
अराजके धनं नास्ति नास्ति भार्य्याप्यराजके ।
इदमत्याहितं चान्यत्कुतः सत्यमराजके ॥ ११ ॥
नाराजके जनपदे कारयन्ति सभां नराः ।
उद्यानानि च रम्याणि हृष्टाः पुण्यगृहाणि च ॥ १२ ॥
नाराजके जनपदे यज्ञशीला द्विजातयः ।
सत्राण्यन्वासते दान्ता ब्राह्मणाः संशितव्रताः ॥ १३ ॥
नाराजके जनपदे महायज्ञेषु यज्वनः ।

लुण्ठाकशङ्कया । पितुर्वशे पुत्रो भार्या वा पत्युर्वशे न वर्त्तते अतिक्रमे दण्डयितृभावात् ॥ १० ॥

धनाद्यभावश्च परिपालकाभावात् । इदमुक्तरूपमत्याहितं महद्भयमराजके प्रथमं प्राप्नोति । अत्याहितं महाभीतिरित्यमरः । अन्यत् सत्यं पितापुत्रपतिभार्यारूपप्रधानसत्यादन्यत् क्रयविक्रयादिलक्षणं कुतः ॥ ११ ॥

सभां न कारयन्ति न्यायविचारायेति शेषः । केपियन्तीति पाठान्तरम् । उद्यानानीत्यादौ नयन्तीत्यनुकर्षः । वस्त्राद्यपहारभयात् । न कारयन्ति वा भयादेव । पुण्यगृहाणि पुण्यसम्पादकगृहाणि विप्रायर्थानि ॥ १२ ॥

सत्रं यत्र सर्वे ऋत्विजः सर्वे च यजमानाः । नान्वासते नानुतिष्ठन्ति ॥ १३ ॥

ब्राह्मणावसुसम्पूर्णा विसृजन्त्याप्तदक्षिणाः ॥ १४ ॥
नाराजके जनपदे प्रहृष्टनटनर्त्तकाः ।
उत्सवाश्च समाजाश्च वर्धन्ते राष्ट्रवर्धनाः ॥ १५ ॥
नाराजके जनपदे सिद्धार्था व्यवहारिणः ।
कथाभिरभिरज्यन्ते कथाशीलाः कथाप्रियैः ॥ १६ ॥
नाराजके जनपदे उद्यानानि समागताः ।
सायाह्ने क्रीड़ितुं यान्ति कुमार्य्यो हेमभूषिताः ॥ १७ ॥
नाराजके जनपदे धनवन्तः सुरक्षिताः ।
शेरते विवृतद्वाराः कृषिगोरक्षजीविनः ॥ १८ ॥
नाराजके जनपदे वाहनैः शीघ्रवाहिभिः ।

वसुसम्पूर्णाः बहुधनाः। आप्तदक्षिणाः शास्त्रेण यथाप्राप्तदक्षिणाः यज्वनो ऋत्विजः प्रति न विसृजन्ति ॥ १४ ॥

नर्त्तकः सूत्रधारः नटाश्च प्रहृष्टा यत्र तादृशा उत्सवा देवाद्युत्सवाः। समाजास्तत्तद्राष्ट्रकार्यसिद्धिप्रयोजनाः सभ्यसमूहाः। ते उभयेऽपि दृष्टादृष्टशान्तिद्वारा राष्ट्रवर्धना भवन्ति ते न वर्धन्ते ॥ १५ ॥

व्यवहारिणः कमप्यर्थमुद्दिश्यान्योऽन्यं विवदमानाः सिद्धार्थाः निर्णीतार्थाः। यद्वा व्यवहारिणः पण्यजीविनः असिद्धार्था अनिष्पन्नप्रयोजनाः। कथाशीलाः पुराणादिकथाश्रवणशीलाः। कथाप्रियैः कथाकथनप्रियैः पौराणिकैरुक्ताभिः कथाभिर्न रज्यन्ते। वक्तृश्रोतॄणां स्वास्थ्याभावात् ॥ १६ ॥

नरा निर्यान्त्यरण्यानि नारीभिः सह कामिनः ॥ १८ ॥
नाराजके जनपदे बहुघण्टा विषाणिनः ।
अटन्ति राजमार्गेषु कुञ्जराः षष्टिहायनाः ॥ २० ॥
नाराजके जनपदे शरान् सन्ततमस्यताम् ।
श्रूयते तलनिर्घोष इष्वस्त्राणामुपासने ॥ २१ ॥
नाराजके जनपदे वणिजो दूरगामिनः ।
गच्छन्ति क्षेममध्वानं बहुपण्यसमाचिताः ॥ २२ ॥
नाराजके जनपदे चरत्येकचरो वशी ।
भावयन्नात्मनात्मानं यत्रसायंगृहो मुनिः ॥ २३ ॥
नाराजके जनपदे योगक्षेमः प्रवर्त्तते ।
न चाप्यराजके सेना शत्रून् विषहते युधि ॥ २४ ॥
नाराजके जनपदे हृष्टैः परमवाजिभिः ।
नराः संयान्ति सहसा रथैश्च प्रतिमण्डिताः ॥ २५ ॥

समागताः मिलिताः ॥ १७ ॥ १८ ॥ १९ ॥

विषाणिनः प्रशस्तदन्ताः ॥ २० ॥

उपासने अभ्यासे ॥ २१ ॥ २२ ॥

एकोऽसहाय एव चरतीत्येकचरो यतिः । वशी जितेन्द्रियः । आत्मना मनसा आत्मानं ब्रह्म ॥ २३ ॥ २४ ॥

प्रतिमण्डिताः भूषिताः प्रतिमण्डितैरिति पाठान्तरम् ॥ २५ ॥

नाराजके जनपदे नराः शास्त्रविशारदाः।
संवदन्तोपतिष्ठन्ते वनेषूपवनेषु वा॥ २६॥
नाराजके जनपदे माल्यमोदकदक्षिणाः।
देवताभ्यर्चनार्थाय कल्प्यन्ते नियतैर्जनैः॥ २७॥
नाराजके जनपदे चन्दनागुरुरूषिताः।
राजपुत्रा विराजन्ते वसन्त इव शाखिनः॥ २८॥
यथा ह्यनुदका नद्यो यथा वाप्यतृणं वनम्।
अगोपाला यथा गावस्तथा राष्ट्रमराजकम्॥ २९॥
ध्वजो रथस्य प्रज्ञानं धूमो ज्ञानं विभावसोः।
तेषां यो नो ध्वजो राजा स देवत्वमितो गतः॥ ३०॥
नाराजके जनपदे स्वकं भवति कस्यचित्।
मत्स्या इव जना नित्यं भक्षयन्ति परस्परम्॥ ३१॥
ये हि संभिन्नमर्यादा नास्तिकाश्छिन्नसंशयाः।

संवदन्त उपतिष्ठते सन्धिरार्षः॥ २६॥

कल्प्यन्ते प्रवर्त्यन्ते॥ २७॥ २८॥ २९॥

प्रज्ञानं अनुमापकः तेषां राज्यकर्तॄणां नोऽस्माकं यो राजा ध्वजः अस्मासु राज्यभारप्रतिष्ठाज्ञापकः स इतो देवत्वं गतः। एवञ्चास्मानितःपरं कोऽपि जना न मंस्यन्तीति भावः॥ ३०॥

स्वकं जीवनमित्यर्थः॥ ३१॥

ये संभिन्नमर्य्यादा उल्लङ्घितस्वजातिवर्णाश्रममर्य्यादाः। अतएव

तेऽपि भावाय कल्पन्ते राजदण्डनिपीडिताः ॥ ३२ ॥
यथा दृष्टिः शरीरस्य नित्यमेव प्रवर्त्तते ।
तथा नरेन्द्रो राष्ट्रस्य प्रभवः सत्यधर्मयोः ॥ ३३ ॥
राजा सत्यञ्च धर्मश्च राजा कुलवतां कुलम् ।
राजा माता पिता चैव राजा हितकरो नृणाम् ॥ ३४ ॥
यमो वैश्रवणः शक्रो वरुणश्च महाबलः ।
विशिष्यन्ते नरेन्द्रेण वृत्तेन महता ततः ॥ ३५ ॥
अहो तम इवेदं स्यान्न प्रज्ञायेत किञ्चन ।
राजा चेन्न भवेल्लोके विभजन् साध्वसाधुनी ॥ ३६ ॥

पूर्वं राजदण्डनिपीड़िता नास्तिकाः सन्ति तेऽपीदानीं छिन्नसंशया राजदण्डशङ्कारहिताः सन्तो भावाय प्रभुत्वाय कल्पन्ते ॥ ३२ ॥

दृष्टिश्चक्षुः यथा शरीरस्य हितसाधने अहितनिवारणे च नित्यमेव प्रवर्त्तते । तथा राजा राष्ट्रस्य सत्यधर्मयोः प्रभवः प्रवर्तको राजा प्रजानां हितसाधनेऽहितनिवारणे च नित्यमेव प्रवर्त्तते ॥ ३३ ॥

राजा सत्यञ्च धर्मश्च सत्यधर्मयोः प्रवर्तक इत्यर्थः । कुलवतां क्षेत्रबीजशुद्धिमतां कुलं तत्प्रवर्तकः ॥ ३४ ॥

यमादयो महता वृत्तेन युक्तेन राज्ञा विशिष्यन्ते अतिशय्यन्ते तिरस्क्रियन्ते । यमस्य दण्डमात्रं कुवेरस्य धनदत्वमेवेन्द्रस्य पालनमेव वरुणस्य सदाचारे नियमनमेव । गुणचतुष्टयवता राज्ञा ते तिरस्क्रियन्ते इति भावः ॥ ३५ ॥

साध्वसाधुनी विभजन् व्यवस्थापयन् राजा चेन्न स्यात् तदाहो

ते प्रसन्नोदकां दिव्यां नानाविहगसेविताम्।
उपातिजग्मुर्वेगेन शरदण्डां जलाकुलाम् ॥ १५ ॥
निकूलवृक्षमासाद्य दिव्यं सत्योपयाचनम्।
अभिगम्याभिवाद्यन्तं कुलिङ्गां प्राविशन् पुरीम् ॥ १६ ॥
अभिकालं ततः प्राप्य तेजोभिभवनात् च्युताः।
पितृपैतामहीं पुण्यां तेरुरिक्षुमतीं नदीम् ॥ १७ ॥
अवेक्ष्याञ्जलिपानांश्च ब्राह्मणान् वेदपारगान्।
ययुर्मध्येन बाह्लीकान् सुदामानञ्च पर्वतम् ॥ १८ ॥

प्रवाहां गङ्गां हस्तिनापुरसमीपे तीर्त्वा प्रत्यङ्मुखाःसन्तो मध्येन कुरुजाङ्गलं कुरुजाङ्गलस्य मध्यमार्गमाश्रित्य ययुः ॥ १३ ॥ १४ ॥

शरदण्डां तदाख्यां नदीं उपगम्यातिजग्मुः अतिचक्रमुः ॥ १५ ॥

निकूलवृक्षं शरदण्डापश्चिमतीरवृक्षम्। दिव्यं विशिष्टदेवताधिष्ठितम्। सत्योपयाचनं तन्नामकम्। अन्वर्थनामकत्वादिष्टदातारम्। अतएवाभिवाद्यं सर्वनमस्कार्यं वृक्षमभिगम्य प्रदक्षिणीकृत्य। कुलिङ्गाख्यां नगरीं प्राविशन् ॥ १६ ॥

अभिकालतेजोभिभवनौ ग्रामौ। ततो योधिवनात् च्युता इति पाठान्तरम्। पितृपैतामहीमित्यार्षम्। इक्ष्वाकूणां पितृपितामहसम्बन्धिनीमिक्षुमतीं तेरुः ॥ १७ ॥

अञ्जलिपानान् अञ्जलिमात्रप्रमाणजलाहारान्। इक्षुमतीतीरस्थान् बाह्लीकान् जनपदान् इत्येके। तद्देशस्थानञ्जलिपानान् ब्राह्मणा-

विष्णोः पदं प्रेक्षमाणा विपाशाञ्चापि शाल्मलीम् ।
नदीर्वापीस्तटाकानि पल्वलानि सरांसि च ॥ १९ ॥
पश्यन्तो विविधांश्चापि सिंहान् व्याघ्रान् मृगान् द्विपान् ।
ययुः पथातिमहता शासनं भर्त्तुरीप्सवः ॥ २० ॥
ते श्रान्तवाहना दूता विकृष्टेन पथा सता ।
गिरिव्रजं पुरवरं शीघ्रमासेदुरञ्जसा ॥ २१ ॥
भर्त्तुः प्रियार्थं कुलरक्षणार्थं
भर्त्तुश्च वंशस्य परिग्रहार्थम् ।

नवेक्ष्येत्यन्वयः । अञ्जलिना पिबन्ति तादृशान् वेदपारगान् ब्राह्मणान् दृष्ट्वेत्यनेन बाह्लीकदेशस्यात्यनाचारत्वं सूचितम् । यत्र वेदपारगा ब्राह्मणा अपि ईदृशाः का कथान्येषामिति । तथा भारते कर्णपर्वणि । बाह्लीका नाम ते देशा न तत्र दिवसं वसेत् इति परे ॥ १८ ॥

विष्णोः पद सुदामपर्वतस्थं विष्णुपदाङ्कितस्थानम् । विपाशाशाल्मल्यौ नद्यौ ते प्रेक्ष्येत्यनुकर्षः ॥ १९ ॥ २० ॥

विकृष्टेन विप्रकृष्टेनातिदूरेणेत्यर्थः । सता निरुपद्रवेण गिरिव्रजं केकयराजगृहापरनामकम् । सप्तरात्रेण गत्वा वै दूतास्ते श्रान्तवाहना इति क्वचित्पाठस्तु दृश्यते ॥ २१ ॥

भर्तुरिति । भर्तुर्नियोक्तुर्वसिष्ठस्य प्रियार्थं शीघ्रगमनेन प्रीतिसम्पादनार्थम् । यद्वा भर्तुर्दशरथस्य प्रियार्थं शीघ्रानीतभरतकर्तौर्ध्वदेहिकेन परलोकप्राप्तेः । कुलस्य प्रजाकुलस्य रक्षणार्थं भर्त्तुर्दशरथस्य

अहेडमानास्त्वरया स्म दूता
रात्र्यान्तु ते तत्पुरमेव याताः ॥ २२ ॥

इत्यार्षे रामायणे वाल्मीकीये अयोध्याकाण्डे
गिरिव्रजे दूतागमनं नाम अष्ट-
षष्टितमः सर्गः ॥ ६८ ॥

ये वंशोवंशपरम्परागतराज्यं तस्य परिग्रहार्थं भरतेन स्वीकारार्थं अहेडमानाः उपेक्षारहिताः। हेड्ट अनादरे। अतएव त्वरया युक्ता दूता रात्र्यामेव तत्पुरं याताः ॥ २२ ॥

अत्र कतकोक्तसंख्यारीत्या षट् श्लोकाखटिताः।

इत्यार्षे रामायणे वाल्मीकीये अयोध्याकाण्डे
अष्टषष्टितमः सर्गः ॥ ६८ ॥

## एकोनसप्ततितमः सर्गः ।

यामेव रात्रिं ते दूताः प्रविशन्ति स्म तां पुरीम् ।
भरतेनापि तां रात्रिं स्वप्नो दृष्टोऽयमप्रियः ॥ १ ॥

व्युष्टामेव तु तां रात्रिं दृष्ट्वा तं स्वप्नमप्रियम् ।
पुत्रो राजाधिराजस्य सुभृशं पर्यतप्यत ॥ २ ॥

तप्यमानं तमाज्ञाय वयस्याः प्रियवादिनः ।
आयासं विनयिष्यन्तः सभायाञ्चक्रिरे कथाः ॥ ३ ॥

वादयन्ति तदा शान्तिं लासयन्त्यपिचापरे ।
नाटकान्यपरे स्माऽऽहुर्हास्यानि विविधानि च ॥ ४ ॥

यामिति । यामेव रात्रिं प्राप्य दूताः पुरीं प्रविशन्तिस्मेति योजना । अयं वक्ष्यमाणः ॥ १ ॥

व्युष्टां प्रभातरूपां तां रात्रिं प्राप्याप्रियं स्वप्नं दृष्ट्वा पर्य्यतप्यतेत्यन्वयः । प्रातःकालिकत्वेन शीघ्रफलता स्वप्नस्य सूचिता ॥ २ ॥

आयासं दुःस्वप्नदर्शनजं दुःखं विनयिष्यन्तः अपनेष्यन्तः ॥ ३ ॥

अन्ये तद्दूरीकुर्वन्तो वीणादि वादयन्ति । अपरे तस्य शान्तिं तस्य खेदशान्तिमुद्दिश्य लासयन्ति नर्त्तयन्ति वेश्याः । शान्तिं लालयन्तीति

स तैर्महात्मा भरतः सखिभिः प्रियबोधिभिः ।
गोष्ठीहास्यानि कुर्वद्भिर्न प्राहृष्यत राघवः ॥ ५ ॥
तमब्रवीत् प्रियसखो भरतं सखिभिर्वृतम् ।
सुहृद्भिः पर्युपासीनः किं सखे ! नानुमोदसे ॥ ६ ॥
एवं ब्रुवाणं सुहृदं भरतः प्रत्युवाच ह ।
शृणु त्वं यन्निमित्तं मे दैन्यमेतदुपागतम् ॥ ७ ॥
स्वप्ने पितरमद्राक्षं मलिनं मुक्तमूर्धजम् ।
पतन्तमद्रिशिखरात्कलुषे गोमये ह्रदे ॥ ८ ॥
प्लवमानश्च मे दृष्टः स तस्मिन् गोमये ह्रदे ।
पिबन्नञ्जलिना तैलं हसन्निव मुहुर्मुहुः ॥ ९ ॥
ततस्तिलोदनं भुक्त्वा पुनः पुनरधःशिराः ।
तैलेनाभ्यक्तसर्वाङ्गस्तैलमेवान्वगाहत ॥ १० ॥

पाठे तस्य शान्तिं तूष्णीमवस्थानं लोलयन्ति चालयन्ति । श्लोकाद्यर्थप्रश्नव्याजेनेत्यर्थः । अपरे हास्यानि हास्यरसप्रधानानि विविधानि नाटकान्याहुः ॥ ४ ॥

गोष्ठीहास्यानि गोष्ठ्युचितानि हास्यानि नर्माणि ॥ ५ ॥

प्रियसखः । सखिमात्रस्य प्रियत्वविवादाद्व्योगतिश्रेया अत्यन्तप्रिय इति । नानुमोदसे गानादीति शेषः ॥ ६ ॥ ७ ॥

गोमये ह्रदे गोमयपूर्णे ह्रदे ॥ ८ ॥ ९ ॥

तिलोदनं तिलमिश्रमोदनम् । अन्वगाहतेत्यन्तः प्रथमः स्वप्नः ॥१०॥

स्वप्नेऽपि सागरं शुष्कं चन्द्रञ्च पतितं भुवि ।
उपरुद्धाञ्च जगतीं तमसेव समावृताम् ॥ ११ ॥
औपवाह्यस्य नागस्य विषाणं शकलीकृतम् ।
सहसा चापि संशान्ता ज्वलिता जातवेदसः ॥ १२ ॥
अवदीर्णाञ्च पृथिवीं शुष्कांश्च विविधान् द्रुमान् ।
अहं पश्यामि विध्वस्तान् सधूमांश्चैव पर्वतान् ॥ १३ ॥
पीठे कार्ष्णायसे चैनं निषण्णं कृष्णवाससम् ।
प्रहरन्ति स्म राजानं प्रमदाः कृष्णपिङ्गलाः ॥ १४ ॥
त्वरमाणश्च धर्मात्मा रक्तमाल्यानुलेपनः ।
रथेन खरयुक्तेन प्रयातो दक्षिणामुखः ॥ १५ ॥
प्रहसन्तीव राजानं प्रमदा रक्तवासिनी ।
प्रकर्षन्ती मया दृष्टा राक्षसी विकृतानना ॥ १६ ॥

•

स्वप्नान्तरमाह,—स्वप्नेऽपीति । तमसा समावृतामिवोपरुद्धां तिरोहिताम् । यद्वाऽसुररक्षोभिरुपरुद्धाम् ॥ ११ ॥

औपवाह्यस्य राजवाहनस्य नागस्य दन्तिनः । विषाणं दन्तः । ज्वलिता अग्नयोऽकस्माच्छान्ता दृष्टाः ॥ १२ ॥

अवदीर्णां विदीर्णाम् ॥ १३ ॥

कृष्णाश्च पिङ्गलाश्च प्रमदाः ॥ १४ ॥ १५ ॥

रक्तवासिनी रक्तवस्त्रा प्रहसन्तीव ॥ १६ ॥

एवमेतन्मया दृष्टमिमां रात्रिं भयावहाम्।
अहं रामोऽथवा राजा लक्ष्मणो वा मरिष्यति॥ १७॥
नरो यानेन यः स्वप्ने खरयुक्तेन याति हि।
अचिरात्तस्य धूमाग्रं चितायां सम्प्रदृश्यते॥ १८॥
एतन्निमित्तं दीनोऽहं न वचः प्रतिपूजये।
शुष्यतीव च मे कण्ठो न स्वस्थमिव मे मनः॥ १९॥
न पश्यामि भयस्थानं भयञ्चैवोपधारये।
भ्रष्टश्च स्वरयोगो मे छाया चापगता मम॥ २०॥
जुगुप्स इव चात्मानं न च पश्यामि कारणम्॥ २१॥

इमां भयावहां रात्रिं प्राप्य एवमेतत् दृष्टम्। अहं मरिष्यामीति विपरिणामः॥ १७॥

दृष्टदुःखस्वप्नफलं निगमयति। नर इत्यादि। धूमाग्रं धूमशिखा॥१८॥

एतदुक्तं निमित्तं स्वप्नरूपं दृष्टेति शेषः। वचः युष्माकं न प्रतिपूजये। न प्रतिपेप्रिये इति पाठे युष्माकं वचः प्रति नयेन भृशं प्रीतो भवामीत्यर्थः। यङन्ताल्लडिति कतकः॥ १९॥

भयस्थानं भयकारणं उपधारये अवगतो बिभर्मि। छाया कान्तिः अपगता पूर्वरूपमत्यक्तवती मलिनेत्यर्थः॥ २०॥

आत्मानं जुगुप्स इव किमर्थं मम जन्मेत्येवमादिरूपेण। कारणं जुगुप्साकारणम्। जुगुप्सन्निवेति पाठे जुगुप्सन्निव तिष्ठामि तत्कारणञ्च न पश्यामीत्यर्थः॥ २१॥

इमाञ्च दुःस्वप्नगतिं निशम्य हि
त्वनेकरूपामवितर्कितां पुरा ।
भयं महत्तद्धृदयान्न याति मे
विचिन्त्य राजानमचिन्त्यदर्शनम् ॥ २२ ॥

इत्यार्षे रामायणे वाल्मीकीये अयोध्याकाण्डे
भरतस्य स्वप्नवृत्तान्तवर्णनं नाम एकोन-
सप्ततिः सर्गः ॥ ६९ ॥

पुरा पूर्वमतर्कितां अनेकरूपां दुःस्वप्नगतिं निशम्य हि दुःस्वप्नं स्मृत्वा हि स्मृत्वैव चिन्ताया अविषयदर्शनमपि राजानं विचिन्त्य राज-दर्शनविषयां चिन्तां प्राप्य महद्भयं मे हृदयान्न यातीत्यर्थः ॥ २२ ॥

इत्यार्षे रामायणे वाल्मीकीये अयोध्याकाण्डे
एकोनसप्ततिः सर्गः ॥ ६९ ॥

## सप्ततिः सर्गः ।

भरते ब्रुवति स्वप्नं दूतास्ते क्लान्तवाहनाः ।
प्रविश्यासह्यपरिखं रम्यं राजगृहं पुरम् ॥ १ ॥
समागम्य च राज्ञा ते राजपुत्रेण चार्चिताः ।
राज्ञः पादौ गृहीत्वा च तमूचुर्भरतं वचः ॥ २ ॥
पुरोहितस्त्वां कुशलं प्राह सर्वे च मन्त्रिणः ।
त्वरमाणश्च निर्याहि कृत्यमात्ययिकं त्वया ॥ ३ ॥
इमानि च महार्हाणि वस्त्राण्याभरणानि च ।
प्रतिगृह्य विशालाक्ष ! मातुलस्य च दापय ॥ ४ ॥

असह्या दुःसहाः परिखाः परिखाप्रदेशवर्त्तिप्राकारयन्त्रसमूहो यस्य तत् । असह्यपरिघमिति पाठान्तरम् ॥ १ ॥

राज्ञा केकयेन राजपुत्रेण युधाजिता समागम्य । वसिष्ठादिदत्त-पदार्थपुरःसरतया सङ्गमपूर्वं यथोचितं व्यवहारं कृत्वा ताभ्यामर्चिताः राज्ञः स्वीयस्य भरतस्य पादौ गृहीत्वा नमस्कृत्य भरतं वच ऊचुः । राज्ञः केकयराजस्यैवेत्यन्ये ॥ २ ॥

मन्त्रिणः प्राहुरिति विपरिणामः । आत्ययिकं कालातिक्रमासहं कृत्यमस्तीति शेषः ॥ ३ ॥

मातुलस्य च चान्मातामहस्य च ॥ ४ ॥

अत्र विंशतिकोट्यस्तु नृपतेर्मातुलस्य ते ।
दशकोट्यस्तु सम्पूर्णास्तथैव च नृपात्मज ! ॥ ५ ॥
प्रतिगृह्य तु तत्सर्वं स्वनुरक्तः सुहृज्जने ।
दूतानुवाच भरतः कामैः सम्प्रतिपूज्य तान् ॥ ६ ॥
कच्चित्स कुशली राजा पिता दशरथो मम ।
कच्चिदारोग्यता रामे लक्ष्मणे च महात्मनि ॥ ७ ॥
आर्या च धर्मनिरता धर्मज्ञा धर्मवादिनी ।
अरोगा चापि कौसल्या माता रामस्य धीमतः ॥ ८ ॥
कच्चित्सुमित्रा धर्मज्ञा जननी लक्ष्मणस्य या ।
शत्रुघ्नस्य च वीरस्य अरोगा चापि मध्यमा ॥ ९ ॥
आत्मकामा सदा चण्डी क्रोधना प्राज्ञमानिनी ।
अरोगा चापि मे माता कैकेयी किमुवाच ह ॥ १० ॥

अत्र आहृतद्रव्ये विंशतिकोट्यः तत्संख्याकवस्त्राभरणानि नृपतेर्मातामहस्य तदर्धं मातुलस्य ॥ ५ ॥

सुहृज्जने मातुलादिरूपे प्रदायेति शेषः। कामैः अभिमतवस्तुजातैः ॥ ६ ॥

अथ क्रमेण कुशलं पृच्छति राजेत्यादि ॥ ७ ॥ ८ ॥ ९ ॥

मातुःस्वभावानुवादपूर्वं तस्या आरोग्यं पृच्छति। आत्मकामेति। आत्मप्रयोजनकामा प्राज्ञमानिनी आत्मानं प्राज्ञां मन्यते सा ॥ १० ॥

एवमुक्तास्तु ते दूता भरतेन महात्मना।
ऊचुः संप्रश्रितं वाक्यमिदं तं भरतं तदा॥ ११॥
कुशलास्ते नरव्याघ्र! येषां कुशलमिच्छसि।
श्रीश्च त्वां वृणुते पद्मा युज्यताञ्चापि ते रथः॥ १२॥
भरतश्चापि तान् दूतानेवमुक्तोऽभ्यभाषत।
आपृच्छेऽहं महाराजं दूताः सन्त्वरयन्ति माम्॥ १३॥
एवमुक्त्वा तु तान् दूतान् भरतः पार्थिवात्मजः।
दूतैः सञ्चोदितो वाक्यं मातामहमुवाच ह॥ १४॥
राजन्! पितुर्गमिष्यामि सकाशं दूतचोदितः।
पुनरप्यहमेष्यामि यदा मे त्वं स्मरिष्यसि॥ १५॥
भरतेनैवमुक्तस्तु नृपो मातामहस्तदा।
तमुवाच शुभं वाक्यं शिरस्याघ्राय राघवम्॥ १६॥

संप्रश्रितं सविनयं संश्लिष्टञ्च॥ ११॥

येषां कुशलमिच्छसि तेषां कुशलमेव। त्वरयाऽऽज्ञानेन शङ्का न कार्या। पद्मा पद्मवती श्रीस्त्वां वृणुते तथा शोभा त्वयि दृश्यते। येन सर्वामङ्गल-शङ्काव्यावृत्तिरतो यात्रायै रथो युज्यताम्॥ १२॥

दूता मां संत्वरयन्तीति उक्त्वा महाराजमापृच्छे गमनानुज्ञायै इति दूतानभ्यभाषतेत्यन्वयः॥ १३॥

सञ्चोदितः शीघ्रं गच्छेत्येवं प्रेरितः॥ १४॥

मे स्मरिष्यसीति शेषत्वविवक्षायां षष्ठी। मामित्यर्थः॥ १५॥ १६॥

गच्छ तातानुजाने त्वां कैकेयी सुप्रजास्त्वया ।
मातरं कुशलं ब्रूयाः पितरञ्च परन्तप ! ॥ १७ ॥
पुरोहितञ्च कुशलं ये चान्ये द्विजसत्तमाः ।
तौ च तात ! महेष्वासौ भ्रातरौ रामलक्ष्मणौ ॥ १८ ॥
तस्मै हस्त्युत्तमांश्चित्रान् कम्बलानजिनानि च ।
सत्कृत्य केकयो राजा भरताय ददौ धनम् ॥ १९ ॥
अन्तःपुरेति संवृद्धान् व्याघ्रवीर्य्यबलोपमान् ।
दंष्ट्रायुधान् महाकायान् शुनश्चोपायनं ददौ ॥ २० ॥
रुक्मनिष्कसहस्रे द्वे षोड़शाश्वशतानि च ।
सत्कृत्य केकयीपुत्रं केकेयो धनमादिशत् ॥ २१ ॥
तदामात्यानभिप्रेतान् विश्वास्यांश्च गुणान्वितान् ।
ददावश्वपतिः शीघ्रं भरतायानुयायिनः ॥ २२ ॥

सुप्रजाः शुभप्रजावती ॥ १७ ॥

तौ च कुशलं ब्रूया इति सम्बन्धः ॥ १८ ॥

तस्मै भरतायेत्यन्वयः । चित्रान् कम्बलान् चित्राणि अजिनानि मृगाणाम् ॥ १९ ॥

अतिसंवृद्धान् यत्नेन वर्धितान् । व्याघ्रवीर्यबलोपमान्तदुपमवीर्यबलवतः । बलान्वितानिति पाठान्तरम् ॥ २० ॥

निष्कमुरोभूषणम् । धनमुक्तरूपम् ॥ २१ ॥

अमात्यान् स्वीयान् अश्वपतिः केकयः ॥ २२ ॥

ऐरावतान् ऐन्द्रशिरान्नागान् वै प्रियदर्शनान् ।
खरान् शीघ्रान् सुसंयुक्तान् मातुलोऽस्मै धनं ददौ ॥ २३ ॥
स दत्तं केकयेन्द्रेण धनं तन्नाभ्यनन्दत ।
भरतः केकयीपुत्रो गमनत्वरया तदा ॥ २४ ॥
बभूव ह्यस्य हृदये चिन्ता सुमहती तदा ।
त्वरया चापि दूतानां स्वप्नस्यापि च दर्शनात् ॥ २५ ॥
स स्ववेश्माभ्यतिक्रम्य नरनागाश्वसंकुलम् ।
प्रपेदे सुमहच्छ्रीमान् राजमार्गमनुत्तमम् ॥ २६ ॥
अभ्यतीत्य ततोऽपश्यदन्तःपुरमनुत्तमम् ।
ततस्तद्भरतः श्रीमानाविवेशानिवारितः ॥ २७ ॥
स मातामहमापृच्छ्य मातुलञ्च युधाजितम् ।
रथमारुह्य भरतः शत्रुघ्नसहितो ययौ ॥ २८ ॥
रथान् मण्डलचक्रांश्च योजयित्वा परं शतम् ।

ऐरावतान् इरावत् पर्वतभवान् ऐरावतकुलोद्भवान् वा । ऐन्द्रशिरानिन्द्रशिरनामकदेशभवान्नागान् गजान् ॥ २३ ॥ २४ ॥ २५ ॥

स इति । सः मातामहादिभ्यो लब्धधनः यात्रापरिकरसन्नहनाय स्ववेश्माभिगम्य कृतयात्रापरिकरस्ततोऽभ्यतिक्रम्य निर्गत्य नरादिसंकुलं राजमार्गं प्रपेदे । सुमहती श्रीः सुमहच्छ्रीस्तद्वान् ॥ २६ ॥

अभ्यतीत्य स्वगृहाद्राजगृहपर्यन्तं राजमार्गमतीत्येत्यर्थः ॥ २७ ॥

मातुलञ्च चेन मातामहीमातुलान्यौ ॥ २८ ॥

उष्ट्रगोश्वखरैर्भृत्या भरतं यान्तमन्वयुः ॥ २९ ॥

बलेन गुप्तो भरतो महात्मा
सहार्य्यकस्यात्मसमैरमात्यैः ।
आदाय शत्रुघ्नमपेतशत्रु-
र्गृहाद्ययौ सिद्ध इवेन्द्रलोकात् ॥ ३० ॥

इत्यार्षे रामायणे वाल्मीकीये अयोध्याकाण्डे
भरतस्य मातामहावासात् निर्गमनं नाम
सप्ततितमः सर्गः ॥ ७० ॥

मण्डलाकाराणि चक्राणि येषां तान् । कतकस्तु मण्डलाकारतया रथप्रवर्त्तनसाधकं चक्रं मण्डलचक्रं चतुर्दिक्चक्रमध्यस्थं तद्येषां तान् काश्मरादौ च तद्येदानीं प्रसिद्धमित्याह ॥ २९ ॥

बलेन स्वीयेन मातुलीयेन च आर्यकस्य मातामहस्य सभार्यकः स्वात्मसमैरिति पाठान्तरम् भार्यासहित इत्यर्थः ॥ ३० ॥

इत्यार्षे रामायणे वाल्मीकीये अयोध्याकाण्डे
सप्ततितमः सर्गः ॥ ७० ॥

---

## एकसप्ततितमः सर्गः।

स प्राङ्मुखो राजगृहादभिनिर्याय वीर्यवान।
ततः सुदामां द्युतिमान् सन्तीर्यावेक्ष्य तां नदीम् ॥ १ ॥
ह्लादिनीं दूरपाराञ्च प्रत्यक्स्रोतस्तरङ्गिणीम्।
शतद्रूमतरच्छ्रीमान्नदीमिक्ष्वाकुनन्दनः ॥ २ ॥
ऐलधाने नदीं तीर्त्वा प्राप्य चापरपर्वतान्।
शिलामाकुर्वतीं तीर्त्वा आग्नेयं शल्यकर्षणम् ॥ ३ ॥

सुदामां तदाख्यां नदीम्। इदं मार्गान्तरं चतुरङ्गबलगमनोचितम्। दूतास्तु शीघ्रं तन्नगरप्राप्तये कान्तारमार्गेण गताः। इदञ्च दूतमार्गोक्तनद्यादीनामिहानुक्तेरन्येषामुक्तेश्च ज्ञायते ॥ १ ॥

दूरंपारं परतीरं यस्यास्तां ह्लादिनीं तदाख्यां नदीं प्रत्यक् स्रोतस्तरङ्गिणीं पश्चिमप्रवाहां नदीं ततः शतद्रूं तत्संज्ञिकाम् ॥ २ ॥

ऐलधाने तदाख्यग्रामे नदीं तद्ग्रामवर्त्तिनीं। ऐलधानीमिति पाठे तदाख्यामित्यर्थं कतकः। अपरपर्वता जनपदविशेषाः। अपरपर्यटानिति पाठान्तरम्। शिलां तदाख्यनदीम्। आकुर्वतीनामकं नद्यन्तरमिति कतकः। शिलामासमन्तात् कुर्वतीं शिलाकर्षणस्वभावामित्यर्थः इति तीर्थः स्वमध्यपतितं वस्तु शिलारूपं कुर्वतीमित्यर्थः। तत्राग्न

सत्यसन्धः शुचिर्भूत्वा प्रेक्षमाणः शिलावहाम्।
अभ्यगात् स महाशैलान् वनं चैत्ररथं प्रति ॥ ४ ॥
सरस्वतीञ्च गङ्गाञ्च युग्मेन प्रतिपद्य च।
उत्तरं वीरमत्स्यानां भारुण्डं प्राविशद्वनम् ॥ ५ ॥
वेगिनीञ्च कुलिङ्गाख्यां ह्लादिनीं पर्वतावृताम्।
यमुनां प्राप्य सन्तीर्णो बलमाश्वासयत्तदा ॥ ६ ॥
शीतीकृत्वा तु गात्राणि क्लान्तानाश्वास्य वाजिनः।
तत्र स्नात्वा च पीत्वा च प्रायादादाय चोदकम् ॥ ७ ॥

तद्वर्त्तिशिलाप्रायकाष्ठनौकयेत्यन्ये। आग्नेयं आग्नेयदिग्गतं शल्यकर्षणं तदोषध्युपेतं देशम्। तत्र च शिलावहा नदीति कतकः। आग्नेयं शल्यकर्त्तनमिति ग्रामद्वयं तन्मध्ये शिलावहा नदीति तीर्थः ॥ ३ ॥

महाशैलानतीत्य चैत्ररथं वनमभ्यगात्। चैत्ररथं यातुं महाशैला-नत्यगादिति पाठान्तरेऽर्थः ॥ ४ ॥

सरस्वतीं इयमत्र पश्चिमप्रवाहा। गङ्गापदेनात्रसुश्चक्षुसीताद्य-न्यतमाः पश्चिमप्रवाहा ग्राह्याः। एतास्तिस्रो गङ्गाप्रवाहा एवेति पुराणप्रसिद्धम्। तां युग्मेन सङ्गमेन प्रतिपद्य प्राप्य वीरमत्स्यानां देशाना-मुत्तरान् देशान् प्राप्य भारुण्डाख्यं वनं प्राविशत्। उत्तरमिति पाठे वनविशेषणं तत् ॥ ५ ॥

ततो वेगिनीत्यादि विशेषवतीं कुलिङ्गाख्यां नदीं सन्तीर्णो यमुनां प्राप्य बलमाश्वासयत ॥ ६ ॥

राजपुत्रो महारण्यमनभीक्ष्णोपसेवितम्।
भद्रो भद्रेण यानेन मारुतः खमिवात्यगात्॥ ८॥
भागीरथीं दुष्प्रतरां सोंशुधाने महानदीम्।
उपायाद्राघवस्तूर्णं प्राग्वटे विश्रुते पुरे॥ ९॥
स गङ्गां प्राग्वटे तीर्त्वा समायात् कुटिकोष्टिकाम्।
सबलस्तां स तीर्त्वाथ समगाद्धर्मवर्धनम्॥ १०॥
तोरणं दक्षिणार्धेन जम्बूप्रस्थं समागमत्।
वरूथञ्च ययौ रम्यं ग्रामं दशरथात्मजः॥ ११॥
तत्र रम्ये वने वासं कृत्वासौ प्राङ्मुखो ययौ।
उद्यानमुज्जिहानायाः प्रियका यत्र पादपाः॥ १२॥

गात्राणि वाजिनाम्। शीतीकृत्वा स्नपनादिना। आश्वास्य छायायां घासादिदानेन। उदकमादाय तीर्थबुद्ध्या॥ ७॥

अनभीक्ष्णोपसेवितं बहुधा जनैरनुपसेवितम्। भद्रेण प्रशस्तेन रथेन। भद्रजातीयेन गजेन वा॥ ८॥

अंशुधाने ग्रामे महानदीं गङ्गां दुष्प्रतरां ज्ञात्वा प्राग्वटे पुरे आगत्य तत्र तां तीर्त्वा कुटिकोष्टिकां आयात्तां तीर्त्वा धर्मवर्धनं ग्राममगात्॥ ९॥ १०॥

तोरणं दक्षिणार्धेन तोरणग्रामस्य दक्षिणभागेन जम्बूप्रस्थाख्यं ग्राममागतः। वरूथं तदाख्यम्॥ ११॥

उज्जिहानायास्तन्नामकनगर्याः प्रियकास्तन्नामानो वृक्षाः॥ १२॥

सतांस्तु प्रियकान् प्राप्य शीघ्रानास्थाय वाजिनः।
अनुज्ञाप्याथ भरतो वाहिनीं त्वरितो ययौ ॥ १३ ॥
वासं कृत्वा सर्वतीर्थे तीर्त्वा चोत्तरगां नदीम्।
अन्या नदीश्च विविधैः पार्वतीयैस्तुरङ्गमैः ॥ १४ ॥
हस्तिपृष्ठकमासाद्य कुटिकामप्यवर्त्तत।
ततार च नरव्याघ्रो लौहित्ये च कपीवतीम् ॥ १५ ॥
एकसाले स्थाणुमतीं विनते गोमतीं नदीम्।
कलिङ्गनगरे चापि प्राप्य सालवनं तदा ॥ १६ ॥
भरतः क्षिप्रमागच्छत्सुपरिश्रान्तवाहनः।
वनं च समतीत्याशु शर्वर्यामरुणोदये ॥ १७ ॥

सालांस्तु प्रियकानिति पाठे सालशब्दो वृक्षपर्यायः। सतांस्त्विति [...]ठि स भरत इत्यर्थः। शीघ्रान् वाजिन आस्थाय रथे संयोज्य अनु[...]ाप्य मया शीघ्रं गम्यते भवद्भिः मन्दमागन्तव्यमित्येवम्। उज्जिहानाया [...]र्वाक् स्वदेशत्वेन भयाभावात् ॥ १३ ॥

सर्वतीर्थे तदाख्यग्रामे पार्वतीयैः पर्वतोद्भवैः स्वार्थिकाणन्तमि-[...]ाङ्गः ॥ १४ ॥

हस्तिपृष्ठकं ग्रामः कुटिका नदी। लौहित्ये ग्रामे कपीवतीं [न]दीम् ॥ १५ ॥

हस्तिपृष्ठेति एकसालेति श्लोकद्वयं प्रक्षिप्तमिति कतकः ॥ १६ ॥

भरत इति ॥ १७ ॥ १८ ॥

अयोध्यां मनुना राज्ञा निर्मितां स ददर्श ह।
तां पुरीं पुरुषव्याघ्रः सप्तरात्रोषितः पथि॥ १८॥
अयोध्यामग्रतो दृष्ट्वा सारथिञ्चेदमब्रवीत्।
एषा नातिप्रतीता मे पुण्योद्याना यशस्विनी॥ १९॥
अयोध्या दृश्यते दूरात् सारथे! पाण्डुमृत्तिका।
यज्वभिर्गुणसम्पन्नैर्ब्राह्मणैर्वेदपारगैः॥ २०॥
भूयिष्ठमृद्धैराकीर्णा राजर्षिवरपालिता।
अयोध्यायां पुरा शब्दः श्रूयते तुमुलो महान्॥ २१॥
समन्तान्नरनारीणां तमद्य न शृणोम्यहम्।
उद्यानानि हि सायाह्ने क्रीड़ित्वोपरतैर्नरैः॥ २२॥
समन्ताद्विप्रधावद्भिः प्रकाशन्ते ममान्यथा।

नातिप्रतीता नातिहर्षिता। प्रतीतो हर्षितः ख्यात इति वैज-यन्ती॥ १९॥

पाण्डुमृत्तिका सुधाधवलितत्वान्निरानन्दत्वाच्च पाण्डुमृत्तिकारूप-कम्। यज्वादिभिर्व्याप्तापि राजपालितापि पाण्डुमृत्तिकासमूह इव निःसारा॥ २०॥ २१॥

सायाह्ने उद्यानानि प्रविश्य रात्रौ क्रीड़ित्वोपरतैर्नरैः प्रातः सम-न्ताद्विप्रधावद्भिर्यानि पूर्वमत्यन्तं प्रकाशन्ते तान्यद्य कामिभिः परित्य-क्तानि। अनु मां लक्षीकृत्य रुदन्तीव ममान्यथा महारण्यानीव प्रका-शन्ते॥ २२॥ २३॥

तानद्यानुरुदन्तीव परित्यक्तानि कामिभिः ॥ २३ ॥
अरण्यभूतेव पुरी सारथे ! प्रतिभाति माम् ।
न ह्यत्र यानैर्दृश्यन्ते न गजैर्न च वाजिभिः ।
निर्यान्तो वाभियान्तो वा नरमुख्या यथा पुरा ॥ २४ ॥
उद्यानानि पुरा भान्ति मत्तप्रमुदितानि च ।
जनानां रतिसंयोगेष्वत्यन्तगुणवन्ति च ॥ २५ ॥
तान्येतान्यद्य पश्यामि निरानन्दानि सर्वशः ।
स्रस्तपर्णैरनुपथं विक्रोशद्भिरिव द्रुमैः ॥ २६ ॥
नाद्यापि श्रूयते शब्दो मत्तानां मृगपक्षिणाम् ।
संरक्तां मधुरां वाणीं कलं व्याहरतां बहु * ॥ २७ ॥
चन्दनागुरुसम्पृक्तधूपसम्मूर्च्छितोमलः † ।

यान्तः शिबिकादिभिः अभियान्तः प्रविशन्तः ॥ २४ ॥

मत्तप्रमुदितानि मत्तप्रमुदितभृङ्गकोकिलादिमन्ति । तादृशस्त्रीपुरुषवन्ति च । रत्यर्थसंयोगे विविधकुसुमलतागृहदीर्घिकाक्रीडपर्वतादियुक्ततया यान्यत्यन्तगुणवन्ति अत्यन्तमनुकूलानि तान्यद्य निरानन्दानि पश्यामि ॥ २५ ॥

यतो विक्रोशद्भिरिव द्रुमैरुपलक्षितानि ॥ २६ ॥

अद्यापि उदितेपि सूर्ये अस्मासु प्रत्यासन्नेष्वपि कलमव्यक्तम् ॥ २७ ॥

---

* "मुहुः" इति वा पाठः ।

† "अतुलः" इति वा पाठः ।

प्रवाति पवनः श्रीमान् किन्नु नाद्य यथा पुरा ॥ २८ ॥
भेरीमृदङ्गवीणानां कोणसङ्घट्टितः पुनः।
किमद्य शब्दो विरतः सदादीनगतिः पुरा ॥ २९ ॥
अनिष्टानि च पापानि पश्यामि विविधानि च।
निमित्तान्यमनोज्ञानि तेन सीदति मे मनः ॥ ३० ॥
सर्वथा कुशलं सूत ! दुर्लभं मम बन्धुषु।
तथा ह्यसति सम्मोहे हृदयं सीदतीव मे ॥ ३१ ॥
विषण्णः श्रान्तहृदयः त्रस्तः संलुलितेन्द्रियः।
भरतः प्रविवेशाशु पुरीमिक्ष्वाकुपालिताम् ॥ ३२ ॥
द्वारेण वैजयन्तेन प्राविशच्छ्रान्तवाहनः।
द्वाःस्थैरुत्थाय विजयं पृष्टैस्तैः सहितो ययौ ॥ ३३ ॥

सम्मूर्च्छिता व्याप्तः ॥ २८ ॥

कोणो भेर्यादिवादनदण्डः तेन सङ्घट्टितः तदाघातजनितः यः पुरा सदा अदीनगतिरनुभूतः स किं विरतः ॥ २९ ॥

अनिष्टानि अनिष्टसूचकानि पापानि क्रूराणि काकादयः। पापं स्यात् क्रूरपाप्मनोः। अमनोज्ञानि अशुभसूचकानि निमित्तानि वामाक्षिस्पन्दादीनि ॥ ३० ॥

असति सम्मोहे तत्कारणे ॥ ३१ ॥

विषण्णो दीनः श्रान्तहृदयः खिन्नचित्तः। संलुलितानि क्षुभितानि इन्द्रियाणि यस्य सः ॥ ३२ ॥

स त्वनेकाग्रहृदयो द्वाःस्थं प्रत्यर्च्य तं जनम् ।
सूतमश्वपतेः क्लान्तमब्रवीत्तत्र राघवः ॥ ३४ ॥
किमहं त्वरयानीतः कारणेन विनानघ ! ।
अशुभाशङ्कि हृदयं शीलञ्च पततीव मे ॥ ३५ ॥
श्रुता नो यादृशाः पूर्वं नृपतीनां विनाशने ।
आकारांस्तानहं सर्वानिह पश्यामि सारथे ! ॥ ३६ ॥
सम्मार्जनविहीनानि परुषाण्युपलक्षये ।
असंयतकवाटानि श्रीविहीनानि सर्वशः ॥ ३७ ॥
बलिकर्मविहीनानि धूपसम्मोदनेन च ।

वैजयन्तेन इन्द्रप्रासादद्वारतुल्यद्वारेण तन्नामकेन वा । विजयं पृष्टः कृतविजयप्रश्नः । विजयमुक्त इति पाठान्तरम् ॥ ३३ ॥

अनेकाग्रहृदयः व्याकुलहृदयः । द्वाःस्थं जनं प्रत्यर्च्य सोपचारं निवर्त्य । अश्वपतेः केकयस्य ॥ ३४ ॥

आनीतः दूतद्वारेति शेषः । कारणेन विना कारणोक्तिं विना । अतएव मे हृदयमशुभाशङ्कि । शीलं धैर्यादिस्वभावः पतति गलति ॥ ३५ ॥

श्रुताः कथास्विति शेषः । तान् तादृशान् ॥ ३६ ॥

तानाकारानाह,—सम्मार्जनेत्यादि । ईदृशानि कुटुम्बिभवनान्युपलक्षये इति सम्बन्धः । असंयतकवाटानि । अनाश्रितकुटुम्बानीति वक्ष्यमाणत्वेन तद्बन्धनसामर्थ्याभावात् ॥ ३७ ॥

## द्विसप्ततितमः सर्गः।

अपश्यंस्तु ततस्तत्र पितरं पितुरालये।
जगाम भरतो द्रष्टुं मातरं मातुरालये॥ १॥

अनुप्राप्तन्तु तं दृष्ट्वा कैकेयी प्रोषितं सुतम्।
उत्पपात तदा हृष्टा त्यक्त्वा सौवर्णमासनम्॥ २॥

स प्रविश्यैव धर्मात्मा स्वगृहं श्रीविवर्जितम्।
भरतः प्रेक्ष्य जग्राह * जनन्याश्चरणौ शुभौ॥ ३॥

तं मूर्ध्नि समुपाघ्राय परिष्वज्य यशस्विनम्।
अङ्के भरतमारोप्य प्रष्टुं समुपचक्रमे॥ ४॥

अद्य ते कतिचिद्रात्र्यश्च्युतस्यार्यकवेश्मनः।
अपि नाध्वश्रमः शीघ्रं रथेनापततस्तव॥ ५॥

अपश्यन्निति॥ १॥ २॥

स्वगृहं स्वमातृगृहम्॥ ३॥ ४॥

आर्यकवेश्मनः मातामहगृहात् च्युतस्य चलितस्य ते मार्गे कतिचित्कतिरात्र्योऽलमास्तद्वक्तुमर्हसीत्यन्वयः। रथेन शीघ्रमागच्छतस्तवाध्वनि श्रमो न खलु तद्वद॥ ५॥

---

* "प्रतिजग्राह" इति वा पाठः।

आर्यकस्ते सुकुशली युधाजिन् मातुलस्तव।
प्रवासाच्च सुखं पुत्र ! सर्वं मे वक्तुमर्हसि ॥ ६ ॥
एवं पृष्टस्तु कैकेय्या प्रियं पार्थिवनन्दनः।
आचष्ट भरतः सर्वं मात्रे राजीवलोचनः ॥ ७ ॥
अद्य मे सप्तमी रात्रिश्च्युतस्यार्य्यकवेश्मनः।
अम्बायाः कुशली तातो युधाजिन्मातुलश्च मे ॥ ८ ॥
यन्मे धनञ्च रत्नञ्च ददौ राजा परन्तपः।
परिश्रान्तं पथ्यभवत् ततोऽहं पूर्वमागतः ॥ ९ ॥
राजवाक्यहरैर्दूतैस्त्वर्य्यमाणोऽहमागतः।
यदहं प्रष्टुमिच्छामि तदम्बा वक्तुमर्हति ॥ १० ॥
शून्योऽयं शयनीयस्ते पर्य्यङ्को हेमभूषितः।
न चायमिक्ष्वाकुजनः प्रहृष्टः प्रतिभाति मे ॥ ११ ॥
राजा भवति भूयिष्ठं दहाम्बाया निवेशने।
तमहं नाद्य पश्यामि द्रष्टुमिच्छन्निहागतः ॥ १२ ॥

आर्यको मातामहः मातुलश्च कुशली न वेति इतः प्रवासादारभ्य मातुलगृहे सुखं न वेत्येतत्सर्वं वक्तुमर्हसि ॥ ६ ॥ ७ ॥

च्युतस्य चलितस्य। सप्तमी रात्रिः एतद्दिनात् पूर्वा रात्रिः सप्तमीत्यर्थः। तेन सप्तरात्रोषितः पथीत्यनेन न विरोधः ॥ ८ ॥

परिश्रान्तं परिश्रान्तवाहनम् ॥ ९ ॥ १० ॥

शून्यः पित्रेति शेषः। ते शयनीयः शयनार्हः ॥ ११ ॥

पितुर्ग्रहीष्ये पादौ च तं ममाख्याहि पृच्छतः।
आहोस्विदम्बाज्येष्ठायाः कौशल्याया निवेशने ॥ १३ ॥
तं प्रत्युवाच कैकेयी प्रियवद्घोरमप्रियम्।
अजानन्तं प्रजानन्ती राज्यलोभेन मोहिता ॥ १४ ॥
या गतिः सर्वभूतानां तां गतिं ते पिता गतः।
राजा महात्मा तेजस्वी यायजूकः सतां गतिः ॥ १५ ॥
तच्छ्रुत्वा भरतो वाक्यं धर्माभिजनवान् शुचिः।
पपात सहसा भूमौ पितृशोकबलार्दितः ॥ १६ ॥
हा हतोऽस्मीति कृपणां दीनां वाचमुदीरयन्।
निपपात महाबाहुर्बाहू विक्षिप्य वीर्य्यवान् ॥ १७ ॥
ततः शोकेन संवीतः पितुर्मरणदुःखितः।
विललाप महातेजा भ्रान्ताकुलितचेतनः ॥ १८ ॥

द्रष्टुमिच्छन्निहागतः प्रायेणेह तस्यावस्थानात् ॥ १२ ॥
अम्बानां मध्ये या ज्येष्ठा तस्याः निवेशने तिष्ठतीति शेषः ॥ १३ ॥
अजानन्तमिति राजवृत्तान्तमिति शेषः। प्रियवत् प्रजानन्तीति योजना। तत्र हेतूराज्यलोभेनेति ॥ १४ ॥
यायजूको यज्ञशीलः ॥ १५ ॥
धर्माभिजनवान् धर्मयुक्तवंशवान् ॥ १६ ॥
बाहू विक्षिप्य भूमावाहत्य ॥ १७ ॥
शोकेन संवीत आवृतचित्तः। मरणदुःखितः मरणश्रवणेन सञ्जा-

एतत् सुरुचिरं भाति पितुर्मे शयनं पुरा ।
शशिनेवामलं रात्रौ गगनं तोयदात्यये ॥ १९ ॥
तदिदं न विभात्यद्य विहीनं तेन धीमता ।
व्योमेव शशिना हीनमपशुष्क इव सागरः ॥ २० ॥
बाष्पमुत्सृज्य कण्ठेन स्वात्मना परिपीड़ितः * ।
प्रच्छाद्य वदनं श्रीमद्वस्त्रेण जयतां वरः ॥ २१ ॥
तमार्त्तं देवसंकाशं समीक्ष्य पतितं भुवि ।
निकृत्तमिव सालस्य स्कन्धं परशुना वने ॥ २२ ॥
माता मातङ्गसंकाशं † चन्द्रार्कसदृशं सुतम् ।

सदुःखः । भ्रान्ता अनवस्थिता आकुलिता खिन्ना चेतना यस्य स तादृशो विललाप ॥ १८ ॥

विलापं दर्शयति । एतदिति पुरा भाति स्म ॥ १९ ॥

अपशुष्कः आपः शुष्का यस्मिन् कालाग्निना सः अपशुष्कमिव सागरमिति पाठे सागरस्वरूपमित्यर्थः । शुष्काप इति पाठान्तरम् ॥ २० ॥

श्रीमद्वदनं वस्त्रेणाच्छाद्य कण्ठेन कण्ठस्वरेण सह बाष्पं नेत्रजलमुत्सृज्य भूमौ पतित्वा विललापेति शेषः ॥ २१ ॥

सालस्य सालवृक्षस्य स्कन्धं शाखाम् ॥ २२ ॥ २३ ॥

* "स्वार्त्तः परमपीड़ितः" इति वा पाठः ।
† "मत्तमातङ्गसङ्काशम्" इति वा पाठः ।

उत्थापयित्वा शोकार्त्तं वचनञ्चेदमब्रवीत् ॥ २३ ॥
उत्तिष्ठोत्तिष्ठ किं शेषे राजपुत्र! महायशः! ।
त्वद्विधा न हि शोचन्ति सन्तः सदसि सम्मताः ॥ २४ ॥
दानयज्ञाधिकारा हि शीलश्रुतितपोनुगा ।
बुद्धिस्ते बुद्धिसम्पन्न! प्रभेवार्कस्य मन्दिरे ॥ २५ ॥
स रुदित्वा चिरं कालं भूमौ परिविवृत्य च ।
जननीं प्रत्युवाचेदं शोकैर्बहुभिरावृतः ॥ २६ ॥
अभिषेक्ष्यति रामन्तु राजा यज्ञं तु यक्ष्यते ।
इत्यहं कृतसङ्कल्पो हृष्टो यात्रामयासिषम् ॥ २७ ॥
तदिदं ह्यन्यथाभूतं व्यवदीर्णं मनो मम ।
पितरं यो न पश्यामि नित्यं प्रियहिते रतम् ॥ २८ ॥

राजन्नचेति राजपुत्रेति वा पाठः। सदसि सम्मताः सभ्याः ॥ २४ ॥

शीलं सद्वृत्तम्। श्रुतिः श्रुतम्। तपश्चान्द्रायणादि तदनुगा। शीलश्रुतिमनोनुगेति पाठे तदुभयपरिशीलनविषयं यन्मनःसङ्कल्पात्मकं तदनुगा बुद्धिरध्यवसायात्मिका। अर्कस्य मन्दिरे अर्कमण्डले तदेव हि तस्य गृहम्। तीर्थस्तु मन्दर इति पाठं मत्वा ऽत्युन्नतमन्दरपर्वतेऽर्कप्रभायाः चिरावस्थानादेवमुक्तिरिति व्याचख्यौ ॥ २५ ॥ २६ ॥

यक्ष्यते करिष्यति यात्रा मयासिषं यात्रामकार्षम्। अयाचिषमिति पाठे मातामहायेति शेषः ॥ २७ ॥

अन्यथाभूतं चिन्तितविपरीतं जातम् ॥ २८ ॥

अम्ब ! केनात्यगाद्राजा व्याधिना मय्यनागते ।
धन्या रामादयः सर्वे यैः पिता संस्कृतः स्वयम् ॥ २८ ॥
न नूनं मां महाराजः प्राप्तं जानाति कीर्त्तिमान् ।
उपजिघ्रेत्तु मां मूर्ध्नि तातः सन्नाम्य सत्वरम् ॥ ३० ॥
क्व स पाणिः सुखस्पर्शस्तातस्याक्लिष्टकर्मणः ।
येन मां रजसा ध्वस्तमभीक्ष्णं परिमार्जति ॥ ३१ ॥
यो मे भ्राता पिता बन्धुर्यस्य दासोऽस्मि सम्मतः ।
तस्य मां शीघ्रमाख्याहि रामस्याक्लिष्टकर्मणः ॥ ३२ ॥
पिता हि भवति ज्येष्ठो धर्ममार्य्यस्य जानतः ।
तस्य पादौ ग्रहीष्यामि सहीदानीं गतिर्मम ॥ ३३ ॥
धर्मविद्धर्मशीलश्च महाभागो दृढ़व्रतः ।
आर्य्ये ! किमब्रवीद्राजा पिता मे सत्यविक्रमः ॥ ३४ ॥

रामेणौर्द्ध्वदेहिकं कृतमिति मन्वान आह,—धन्या इत्यादि ॥ २९ ॥

पुनः शोचति,—नेति । प्राप्तमिहागतं सन्नाम्य मूर्धार्द्रमिति शेषः ॥ ३० ॥

परिमार्जति परिमार्ष्टि ॥ ३१ ॥

आख्याहि आगतमिति शेषः ॥ ३२ ॥

धर्मं जानत आर्य्यस्य श्रेष्ठस्य विवेकिनः पुरुषस्य ज्येष्ठो ज्येष्ठो भ्राता पिता भवति । अतस्तस्य पादौ ग्रहीष्यामि । यतः स इदानीं मम गतिः ॥ ३३ ॥ ३४ ॥

पश्चिमं साधु सन्देशं इच्छामि श्रोतुमात्मनः।
इति पृष्टा यथातत्त्वं कैकेयी वाक्यमब्रवीत्॥ ३५॥
रामेति राजा विलपन् हा सीते! लक्ष्मणेति च।
स महात्मा परं लोकं गतो गतिमतां वरः॥ ३६॥
इति मां पश्चिमां वाचं व्याजहार पिता तव।
कालधर्मं परिक्षिप्तः पाशैरिव महागजः॥ ३७॥
सिद्धार्थास्तु नरा राममागतं सह सीतया।
लक्ष्मणञ्च महाबाहुं द्रक्ष्यन्ति पुनरागतम्॥ ३८।
तच्छ्रुत्वा विषसादैवं द्वितीयाप्रियशंसनात्।
विषण्णवदनो भूत्वा भूयः पप्रच्छ मातरम्॥ ३९॥
क्व चेदानीं स धर्मात्मा कौसल्यानन्दवर्द्धनः।
लक्ष्मणेन सह भ्राता सीतया च समागतः॥ ४०॥
तथा पृष्टा यथान्यायमाख्यातुमुपचक्रमे।

पश्चिमं सन्देशम् अन्त्यकालिकम्॥ ३५॥
विलपन् परलोकं गतः ननु किञ्चिदपि सन्देशमवोचदित्यर्थः॥३६॥
इमां वाचं सिद्धार्थास्त्वित्यादिवक्ष्यमाणाम्॥ ३७॥ ३८॥
एवं द्वितीयेति। राजमरणापेक्षया रामवनगमनरूपाप्रियस्य द्वितीयत्वम्॥ ३९॥
क्व चेदानीं गत इति शेषः। समागतो मिलितः॥ ४०॥

मातास्य युगपद्वाक्यं * विप्रियं प्रियशंसया ॥ ४१ ॥
स हि राजसुतः पुत्र ! चीरवासा महावनम् ।
दण्डकान् सह वैदेह्या लक्ष्मणानुचरो गतः ॥ ४२ ॥
तच्छ्रुत्वा भरतस्त्रस्तो भ्रातुश्चारित्रशंकया ।
स्वस्य वंशस्य माहात्म्यात् प्रष्टुं समुपचक्रमे ॥ ४३ ॥
कच्चिन्न ब्राह्मणधनं हृतं रामेण कस्यचित् ।
कच्चिन्नाढ्यो दरिद्रो वा तेनापापो विहिंसितः ॥ ४४ ॥
कच्चिन्न परदारान् वा राजपुत्रोऽभिमन्यते ।
कस्मात् स दण्डकारण्ये भ्राता रामो विवासितः ॥ ४५ ॥

विप्रियं रामविवासनरूपं प्रियशंसया प्रियशङ्कया एतच्छ्रवणे भरतस्य सुखं भविष्यतीति तर्केण । युगपत् राजमरणकथनसमकालमेव ॥ ४१ ॥ ४२ ॥

चारित्रशङ्कया रामस्य धर्मच्युतिशङ्कया यतः स्ववंशस्य माहात्म्यम् असदाचाराभावपूर्वकं सदाचारनिरतत्वम् असदाचारत्यागित्वञ्च तत् संस्मृत्य । प्रष्टुं दण्डकारण्यगमनकारणमिति शेषः ॥ ४३ ॥

कस्यचिद्धेतोरिति शेषः । अपापो निरपराधः ॥ ४४ ॥

भ्रूणहेव विवासित इति पाठे सर्वशाखाध्यायी भ्रूणस्तस्य हन्तेत्यर्थ इति तीर्थः । भ्रूणो गर्भ इत्यन्ये ॥ ४५ ॥

---

* "सुमहद्वाक्यम्" इति वा पाठः ।

अथास्य चपला माता तत् स्वकर्म यथायथम् ।
तेनैव स्त्रीस्वभावेन व्याहर्तुमुपचक्रमे ॥ ४६ ॥
एवमुक्ता तु कैकेयी भरतेन महात्मना ।
उवाच वचनं हृष्टा वृथापण्डितमानिनी ॥ ४७ ॥
न ब्राह्मणधनं किञ्चिद्धृतं रामेण कस्यचित् ।
कच्चिन्नाढ्यो दरिद्रो वा तेनापापो विहिंसितः ॥ ४८ ॥
न रामः परदारान् स चक्षुर्भ्यामपि पश्यति ।
मया तु पुत्र ! श्रुत्वैव रामस्येहाभिषेचनम् ॥ ४९ ॥
याचितस्ते पिता राज्यं रामस्य च विवासनम् ।
स स्ववृत्तिं समास्थाय पिता ते तत्तथाकरोत् ॥ ५० ॥
रामस्तु सह सौमित्रिः प्रोषितः सह सीतया ।
तमपश्यन् प्रियं पुत्रं महीपालो महायशाः ॥ ५१ ॥
पुत्रशोकपरिद्यूनः पञ्चत्वमुपपेदिवान् ।
त्वया त्विदानीं धर्मज्ञ ! राजत्वमवलम्ब्यताम् ॥ ५२ ॥

स्त्रीस्वभावेन धर्माधर्महिताहितोचितानुचितविवेकशून्यतारूपेण ॥ ४६ ॥ ४७ ॥ ४८ ॥

इह राज्ये ॥ ४९ ॥

ते राज्यं रामस्य च विवासनं ते पिता याचित इति संबन्धः । स्ववृत्तिं स्वस्य सत्यस्थितिलक्षणाम् । तथाकरोत् तुभ्यं राज्यं दत्तवान् इत्यर्थः ॥ ५० ॥ ५१ ॥

त्वत्कृते हि मया सर्वमिदमेवंविधं कृतम् ।
मा शोकं मा च सन्तापं धैर्यमाश्रय पुत्रक ! ॥ ५३ ॥
त्वदधीना हि नगरी राज्यञ्चैतदनामयम् ॥ ५४ ॥

तत् पुत्र ! शीघ्रं विधिना विधिज्ञै-
र्वसिष्ठमुख्यैः सहितो द्विजेन्द्रैः ।
सङ्काल्य राजानमदीनसत्त्व-
मात्मानमुर्व्यामभिषेचयस्व ॥ ५५ ॥

इत्यार्षे रामायणे वाल्मीकीये अयोध्याकाण्डे
कैकेयीभरतसंवादो नाम द्विसप्तति-
तमः सर्गः ॥ ७२ ॥

परिद्यूनः क्षीणः विलपन्त्या । धर्मज्ञ रामस्येव पित्राज्ञापालनरूप-धर्मज्ञ ॥ ५२ ॥

मा शोकं कुर्विति शेषः ॥ ५३ ॥

अनामयं निरुपद्रवं राज्यञ्चैतत् त्वदधीनम् ॥ ५४ ॥

संकाल्य प्रेतसंस्कारेण संस्कृत्य ॥ ५५ ॥

इत्यार्षे रामायणे वाल्मीकीये अयोध्याकाण्डे
द्विसप्ततितमः सर्गः ॥ ७२ ॥

---

## त्रिसप्ततितमः सर्गः ।

श्रुत्वा च स पितुर्वृत्तं भ्रातरौ च विवासितौ ।

भरतो दुःखसन्तप्त इदं वचनमब्रवीत् ॥ १ ॥

किन्नु कार्यं हतस्येह मम राज्येन शोचतः ।

विहीनस्याथ पित्रा च भ्रात्रा पितृसमेन च ॥ २ ॥

दुःखे मे दुःखमकरोर्व्रणे क्षारमिवाददाः ।

राजानं प्रेतभावस्थं कृत्वा रामञ्च तापसम् ॥ ३ ॥

कुलस्य त्वमभावाय कालरात्रिरिवागता ।

अङ्गारमुपगुह्य स्म पिता मे नावबुद्धवान् ॥ ४ ॥

मृत्युमापादितो राजा त्वया मे पापदर्शिनि ! ।

अथ सर्वानर्थमूलत्वं मातुस्तद्वचनादेव ज्ञात्वा तामुपालभते,— श्रुत्वेति । वृत्तं अत्ययः ॥ १ ॥

हतस्य त्वयाऽपारदुःखं प्रापितस्य ॥ २ ॥

दुःखे दुःखकरणात् दृष्टान्तः व्रणे क्षारमिव । क्षारं खरमूत्रसहित-चूर्णम् ॥ ३ ॥

कालरात्रिः संहाररात्रिः मे पिताङ्गारमुपगुह्यालिङ्ग्य नावबुद्धवान् स्मेति लोकोक्तौ ॥ ४ ॥

सुखं परिहृतं मोहात् कुलेऽस्मिन् कुलपांसनि ! ॥ ५ ॥
त्वां प्राप्य हि पिता मेद्य सत्यसन्धो महायशाः ।
तीव्रदुःखाभिसन्तप्तो वृत्तो दशरथो नृपः ॥ ६ ॥
विनाशितो महाराजः पिता मे धर्मवत्सलः ।
कस्मात्प्रव्राजितो रामः कस्मादेव वनं गतः ॥ ७ ॥
कौसल्या च सुमित्रा च पुत्रशोकाभिपीड़िते ।
दुष्करं यदि जीवेतां प्राप्य त्वां जननीं मम ॥ ८ ॥
ननार्य्योपि च धर्मात्मा त्वयि वृत्तिमनुत्तमाम् ।
वर्त्तते गुरुवृत्तिज्ञो यथा मातरि वर्त्तते ॥ ९ ॥
तथा ज्येष्ठा हि मे माता कौसल्या दीर्घदर्शिनी ।
त्वयि धर्मं समास्थाय भगिन्यामिव वर्त्तते ॥ १० ॥
तस्याः पुत्रं महात्मानं चीरवल्कलवाससम् ।

मे राजेति योजना । अस्मिन् कुले सुखं त्वया परिहृतम् ॥ ५ ॥
वृत्तोऽतीतः ॥ ६ ॥
कस्माद्विनाशितः । कस्मात् प्रव्राजितः । स वा कस्माद्वनं गतः । निष्प्रयो- जनमेवेत्यर्थः ॥ ७ ॥
न केवलं पितृभ्रातृपीड़ा अपितु मात्रोरपीत्याह,—कौसल्येत्यादि । मम जननीं त्वामेव मृत्युं प्राप्य यदि जीवेतां तदपि दुष्करं दुर्लभमेव ॥८॥
आर्य्यो रामः, गुरुषु कर्तव्यां वृत्तिं जानाति तादृशः ॥ ९ ॥
राममात्रापि न कश्चिदपराधस्त्वयि कृत इत्याह,—तथेति । दीर्घ-

प्रस्थाप्य वनवासाय कथं पापे ! न शोचसे ॥ ११ ॥
अपापदर्शिनं शूरं कृतात्मानं यशस्विनम्।
प्रव्राज्य चीरवसनं किन्नु पश्यसि कारणम् ॥ १२ ॥
लुब्धाया विदितो मन्ये न तेऽहं राघवं यथा।
तथाह्यनर्थो राज्यार्थं त्वयानीतो महानयम् ॥ १३ ॥
अहं हि पुरुषव्याघ्रावपश्यन् रामलक्ष्मणौ।
केन शक्तिप्रभावेण राज्यं रक्षितुमुत्सहे ॥ १४ ॥
तं हि नित्यं महाराजो बलवन्तं महौजसम्।
अपाश्रितोऽभूद्धर्मात्मा मेरुर्मेरुवनं यथा ॥ १५ ॥

दर्शिनी त्वत्तो दूरकालभाव्यनर्थं जानती त्वयि धर्मं त्वच्चित्तानुवर्तनरूपं धर्ममास्थाय यथा भगिन्यां वर्तते तथा त्वयि वर्तत इत्यर्थः ॥ १० ॥

तस्यास्तादृशधर्मयुक्तायाः चीरपर्य्यायं वल्कलं वासो यस्य तम् ॥११॥

किं कारणं फलं पश्यसि ॥ १२ ॥

अहं राघवं प्रति यथा यादृशः यादृशभक्तिमान् तथा लुब्धाया राज्यलुब्धायास्ते न विदितो मन्ये। तत्र हेतुः,—तथाहि तत एव राज्यार्थं महानयमनर्थः पितृनाशराज्यार्हज्येष्ठवनवासादिरूप आनीतः सम्पादितः ॥ १३ ॥

उक्तानर्थमात्रमेव त्वद्दुश्चेष्टाफलं नतु त्वदिष्टसिद्धिरित्याह,— अहं हीति। न कथमपीति भावः ॥ १४ ॥

न केवलं ममैव रामशक्त्यपेक्षा किन्तु पितुरपीत्याह,—तं हीति।

सोऽहं कथमिमं भारं महाधुर्य्यसमुद्यतम् ।
दम्यो धुरमिवासाद्य वहेयं केन चौजसा ॥ १६ ॥
अथवा मे भवेच्छक्तिर्योगैर्बुद्धिबलेन वा ।
सकामां न करिष्यामि त्वामहं पुत्रगर्धिनीम् ॥ १७ ॥
न मे विकाङ्क्षा जायेत त्यक्तुं त्वां पापनिश्चयाम् ।
यदि रामस्य नावेक्षा त्वयि स्यान्मातृवत्सदा ॥ १८ ॥

मेरुः स्वजनितमेरुवनं यथा स्वरक्षणार्थमाश्रित अन्यथा परैराक्रमणीय एव स्यात् । एवं राजा इहामुत्रार्थसिद्धये राममाश्रितः ॥ १५ ॥

सोऽहं ज्येष्ठरामैकबलः भारं राज्यभारम् । महाधुर्य्येण समुद्यतं धृतं धुरमासाद्य दम्योवत्सतर इव कथं सहेयम् । केन चौजसा बलेन सहेयं रामं विनेति शेषः ॥ १६ ॥

तर्हि त्वं परापकल्यत्तथाह,—अथवेति । शक्तिः राज्यभरणसामर्थ्यम् । योगैः योगः संहननोपायध्यानसङ्गतियुक्तिष्वित्युक्तयोगैर्बुद्धियुक्त-महाप्राणत्वलक्षणबलेन यद्यपि भवेत् संभावितेवाथापि पुत्रगर्द्धिनीं पुत्र-राज्याभिलाषवतीं त्वां सकामां पूर्णकामनां न करिष्यामि * । अन्यथा त्वमिवाहमपि लोके दूषितः स्यामिति भावः ॥ १७ ॥

किञ्च त्यजेदेकं कुलस्यार्थे इति न्यायेन तव विवासनमेव सांप्रतं तथापि रामस्य त्वयि मातृवद्व्यवहारात् तन्न कर्तुं शक्यमित्याह,—नेति त्वां त्यक्तुं विकांक्षा इच्छाभावो नैव जायेत यदि रामस्य मातृवदवेक्षा त्वयि न स्यात् ॥ १८ ॥

---

* योगैः उपायैः बुद्धिबलेन ग्रहणधारणाद्यष्टाङ्गयुक्तबुद्धिबलेन ।

उत्पन्ना तु कथं बुद्धिस्तवेयं पापदर्शिनी ।
साधुचारित्रविभ्रष्टे ! पूर्वेषां नो विगर्हिता ॥ १९ ॥
अस्मिन् कुले हि सर्वेषां ज्येष्ठो राज्येऽभिषिच्यते ।
अपरे भ्रातरस्तस्मिन् प्रवर्त्तन्ते समाहिताः ॥ २० ॥
न हि मन्ये नृशंसे ! त्वं राजधर्ममवेक्षसे ।
गतिं वा न विजानासि राजवृत्तस्य शाश्वतीम् ॥ २१ ॥
सततं राजपुत्रेषु ज्येष्ठो राजाभिषिच्यते ।
राज्ञामेतत्समं तत्स्यादिक्ष्वाकूणां विशेषतः ॥ २२ ॥

इयं बुद्धिः कनिष्ठस्याभिषेकबुद्धिः ॥ १९ ॥

अस्या बुद्धेः पूर्वगर्हितत्वमेव दर्शयति,—अस्मिन्निति । अस्मदीये कुले सर्वेषां ज्येष्ठोऽभिषिच्यते । तत्वापेक्षितज्येष्ठो अपरे भ्रातरस्तस्मिन् समाहितास्तदधीना प्रवर्तन्ते । एवं किञ्च नः सर्वेषामाचार इति शेषः । स्मरति च मनुः ।—

"ज्येष्ठ एव तु गृह्णीयात् सकलं पैतृकं धनम् ।
अन्ये तमनुजीवेयुर्यथैव पितरं तथा ॥" इति ॥ २० ॥

राजधर्मं नावेक्षसे न जानासि । राजवृत्तस्य राजधर्मस्य शाश्वतीमव्यभिचरितां गतिं फलमपि न जानासि इति मन्ये ॥ २१ ॥

एतद्राज्ञां सर्वराज्ञां समम् । यद्राजपुत्रेषु ज्येष्ठस्याभिषेकः । इक्ष्वाकूणां तत् ज्येष्ठाभिषेचनं विशेषतः स्यात् संभाव्यते । राज्ञां सर्वमिति पाठे सर्वमित्यत्र छान्दसी षष्ठ्यर्थे द्वितीया सर्वेषामित्यर्थः ॥ २२ ॥

तेषां धर्म्मैकरक्षाणां कुलचारित्रशोभिनाम्।
अद्य चारित्रशौण्डीर्यं त्वां प्राप्य विनिवर्त्तितम्॥ २३॥
तवापि सुमहाभागे! जनेन्द्रकुलपूर्व्वके!।
बुद्धिमोहः कथमयं सम्भूतस्त्वयि गर्हितः॥ २४॥
नतु कामं करिष्यामि तवाहं पापनिश्चये!।
यया व्यसनमारब्धं जीवितान्तकरं मम॥ २५॥
एषत्विदानीमेवाहमप्रियार्थं तवानघे!।
निवर्त्तयिष्यामि वनात् भ्रातरं स्वजनप्रियम्॥ २६॥

धर्म्मेणैकेन रक्षा रक्षणं येषां तेषां धर्म्मैकरक्षाणां धर्ममेकं रक्षन्ति तेषां वा कुलक्रमागतचारित्रेण शोभावतां यत् चारित्रविषयकं शौण्डीर्य्यं गर्वस्तदद्य त्वां प्राप्य त्वत्संबन्धान्निवर्तितमित्यर्थः॥ २३॥

तथा त्वय्यपि महाकुलप्रसूतायामेवंविधबुद्धिकारणं न पश्यामीत्याह,—तवापीति। हे सुमहाभागे! तदुपपादकं विशेषणं जनेन्द्रकुलपूर्वक इति जनेन्द्रः कैकेयकुलकूटस्थः पूर्वकः कारणं यस्यास्तथाभूतेऽतो महाकुलप्रसूतायास्तव गर्हितोऽयं बुद्धिमोहस्त्वयि कथं संभूत इत्यन्वयः। जनेन्द्राः कुलपूर्वगा इति पाठे तव पितृवंशराजानोऽपि कुलपूर्वं कुलज्येष्ठं गच्छन्ति राजत्वेन तादृशा इत्यर्थः शेषं प्राग्वत्॥ २४॥

सर्वथा त्वद्बुद्धिमहं नानुवर्तिष्ये इत्याह,—नत्विति॥ २५॥

न केवलं त्वदिष्टाकरणं किंत्वनिष्टमपि करिष्यामीत्याह। एष इति। अप्रियार्थं तत्सम्पादनार्थम्॥ २६॥

निवर्त्तयित्वा रामञ्च तस्याहं दीप्ततेजसः।
दासभूतो भविष्यामि सुस्थितेनान्तरात्मना ॥ २७ ॥
इत्येवमुक्त्वा भरतो महात्मा
प्रियेतरैर्वाक्यगणैस्तुदंस्ताम्।
शोकार्दितश्चापि ननाद भूयः
सिंहो यथा मन्दरकन्दरस्थः ॥ २८ ॥

इत्यार्षे रामायणे वाल्मीकीये अयोध्याकाण्डे
भरतकृतभर्त्सनं नाम त्रिसप्ततितमः
सर्गः ॥ ७३ ॥

दासभूतो दासत्वं प्राप्तः। मद्राज्येच्छोस्त्वानिष्टसंपादनार्थमित्याशयः। न केवलं त्वत्कोपादेवैतदाचरणमपि तु परमार्थत एवेत्याह,— सुस्थितेनेति। सुखप्रतिष्ठेन चित्तेनेत्यर्थः। ज्येष्ठानुवर्तनस्यैव शास्त्रतः परमहितत्वादिति भावः ॥ २७ ॥

प्रियेतरैः दुःखकरैः ॥ २८ ॥

इत्यार्षे रामायणे वाल्मीकीये अयोध्याकाण्डे
त्रिसप्ततितमः सर्गः ॥ ७२ ॥

## चतुःसप्ततितमः सर्गः ।

तां तथा गर्हयित्वा तु मातरं भरतस्तदा * ।
रोषेण महताविष्टः पुनरेवाब्रवीद्वचः ॥ १ ॥
राज्याद् भ्रंशस्व कैकेयि ! नृशंसे ! दुष्टचारिणि ! ।
परित्यक्ता हि धर्मेण मा मृतं रुदती भव ॥ २ ॥
किन्नु तेदूषयद्राजा रामो वा भृशधार्मिकः ।
ययोर्मृत्युर्विवासश्च त्वत्कृते तुल्यमागतौ ॥ ३ ॥
भ्रूणहत्यामसि प्राप्ता कुलस्यास्य विनाशनात् ।
कैकेयि ! नरकं गच्छ मा च तातसलोकताम् ॥ ४ ॥

तामिति ॥ १ ॥

भ्रंशस्व भ्रष्टा भव वनं गच्छेत्यर्थः । मृतं भर्त्तारमुद्दिश्य रुदती मा भव धर्मत्यागेन भार्य्यापतिभावस्य नष्टत्वादिति भावः । केचित्तु परित्यक्तधर्मायास्ते पुत्रजीवनमसम्भावितमतो मा मां मृतं दृष्ट्वा रुदती भवेत्यर्थः तव पुत्र मरणकृतः शोकोऽस्त्विति भाव इत्याहुः ॥ २ ॥

अदूषयत् त्वत्संबन्धि किं गुणादिकमदूषयत् तुल्यं युगपत् ॥ ३ ॥

तस्माद्भ्रूणहत्यां शाखाध्येतृब्रह्महत्यां प्राप्तासि । उत्तमक्षत्रियस्य

* "स्थिताम्" इति वा पाठः ।

यत्त्वया ह्यीदृशं पापं कृतं घोरेण कर्मणा।
सर्वलोकप्रियं हित्वा ममाप्यापादितं भयम्॥ ५॥
तत्कृते मे पिता वृत्तो रामश्चारण्यमाश्रितः।
अयशो जीवलोके च त्वयाहं प्रतिपादितः॥ ६॥
मातृरूपे! ममामित्रे! नृशंसे! राज्यकामुके!।
न तेऽहमभिभाष्योऽस्मि दुर्वृत्ते! पतिघातिनि!॥ ७॥
कौसल्या च सुमित्रा च याश्चान्या मम मातरः।
दुःखेन महताविष्टास्त्वां प्राप्य कुलदूषिणीम्॥ ८॥
न त्वमश्वपतेः कन्या धर्मराजस्य धीमतः।

राज्ञो भर्तुर्वधाद्रामादीनां विवासनाच्चेति भावः। नरकं गच्छ प्राप्तकाले लोट्। नरक एव ते न्यायप्राप्त इत्यर्थः॥ ४॥

ईदृशं भर्तृमरणरामविवासनरूपम्। घोरेण कर्मणा कर्मणो घोरत्वञ्च सामान्यविषयवरदयस्येदृशविशेषविषयत्वकरणम्। सर्वलोकप्रियं रामं हित्वा विवास्य। भयं कैकेयीपुत्रोऽयं तद्वदेव दुष्टस्वभाव इति लोककलङ्करूपम्। यद्वा महापातकयुतायास्तव संसर्गेण पञ्चमपातकित्वरूपभयम्॥ ५॥

तदेवाह,—तदिति। जीवलोके च चात् परलोके च प्रतिपादितः प्रापितः॥ ६॥

न तेऽहमभिभाष्यः मत्संभाषणं त्वया न कार्य्यमित्यर्थः॥ ७॥ ८॥

न त्वमश्वपतेः कन्या तत्कुलोचिता कन्या न भवसीत्यर्थः। पितु-

राक्षसी तत्र जातासि कुलप्रध्वंसिनी पितुः ॥ ९ ॥
यत्त्वया धार्मिको रामो नित्यं सत्यपरायणः ।
वनं प्रस्थापितो वीरः * पितापि त्रिदिवं गतः ॥ १० ॥
यत्प्रधानासि तत्पापं मयि पित्रा विनाकृते ।
भ्रातृभ्याञ्च परित्यक्ते सर्वलोकस्य चाप्रिये ॥ ११ ॥
कौसल्यां धर्मसंयुक्तां वियुक्तां पापनिश्चये ! ।
कृत्वा कं प्राप्स्यसे ह्यद्य लोकं निरयगामिनी ॥ १२ ॥
किं नावबुध्यसे क्रूरे ! नियतं बन्धुसंश्रयम् ।
ज्येष्ठं पितृसमं रामं कौसल्यायात्मसम्भवम् ॥ १३ ॥

रित्यस्य ममेति शेषः । यद्वा स्वपितुः कुलस्य प्रध्वंसिनी दुश्चरित्रत्व-
व्यवस्थापिका ॥ ९ ॥

पिता मम गतः गमितः ॥ १० ॥

यत्प्रधाना यत्पापप्रधाना । तत्पापं तत्पापफलं पितृभ्रातृ-
रहितेऽतएव त्वन्निमित्तं सर्वलोकाप्रिये मयि वृत्तं तद्राहित्यरूपं सर्व-
लोकाप्रियत्वरूपञ्च ॥ ११ ॥

हे पापनिश्चये ! वियुक्तां पतिपुत्रवियुक्तां कृत्वा कं लोकं कं नरक-
लोकम् ॥ १२ ॥

बन्धुसंश्रयं बन्धूनामाश्रयभूतं कौसल्याया आत्मसम्भवं औरसं सन्धि-
स्त्वार्षः । एवं गुणविशिष्टं किं नावबुध्यसे न जानासीत्यर्थः ॥ १३ ॥

* "दुःखात्" इति वा पाठः ।

अङ्गप्रत्यङ्गजः पुत्रो हृदयाच्चाभिजायते।
तस्मात्प्रियतरो मातुः प्रिया एव तु बान्धवाः॥ १४॥
अन्यदा किल धर्मज्ञा सुरभिः सुरसम्मता।
वहमानौ ददर्शोर्व्यां पुत्रौ विगतचेतसौ॥ १५॥
तावर्धदिवसं श्रान्तौ दृष्ट्वा पुत्रौ महीतले।

अस्त्वौरसस्ततः किं तत्राह,—अङ्गेत्यादि। अङ्गानि मुखवक्षउदर-पाणिपादरूपाणि। प्रत्यङ्गानि नेत्राङ्गुल्यादीनि। एतेनाङ्गादङ्गात्सम्भवसीति श्रुतौ वीप्सयाङ्गप्रत्यङ्गग्रहणं सूचितम्। एतेन तस्य सर्वाङ्गतेजःसम्भूतत्वं दर्शितम्। यदेतद्रेतस्तत्सर्वेभ्योऽङ्गेभ्यस्तेजःसम्भूतमिति श्रुतेः। स्त्रियारक्तमेव रेतः हृदयं हृदयपुण्डरीकं आत्माधिष्ठानम्। अनेन हृदयादधिजायसे इति श्रुत्यर्थ उक्तः। यदेवं तस्मान्मातुरौरसः पुत्रः प्रियतरः। आत्मा वै पुत्रनामासीति श्रुतेः। निरुपाधिप्रेमास्पदत्वञ्चात्मनः सर्वलोकसिद्धमेव। बान्धवाः पितृमात्रादयः प्रिया एव नतु प्रियतराः एवञ्चौरसवियोगदुःखमतिदुःसहमिति भावः। प्रियत्वान्नतु बान्धव इति पाठं मत्वा तीर्थेनेत्थं व्याख्यातं प्रियत्वादेव न बान्धवः बन्धुदत्तपुत्रादिवन्न भवतीति तत्र नार्थसामञ्जस्यमिति कतकसम्मतपाठ एव ज्यायान्॥ १४॥

अत्रार्थे इतिहासमाह,—अन्यदेति। कस्मिंश्चित् पूर्वकाले इत्यर्थः। सुरभिः कामधेनुः। किलेत्यैतिह्ये। धर्मज्ञाः पुराविदो वृद्धा एवं वदन्ति किलेत्यर्थः। वहमानौ हलम्॥ १५॥

करोद पुत्रशोकेन बाष्पपर्याकुलेक्षणम् ॥ १६ ॥
अधस्ताद्व्रजतस्तस्याः सुरराज्ञो महात्मनः।
विन्दवः पतिता गात्रे सूक्ष्माः सुरभिगन्धिनः ॥ १७ ॥
निरीक्षमाणस्तां शक्रो ददर्श सुरभिं स्थिताम्।
आकाशे विष्ठितां दीनां रुदतीं भृशदुःखिताम् ॥ १८ ॥
तां दृष्ट्वा शोकसन्तप्तां वज्रपाणिर्यशस्विनीम्।
इन्द्रः प्राञ्जलिरुद्विग्नः सुरराजोऽब्रवीद्वचः ॥ १९ ॥
भयं कच्चिन्न चास्मासु कुतश्चिद्विद्यते महत्।
कुतोनिमित्तः शोकस्ते ब्रूहि सर्वहितैषिणि ! ॥ २० ॥
एवमुक्ता तु सुरभिः सुरराजेन धीमता।
प्रत्युवाच ततोधीरा वाक्यं वाक्यविशारदा ॥ २१ ॥
शान्तं पापं न वः किञ्चित् कुतश्चिदमराधिप ! ।

अर्धदिवसं दिवसस्यार्धं व्याप्य वहनेन श्रान्तौ दृष्ट्वा पुत्रौ स्वांगजौ। कुतोपि हेतोर्भुवं गतौ। वक्ष्यति च मम कायात्प्रसूताविति ॥ १६ ॥

सुरराज्ञः सुरराजस्य अनित्यत्वान्न टच् ॥ १७ ॥ १८ ॥ १९ ॥

अस्मासु अमरेषु कुतोनिमित्तः किं निमित्तकः। कुत इत्याद्यादित्वात्प्रथमार्थे तसिल्। न चास्मासु इति नञि काकुर्न्नेयव्यः ॥ २० ॥ २१ ॥

अहन्तु मग्नौ शोचामि स्वपुत्रौ विषमे स्थितौ ॥ २२ ॥
एतौ दृष्ट्वा कृशौ दीनौ सूर्य्यरश्मिप्रतापितौ ।
वध्यमानौ बलीवर्दौ कर्षकेण दुरात्मना ॥ २३ ॥
मम कायात् प्रसूतौ हि दुःखितौ भारपीड़ितौ * ।
यौ दृष्ट्वा परितप्येऽहं नास्ति पुत्रसमप्रियः ॥ २४ ॥
यस्याः पुत्रसहस्रैस्तु कृत्स्नं व्याप्तमिदं जगत् ।
तां दृष्ट्वा रुदतीं शक्रो न सुतान् मन्यते परम् ॥ २५ ॥
इन्द्रो ह्यश्रूनिपातन्तं स्वगात्रे पुण्यगन्धिनम् ।
सुरभिं मन्यते दृष्ट्वा भूयसीं तामिहेश्वरः ॥ २६ ॥

किञ्चिदपि भयं कुतोपि हेतोर्युष्माकं नास्ति शान्तं पापमित्यादिकं अनुचितश्रवणजदोषनिवर्त्तको वचनविशेषः । युष्मद्दुःखजनकं पापं शान्तमित्यर्थकः किन्तु अहं मग्ना दुःखमग्ना विषमे देशे स्थितौ कर्षकेण प्रतोदादिना वध्यमानौ ताड्यमानौ दृष्ट्वा शोचामि ॥ २२ ॥ २३ ॥

नास्ति पुत्रसमः प्रिय इति सुरभिवचनोपसंहारः ॥ २४ ॥

अथेन्द्रव्यापारमाह,—यस्या इति । पुत्रसहस्रैः साक्षात् पुत्रसन्तानपरितैः । तां रुदतीं दृष्ट्वा इन्द्रोऽपि सुतात्परमधिकं किमपि न मन्यते ॥ २५ ॥

इह संसारे भूयसीं सर्वोत्कृष्टाम् ॥ २६ ॥

---

* "परपीड़ितौ" इति वा पाठः ।

समाप्रतिमवृत्ताया लोकधारणकाम्यया ।
श्रीमत्या गुणमुख्यायाः स्वभावपरिचेष्टया ॥ २७ ॥
यस्याः पुत्रसहस्राणि सापि शोचति कामधुक् ।
किं पुनर्या विना रामं कौसल्या वर्त्तयिष्यति ॥ २८ ॥
एकपुत्रा च साध्वी च विवत्सेयं त्वया कृता ।
तस्मात्त्वं सततं दुःखं प्रेत्य चेह च लप्स्यसे ॥ २९ ॥
अहं त्वपचितिं भ्रातुः पितुश्च सकलामिमाम् ।
वर्धनं यशसश्चापि करिष्यामि न संशयः ॥ ३० ॥

समं सर्वप्राण्यनुग्रहे वैषम्यरहितमप्रतिमं सर्वोत्तमं वृत्तं चरित्रं यस्याः श्रीमत्याः इष्टदानैश्वर्यशालिमत्याः गुणमुख्यायाः सत्यरूपमुख्यगुणवत्याः लोकधारणकाम्यया प्रवृत्ताया इति शेषः । स्वभावपरिचेष्टया आहारनिद्राभयमैथुनानि सामान्यमेतत्पशुभिर्नराणामिति सामान्यप्राप्तमिथुनीभावलक्षणया ॥ २७ ॥

यस्याः पुत्रसहस्राणि सन्तानपरम्पराद्वारेण सन्ति सापि शोचति । किं पुनर्मानुषी एकपुत्रा कौशल्या रामं विना वर्त्तयिष्यति जीविष्यति शोकेन विशिष्टा सतीति शेषः । इदं किं वक्तव्यमित्यर्थः ॥ २८ ॥

विवत्सा विवत्सेव यदेवं तस्मादिति ॥ २९ ॥

अपचितिं पूजां पितुरिमां वक्ष्यमाणौर्ध्वदेहिकक्रियारूपां पूजां करिष्यामीत्यपकर्षः ॥ ३० ॥

आनाय्य च महाबाहुङ्गोशलेन्द्रं महाबलम्।
स्वयमेव प्रवेक्ष्यामि वनं मुनिनिषेवितम्॥ ३१॥
न ह्यहं पापसंकल्पे! पापे! पापं त्वया कृतम्।
शक्तो धारयितुं पौरैरश्रुकण्ठैर्निरीक्षितः॥ ३२॥
सात्वमग्निं प्रविश वा स्वयं वा विश दण्डकान्।
रज्जुं बध्वाथ वा कण्ठे न हि तेऽन्यत् परायणम्॥ ३३॥
अहमप्यवनीं प्राप्ते रामे सत्यपराक्रमे।
कृतकृत्यो भविष्यामि विप्रवासितकल्मषः॥ ३४॥
इति नाग इवारण्ये तोमरांकुशतोदितः।
पपात भुवि संक्रुद्धो निश्वसन्निव पन्नगः॥ ३५॥

अथ यशोवर्धनं भ्रातृपूजामाह,—आनाय्येत्यादि। महाबाहुं रामम्। वनं प्रवेक्ष्यामि। तद्व्रतसमाप्तये तत्प्रतिनिधितयेति भावः॥३१॥

पापं ज्येष्ठविवासनपूर्वकं कनिष्ठराज्यरूपम्॥ ३२॥

अस्य मरणान्तमेव प्रायश्चित्तमित्याह,—सेति। बुद्धिपूर्वकृतमहापापेत्यर्थः। कण्ठे रज्जुं बध्वेत्यस्य म्रियस्वेति शेषः। परायणं गतिः॥ ३३॥

* विप्रवासितकल्मषः दूरीकृतकलङ्कः॥ ३४॥

इतीत्यस्य विलप्येति शेषः। नाग इव आरण्यस्तोमरेति पाठा-

* अवनीं राज्यम्।

संरक्तनेत्रः शिथिलांबरस्तथा
विधूतसर्वाभरणः परन्तपः।
बभूव भूमौ पतितो नृपात्मजः
शचीपतेः केतुरिवोत्सवक्षये ॥ ३६ ॥

इत्यार्षे रामायणे वाल्मीकीये अयोध्याकाण्डे
भरतभर्त्सनं नाम चतुःसप्ततितमः
सर्गः ॥ ७४ ॥

न्तरम्। संक्रुद्धः पन्नग इव श्वसन्नित्यन्वयः। पाठान्तरे अरण्ये तत्स-
न्निधिनि बन्धनस्थाने तोमराङ्कुशतोदितो नाग इवेत्यर्थः। भुवि पपात
भरत इति शेषः ॥ ३५ ॥

शचीपतेः केतुरिन्द्रध्वज उत्सवक्षये उत्सवान्ते ॥ ३६ ॥

इत्यार्षे रामायणे वाल्मीकीये अयोध्याकाण्डे
चतुःसप्ततितमः सर्गः ॥ ७४ ॥

## पञ्चसप्ततितमः सर्गः ।

दीर्घकालात् समुत्थाय संज्ञां लब्ध्वा च वीर्य्यवान् ।
नेत्राभ्यामश्रुपूर्णाभ्यां दीनामुद्वीक्ष्य मातरम् ॥ १ ॥
सोऽमात्यमध्ये भरतो जननीमभ्यकुत्सयत् ।
राज्यं न कामये जातु मन्त्रये नापि मातरम् ॥ २ ॥
अभिषेकं न जानामि योऽभूद्राज्ञा समीक्षितः * ।
विप्रकृष्टे ह्यहं देशे शत्रुघ्नसहितोऽवसम् ॥ ३ ॥
वनवासं न जानामि रामस्याहं महात्मनः ।
विवासनञ्च सौमित्रेः सीतायाश्च यथाभवत् ॥ ४ ॥

दीनां स्वमनीषितभङ्गतः ॥ १ ॥

अमात्याः भरतागमनं श्रुत्वा प्राप्ताः सुमन्त्रादयः । अभ्यकुत्सयत् लोकस्येव स्वस्यापि कैकेयीकृतव्यवहारे परमानिष्टताख्यापनायोक्त-रीत्यैव सर्वलोकक्षमं जगर्ह इत्यर्थः । अथ प्रयोजकत्वानुमन्तृत्वाद्यपि स्वस्य प्रकृतविषयेनास्तीति मन्त्रिणः प्रत्याययति । राज्यमित्यादि । मातरं नैव मन्त्रये । अपरिवार्य राज्यग्रहणार्थं न प्रेरयामि । तत्र हेतूराज्यं न कामये इति ॥ २ ॥

---

* "समीहित" इति वा पाठः ।

तथैवं क्रोशतस्तस्य भरतस्य महात्मनः ।
कौसल्या शब्दमाज्ञाय सुमित्राश्चेदमब्रवीत् ॥ ५ ॥
आगतः क्रूरकार्य्यायाः कैकेय्या भरतः सुतः ।
तमहं द्रष्टुमिच्छामि भरतं दीर्घदर्शिनम् ॥ ६ ॥
एवमुक्ता सुमित्रां सा विवर्णवदना कृशा * ।
प्रतस्थे भरतो यत्र वेपमाना विचेतना ॥ ७ ॥
स तु राजात्मजश्चापि † शत्रुघ्नसहितस्तदा ।
प्रतस्थे भरतो येन कौसल्याया निवेशनम् ॥ ८ ॥
ततः शत्रुघ्नभरतौ कौसल्यां प्रेक्ष्य दुःखितौ ।
पर्य्यष्वजेतां दुःखार्त्तां पतितां नष्टचेतनाम् ॥ ९ ॥

योऽभिषेको राज्ञा समीक्षितः चिन्तितः। अज्ञाने हेतुमाह,—विप्रकृष्टे इति। अतिदूरतरे इत्यर्थः ॥ ३ ॥ ४ ॥

तथैव प्राग्वदेव ॥ ५ ॥

दीर्घदर्शिनं ऐहिकामुष्मिककर्मणः कालान्तरभाविफलज्ञानक्षम-बुद्धिमन्तं अतएव तं द्रष्टुमिच्छामि ॥ ६ ॥ ७ ॥

चापिभ्यां सुमन्त्रादयः। येन मार्गेण निवेशनं प्राप्यत इति शेषः ॥ ८ ॥

कौशल्यां स्वगृहात्प्रस्थिताम् ॥ ९ ॥

---

* "विवर्णा मलिनाम्बरा" इति वा पाठः ।

† "रामानुजश्चापि" इति वा पाठः ।

रुदन्तौ रुदती दुःखात् समेत्यार्य्या मनस्विनी ।
भरतं प्रत्युवाचेदं कौसल्या भृशदुःखिता ॥ १० ॥
इदं ते राज्यकामस्य राज्यं प्राप्तमकण्टकम् ।
संप्राप्तं बत कैकेय्या शीघ्रं क्रूरेण कर्मणा ॥ ११ ॥
प्रस्थाप्य चीरवसनं पुत्रं मे वनवासिनम् ।
कैकेयी कं गुणं तत्र पश्यति क्रूरदर्शना ॥ १२ ॥
क्षिप्रं मामपि कैकेयी प्रस्थापयितुमर्हति ।
हिरण्यनाभो यत्रास्ते सुतो मे सुमहायशाः ॥ १३ ॥

समेत्य आलिङ्ग्य । तादृशसमयेप्यालिङ्गनकरणयोग्यं विशेषणं मनस्विनीति ॥ १० ॥

राज्यं प्राप्तं भुङ्क्ष्वेति शेषः । राज्यप्राप्तिप्रकारमाह । क्रूरेण रामविवासनरूपेण कर्मणा कैकेय्याः । तयेत्यर्थे शेषत्वविवक्षायाम् । संप्राप्तं राजतः । ततश्च त्वया प्राप्तमिति भावः ॥ ११ ॥

त्वमपि मे पुत्र इति तव राज्यदाने न किमपि दुःखम् । अपि तु चीरवसनं वनचारिणं चीरवसनत्वादिवनचारिवेषं मे पुत्रं रामं त्वदागमनादपि पूर्वं शीघ्रं वनं प्रति प्रस्थाप्य राजानं मारितवती कैकेयी तत्र तादृशप्रस्थापने कं गुणं पश्यति इति न जाने इति दुःखमिति शेषः । स्थिते तु रामे स एव पितृवाक्यात् त्वामेवाभिषिञ्चेदतो व्यर्थोऽयं तत्प्रयास इति भावः ॥ १२ ॥

मामपि प्रस्थापयितुमर्हति मां प्रति तस्या दुःखहेतुत्वप्रकृतेरिति

अथवा स्वयमेवाहं सुमित्रानुचरा सुखम्।
अग्निहोत्रं पुरस्कृत्य प्रस्थास्ये येन राघवः॥ १४॥
कामं वा स्वयमेवाद्य तत्र मां नेतुमर्हसि।
यत्रासौ पुरुषव्याघ्रस्तप्यते मे सुतस्तपः॥ १५॥
इदं हि तव विस्तीर्णं धनधान्यसमाचितम्।
हस्त्यश्वरथसम्पूर्णं राज्यं निर्यातितं तया॥ १६॥
इत्यादि बहुभिर्वाक्यैः क्रूरैः सम्भर्त्सितोऽनघः।

भावः। हिरण्यनाभः हिरण्यवर्णनाभियुक्तः। इदमसाधारणं रामलक्षणम्॥ १३॥

कैकेयीचित्तानुवृत्तेस्तव राजसंस्कारेऽधिकारो नास्तीति ध्वनयन्नाह,—अथवेति। अग्निहोत्रमिति। राजदेहस्याप्युपलक्षणम्। कैकेयीवत्संगमने भरतो मे प्रेतकार्यं न कुर्य्यादिति राज्ञा निषेधादिति भावः॥ १४॥

अथवा तवातत्परत्वे राजसंस्कारादि कृत्वा पश्चान्मां तत्र नयेत्याह,—कामं वेति। तप्यते तप्यते चेत्यपि बोध्यम्॥ १५॥

समाचितं व्याप्तम्। निर्यातितं दत्तम्। निर्यातनं वैरशुद्धौ दानेन्यासार्पणे मतम्॥ १६॥

वणे प्राचीने सूचिना प्रतुद्येव सम्भर्त्सितः। कैकेयी पक्षत्वधिसाराहितो विव्यथे। पितृभ्रातृवियोगखिन्नेनाश्वासार्थमागतस्यलेपि खेदहेतुवचनश्रवणादिति भावः॥ १७॥

विव्यथे भरतो तीव्रव्रणे तुद्येव सूचिना ॥ १७ ॥
पपात चरणौ तस्यास्तदा सम्भ्रान्तचेतनः।
विलप्य बहुधासंज्ञो लब्धसंज्ञस्तदाभवत् ॥ १८ ॥
एवं विलपमानां तां प्राञ्जलिर्भरतस्तदा।
कौसल्यां प्रत्युवाचेदं शोकैर्बहुभिरावृताम् ॥ १९ ॥
आर्य्ये! कस्मादजानन्तं गर्हसे मामकल्मषम्।
विपुलाञ्च मम प्रीतिं स्थितां जानासि राघवे ॥ २० ॥
कृतशास्त्रानुगा बुद्धिर्माभूत्तस्य कदाचन।
सत्यसन्धः सतां श्रेष्ठो यस्यार्योऽनुमते गतः ॥ २१ ॥
/ प्रैष्यं पापीयसां यातु सूर्य्यञ्च प्रतिमेहतु।

असंज्ञ इति च्छेदः ॥ १८ ॥

विलपमानां इदं ते राज्यकामस्येत्यादि भाषमाणाम् ॥ १९ ॥

अजानन्तं अज्ञातवृत्तान्तमिति शेषः। राघवे तद्विषये मम हृदि पूर्वं स्थितां विपुलां प्रीतिं जानास्येव। इदानीन्तु ततोऽधिका। पितृबुद्धेरपि तत्रैवोपसंहारात् ॥ २० ॥

इममर्थं परबुद्धेरप्रत्यक्षत्वात् शपथैः प्रत्याययति। कृतेति। सत्यसन्धत्वादिगुणविशिष्ट आर्यो रामो यस्यानुमते सम्मते सति वनं गतः तस्य कृतशास्त्रानुगा गुरुशिक्षितश्रुतिस्मृतिमार्गगा बुद्धिर्माभूत्। इतोऽधिकानर्थाभावादयं परमः शपथः। अतःपरं प्रपञ्चः। सामान्येन शपथकरणमपि विशेषतः स्वस्मिन्नपि पर्यवस्यतीति बोध्यम् ॥ २१ ॥

हन्तु पादेन गां सुप्तां यस्यार्योऽनुमते गतः ॥ २२ ॥
कारयित्वा महत्कर्म भर्त्ता भृत्यमनर्थकम् ।
अधर्मो योऽस्य सोऽस्यास्तु यस्यार्योऽनुमते गतः ॥ २३ ॥
परिपालयमानस्य राज्ञो भूतानि पुत्रवत् ।
ततस्तु द्रुह्यतां पापं यस्यार्योऽनुमते गतः ॥ २४ ॥
बलिषड्भागमुद्धृत्य नृपस्यारक्षितुः प्रजाः ।
अधर्मो योऽस्य सोऽस्यास्तु यस्यार्योऽनुमते गतः ॥ २५ ॥
संश्रुत्य च तपस्विभ्यः सत्रे वै यज्ञदक्षिणाम् ।
ताञ्चापलपतां पापं यस्यार्योऽनुमते गतः ॥ २६ ॥
हस्त्यश्वरथसम्बाधे युद्धे शस्त्रसमाकुले ।

प्रैष्यं प्रेष्यत्वं प्रतिमेहतु अभिमुखं मूत्रादि करोतु ॥ २२ ॥

यो भर्त्ता भृत्यं महत्कर्म कारयित्वा अनर्थकं भृतिरहितं करोति तस्य योऽधर्मः सोऽस्यास्तु इत्यन्वयः ॥ २३ ॥

ततस्तस्मै । आद्यादित्वाच्चतुर्थ्यर्थे तसिः । यस्यानुमते गतस्तस्याक्लिति शेषः ॥ २४ ॥

बलिः करस्तद्रूपं षड्भागमुद्धृत्यादाय प्रजा अरक्षितुर्योऽधर्मः सोऽस्यास्तु ॥ २५ ॥

सत्रे यागे । संश्रुत्य प्रतिज्ञाय । अपलतां तपस्विभ्यो ऋत्विग्भ्यः ॥ २६ ॥

मा स्म कार्षीत्सतां धर्मं यस्यार्योऽनुमते गतः ॥ २७ ॥
उपदिष्टं सुसूक्ष्मार्थं शास्त्रं यत्नेन धीमता ।
स नाशयतु दुष्टात्मा यस्यार्योऽनुमते गतः ॥ २८ ॥
मा च तं व्यूढबाह्वंसं चन्द्रभास्करतेजसम् ।
द्राक्षीद्राज्यस्थमासीनं यस्यार्योऽनुमते गतः ॥ २९ ॥
पायसं कृसरं छागं वृथा सोऽश्नातु निर्घृणः ।
गुरूंश्चाप्यवजानातु यस्यार्योऽनुमते गतः ॥ ३० ॥
गवां स्पृशतु पादेन गुरून् परिवदेच्च सः ।
मित्रे द्रुह्येत सोऽत्यर्थं यस्यार्योऽनुमते गतः ॥ ३१ ॥

सतां धर्मं अपराङ्मुखतया युद्धम् ॥ २७ ॥

सुसूक्ष्मार्थं शास्त्रं वेदः । धीमता आचार्येणेति शेषः । ब्रह्मोज्झत्व-रूपं पापं प्राप्नोत्वित्यर्थः ॥ २८ ॥

व्यूढौ विशालौ बाहू अंसौ च यस्य तं रामं राज्यस्थम् । अत एवासीनं सिंहासने माद्राक्षीत् । तादृशराजदर्शनभाग्यरहितो भवतु ज्येष्ठानुवर्त्तनरहितो भवत्वित्यर्थः । तावत्पर्यन्तं जीवनं माभू-दिति वा ॥ २९ ॥

कृसरं तिलमुद्गतंदुलात्मकम् । छागं छागमांसम् । वृथा श्राद्धादि-निमित्तं विना अश्नातु । अशनजं पापं प्राप्नोतु ॥ ३० ॥

गवामिति । अङ्गमिति शेषः । परिवदेत् अपवदेत् मित्रे मित्राय ॥ ३१ ॥

विश्वासात् कथितं किञ्चित् परिवादं मिथः क्वचित् ।
विवृणोतु सुदुष्टात्मा यस्यार्योऽनुमते गतः ॥ ३२ ॥
अकर्त्ता चाकृतज्ञश्च त्यक्तश्च निरपत्रपः ।
लोके भवतु विद्विष्टो यस्यार्योऽनुमते गतः ॥ ३३ ॥
पुत्रैर्दारैश्च भृत्यैश्च स्वगृहे परिवारितः ।
स एको मृष्टमश्नातु यस्यार्योऽनुमते गतः ॥ ३४ ॥
अप्राप्य सदृशान् दारान् अनपत्यः प्रमीयताम् ।
अनवाप्य क्रियां धर्म्यां यस्यार्योऽनुमते गतः ॥ ३५ ॥
मात्मनः सन्ततिं द्राक्षीत्स्वेषु दारेषु दुःखितः ।

विश्वासात् अयं क्वापि न प्रकटयिष्यतीति विश्वासात् । मिथः रहसि । मिथोऽन्योऽन्यं रहस्ययोः । किञ्चित्परिवादं कस्यचित् सुरापानादिदोषम् ॥ ३२ ॥

अकर्त्ता प्रत्युपकाराकर्त्ता । अतएवाकृतज्ञः अतएव त्यक्तः सज्जनैः । त्यक्तात्मेति पाठे सज्जनैस्त्यक्त आत्मस्वरूपं यस्येत्येवार्थः । उद्बन्धनादिना त्यक्तदेह इत्यर्थं तीर्थः । अतएव लोके विद्विष्टश्च भवतु ॥ ३३ ॥

एको मृष्टमश्नातु इतरेष्वभुक्तेषु ॥ ३४ ॥

प्रमीयतां म्रियताम् । धर्म्यां क्रियाम् अग्निहोत्रादिकाम् । म्रियतामित्यनुकर्षः ॥ ३५ ॥

दुःखित इत्यस्य भवत्विति शेषः । अप्राप्येत्यस्य म्रियतामिति शेषः ॥ ३६ ॥

आयुः समग्रमप्राप्य यस्यार्योऽनुमते गतः ॥ ३६ ॥
राजस्त्रीबालवृद्धानां वधे यत् पापमुच्यते ।
भृत्यत्यागे च यत् पापं तत् पापं प्रतिपद्यताम् ॥ ३७ ॥
लाक्षया मधुमांसेन लोहेन च विषेण च ।
सदैव बिभृयाद् भृत्यान् यस्यार्योऽनुमते गतः ॥ ३८ ॥
संग्रामे समुपोढे च शत्रुपक्षे भयङ्करे ।
पलायमानो बध्येत यस्यार्योऽनुमते गतः ॥ ३९ ॥
कपालपाणिः पृथिवीम् अटतां चीरसंवृतः ।
भिक्षमाणो यथोन्मत्तो यस्यार्योऽनुमते गतः ॥ ४० ॥
मद्ये प्रसक्तो भवतु स्त्रीष्वक्षेषु च नित्यशः ।
कामक्रोधाभिभूतस्तु यस्यार्योऽनुमते गतः ॥ ४१ ॥
मास्य धर्मे मनो भूयादधर्मं स निषेवताम् ।
अपात्रवर्षी भवतु यस्यार्योऽनुमते गतः ॥ ४२ ॥

राजस्त्रीत्यादौ यस्यार्य इत्याद्यनुषङ्गः ॥ ३७ ॥

लाक्षयेति । पतनीयतासम्पादकवस्तुविक्रयेणेत्यर्थः । भृत्यान् भरणीयान् पुत्रदारादीन् ॥ ३८ ॥

समुपोढे प्राप्ते ॥ ३९ ॥

चीरं जीर्णमलिनवस्त्रम् । अक्षाः द्या भवत्विति शेषः । तादृशी निषिद्धाचरणा प्रव्रज्या भवत्विति वा भावः ॥ ४० ॥ ४१ ॥

सञ्चितान्यस्य वित्तानि विविधानि सहस्रशः ।
दस्युभिर्विप्रलुप्यन्तां यस्यार्योऽनुमते गतः ॥ ४३ ॥
उभे संध्ये शयानस्य यत् पापं परिकल्पते ।
तच्च पापं भवेत् तस्य यस्यार्योऽनुमते गतः ॥ ४४ ॥
यदग्निदायके पापं यत् पापं गुरुतल्पगे ।
मित्रद्रोहे च यत् पापं तत् पापं प्रतिपद्यताम् ॥ ४५ ॥
देवतानां पितॄणाञ्च मातापित्रोस्तथैव च ।
मास्म कार्षीत् स शुश्रूषां यस्यार्योऽनुमते गतः ॥ ४६ ॥
सतां लोकात् सतां कीर्त्याः सज्जुष्टात् कर्मणस्तथा ।
भ्रश्यतु क्षिप्रमद्यैव यस्यार्योऽनुमते गतः ॥ ४७ ॥
अपास्य मातृशुश्रूषामनर्थे सोऽवतिष्ठताम् ।
दीर्घबाहुर्महावक्षा यस्यार्योऽनुमते गतः ॥ ४८ ॥

अपात्रवर्षी अपात्रे दाता ॥ ४२ ॥

दस्युभिर्विप्रलुप्यन्तां त्यागभोगविहीनानि भवन्त्विति भावः ॥ ४३ ॥

उभे सन्ध्ये व्याप्येति शेषः ॥ ४४ ॥ ४५ ॥

देवतानामिति । देवतादिशुश्रूषारहितस्य यत्पापं तत् पापं संप्रतिपद्यतामित्यर्थः ॥ ४६ ॥

सतां कीर्त्याः सद्भिः क्रियमाणश्लाघायाः । भ्रश्यतु सा माभूत्तस्येत्यर्थः ॥ ४७ ॥

बहुभृत्यो दरिद्रश्च ज्वररोगसमन्वितः।
समायात् सततं क्लेशं यस्यार्योऽनुमते गतः॥ ४९ ॥
आशामाशंसमानानां दीनानामूर्ध्वचक्षुषाम्।
अर्थिनां वितथां कुर्याद्यस्यार्योऽनुमते गतः॥ ५० ॥
मायया रमतां नित्यं परुषः पिशुनो शुचिः।
राज्ञोभीतस्त्वधर्मात्मा यस्यार्योऽनुमते गतः॥ ५१ ॥
ऋतुस्नातां सतीं भार्यां ऋतुकालानुरोधिनीम्।
अतिवर्त्तेत दुष्टात्मा यस्यार्योऽनुमते गतः॥ ५२ ॥
विप्रलुप्तप्रजा तस्य दुष्कृतं ब्राह्मणस्य यत्।
तदेतत् प्रतिपद्येत यस्यार्योऽनुमते गतः॥ ५३ ॥

अनर्थं स्त्रीवशत्वाद्यनर्थं॥ ४८॥

समायात् प्राप्नुयात्॥ ४९॥

अर्थिनामाशामिति सम्बन्धः। आशंसमानानां स्तुवतां ऊर्द्ध-चक्षुषां दातृमुखनिरीक्षकाणाम्॥ ५०॥

मायया वञ्चनया। राज्ञे भीत इति भयकारणं पिशुनत्वा-द्येव॥ ५१॥

ऋतुकालानुरोधिनीं ऋतुस्नानकालत्वात् स्वसन्निहिताम्॥ ५२॥

विप्रलुप्तप्रजा तस्य अन्नाद्यदानेन प्रनष्टसन्तानस्य स्त्रीद्वेषाद्वा तथाभूतस्य। यद्वा विप्रलुप्ता विवर्जिता प्रजाता जातापत्या जाया येन तस्य॥ ५३॥

ब्राह्मणायोद्यतां पूजां विहन्तु कलुषेन्द्रियः ।
बालवत्साश्च गां दोग्धुर्यस्यार्योऽनुमते गतः ॥ ५४ ॥
धर्मदारान् परित्यज्य परदारान्निषेवताम् ।
त्यक्तधर्मरतिर्मूढो यस्यार्योऽनुमते गतः ॥ ५५ ॥
पानीयदूषके पापं तथैव विषदायके ।
यत्तदेकः स लभतां यस्यार्योऽनुमते गतः ॥ ५६ ॥
तृषार्त्तं सति पानीये विप्रलम्भेन योजयन् ।
यत्पापं लभते तत् स्याद्यस्यार्योऽनुमते गतः ॥ ५७ ॥
भक्त्या विवदमानेषु मार्गमाश्रित्य पश्यतः ।
तस्य पापेन युज्येत यस्यार्योऽनुमते गतः ॥ ५८ ॥

विहन्तु विघ्नयतु बालवत्सां दोग्धुः शास्त्रोक्तादोहनाधिकं दोग्धुः ॥५४॥

परदारान्निषेवतां यत्पापं तत्पापं प्रतिपद्यतां मूढः भूयादिति शेषः ॥ ५५ ॥

एकः यत्पापद्वयं तदेक एव लभतामित्यर्थः ॥ ५६ ॥

विप्रलम्भेन वञ्चनया योजयन् अप्रयच्छन्निति यावत् ॥ ५७ ॥

भक्त्या शिवविष्णवादिदेवताभक्त्या । मार्गं तत्तदुपोद्बलकशैव-वैष्णवादिशास्त्रमाश्रित्यायमुत्कृष्टोऽयं नेति विवदमानेषु यत्पापं यच्च तयोर्विवादं पश्यतः प्रेक्षवतः पापं तेन पापेन स युज्येतेत्यर्थः । तस्य पापेनेति पाठे तेषां यत्पापं तेन यस्यानुमते गतस्तस्य योगः सम्बन्धो भूयादित्यर्थः । भावे च युज्येतेति प्रयोगः । अयं परस्त्वयं नेति संर-

एवमाश्वासयन्नेव दुःखार्त्तोऽनु पपात ह ।
विहीनां पतिपुत्राभ्यां कौसल्यां पार्थिवात्मजः ॥ ५९ ॥
तदा तं शपथैः कष्टैः शपमानमचेतनम् ।
भरतं शोकसन्तप्तं कौसल्या वाक्यमब्रवीत् ॥ ६० ॥
मम दुःखमिदं पुत्र ! भूयः समुपजायते ।
शपथैः शपमानो हि प्राणानुपरुणत्सि मे ॥ ६१ ॥
दिष्ट्या न चलितो धर्मादात्मा ते सहलक्ष्मणः ।
वत्स ! सत्यप्रतिज्ञो हि सतां लोकानवाप्स्यसि ॥ ६२ ॥

त्वाभिनिवेशिनः । यातुधाना भवन्त्येव पिशाचाश्च न संशय इति शिवपुराणोक्तेः । यो ब्रह्मविष्णुरुद्राणां भेदं युक्तिनिवेशतः । साधये-दुदरव्याधियुक्तो भवति मानव इति कर्मविपाकशास्त्रोक्तेश्च । अत्र विवदमानानां जयोपायं ज्ञात्वा तदकथयतः पापमिति तीर्थव्याख्या । द्वयोः साम्यस्थापनपूर्वकं तेषां कलहशमनमकुर्वतः कलहप्रियस्य यत्पाप-मिति कतकव्याख्या ॥ ५८ ॥ ५९ ॥ ६० ॥

भूयः अभ्यधिकं दुःखं हि यत् एवं कष्टैः शपथैः शपमानो मे प्राणानुपरुणत्सि पीड़यसे ॥ ६१ ॥

अथ विशुद्धभावं ज्ञात्वानुगृह्णाति । दिष्ट्येति । आत्मा अन्तः-करणम् । लक्ष्मणैः शुभलक्षणैः सहितः सहलक्ष्मणस्ते आत्मेत्यर्थः । हे वत्स ! हि यदि सत्यप्रतिज्ञो भविष्यसि तदा सतां लोकानवाप्स्यसि । कैकेय्यग्रे कृतां रामायणप्रतिज्ञां सत्यां कुर्विति व्यङ्ग्यम् ॥ ६२ ॥

इत्युक्त्वा चाङ्कमानीय भरतं भ्रातृवत्सलम् ।
परिष्वज्य महाबाहुं रुरोद भृशदुःखिता ॥ ६३ ॥
*एवं विलपमानस्य दुःखार्त्तस्य महात्मनः * ।
मोहाच्च शोकसंरम्भाद् † बभूव लुलितं मनः ॥ ६४ ॥

लालप्यमानस्य विचेतनस्य
प्रणष्टबुद्धेः पतितस्य भूमौ ।
मुहुर्मुहुर्निःश्वसतश्च दीर्घं
सा तस्य शोकेन जगाम रात्रिः ॥ ६५ ॥

इत्यार्षे रामायणे वाल्मीकीये अयोध्याकाण्डे भरत-
शपथो नाम पञ्चसप्ततितमः सर्गः ॥ ७५ ॥

एवमनुगृह्य पुत्रोचित कृत्येनाश्वासयति । इत्युक्त्वेति ॥ ६३ ॥

शोकसंरम्भात् शोकाधिक्यात् । तत एव मोहः विलुलितं क्षुभितम् ॥ ६४ ॥

दीर्घं यथा भवति तथा रात्रिः रात्रिशेषः । पाठान्तरे घर्मं उष्णं यथा भवति तथा ‡ ॥ ६५ ॥

---

* "पुनः पुनः" इति वा पाठः ।
† "शोकसंरोधात्" इति वा पाठः ।
‡ अत्रैकश्लोकोऽधिक इति कतकसंख्यया ज्ञायते ।

इत्यार्षे रामायणे वाल्मीकीये अयोध्याकाण्डे
पञ्चसप्ततितमः सर्गः ॥ ७५ ॥

## षट्सप्ततितमः सर्गः।

तमेवं शोकसन्तप्तं भरतं कैकयीसुतम्।
उवाच वदतां श्रेष्ठो वसिष्ठः श्रेष्ठवाक् ऋषिः॥ १॥
अलं शोकेन भद्रन्ते राजपुत्र! महायशः!।
प्राप्तकालं नरपतेः कुरु संयानमुत्तमम्॥ २॥
वसिष्ठस्य वचः श्रुत्वा भरतो धरणीं गतः।
प्रेतकृत्यानि सर्वाणि कारयामास धर्मवित्॥ ३॥
उद्धृत्य तैलसंसेकात् * स तु भूमौ निवेशितम्।
आपीतवर्णवदनं प्रसुप्तमिव भूमिपम्॥ ४॥

तमिति। वसिष्ठः भरतागमनं श्रुत्वा आगत इति शेषः॥ १॥

संयानं प्रेतनिर्हारम्॥ २॥

धरणीं गतः वसिष्ठं साष्टाङ्गं नमस्कृत्येत्यर्थः। धारणां गत इति पाठे धैर्यं प्राप्त इत्यर्थः। कारयामास तत्करणार्थं मन्त्रिणः प्रेरयामासेत्यर्थः॥ ३॥

बहुदिवसतैलावस्थानोपाधिना आपीतवर्णं वदनं यस्य तम्॥ ४॥

* "तैलसंक्लेदात्" इति वा पाठः।

संवेश्य शयने चाग्र्ये नानारत्नपरिष्कृते ।
ततो दशरथं पुत्रो विललाप सुदुःखितः ॥ ५ ॥
किं ते व्यवसितं राजन्! प्रोषिते मय्यनागते ।
विवास्य रामं धर्मज्ञं लक्ष्मणञ्च महाबलम् ॥ ६ ॥
क्व यास्यसि महाराज! हित्वेमं दुःखितं जनम् ।
हीनं पुरुषसिंहेन रामेणाक्लिष्टकर्मणा ॥ ७ ॥
योगक्षेमन्तु तेऽव्यग्रं कोऽस्मिन् कल्पयिता पुरे ।
त्वयि प्रयाते स्वस्तात! रामे च वनमाश्रिते ॥ ८ ॥
विधवा पृथिवी राजन्! त्वया हीना न राजते ।
हीनचन्द्रेव रजनी नगरी प्रतिभाति माम् ॥ ९ ॥
एवं विलपमानं तं भरतं दीनमानसम् ।
अब्रवीद्वचनं भूयो वसिष्ठस्तु महामुनिः ॥ १० ॥
प्रेतकार्याणि यान्यस्य कर्त्तव्यानि विशाम्पतेः ।
तान्यव्यग्रं महाबाहो! क्रियतामविचारितम् ॥ ११ ॥

दशरथमिति उद्दिश्येति शेषः ॥ ५ ॥
व्यवसितं मनीषितम् । प्रोषिते देशान्तरगते ॥ ६ ॥
रामेण हीनमिमं दुःखितं जनं हित्वा क्व यास्यसीत्यन्वयः ॥ ७ ॥
ते तव अस्मिन् पुरे अयोध्यायां योगक्षेमं प्रजानां अव्यग्रं परि-
त्यक्तदुःखपारवश्यं यथा तथा स्वः स्वर्गम् ॥ ८ ॥ ९ ॥ १० ॥

तथेति भरतो वाक्यं वसिष्ठस्याभिपूज्य तत्।
ऋत्विक्पुरोहिताचार्यांस्त्वरयामास सर्वशः॥ १२॥
ये त्वग्नयो नरेन्द्रस्य अग्न्यगारात् बहिष्कृताः।
ऋत्विग्भिर्याजकैश्चैव ते ह्रियन्ते यथाविधि॥ १३॥
शिबिकायामथारोप्य राजानं गतचेतनम्।
बाष्पकण्ठा विमनसस्तमूहुः परिचारकाः॥ १४॥
हिरण्यञ्च सुवर्णञ्च वासांसि विविधानि च।
प्रकिरन्तो जना मार्गे नृपतेरग्रतो ययुः॥ १५॥
चन्दनागुरुनिर्यासान् सरलं पद्मकं तथा।
देवदारूणि चाहृत्य क्षेपयन्ति तथापरे॥ १६॥

अविचारितं प्राचीनवैभवादिस्मरणरहितं यथा तथा॥ ११॥

ऋत्विजो यज्ञकर्मणि वृताः। पुरोहितः सर्वहितप्रवर्त्तकः। तदुक्तम्, मन्त्रे च धर्मकृत्ये च शान्तिकर्मणि पौष्टिके। अध्वरे यज्ञकुशलः स स्याद्राजपुरोहित इति। उपनीय वेदाध्यापक आचार्य्यः॥१२।

अग्न्यगारात् बहिष्कृताः अन्तःशवसत्त्वात् बहिःप्रदेशे प्रतिष्ठापिताः। याजकैरुपद्रष्टृभिः। ह्रियन्ते स्म॥ १३॥ १४॥

हिरण्यं रजतम्। स्वर्णरजतपुष्पाणीति यावत्॥ १५॥

निर्यासो गुग्गुल्वादिः। सरलपद्मके काष्ठभेदः। देवदारूणि देवदारुकाष्ठानि। क्षेपयन्ति चितामावितिं शेषः॥ १६॥

गन्धानुच्चावचांश्चान्यांस्तत्र गत्वाथ भूमिपम् ।
तत्र संवेशयामासुश्चितामध्ये तमृत्विजः ॥ १७ ॥
तदा हुताशनं हुत्वा जेपुस्तस्य तदृत्विजः ।
जगुश्च ते यथाशास्त्रं तत्र सामानि सामगाः ॥ १८ ॥
शिबिकाभिश्च यानैश्च यथार्हं तस्य योषितः ।
नगरान्निर्ययुस्तत्र वृद्धैः परिवृतास्तथा ॥ १९ ॥
प्रसव्यञ्चापि तञ्चक्रुरृत्विजोऽग्निचितं नृपम् ।
स्त्रियश्च शोकसन्तप्ताः कौशल्याप्रमुखास्तदा ॥ २० ॥
क्रौञ्चीनामिव नारीणां निनादस्तत्र शुश्रुवे ।
आर्त्तानां करुणं काले क्रोशन्तीनां सहस्रशः ॥ २१ ॥
ततो रुदन्त्यो विवशा विलप्य च पुनः पुनः ।
यानेभ्यः सरयूतीरमवतेरुर्नृपाङ्गनाः ॥ २२ ॥

तत्र चितादेशे गत्वा तं चितामध्ये संवेशयामासुः स्थापयामासुः ॥ १७ ॥

जेपुः पैतृमेधिकमन्त्रान् । तस्य परलोकशुद्ध्यर्थमिति शेषः । तदृत्विजः तद्यज्ञप्रवर्त्तकाः ॥ १८ ॥ १९ ॥

प्रसव्यमप्रदक्षिणम् । अग्निचितं अग्निं चितवन्तम् । अश्वमेधान्तयज्ञकर्त्तारम् । स्त्रियश्च प्रसव्यं चक्रुरित्यन्वयः ॥ २० ॥ २१ ॥ २२ ॥

दशाहं अत्यन्तसंयोगे द्वितीया । दुःखमाशोचम् । भूमौ शयाना

कृत्वोदकं ते भरतेन सार्धं
नृपाङ्गना मन्त्रिपुरोहिताश्च ।
पुरं प्रविश्याश्रुपरीतनेत्रा
भूमौ दशाहं व्यनयन्त दुःखम् ॥ २३ ॥

इत्यार्षे रामायणे वाल्मीकीये अयोध्याकाण्डे
दशरथदाहनं नाम षट्सप्ततितमः
सर्गः ॥ ६७ ॥

इति शेषः । इदं ब्रह्मचर्यमात्रोपलक्षणम् । ननु द्वादशाहेन भूपालः क्षत्रियः षोडशेहनीति स्मृतेः । कथं क्षत्रियस्य दशाहेनाशौचात्यय इति चेन्न । क्षत्रियस्तु दशाहेन स्वकर्मनिरतः शुचिरिति पराशरोक्तेरिति दिक् ॥ २३ ॥

इत्यार्षे रामायणे वाल्मीकीये अयोध्याकाण्डे
षट्सप्ततितमः सर्गः ॥ ७६ ॥

## सप्तसप्ततितमः सर्गः ।

ततो दशाहेऽतिगते कृतशौचो नृपात्मजः ।
द्वादशेऽहनि सम्प्राप्ते श्राद्धकर्माण्यकारयत् ॥ १ ॥
ब्राह्मणेभ्यो धनं रत्नं ददावन्नञ्च पुष्कलम् ।
बास्तिकं बहुशुक्लञ्च गाश्चापि बहुशस्तदा ॥ २ ॥
दासीदासांश्च यानानि वेश्मानि सुमहान्ति च ।
ब्राह्मणेभ्यो ददौ पुत्रो राज्ञस्तस्यौर्द्ध्वदेहिकम् ॥ ३ ॥
ततः प्रभातसमये दिवसे च त्रयोदशे ।
विललाप महाबाहुर्भरतः शोकमूर्च्छितः ॥ ४ ॥

तत इति । दशाहेऽतिगते एकादशेन हि कृतशौचः अनुष्ठित-प्रेतविमुक्तिदैकादशाहश्राद्धः श्राद्धकर्माणि द्वितीयमासिकादिसपिण्डी-करणान्तश्राद्धानि ॥ १ ॥

बास्तिकं छागसमूहं आर्षत्वात् । वस्तोजः । शुक्लं रजतम् । शुक्लो योगान्तरे श्वेते शुक्लञ्च रजते मतम् ॥ २ ॥

ऊर्द्ध्वदेहोद्भवमौर्द्ध्वदेहिकं पारलौकिकम् ॥ ३ ॥

त्रयोदशे त्रयोदशेऽहनि शोधनार्थमुपागते विललापेत्यन्वयः । दशाहाभ्यन्तरेऽस्थिसञ्चयनं कृत्वा सकलश्राद्धानन्तरं त्रयोदशेऽहनि

शब्दापिहितकण्ठस्य शोधनार्थमुपागतः ।
चितामूले पितुर्वाक्यमिदमाह सुदुःखितः ॥ ५ ॥
तात ! यस्मिन्निसृष्टोऽहं त्वया भ्रातरि राघवे ।
तस्मिन् वनं प्रव्रजिते शून्ये त्यक्तोस्म्यहं त्वया ॥ ६ ॥
यस्या गतिरनाथायाः पुत्रः प्रव्राजितो वनम् ।
तामम्बां तात ! कौशल्यां त्यक्त्वा त्वं क्व गतो नृप ! ॥ ७ ॥
दृष्ट्वा भस्मारुणं तच्च दग्धास्थिस्थानमण्डलम् ।
पितुः शरीरनिर्वाणं निष्टनन् विषसाद ह ॥ ८ ॥
स तु दृष्ट्वा रुदन् दीनः पपात धरणीतले ।
उत्थाप्यमानः शक्रस्य यन्त्रध्वज इवोच्छ्रितः ॥ ९ ॥

चिताभस्मोद्धारपूर्वकं स्थलशुद्धिः कर्त्तव्येति क्षत्रियधर्म इति वाल्मीक्युक्तेर्ज्ञायते इति कतकः । तीर्थस्तु । सोधनम् अस्थिसञ्चयनमित्याह,—शब्देन रोदनशब्देन पिहित आवृतः कण्ठो यस्य चितामूले इदं वाक्यमाह ॥ ४ ॥ ५ ॥

तदेवाह,—तातेति । निसृष्टः दत्तः । प्रव्रजिते प्रव्राजिते अहं शून्ये त्यक्तः निरवलम्बतया निरस्तः ॥ ६ ॥

यस्या अनाथाया गतिरवलम्बः पुत्र इत्यर्थः ॥ ७ ॥

भस्मारुणं भस्मयुतम् । अतिदाहादरुणञ्च दग्धास्थि दग्धान्यस्थीनि यस्मिन् स्थानमण्डलं चितास्थानमण्डलं पितुः शरीरनिर्वाणं शरीरनाशस्थानम् । तद्दृष्ट्वा निष्टनन् अत्यन्तं विलपन् विषसाद ॥ ८ ॥

अभिपेतुस्ततः सर्वे तस्यामात्याः शुचिव्रतम् ।
अन्तकाले निपतितं ययातिमृषयो यथा ॥ १० ॥
शत्रुघ्नश्चापि भरतं दृष्ट्वा शोकपरिप्लुतम् ।
विसंज्ञोऽन्यपतत् भूमौ भूमिपालमनुस्मरन् ॥ ११ ॥
उन्मत्त इव निश्चेता विललाप सुदुःखितः ।
स्मृत्वा पितुर्गुणाङ्गानि तानि तानि तदा तदा ॥ १२ ॥
मन्थराप्रभवस्तीव्रः कैकेयीग्राहसङ्कुलः * ।
वरदानमयोऽक्षोभ्यो मज्जयच्छोकसागरः ॥ १३ ॥
सुकुमारञ्च बालञ्च सततं लालितं त्वया ।
क्व तात ! भरतं हित्वा विलपन्तं गतो भवान् ॥ १४ ॥

दीनः दुःखितो भूत्वा पपात । उत्थाप्यमानः पुरुषैः यन्त्रबद्धो ध्वजो यन्त्रध्वजः स इव पपात । शक्रयन्त्रध्वजस्याकाशस्थस्य भूमौ पातायोगात् गृहाद्यलङ्कारार्थं ध्वजयन्त्ररूपेण ध्वजसदृशरूपेण निर्मित इत्यर्थ इति कतकः । उत्पपातः पतितेन तेनोपमेत्यन्ये ॥ ९ ॥

अन्तकाले पुण्यक्षयकाले ॥ १० ॥ ११ ॥

'गुणाङ्गानि उपलालनगुणस्याङ्गभूतानि विचित्रवस्त्राभरणादिदानादिकर्माणि स्मृत्वा विललाप ॥ १२ ॥

वरदानमयत्वादक्षोभ्यः । अमज्जयत् अस्मानिति शेषः ॥ १३ ॥ १४ ॥

* "ह्रदसंकुलः" इति वा पाठः ।

ननु भोज्येषु पानेषु वस्त्रेष्वाभरणेषु च।
प्रवारयति सर्वान्नस्तन्नः कोऽद्य करिष्यति॥ १५॥
अवदारणकाले तु पृथिवी नावदीर्यते।
विहीनाया त्वया राज्ञा धर्मज्ञेन महात्मना॥ १६॥
पितरि स्वर्गमापन्ने रामे चारण्यमाश्रिते।
किं मे जीवितसामर्थ्यं प्रवेक्ष्यामि हुताशनम्॥ १७॥
हीनो भ्रात्रा च पित्रा च शून्यामिक्ष्वाकुपालिताम्।
अयोध्यां न प्रवेक्ष्यामि प्रवेक्ष्यामि तपोवनम्॥ १८॥
तयोर्विलपितं श्रुत्वा व्यसनञ्चाप्यवेक्ष्य तत्।
भृशमार्त्ततरा भूयः सर्वएवानुगामिनः॥ १९॥
ततो विषण्णौ श्रान्तौ च शत्रुघ्नभरतावुभौ।
धरायां समचेष्टेतां भग्नशृङ्गाविवर्षभौ॥ २०॥

नन्विति। वस्त्राण्याभरणादीनि दिव्यवस्तून्युपस्थाप्याङ्गण्ष किं तेऽपेक्षितं गृहाणेति प्रकर्षेणास्मदिष्टवरणं कारयति भवान् तदद्य नः कः करिष्यति त्वयि गते इति शेषः॥ १५॥

या त्वया विहीना सा पृथिवी अवदारणकाले तु तस्मिन्नपि नावदीर्यते॥ १६॥ १७॥ १८॥

अनुगामिनोऽनुचरा आर्त्ततरा अभूवन्निति शेषः॥ १९॥

व्यचेष्टेतां व्यलुठेताम्। विश्रान्ताविति पाठे विशेषेण श्रान्तावित्यर्थः॥ २०॥

ततः प्रकृतिमान्वैद्यः पितुरेषां पुरोहितः ।
वसिष्ठो भरतं वाक्यमुत्थाप्य तमुवाच ह ॥ २१ ॥
त्रयोदशोऽयं दिवसः पितुर्वृत्तस्य ते विभो ! ।
सावशेषास्थिनिचये किमिह त्वं विलम्बसे ॥ २२ ॥
त्रीणि द्वन्द्वानि भूतेषु प्रवृत्तान्यविशेषतः ।
तेषु चापरिहार्य्येषु नैवं भवितुमर्हसि ॥ २३ ॥
सुमन्त्रश्चापि शत्रुघ्नमुत्थाप्याभिप्रसाद्य च ।
श्रावयामास तत्त्वज्ञः सर्वभूतभवाभवौ ॥ २४ ॥
उत्थितौ तौ नरव्याघ्रौ प्रकाशेते यशस्विनौ ।
वर्षातपपरिम्लानौ पृथगिन्द्रध्वजाविव ॥ २५ ॥

प्रकृतिमान् सत्वप्रकृतिः वैद्यः सर्वज्ञः । सर्वज्ञभिषजौ वैद्यौ ॥२१॥

वृत्तस्य कृतदाहस्य सावशेषास्थिनिचये अस्थिसञ्चयनाख्यकर्मणा आशौचान्तराकृतस्याप्यवशेषो भूमुद्धिभस्मोद्धारलक्षणस्तेन सहितः सावशेषस्तस्मिन् कर्त्तव्ये सति इत्यर्थः । एतेन त्रयोदशेऽह्न्यस्थिसञ्चयनं स्मृतिविरुद्धमित्यपास्तम् ॥ २२ ॥

त्रीणि द्वन्द्वानि । बुभुक्षापिपासे शोकमोहौ । जरामृती जन्ममरणे सुखदुःखे लाभालाभौ चेति तीर्थः । अस्ति जायते वर्धतेऽपक्षीयते विपरिणमते विनश्यतीत्येवं रूपाणीति कतकः । भूतेषु प्राणिषु एवं भवितुमतिशोकाक्रान्ततया भवितुम् ॥ २३ ॥

सर्वभूतभवाभवौ उत्पत्तिविनाशौ ॥ २४ ॥ २५ ॥

अश्रूणि परिमृद्नन्तौ रक्ताक्षौ दीनभाषिणौ ।
अमात्यास्त्वरयन्ति स्म तनयौ चापराः क्रियाः ॥ २६ ॥

इत्यार्षे रामायणे वाल्मीकीये अयोध्याकाण्डे
भरतविलापो नाम सप्तसप्तति-
तमः सर्गः ॥ ७७ ॥

परिमृद्नन्तौ मार्जयन्तौ । तनयौ राजपुत्रौ अपराः क्रियाः अस्थ्युद्धारादिक्रिया उद्दिश्येति शेषः ॥ २६ ॥

इत्यार्षे रामायणे वाल्मीकीये अयोध्याकाण्डे
सप्तसप्ततितमः सर्गः ॥ ७७ ॥

## अष्टसप्ततितमः सर्गः ।

अथ यात्रां समीहन्तं शत्रुघ्नो लक्ष्मणानुजः ।
भरतं शोकसन्तप्तमिदं वचनमब्रवीत् ॥ १ ॥
गतिर्यः सर्वभूतानां दुःखे किं पुनरात्मनः ।
स रामः सत्त्वसम्पन्नः स्त्रिया प्रव्राजितो वनम् ॥ २ ॥
बलवान् वीर्य्यसम्पन्नो लक्ष्मणो नाम योऽप्यसौ ।
किं न मोचयते रामं कृत्वापि पितृनिग्रहम् ॥ ३ ॥

यात्रां रामसमीपयात्रां समीहन्तं समीहमानं विचारयन्तमित्यर्थः ॥ १ ॥

दुःखे दुःखजनकसङ्कटे प्राप्ते यः सर्वभूतानां गतिः शरणमाश्रयः सर्वदुःखनाशकः आत्मनः स्वस्य आवयोश्च गतिरिति किं वक्तव्यम् । अनेनातिसङ्कटे भगवत्शरणमेव दुःखनाशे समर्थं नान्यदिति सूचितम् । स रामः स्त्रिया प्रव्राजितः, स च गत इत्येतदनुचितं तेन कृतं सामर्थ्ये सतीति शेषः ॥ २ ॥

किं वा रामो राज्यलोभात् पित्राज्ञामुल्लङ्घितवानिति अयशोभयादेवं करोतु लक्ष्मणः सर्वथानुचितं कृतवानित्याह,—बलवानिति । लक्ष्मणो नाम अनुचितकर्तृत्वेन शोच्यः योऽपि अस्मद्भ्राता असौ पितृनिग्रहं कृत्वा रामं न मोचयते स्म वनवासात् ॥ ३ ॥

पूर्वमेव तु निग्राह्यः समवेक्ष्य नयानयौ।
उत्पथं यः समारूढो नार्या राजा वशं गतः॥ ४॥
इति सम्भाषमाणे तु शत्रुघ्ने लक्ष्मणानुजे।
प्राग्द्वारेभूत्तदा कुब्जा सर्वाभरणभूषिता॥ ५॥
लिप्ताचन्दनसारेण राजवस्त्राणि बिभ्रती।
विविधं त्रिविधैस्तैस्तैर्भूषणैश्च विभूषिता॥ ६॥
मेखलादामभिश्चित्रैरन्यैश्च वरभूषणैः।
बभासे बहुभिर्बद्धा रज्जुभिरिव वानरी॥ ७॥
तां समीक्ष्य तदा द्वाःस्थो भृशं पापस्य कारिणीम्।
गृहीत्वाकरुणं कुब्जां शत्रुघ्नाय न्यवेदयत्॥ ८॥

कथं पितृनिग्रह उचितस्तत्राह,—पूर्वमिति। यो राजा नार्या वशङ्गतः सन् उत्पथं अन्यायमार्गं आरूढः प्राप्तः अतः लक्ष्मणः स्वयं नयानयौ न्यायान्यायौ अभिषेकविषयौ समीक्ष्य विचार्य, गुरोरप्यव-लिप्तस्येति शास्त्रानुसारेण वनप्रव्राजनात् पूर्वमेव तत्प्रसङ्गकाल एव निग्राह्योनेदमनुचितमिति भावः॥ ४॥

प्राक् द्वारे शत्रुघ्नाधिष्ठितद्वारे कुब्जा दैवादागताभूत्॥ ५॥

राजवस्त्राणि राजार्हवस्त्राणि॥ ६॥

वानरी कुरूपत्वात। अत्र गुरुलघुप्रयुक्तः छन्दोभङ्गः आर्षः। पाठान्तरे चः पादपूरणे॥ ७॥

अकरुणं निर्दयम्॥ ८॥

यस्याः कृते वने रामो न्यस्तदेहश्च वः पिता ।
सेयं पापा नृशंसा च तस्याः कुरु यथामति ॥ ९ ॥
शत्रुघ्नश्च तदाज्ञाय वचनं भृशदुःखितः ।
अन्तःपुरचरान् सर्वानित्युवाच धृतव्रतः ॥ १० ॥
तीव्रमुत्पादितं दुःखं भ्रातॄणां मे तथा पितुः ।
यथा सेयं नृशंसस्य कर्मणः फलमश्नुताम् ॥ ११ ॥
एवमुक्ता च तेनाशु सखीजनसमावृता ।
गृहीता बलवत्कुब्जा सा तत् गृहमनादयत् ॥ १२ ॥
ततः सुभृशसन्तप्त * स्तस्याः सर्वः सखीजनः ।
क्रुद्धमाज्ञाय शत्रुघ्नं व्यपलायत सर्वशः ॥ १३ ॥
अमन्त्रयत कृत्स्नश्च तस्याः सर्वः सखीजनः ।
यथायं समुपक्रान्तो निःशेषं नः करिष्यति ॥ १४ ॥

वने रामस्तिष्ठतीति शेषः । यथामति निग्रहमिति शेषः ॥ ९ ॥
धृतव्रतः कर्त्तव्यत्वेन अवधृतव्रत इत्यर्थः । सुतं वच इति पाठान्तरम् ॥ १० ॥
अश्नुतां प्राप्नुतां तथा कर्त्तव्यं मयेति शेषः ॥ ११ ॥ १२ ॥ १३ ॥
समुपक्रान्तः आरब्धपराक्रमः ॥ १४ ॥

---

* सन्त्रस्तः इति वा पाठः ।

सानुक्रोशां वदान्याञ्च धर्म्मज्ञाञ्च यशस्विनीम्।
कौशल्यां शरणं यामः सा हि नोऽस्ति ध्रुवा गतिः॥ १५॥
स च रोषेण संवीतः * शत्रुघ्नः शत्रुशासनः।
संचकर्ष तदा कुब्जां क्रोशन्तीं पृथिवीतले॥ १६॥
तस्यां ह्याकृष्यमाणायां मन्थरायां ततस्ततः।
चित्रं बहुविधं भाण्डं पृथिव्यां तद्व्यशीर्यत॥ १७॥
तेन भाण्डेन सङ्कीर्णं श्रीमद्राजनिवेशनम्।
अशोभत तदा भूयः शारदं गगनं यथा॥ १८॥
स बली बलवत्क्रोधात् गृहीत्वा पुरुषर्षभः।
कैकेयीमभिनिर्भर्त्स्य बभाषे परुषं वचः॥ १९॥
तैर्वाक्यैः परुषैर्दुःखैः कैकेयी भृशदुःखिता।

अतः सानुक्रोशामिति। सा नोऽस्माकं ध्रुवा गति रस्ति अतस्तां शरणं याम इत्यमन्वयतेत्यन्वयः॥ १५॥

पृथिवीतले पातयित्वेति शेषः॥ १६॥

भाण्डं भूषणमात्रेऽपि॥ १७॥ १८॥

गृहीत्वा कुब्जाम्। कैकेयीमभिनिर्भर्त्स्य कुब्जामोचनार्थमागतामिति शेषः। निर्भर्त्सनमत्र हस्तेन दूरीकरणम्॥ १९॥

---

* ताम्राक्षः इति वा पाठः।

शत्रुघ्नभयसन्त्रस्ता पुत्रं शरणमागता ॥ २० ॥
तं प्रेक्ष्य भरतः क्रुद्धं शत्रुघ्नमिदमब्रवीत् ।
अवध्याः सर्वभूतानां प्रमदाः क्षम्यतामिति ॥ २१ ॥
हन्यामहमिमां पापां कैकेयीं दुष्टचारिणीम् ।
यदि मां धार्मिको रामो नासूयेन्मातृघातकम् ॥ २२ ॥
इमामपि हतां कुब्जां यदि जानाति राघवः ।
त्वाञ्च माञ्चैव धर्मात्मा नाभिभाषिष्यते ध्रुवम् ॥ २३ ॥
भरतस्य वचः श्रुत्वा शत्रुघ्नो लक्ष्मणानुजः ।
न्यवर्त्तत ततो दोषात्तां मुमोच च मूर्च्छिताम् * ॥ २४ ॥
सा पादमूले कैकेय्या मन्थरा निपपात ह ।
निःश्वसन्ती सुदुःखार्त्ता कृपणं विललाप ह ॥ २५ ॥

परुषैः मर्मग्राहिभिः अतएव दुःखैः पुत्रं शरणमागता कुब्जामो-चनार्थमिति शेषः ॥ २० ॥

यतः सर्वभूतानामवध्याः अतः क्षम्यतामित्यब्रवीत् ॥ २१ ॥

मातृघातकं मां प्रति यदि रामो नासूयेत् न कुप्येत् तदाहमिमां मातरमपि हन्याम् ॥ २२ ॥

जानाति श्रास्यते नाभिभाषिष्यते स्त्रीघातिनाविति मत्वा इत्यब्रवी-दिति पूर्वेण सम्बन्धः ॥ २३ ॥ २४ ॥ २५ ॥

शत्रुघ्नविक्षेपविमूढसंज्ञां
समीक्ष्य कुब्जां भरतस्य माता ।
शनैः समाश्वासयदार्त्तरूपां
क्रौञ्चीं विलग्नामिव वीक्षमाणाम् ॥ २६ ॥

इत्यार्षे रामायणे वाल्मीकीये अयोध्याकाण्डे
कुब्जाधर्षणं नाम अष्टसप्तति-
तमः सर्गः ॥ ७८ ॥

शत्रुघ्नविक्षेपः शत्रुघ्नेनेतस्ततः कर्षणं तेन प्रनष्टज्ञानां विलग्नां यन्त्रादिना संयताम् ॥ २६ ॥

इत्यार्षे रामायणे वाल्मीकीये अयोध्याकाण्डे
अष्टसप्ततितमः सर्गः ॥ ७८ ॥

## एकोनाशीतितमः सर्गः ।

ततः प्रभातसमये दिवसेऽथ चतुर्दशे ।
समेत्य राजकर्त्तारो भरतं वाक्यमब्रुवन् ॥ १ ॥
गतो दशरथः स्वर्गं यो नो गुरुतरो गुरुः ।
रामं प्रव्राज्य वै ज्येष्ठं लक्ष्मणञ्च महाबलम् ॥ २ ॥
त्वमद्य भव नो राजा राजपुत्र ! महायशः ! ।
सङ्गत्या नापराध्नोति राज्यमेतदनायकम् ॥ ३ ॥

तत इति ॥ १ ॥

रक्षासाधनत्वाद्राजा गुरुः तत्राप्ययं गुरुतरः । ज्येष्ठं राज्यार्हम् ॥ २ ॥

यत एतद्राज्यमनायकं ततो राजा भव । ननु ज्येष्ठे विद्यमाने कथमहं राजा तत्राह,—सङ्गत्या ज्येष्ठस्य वनवासं प्रति पितुराज्ञासङ्गत्या तव च राज्यं प्रति तदाज्ञासङ्गत्या राज्यं कुर्वन्नपि भवान्नापराध्नोति । धर्मविरोधज्येष्ठविरोधलोकविरोधान्न प्राप्नोति पित्राज्ञाया उभाभ्यामपि पालनीयत्वात् इति बहवः । एतद्राज्यम् अनायकमपि अमात्यादीनां सङ्गत्यैकमत्येन दैवगत्या वा नापराध्नोति न नश्यति अतो नो राजा भवेत्यर्थं तीर्थ आह ॥ ३ ॥

आभिषेचनिकं सर्वमिदमादाय राघव ! ।
प्रतीक्षते त्वां स्वजनः श्रेणयश्च नृपात्मज ! ॥ ४ ॥
राज्यं गृहाण भरत ! पितृपैतामहं ध्रुवम् ।
अभिषेचय चात्मानं पाहि चास्मान्नरर्षभ ! ॥ ५ ॥
आभिषेचनिकं भाण्डं कृत्वा सर्वं प्रदक्षिणम् ।
भरतस्तं जनं सर्वं प्रत्युवाच दृढव्रतः ॥ ६ ॥
ज्येष्ठस्य राजता नित्यमुचिता हि कुलस्य नः ।
नैवं भवन्तो मां वक्तुमर्हन्ति कुशला जनाः ॥ ७ ॥
रामः पूर्वो हि नो भ्राता भविष्यति महीपतिः ।
अहं त्वरण्ये वत्स्यामि वर्षाणि नवपञ्च च ॥ ८ ॥
युज्यतां महती सेना चतुरङ्गमहाबला ।
आनयिष्याम्यहं ज्येष्ठं भ्रातरं राघवं वनात् ॥ ९ ॥
आभिषेचनिकञ्चैव सर्वमेतदुपस्कृतम् ।

आभिषेचनिकं अभिषेचनप्रयोजनं वस्तुजातं रामाभिषेकाय विततम् । स्वजनो मन्त्र्यादिः । श्रेणयः पौराः ॥ ४ ॥ ५ ॥

भाण्डं उपकरणम् ॥ ६ ॥

राजता राजत्वम् ॥ ७ ॥

पूर्वो ज्येष्ठः । अरण्ये वत्स्यामि रामप्रतिनिधित्वेनेति शेषः ॥ ८ ॥

आनयिष्यामि इडार्षः ॥ ९ ॥

पुरस्कृत्य गमिष्यामि रामहेतोर्वनं प्रति ॥ १० ॥
तत्रैव तं नरव्याघ्रमभिषिच्य पुरस्कृतम् ।
आनयिष्यामि वै रामं हव्यवाहमिवाध्वरात् ॥ ११ ॥
न सकामां करिष्यामि स्वामिमां पुत्रगृद्धिनीम् ।
वने वत्स्याम्यहं दुर्गे रामो राजा भविष्यति ॥ १२ ॥
क्रियतां शिल्पिभिः पन्थाः समानि विषमाणि च ।
रक्षिणश्चानुसंयान्तु पथि दुर्गविचारकाः ॥ १३ ॥
एवं सम्भाषमाणं तं रामहेतोर्नृपात्मजम् ।
प्रत्युवाच जनः सर्व्वः श्रीमद्वाक्यमनुत्तमम् ॥ १४ ॥

रामहेतोः रामाभिषेकार्थम् ॥ १० ॥

पुरस्कृतं अग्रतः कृतं अध्वरात् महायज्ञशालायाः स्वामिहोत्रगृह-मित्यर्थः ॥ ११ ॥

मातृगन्धिनीं केवलमातृव्यपदेशां मातृसंज्ञामात्रामित्यर्थः इति तीर्थः । कतकस्तु पुत्रगृद्धिनीमिति पांक्तः पाठः । पुत्रगर्धिनीमित्यर्थ इत्याह,— ॥ १२ ॥

शिल्पिनः खनकाः यत्र पथोऽभावः तत्र पन्था गमनमार्गः क्रियतां विषमाणि च निम्नोन्नतानि च समानि क्रियन्तां रथादिसुखगत्यर्थमिति भावः । पथि विद्यमानेषु दुर्गेषु विशेषेण जनान् चारयन्तीति पथि-दुर्गविचारकाः । पथिदुर्गविशारदा इति पाठे तत्र वर्त्तमानदुर्गे चोरादिभीत्या गन्तुमशक्यप्रदेशे रक्षणविशारदा इत्यर्थः ॥ १३ ॥

एवं ते भाषमाणस्य पद्मा श्रीरुपतिष्ठताम् ।
यस्त्वं ज्येष्ठे नृपसुते पृथिवीं दातुमिच्छसि ॥ १५ ॥

अनुत्तमं तद्वचनं नृपात्मज-
प्रभाषितं संश्रवणे निशम्य च ।
प्रहर्षजास्तं प्रति बाष्पविन्दवो
निपेतुरार्याननेत्रसम्भवाः ॥ १६ ॥

एवं सम्भाषमाणं तं प्रति सर्वोऽपि जनः श्रीमच्छुभमनुत्तमं वाक्यमुवाच तदेवाह,—एवमिति । एवं रामराज्यविषयं भाषमाणस्य ते पद्मा तदाख्या पद्मचिह्ना च श्रीरुपतिष्ठतां ज्येष्ठानुसरणादिति भावः । तदेवाह,—यस्त्वमिति । ज्येष्ठे ज्येष्ठाय पृथिवीं दातुमिच्छसि अतः श्रीस्त्वामुपतिष्ठताम् ॥ १४ ॥ १५ ॥

संश्रवणे रामानयनप्रतिज्ञाविषयेऽनुत्तमं नृपात्मजेन प्रभाषितं तद्वचनं निशम्य । स्थितानां जनानां प्रति भरतमुद्दिश्य प्रहर्षजा आर्याननेत्रसम्भवाः हर्षयुक्तमुखस्थनेत्रजविन्दवो निपेतुरिति तीर्थः । अत्र आननपदमधिकम् । कतकस्तु नृपात्मजः प्रभाषितमिति सविसर्गपाठः । नृपात्मजो जनैः प्रभाषितमनुत्तमन्तद्वचनं आशीर्वचनं संश्रवणे सम्यक् श्रवणविषये प्राप्तं निशम्य श्रुत्वा हृष्टोऽभूदिति शेषः अथ तं प्रति तं जनं लक्षीकृत्य । कर्मप्रवचनीयत्वात् द्वितीया । आर्यस्य पूज्यस्य भरतस्यार्यं पूज्यं यदाननं मुखं जनाशीर्वादश्रवणजसन्तोषेण पूज्यत्वं मुखस्य तद्वर्त्तिनेत्रसम्भवाः अतएव प्रहर्षजा बिन्दवो निपेतुः । अनुक्तभरत-

ऊचुस्ते वचनमिदं निशम्य हृष्टाः
सामात्याः सपरिषदो वियातशोकाः ।
पन्थानं नरवर ! भक्तिमान् जनश्च
व्यादिष्टस्तव वचनाच्च शिल्पिवर्गः ॥ १७ ॥

इत्यार्षे रामायणे वाल्मीकीये अयोध्याकाण्डे
भरतस्य रामानयनप्रस्तावो नाम एको-
नाशीतितमः सर्गः ॥ ७९ ॥

सौमुख्यकथनञ्चास्य श्लोकस्य प्रयोजनमित्याह,—अत्र कतकपाठस्तद्व्याख्या च ज्यायसी ॥ १६ ॥

इदं वचनं रामानयनवचनम् । वियातः विशेषेण यातो गतः शोको येषान्ते, जना इति विशेष्यम् । विधूतशोका इति पाठान्तरम् । हे नरवर ! तव वचनात् रामे त्वयि च भक्तिमान् शिल्पिवर्गः पन्थानं कर्तुं व्यादिष्टः जनो रक्षकजनश्च रक्षणं कर्तुं व्यादिष्टः ॥ १७ ॥

इत्यार्षे रामायणे वाल्मीकीये अयोध्याकाण्डे
एकोनाशीतितमः सर्गः ॥ ७९ ॥

## अशीतितमः सर्गः ।

अथ भूमिप्रदेशज्ञाः सूत्रकर्मविशारदाः ।
स्वकर्माभिरताः शूराः खनका यन्त्रकास्तथा ॥ १ ॥
कर्मान्तिकाः स्थपतयः पुरुषा यन्त्रकोविदाः ।
तथावर्धकयश्चैव मार्गिणो वृक्षतक्षकाः ॥ २ ॥
सूपकाराः सुधाकारा वंशचर्मकृतस्तथा ।
समर्था ये च द्रष्टारः पुरतश्च प्रतस्थिरे ॥ ३ ॥

भूमिप्रदेशज्ञाः अन्तः सजलनिर्जलादि भूमिप्रदेशज्ञाः । सूत्रकर्मविशारदाः शिविरादिनिर्माणे सूत्रग्रहणकुशलाः । निर्जलेष्वगाधवापीकूपादिनिर्माणं सूत्रकर्मेति कतकः । खनकाः स्वकर्मणि खननेऽभिरताः परसेनयावष्टम्भेऽपि खनने दक्षाः अतएव शूराः यन्त्रकाः जलप्रवाहादि यन्त्रणसमर्थाः ॥ १ ॥

कर्मान्तिकाः वेतनजीविनः । स्थपतयो रथादिकर्त्तारः प्रधानवर्धकयः । यन्त्रकोविदाः क्षेपणीयादियन्त्रकरणकुशलाः । पथदर्शनकोविदा इति पाठान्तरम् । वर्धकयस्तक्षाणः मार्गिणः तत्तद्वनमार्गविशेषरक्षानियुक्ताः वृक्षतक्षकाः मार्गावरोधिवृक्षच्छेत्तारः ॥ २ ॥

सूपकाराः सूदाः । सुधा अवलेपः । वंशचर्मकृतः वंशदलैः कट-

स तु हर्षात्तमुद्देशं जनौघो विपुलः प्रयान् ।
अशोभत महावेगः सागरस्येव पर्वणि ॥ ४ ॥
ते स्ववारं समास्थाय वर्त्मकर्मणि कोविदाः ।
करणैर्विविधोपेतैः पुरस्तात्सम्प्रतस्थिरे ॥ ५ ॥
लतावल्लीश्च गुल्मांश्च स्थाणूनश्मन एव च ।
जनास्ते चक्रिरे मार्गं छिन्दन्तो विविधान् द्रुमान् ॥ ६ ॥
अवृक्षेषु च देशेषु केचित् वृक्षानरोपयन् ।
केचित् कुठारैष्टङ्कैश्च दात्रैश्छिन्दन् क्वचित् क्वचित् ॥ ७ ॥
अपरे वीरणस्तम्बान् बलिनो बलवत्तराः ।

सूर्यादिक्षतः चर्मक्षतः अवस्थानार्थमश्वप्रष्ठारोप्यमाणपल्ययनादिक्षतः समर्था द्रष्टारः पूर्वानुभूतमार्गामार्गद्रष्टारः ॥ ३ ॥

सत्विति । एवं मार्गसन्नाहप्रवृत्तौ जनौघोरामदर्शनकौतुकज-हर्षात् महावेगः महावेगवान् प्रयान् गच्छन् पर्वणि सागरस्य महावेगो जलौघ इवाशोभत ॥ ४ ॥

ते मार्गशोधकाः स्ववारं स्वसमूहं समास्थाय । वारसङ्घातसञ्चया इत्यमरः । विविधोपेतैर्नानाप्रकारयुक्तैः पिटकखनित्रदात्रादिकरणैर्युक्ता इति शेषः ॥ ५ ॥

लताः शाखाः स्थाणून् शङ्कून् । अपसारयन्त इति शेषः ॥ ६ ॥

अरोपयन् छायार्थमिति शेषः । टङ्कः पाषाणभेदनः । छिन्दन् अडभाव आर्षः ॥ ७ ॥

विधमन्ति स्म दुर्गाणि स्थलानि च ततस्ततः ॥ ८ ॥
अपरेऽपूरयन् कूपान् पांसुभिः श्वभ्रमायतम्।
निम्नभागांस्तथैवाशु समांश्चक्रुः समन्ततः ॥ ९ ॥
बबन्धुर्बन्धनीयांश्च क्षोद्यान् संचुक्षुदुस्तथा।
बिभिदुर्भेदनीयांश्च तांस्तान् देशान्नरास्तदा ॥ १० ॥
अचिरेण तु कालेन परिवाहान् बहूदकान्।
चक्रुर्बहुविधाकारान् सागरप्रतिमान् बहून् ॥ ११ ॥
निर्जलेषु च देशेषु खानयामासुरुत्तमान्।
उदपानान् बहुविधान् वेदिकापरिमण्डितान् ॥ १२ ॥

बलिनः रूढ़मूलान् वीरणस्तम्बान् विधमन्ति हस्ताभ्यामेव निःसारयन्ति। दुर्गाणि स्थलानि उन्नतान् प्रदेशान् विधमन्ति खननेन समीकुर्वन्ति ॥ ८ ॥

कूपान् मार्गमध्यवर्त्तिनः तादृशमायतं श्वभ्रं गर्तञ्च पांसुभिरपूरयन् ॥ ९ ॥

बन्धनीयान् सेतून् क्षोद्यान् क्षोदनीयान् शर्कराभूयिष्ठप्रदेशान् सञ्चुक्षुदुः चूर्णयामासुः। भेदनीयान् जलनिर्गमार्थं भेद्यान् ॥ १० ॥

परिवाहान् अल्पप्रवाहान् बन्धनेन बहूदकान् चक्रुः ॥ ११ ॥

खानयामासुः अखनन्। उदपानान् कूपवाप्यादीन्। वेदिकाभिः परितोऽलङ्कृतान् ॥ १२ ॥

ससुधाकुट्टिमतलः प्रपुष्पितमहीरुहः ।
मत्तोद्‌घुष्टद्विजगणः पताकाभिरलङ्कृतः ॥ १३ ॥
चन्दनोदकसंसिक्तो नानाकुसुमभूषितः ।
बह्वशोभत सेनायाः पन्थाः सुरपथोपमः ॥ १४ ॥
आज्ञाप्याथ यथाज्ञप्ति युक्तास्तेऽधिकृता नराः ।
रमणीयेषु देशेषु बहुस्वादुफलेषु च ॥ १५ ॥
यो निवेशस्त्वभिप्रेतो भरतस्य महात्मनः ।
भूयस्तं शोभयामासुर्भूषाभिर्भूषणोपमम् ॥ १६ ॥
नक्षत्रेषु प्रशस्तेषु मुहूर्त्तेषु च तद्विदः ।
निवेशान् स्थापयामासुर्भरतस्य महात्मनः ॥ १७ ॥

ससुधाकुट्टिमतलः तत्र तत्र सच्छायजलाशयसमीपे विश्रमार्थं निवासाय ससुधातलः सुधानिबद्धभूदेशः सकुट्टिमतलश्च । कुट्टिमो स्त्री निबद्धा भूः । क्वचित्सुधाभिः क्वचिन्मृत्तिकाभिरेवं बद्धचत्वर इत्यर्थः ॥ १३ ॥ १४ ॥

अथ मार्गकरणानन्तरं अधिकृताः मार्गशिबिरादिनिवेशाधिकारिणः । यथाज्ञप्ति यथा भरताज्ञापनं शिबिरादिनिवेशे अनुचराना-ज्ञाप्य यो यादृशो भरतस्याभिमतो निवेशस्तं तथा कृत्वा भूयोधिक-भूषाभिः शोभयामासुः । वितानकनककलशरत्नध्वजादिभिर्भूषया-मासुः । निवेशः शिविरम् । भूषणोपमं मार्गस्यालङ्कारसदृशं अति रमणीयमिति यावत् ॥ १५ ॥ १६ ॥

बहुपांसुचयाश्चापि परिखाः परिवारिताः ।
तत्रेन्द्रनीलप्रतिमाः प्रतोलीवरशोभिताः ॥ १८ ॥
प्रासादमालासंयुक्ताः सौधप्राकारसंवृताः ।
पताकाः शोभिताः सर्वे सुनिर्मितमहापथाः ॥ १९ ॥
वितर्दिभिरिवाकाशे विटङ्काग्रविमानकैः ।
समुच्छ्रितैर्निवेशास्ते बभुः शक्रपुरोपमाः ॥ २० ॥
जाह्नवीं तु समासाद्य विविधद्रुमकाननाम् ।
शीतलामलपानीयां महामीनसमाकुलाम् ॥ २१ ॥
सचन्द्रतारागणमण्डितं यथा
नभः क्षपायाममलं विराजते ।

निवेशान् शिबिराणि ॥ १७ ॥

बहुपांसुचया इत्यनेन शर्करादिराहित्यसूचनम् । परिखाः सगर्त्ताः पर्यन्तभित्तयः तत्र परिखावच्छेदेनेत्यर्थः । इन्द्रनीलमणिनिर्मिताः प्रतिमाश्चित्रप्रतिमा येषु निवेशेषु । इन्द्रकीलप्रतिमा इति पाठे इन्द्रकीलपर्वतसदृश इत्यर्थः । एवमुक्ताः परिखा इति यावत् । प्रतोली रथ्या ॥ १८ ॥

सौधसदृशैः प्राकारैः संवृताः ॥ १९ ॥

आकाशे वितर्दिभिरिव विधिधिष्ण्यैरिव स्थितैरुपलक्षिताः विटङ्कं कपोतपालिका तदुन्नताग्रैर्विमानकैः सप्तभूमिकगृहैरत्युन्नतैरुपलक्षिता इत्यर्थ इति कतकः । विसर्पद्भिरिवाकाशे इति पाठान्तरम् । तदोर्ध्वमूर्ध्वं गच्छद्भिरिवेत्यर्थः कथञ्चिद्योज्यः ॥ २० ॥

नरेन्द्रमार्गः स तदा व्यराजत
　क्रमेण रम्यः शुभशिल्पिनिर्मितः ॥ २२ ॥

## इत्यार्षे रामायणे वाल्मीकीये अयोध्याकाण्डे निवेशसंस्थापनं नाम अशीति-तमः सर्गः ॥ ८० ॥

जाह्नवीं समासाद्य अभिव्याप्य प्रवर्त्तितो नरेन्द्रमार्गो व्यराजत इत्यन्वयः ॥ २१ ॥ २२ ॥

इत्यार्षे रामायणे वाल्मीकीये अयोध्याकाण्डे
अशीतितमः सर्गः ॥ ८० ॥

## एकाशीतितमः सर्गः ॥

ततो नान्दीमुखीं रात्रिं भरतं सूतमागधाः ।
तुष्टुवुः सविशेषज्ञास्तवैर्मङ्गलसंस्तवैः ॥ १ ॥
सुवर्णकोणाभिहतः प्राणदद्यामदुन्दुभिः ।
दध्मुः शंखांश्च शतशो वाद्यांश्चोच्चावचस्वरान् ॥ २ ॥
स तूर्यघोषः सुमहान्दिवमापूरयन्निव ।
भरतं शोकसन्तप्तं भूयः शोकैररन्ध्रयत् ॥ ३ ॥
ततः प्रबुद्धो भरतस्तं घोषं सन्निवर्त्य च ।

नान्दीमुखीं भरताभिषेकाय वसिष्ठेन करिष्यमाणनान्दीमुखाद्यभ्युदयप्रागवर्त्तिनीं रामानयनाभ्युदयप्रारम्भयुक्ता नान्दीमुखीति कश्चित् । रात्रिं अल्पावशेषां दृष्ट्वेति शेषः । सविशेषज्ञाः राजनि राजपुत्रे चापेक्षितविशेषस्तवं जानन्ति तादृशाः । मङ्गलसंस्तवैः मङ्गलप्रतिपादकैः ॥ १ ॥

सुवर्णकोणः सुवर्णदण्डः यामदुन्दुभिः यामावसानसूचको दुन्दुभिः । उच्चावचानुच्चावचस्वरान् वाद्यान् वाद्यविशेषान् दध्मुः । नांद्यान् इति पाठः । मङ्गलादीनित्यर्थ इति तीर्थः ॥ २ ॥

नाहं राजेति चोक्त्वा तं शत्रुघ्नमिदमब्रवीत् ॥ ४ ॥
पश्य शत्रुघ्न ! कैकेय्या लोकस्यापकृतं महत् ॥
विसृज्य मयि दुःखानि राजा दशरथो गतः ॥ ५ ॥
तस्यैषा धर्मराजस्य धर्ममूला महात्मनः ।
परिभ्रमति राजश्रीर्नौरिवाकर्णिका जले ॥ ६ ॥
यो हि नः सुमहान्नाथः सोऽपि प्रव्राजितो वने ।
अनया धर्ममुत्सृज्य माता मे राघवः स्वयम् ॥ ७ ॥
इत्येवं भरतं वीक्ष्य विलपन्तमचेतनम् ।
कृपणा रुरुदुः सर्वाः सुस्वरं योषितस्तदा ॥ ८ ॥
तथा तस्मिन् विलपति वसिष्ठो राजधर्मवित् ।
सभामिक्ष्वाकुनाथस्य प्रविवेश महायशाः ॥ ९ ॥

शोकैः शोकोत्पादनैः । अरन्धयत् हिनस्ति स्म । रधपाकहिंस-नयोः ॥ ३ ॥ ४ ॥

कैकेय्या हेतुना मद्विषये जायमानं लोकस्य सूतमागधादेरपकृत-मनुचितं कर्म पश्य । एवंरूपाणि दुःखानि दुःखकराणि मयि विसृज्य राजागतः ॥ ५ ॥

तस्य योगतस्तस्येत्यर्थः । अकर्णिका अकर्णधारा अकराटकेति पाठः । कराटको नाविकस्तद्रहितेत्यर्थ इति कतकः ॥ ६ ॥ ७ ॥ ८ ॥

राजधर्मवित् राजपुरोहितकर्त्तव्यधर्मवेत्ता अतः स्वकृत्यं स्वयं सम्पा-दयतीत्याह,—सभामित्यादि ॥ ९ ॥

शातकुम्भमयीं रम्यां मणिहेमसमाकुलाम्।
सुधर्मामिव धर्मात्मा सगणः प्रत्यपद्यत ॥ १० ॥
स काञ्चनमयं पीठं स्वस्त्यास्तरणसंवृतम्।
अध्यास्त सर्ववेदज्ञो दूताननुशशास च ॥ ११ ॥
ब्राह्मणान् क्षत्रियान् योधानमात्यान् गणवल्लभान्।
क्षिप्रमानयताव्यग्राः कृत्यमात्ययिकं हि नः ॥ १२ ॥
सराजपुत्रं शत्रुघ्नं भरतञ्च यशस्विनम्।
युधाजितं सुमन्त्रञ्च ये च तत्र हिता जनाः ॥ १३ ॥
ततो हलहलाशब्दो महान् समुदपद्यत।
रथैरश्वैर्गजैश्चापि जनानामुपगच्छताम् ॥ १४ ॥
ततो भरतमायान्तं शतक्रतुमिवामराः।
प्रत्यनन्दन् प्रकृतयो यथा दशरथं तथा ॥ १५ ॥

तद्विशेषणं शातकुम्भमयीमित्यादि। सगणः सशिष्यगणः ॥ १० ॥

स्वस्त्यास्तरणसंवृतं स्वस्तिकाकारमण्डलवदास्तरणसंवृतं पीठमध्यास्त ततो दूताननुशशास च ॥ ११ ॥

गणवल्लभाः सेनानायकाः। आत्ययिकं कालविलम्बासहिष्णु ॥ १२ ॥

सराजपुत्रं राजपुत्रैरितरैः सहितं शत्रुघ्नं युधाजिन्नामा कश्चिन्मन्त्री ये च हिता जना स्तांश्चानयत ॥ १३ ॥

हलहलेति शब्दानुकरणम् ॥ १४ ॥ १५ ॥

ह्रद इव तिमिनागसंवृतस्तिमितजलो मणिशङ्खशर्करः ।
दशरथसुतशोभिता सभा सदशरथेव बभूव सा पुरा ॥१६॥

इत्यार्षे रामायणे वाल्मीकीये अयोध्याकाण्डे
वशिष्ठस्य सभाप्रवेशो नाम एका-
शीतितमः सर्गः ॥ ८१ ॥

ह्रद इव सभा । ह्रदोऽत्र सामुद्रः । भिन्नलिङ्गत्वेपि सहृदयोद्वेगाभावात् चन्द्र इव मुखमितिवन्नदुष्टोपमा । तिमिरनेकयोजनायामविस्तारो मत्स्यः नागा जलगजाः सर्पाश्च मणयो मुक्ताद्याः शर्कराः सुवर्णखनिमृत्तिकाः । सभायां जलस्थाने सभातेजः । एतदेव ध्वनयता स्तिमितजल इत्युक्तम् । चित्रस्थतिमिनागसंवृतत्वं मणयश्च स्तम्भादिषु विद्यन्त एव शङ्खाश्चित्रेषु स्वर्णशर्करास्थाने । कुट्टिमादौ स्वर्णलेपः । प्रकारान्तरेण जलादिवर्णने तु कवेर्न्यूनतादोषः । मम तु विभक्तिपरिणामेनैषामेव सभायामप्यन्वयान्न दोषः । एतेन वसिष्ठो जलं तिमिनागौ भरतशत्रुघ्नौ मण्यादयोऽमात्यपौरजानपदा इति कतकोक्तमपास्तम् । दशरथसुतशोभिता सभा पुरा सदशरथा सभेव बभाविति योजना । पितृसमानाकारत्वात्पुत्रस्येदानीमपि स दशरथेवेत्युत्प्रेक्षा । पुरा यथेत्यंश उपमेति तयोश्च संसृष्टिः ॥ १६ ॥

इत्यार्षे रामायणे वाल्मीकीये अयोध्याकाण्डे
एकाशीतितमः सर्गः ॥ ८१ ॥

## द्व्यशीतितमः सर्गः ।

तामार्य्यगणसम्पूर्णां भरतः प्रग्रहां सभाम् ।
ददर्श बुद्धिसम्पन्नः पूर्णचन्द्रां निशामिव ॥ १ ॥
आसनानि यथान्यायमार्य्याणां विशतां तदा ।
वस्त्राङ्गरागप्रभया द्योतिता सा सभोत्तमा ॥ २ ॥
सा विद्वज्जनसम्पूर्णा सभा सुरुचिरा तथा ।
अदृश्यत घनापाये पूर्णचन्द्रेव शर्वरी ॥ ३ ॥
राज्ञस्तु प्रकृतीः सर्वाः स संप्रेक्ष्य च धर्मवित् ।
इदं पुरोहितो वाक्यं भरतं मृदु चाब्रवीत् ॥ ४ ॥
तात ! राजा दशरथः स्वर्गतो धर्ममाचरन् ।
धनधान्यवतीं स्फीतां प्रदाय पृथिवीं तव ॥ ५ ॥

प्रग्रहा प्रकृष्टैर्वसिष्ठादिभिर्ग्रहैः परिग्रहैधिष्ठानं यस्यां सा । निशापक्षे प्रकृष्टगुर्वादिग्रहवतीम् ॥ १ ॥

आर्य्याणां त्रैवर्णिकानां आसनानि विशतां आसनेषूपविशताम् ॥ २ ॥

घनापाये शरदि ॥ ३ ॥

स वसिष्ठः संप्रेक्ष्य च तात् कृतानुमतिकांश्च कृत्वा ॥ ४ ॥

धर्मं सत्यपरिपालनरूपम् ॥ ५ ॥

रामस्तथा सत्यवृत्तिः * सतां धर्ममनुस्मरन् ।
नाजहात् पितुरादेशं शशी ज्योत्स्नामिवोदितः ॥ ६ ॥
पित्रा भ्रात्रा च ते दत्तं राज्यं निहतकण्टकम् ।
तद्भुंक्ष्व मुदितामात्यः क्षिप्रमेवाभिषेचय ॥ ७ ॥
उदीच्याश्च प्रतीच्याश्च दाक्षिणात्याश्च केवलाः ।
कोट्यापरान्ताः सामुद्रा रत्नान्युपहरन्तु ते ॥ ८ ॥
तच्छ्रुत्वा भरतो वाक्यं शोकेनाभिपरिप्लुतः ।
जगाम मनसा रामं धर्मज्ञो धर्मकाङ्क्षया ॥ ९ ॥
स बाष्पकलया वाचा कलहंसस्वरो युवा ।
विललाप सभामध्ये जगर्हे च पुरोहितम् ॥ १० ॥

सतां धर्मं जीवतो वाक्यकरणादित्येवंरूपम् ॥ ६ ॥

निहतकण्टकं रामस्य वनवासदानात्तथा ॥ ७ ॥

उदीच्यादयस्तत्तद्दिशि प्रत्येकसिंहासनाधीश्वरा ये च केवलाः सिंहासनरहिताः । चात् प्राच्या अपरान्ताः द्वीपवासिनः सामुद्राः पोतवणिजः । कोट्योऽसंख्यातानि रत्नानि हरन्तु । कोट्योपरान्ता इति पाठान्तरम् । कोट्योरत्नानि अनेककोटिसंख्यरत्नानि । यद्वा परान्तास्तत्तद्दिगन्तवासिनः सामुद्राः समुद्रद्वीपवासिनः ॥ ८ ॥

धर्मज्ञः ज्येष्ठाभिषेकरूपधर्मज्ञः धर्मकाङ्क्षया ज्येष्ठानुवर्त्तनरूपधर्मलिप्सया मनसा जगाम सस्मार ॥ ९ ॥

---

* "सत्यधृतिः" इति वा पाठः ।

चरितब्रह्मचर्य्यस्य विद्यास्नातस्य धीमतः ।
धर्मे प्रयतमानस्य को राज्यं मद्विधो हरेत् ॥ ११ ॥
कथं दशरथाज्जातो भवेद्राज्यापहारकः ।
राज्यञ्चाहञ्च रामस्य धर्मं वक्तुमिहार्हसि ॥ १२ ॥
ज्येष्ठः श्रेष्ठश्च धर्मात्मा दिलीपनहुषोपमः ।
लब्धुमर्हति काकुत्स्थो राज्यं दशरथो यथा ॥ १३ ॥
अनार्यजुष्टमस्वर्ग्यं कुर्य्यां पापमहं यदि ।
इक्ष्वाकूणामहं लोके भवेयं कुलपांसनः ॥ १४ ॥
यद्धि मात्रा कृतं पापं नाहन्तदपि रोचये ।
इहस्थो वनदुर्गस्थं नमस्यामि कृताञ्जलिः ॥ १५ ॥
राममेवानुगच्छामि स राजा द्विपदां वरः ।
त्रयाणामपि लोकानां राघवो राज्यमर्हति ॥ १६ ॥

भगर्हे सर्वज्ञोऽपि कथमेवमनुचिते मां प्रवर्त्तयसीत्युक्तवानित्यर्थः ॥१०॥

विद्यास्नातस्य सर्वविद्यानन्तरभाविस्नानयुतस्य रामस्य। मद्विधः चरितब्रह्मचर्य्यादिः ॥ ११ ॥

रामस्य स्वमिति शेषः। हे भगवन्! एवं विज्ञाय धर्मं न्याय्यं वक्तुं इह सभायामर्हसि नेदृशमन्याय्यमित्यर्थः ॥ १२ ॥ १३ ॥ १४ ॥

ननु त्वन्मात्रा प्रयासेन राज्यसम्पादनादस्माभिरेवमुक्तमत आह,— यद्धीति। वनदुर्गस्थं वनरूपदुर्गस्थम् ॥ १५ ॥

द्विपदां मनुष्याणां वरः श्रेष्ठो राजा अस्य राज्यस्येति शेषः ॥ १६ ॥

तद्वाक्यं धर्मसंयुक्तं श्रुत्वा सर्वे सभासदः ।
हर्षान्मुमुचुरश्रूणि रामे निहितचेतसः ॥ १७ ॥
यदि त्वार्य्यं न शक्ष्यामि विनिवर्त्तयितुं वनात् ।
वने तत्रैव वत्स्यामि यथार्य्यो लक्ष्मणस्तथा ॥ १८ ॥
सर्वोपायन्तु वर्तिष्ये विनिवर्त्तयितुं वनात् ।
समक्षमार्य्यमिश्राणां साधूनां गुणवर्त्तिनाम् ॥ १९ ॥
विष्टिकर्मान्तिकाः सर्वे मार्गशोधकरक्षकाः ।
प्रस्थापिता मया पूर्वं यात्रा च मम रोचते ॥ २० ॥
एवमुक्त्वा तु धर्मात्मा भरतो भ्रातृवत्सलः ।
समीपस्थमुवाचेदं सुमन्त्रं मन्त्रकोविदम् ॥ २१ ॥
तूर्णमुत्थाय गच्छ त्वं सुमन्त्र ! मम शासनात् ।
यात्रामाज्ञापय क्षिप्रं बलञ्चैव समानय ॥ २२ ॥

मध्ये कविवाक्यम् । तद्वाक्यमिति ॥ १७ ॥

सर्वथा स्वस्य राज्यचिन्ता नास्तीतिप्रतिपादकं पुनर्भरतवाक्यं यदि त्विति ॥ १८ ॥

आर्य्यास्त्रैवर्णिकास्ते च ते मिश्राः पूज्यास्तेषां युष्माकं समक्षमित्यन्वयः ॥ १९ ॥

विष्टयो भृतिं विना कर्मकराः । कर्मान्तिका उक्ताः ॥ २० ॥ २१ ॥ ॥ २२ ॥

एवमुक्तः सुमन्त्रस्तु भरतेन महात्मना।
प्रहृष्टः सोऽदिशत् सर्वं यथासन्दिष्टमिष्टवत्॥ २३॥
ताः प्रहृष्टाः प्रकृतयो बलाध्यक्षा बलस्य च।
श्रुत्वा यात्रां समाज्ञप्तां राघवस्य निवर्त्तने॥ २४॥
ततो योधाङ्गनाः सर्वा भर्तॄन् सर्वान् गृहे गृहे।
यात्रागमनमाज्ञाय त्वरयन्ति स्म हर्षिताः॥ २५॥
ते हयैर्गोरथैः शीघ्रं स्यन्दनैश्च मनोजवैः।
सह योधैर्बलाध्यक्षा बलं सर्वमचोदयन्॥ २६॥
सज्जन्तु तद्बलं दृष्ट्वा भरतो गुरुसन्निधौ।
रथं मे त्वरयस्वेति सुमन्त्रं पार्श्वतोऽब्रवीत्॥ २७॥
भरतस्य तु तस्याज्ञां परिगृह्य प्रहर्षितः।
रथं गृहीत्वोपययौ युक्तं परमवाजिभिः॥ २८॥

अदिशत् आज्ञापयति स्म। इष्टवत् इष्टार्हं इष्टानुरूपमिति यावत्॥ २३॥

निवर्त्तने निवर्त्तननिमित्तं बलस्य यात्रां समाज्ञप्तां श्रुत्वा प्रकृतयो बलाध्यक्षाश्च प्रहृष्टा इत्यन्वयः॥ २४॥

यात्रागमनं रामयात्रार्थं गमनम्॥ २५॥

गोरथैः शकटैरित्यर्थः॥ २६॥

सज्जं गमनाय सन्नद्धं गुरुर्वसिष्ठः॥ २७॥ २८॥

स राघवः सत्यधृतिः प्रतापवान्।
ब्रुवन् सुयुक्तं दृढ़सत्यविक्रमः।
गुरुं महारण्यगतं यशस्विनं
प्रसादयिष्यन् भरतोऽब्रवीत्तदा ॥ २९ ॥
तूर्णं त्वमुत्थाय सुमन्त्र ! गच्छ
आज्ञापितः सम्परिपूर्णकामः।
बलस्य योगाय बलप्रधानान्
बलस्य मुख्यांश्च सुहृज्जनञ्च ॥ ३१ ॥ *

गुरुं रामं प्रसादयिष्यन् निवृत्तये ॥ २९ ॥
बलस्य योगाय बलसम्मेलनाय बलप्रधानान् आज्ञापयेति शेषः ॥३०
संपरिपूर्णकामस्तस्यापि रामदर्शने उत्कटेच्छत्वात् ॥ ३१ ॥

---

* " तूर्णं त्वमुत्थाय सुमन्त्र ! गच्छ
बलस्य योगाय बलप्रधानान्।
आनेतुमिच्छामि हि तं वनस्थं
प्रसाद्य रामं जगतो हिताय ॥
इत्यपि केचित् पठन्ति।

ततः समुत्थाय कुले कुले ते
राजन्यवैश्या वृषलाश्च विप्राः ।
अयूयुजन्नुष्ट्ररथान् खरांश्च ।
नागान् हयांश्चैव कुलप्रसूतान् ॥ ३२ ॥

इत्यार्षे रामायणे वाल्मीकीये अयोध्याकाण्डे
भरतस्य वनप्रस्थानोद्योगो नाम द्व्यशीति-
तमः सर्गः ॥ ८० ॥

कुले कुले गृहे गृहे । कुलं जनपदे गृहे । कुलप्रसूतानुत्तमान् ॥३२॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके
अयोध्याकाण्डे द्व्यशीतितमः सर्गः ॥ ८२ ॥

# त्र्यशीतितमः सर्गः।

ततः समुत्थितः कल्यमास्थाय स्यन्दनोत्तमम्।
प्रययौ भरतः शीघ्रं रामदर्शनकाङ्क्षया ॥ १ ॥
अग्रतः प्रययुस्तस्य सर्वे मन्त्रिपुरोहिताः।
अधिरुह्य हयैर्युक्तान् रथान् सूर्य्यरथोपमान् ॥ २ ॥
नवनागसहस्राणि कल्पितानि यथाविधि।
अन्वयुर्भरतं यान्तमिक्ष्वाकुकुलनन्दनम् ॥ ३ ॥
षष्टी रथसहस्राणि धन्विनो विविधायुधाः।
अन्वयुर्भरतं यान्तं राजपुत्रं यशस्विनम् ॥ ४ ॥
शतं सहस्राण्यश्वानां समारूढ़ानि राघवम्।
अन्वयुर्भरतं यान्तं सत्यसन्धं जितेन्द्रियम् ॥ ५ ॥
कैकेयी च सुमित्रा च कौशल्या च यशस्विनी।

कल्यं प्रातःकाले ॥ १ ॥ २ ॥

यथाविधि कल्पितानि गजसन्नहनोक्तविधिनाकृतसन्नाहानि ॥ ३ ॥

॥ ४ ॥

समारूढ़ानि सादिभिरिति शेषः ॥ ५ ॥

रामानयनसन्तुष्टा ययुर्यानेन भास्वता ॥ ६ ॥
प्रयाताश्चार्य्यसङ्घाता रामं दृष्टुं सलक्ष्मणम् ।
तस्यैव च कथाश्चित्राः कुर्वाणा हृष्टमानसाः ॥ ७ ॥
मेघश्यामं महाबाहुं स्थिरसत्त्वं दृढ़व्रतम् ।
कदा द्रक्ष्यामहे रामं जगतः शोकनाशनम् ॥ ८ ॥
दृष्ट एव हि नः शोकमपनेष्यति राघवः ।
तमः सर्वस्य लोकस्य समुद्यन्निव भास्करः ॥ ९ ॥
इत्येवं कथयन्तस्ते संप्रहृष्टाः कथाः शुभाः ।
परिष्वजानाश्चान्योऽन्यं ययुर्नागरिकास्तदा ॥ १० ॥
ये च तत्रापरे सर्वे सम्मता ये च नैगमाः ।
रामं प्रतिययुर्हृष्टाः सर्वाः प्रकृतयः शुभाः ॥ ११ ॥
मणिकाराश्च ये केचित् कुम्भकाराश्च शोभनाः ।

कैकेयी च स्वकृतेः पुत्रं प्रत्यहिततया जातत्वान्मया किं कृतमिति खिन्ना पुनः प्रकृतिमापन्ना हर्षेण ययौ अतएव मध्यमत्वेऽपि आदौ तदुल्लेखः । यानेनेत्येकवचनं प्रत्येकापेक्षया सौहार्दादेकयानेनैव तिसृणां गमनं वा ॥ ६ ॥

आर्यसङ्घाताः त्रैवर्णिकसमूहाः ॥ ७ ॥ ८ ॥ ९ ॥

परिष्वजानाः परिष्वजमाना । नगरे चरन्तीति नागरिकाः चरतीति ठक् ॥ १० ॥

तत्र नगरे सम्मताः प्रसिद्धाः नैगमा वणिजः प्रकृतयः श्रेण्यः ॥११॥

सूत्रकर्मविशेषज्ञा ये च शस्त्रोपजीविनः ॥ १२ ॥
मायूरकाः क्राकचिका वेधका रोचकास्तथा ।
दन्तकाराः सुधाकारा ये च गन्धोपजीविनः ॥ १३ ॥
सुवर्णकाराः प्रख्यातास्तथा कम्बलकारकाः ।
स्नापकोष्णोदका वैद्या धूपिकाः शौण्डिकास्तथा ॥ १४ ॥
रजकास्तुन्नवायाश्च ग्रामघोषमहत्तराः ।

श्रेणीर्विविच्याह, मणिकारा इति प्राणादा मणिशोधकाः । सूत्रकर्मविशेषज्ञास्तन्तुवायाः । शस्त्रोपजीविनः शस्त्रनिर्माणोपजीविनः ॥ १२ ॥

मायूरकाः लीलामयूरग्राहिणः, इदमुपलक्षणं शुकादिग्राहिणाम् । यद्वा मयूरपिच्छैः छत्रादिव्यञ्जनकारिणः । क्रकचः करपत्रं तेन जीवन्ति ते क्राकचिकाः । वेधका मणिमुक्तादिवेधकर्त्तारः । रोचकाः काचकुप्यादिकर्त्तारः इति कतकः । दन्तकाराः गजदन्तादिभिः समुद्रकादिकर्त्तारः दन्तलेखकाश्च । सुधाकाराः सुधालेपकाराः । गन्धोपजीविनः गन्धद्रव्यविक्रयिकाः ॥ १३ ॥

स्नापकाः उष्णोदकस्नापकाः । उष्णोदकाः अङ्गमर्दकाः । उष्णोदकं समुल्लेखोद्वाहनोद्वर्त्तनेषु च । धूपकाः धूपक्रियया जीविनः । शौण्डिकाः मद्यव्रतः । शुण्डा करिकरे मद्ये ॥ १४ ॥

तुन्नवायाः सूच्या सीवनकर्त्तारः । ग्रामे घोषे च वर्त्तमाना महत्तराः । शैलूषाः नटाः । कैवर्त्तकाः । कैवर्त्तकारवा इति पाठे कारवाः कर्मारः ॥ १५ ॥

शैलूषाश्च सह स्त्रीभिर्यान्ति कैवर्त्तकास्तथा ॥ १५ ॥
समाहिता वेदविदो ब्राह्मणा वृत्तसम्मताः।
गोरथैर्भरतं यान्तमनुजग्मुः सहस्रशः॥ १६ ॥
सुवेषाः शुद्धवसनास्ताम्रमृष्टानुलेपिनः।
सर्वे ते विमलैः*र्यानैः शनैर्भरतमन्वयुः॥ १७ ॥
प्रहृष्टमुदिता सेना सान्वयात् कैकयीसुतम्।
भ्रातुरानयने यान्तं भरतं भ्रातृवत्सलम् ॥ १८ ॥
ते गत्वा दूरमध्वानं रथयानाश्वकुञ्जरैः।
समासेदुस्ततो गङ्गां शृङ्गवेरपुरं प्रति ॥ १९ ॥
यत्र रामसखा वीरो गुहो ज्ञातिगणैर्वृतः।
निवसत्यप्रमादेन देशन्तं परिपालयन् ॥ २० ॥
उपेत्य तीरं गङ्गायाश्चक्रवाकैरलङ्कृतम्।

गोरथैः शकटैः ॥ १६ ॥

गोरोचनकुङ्कुमादिसम्बन्धात्ताम्रवर्णं मृष्टं सम्पूर्णमनुलेपोनुलेपनं येषां ते ॥ १७ ॥

प्रहर्षः कायिकरोमाञ्चादिरूपः मोदो मानसः ॥ १८ ॥

शृङ्गवेरपुरं प्रति शृङ्गवेरपुर इत्यर्थः ॥ १९ ॥

अप्रमादेन सावधानतया ॥ २० ॥ २१ ॥

* "विविधैः" इति वा पाठः।

व्यवातिष्ठत सा सेना भरतस्यानुयायिनी । २१ ॥
निरीक्ष्यानुत्थितां सेनान्ताञ्च गङ्गां शिवोदकाम् ।
भरतः सचिवान् सर्वानब्रवीद्वाक्यकोविदः ॥ २२ ॥
निवेशयत मे सैन्यमभिप्रायेण सर्वतः ।
विश्रान्ताः प्रतरिष्यामः श्व इमां सागरङ्गमाम् * ॥ २३ ॥
दातुञ्च तावदिच्छामि स्वर्गतस्य महीपतेः ।
और्ध्वदेहनिमित्तार्थम् अवतीर्य्योदकं नदीम् ॥ २४ ॥
तस्यैवं ब्रुवतोऽमात्यास्तथेत्युक्त्वा समाहिताः ।
न्यवेशयंस्तां छन्देन स्वेन स्वेन पृथक् पृथक् । २५ ॥

अनुत्थितां गमनेऽनुद्योगाम् ॥ २२ ॥

अद्य विश्रान्ताः श्वः प्रतरिष्याम इत्यभिप्रायेण इति मदभिप्रायज्ञापनेन निवेशयतेत्यर्थः ॥ २३ ॥

और्ध्वदेहनिमित्तार्थं एतच्छरीरपातोत्तरकालिकदेहभवसुखप्रयोजनायेत्यर्थः । यद्वा एतद्देहपातादूर्ध्वं जातदेहो निमित्तं यस्य परलोकस्य स ऊर्ध्वदेहनिमित्तः परलोकः । स्वार्थिकोऽण् । तदर्थमित्यर्थः । मध्ये मिलितनद्यन्तरे एवमनुक्त्या गङ्गायास्तर्पणेन पितृस्वर्गप्राप्तिकरत्वं सूचितम् ॥ २४ ॥

स्वेन स्वेन छन्देन स्वस्वेच्छया ॥ २५ ॥

---

* "श्व इदानीं महानदीम्" इति वा पाठः ।

निवेश्य गङ्गामनु तां महानदीम्
चमूं विधानैः परिवर्हशोभिनीम् ।
उवास रामस्य तदा महात्मनो
विचिन्तमानो भरतो निवर्त्तनम् ॥ २६ ॥

इत्यार्षे रामायणे वाल्मीकीय अयोध्याकाण्ड
भरतस्य शृङ्गवेरपुरगमनं नाम
त्र्यशीतितमः सर्गः ॥ ८३ ॥

गङ्गामनु गङ्गां लक्षीकृत्येत्यर्थः । परिवर्हो यात्रोपयुक्तपटवेश्माद्युपकरणजातम् । विधानैर्वासव्यवस्थाकल्पनैः । रामस्य निवर्त्तनं चिन्तमानः चिन्तयमान इत्यर्थः ॥ २६ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके
अयोध्याकाण्डे त्र्यशीतितमः सर्गः ॥ ८३ ॥

## चतुरशीतितमः सर्गः।

ततो निविष्टां ध्वजिनीं गङ्गामन्वाश्रितां नदीम्।
निषादराजो दृष्ट्वैव ज्ञातीन् स परितोऽब्रवीत्* ॥ १ ॥
महतीयमितः सेना सागराभा प्रदृश्यते।
नास्यान्तमवगच्छामि मनसापि विचिन्तयन् ॥ २ ॥
यदा तु खलु दुर्बुद्धिर्भरतः स्वयमागतः।
स एष हि महाकायः कोविदारध्वजो रथे ॥ ३ ॥
बन्धयिष्यति वा पाशैरथवास्मान् वधिष्यति।

गङ्गामनु आश्रितां निविष्टां कञ्चित्कार्याभिनिवेशवतीम् ॥ १ ॥

इतः इह गङ्गातीरे नास्या अन्तमित्यर्थः सन्धिरार्षः ॥ २ ॥

यदा तु खलु यस्माद्धेतोर्दुर्बुद्धिर्भरतः स्वयमागतस्ततो महती सेना प्रदृश्यत इत्यन्वयः। रामपीडार्थं प्रवृत्त इत्याशयेन दुर्बुद्धितावादः। भरतागमचिह्नमाह,—स इति। महाकायः महाप्रमाणः इक्ष्वाकुकुलचिह्नभूतः कोविदारध्वजो रथे दृश्यतेऽतो भरत एवायमिति भावः ॥ ३ ॥

नन्वायातु भरतः किमस्माकमत आह,—बन्धयिष्यतीति स्वामात्यै-

* "त्वरितः" इति वा पाठः।

अनु दाशरथिं रामं पित्रा राज्याद्विवासितम् ॥ ४ ॥
सम्पन्नां श्रियमन्विच्छंस्तस्य राज्ञः सुदुर्लभाम्।
भरतः कैकयीपुत्रो हन्तुं समुपगच्छति ॥ ५ ॥
भर्ता चैव सखा चैव रामो दाशरथिर्मम।
तस्यार्थकामाः सन्नद्धा गङ्गानूपेऽत्र तिष्ठत ॥ ६ ॥
तिष्ठन्तु सर्वदाशाश्च गङ्गामन्वाश्रिता नदीम्।
बलयुक्ता नदीरक्षा मांसमूलफलाशनाः ॥ ७ ॥

रिति शेषः। बधिष्यतीति वा। अनु ततः पश्चाद्रामं बधिष्यति इति मन्ये इति शेषः ॥ ४ ॥

ननु रामबधेऽस्य किं फलमत आह,—सम्पन्नामिति। सम्पूर्णामित्यर्थः। सार्वकालिकीमिति यावत्। तस्य राज्ञः रामस्य सुदुर्लभां तस्मिन् जीवति दुष्प्रापाम्। अतो रामं हन्तुं समधिगच्छति बुद्धिं प्राप्नोति ॥ ५ ॥

नन्वेवमपि तव का भीतिरत आह,—भर्त्तेत्यादि। एवञ्च तत्पक्षत्वादस्माकं भीतिरिति भावः। अस्माभिश्च सखित्वादेव रामेष्टं कर्त्तव्यमतो नास्माभिरेते गङ्गां तारयितव्या अतो यूयं तस्य रामस्य अर्थकामाः प्रयोजनेच्छवः सन्नद्धाः अत्र गङ्गानूपे मत्सन्निधौ तिष्ठत ॥ ६ ॥

सर्वे मामका दाशास्तु गङ्गां नदीमेवान्वाश्रिताः। नदीरक्षाः नदीतरणमार्गविघ्नवन्तः मांसमूलफलाशनाः एतद्रीत्या तीरे आगन्तुमशक्यतया नावारोपितमांसाद्यशनाः बलवन्तः सन्तस्तिष्ठन्तु ॥ ७ ॥

नावां शतानां पञ्चानां कैवर्तानां शतं शतम् ।
सन्नद्धानां तथा यूनां तिष्ठन्त्वित्यभ्यचोदयत् ॥ ८ ॥
यदा तुष्टस्तु भरतो रामस्येह भविष्यति ।
इयं स्वस्तिमती सेना गङ्गामद्य तरिष्यति ॥ ९ ॥
इत्युक्त्वोपायनं गृह्य मत्स्यमांसमधूनि च ।
अभिचक्राम भरतं निषादाधिपतिर्गुहः ॥ १० ॥
तमायान्तन्तु संप्रेक्ष्य सूतपुत्रः प्रतापवान् ।
भरतायाचचक्षेऽथ समयज्ञो विनीतवत् ॥ ११ ॥
एष ज्ञातिसहस्रेण स्थपतिः परिवारितः ।
कुशलो दण्डकारण्ये वृद्धो भ्रातुश्च ते सखा ॥ १२ ॥

बलवत्तामेवाह, नावामिति । पञ्चशतसंख्याकनावां प्रत्येकं सन्नद्धानां युद्धसन्नाहवतां यूनां युद्धार्हाणां कैवर्तानां शतं शतमारुह्य तिष्ठन्त्वित्यभ्यचोदयत ॥ ८ ॥

एवं स्थितैरपि युद्धे त्वरा न कार्येत्याह, यदीति । यदि रामविषये तुष्टस्तदेयं सेना स्वस्तिमती तरिष्यति । अन्यथा नौकासु स्थित्वा एतान्निहन्म इति भावः । यदादुष्ट इति पाठे अदुष्ट इति छेदः ॥ ९ ॥

अभिचक्राम । दर्शनार्थम् ॥ १० ॥ ११ ॥

स्थपतिः प्रभुः दण्डकारण्ये कुशलः निग्रहानुग्रहसमर्थः चारैस्तत्रत्यवृत्तान्तज्ञः ॥ १२ ॥

---

* "विनयज्ञः" इति वा पाठः ।

तस्मात् पश्यतु काकुत्स्थ ! त्वां निषादाधिपो गुहः।
असंशयं विजानीते यत्र तौ रामलक्ष्मणौ ॥ १३ ॥
एतत्तु वचनं श्रुत्वा सुमन्त्राद्भरतः शुभम्।
उवाच वचनं शीघ्रं गुहः पश्यतु मामिति ॥ १४ ॥
लब्धानुज्ञां सम्प्रहृष्टो * ज्ञातिभिः परिवारितः।
आगम्य भरतं प्रह्वो गुहो वचनमब्रवीत् ॥ १५ ॥
निष्कुटश्चैव देशोऽयं वञ्चिताश्चापि ते वयम्।
निवेदयाम ते सर्वं स्वके दासगृहे वस ॥ १६ ॥
अस्ति मूलफलं चैतत् निषादैः स्वयमर्जितम्।
आर्द्रं शुष्कं यथामांसं † वन्यश्चोच्चावचं तथा ॥ १७ ॥

अपि चानेन प्रयोजनमस्तीत्याह,—असंशयमिति ॥ १३ ॥ १४ ॥ १५ ॥

अयं देशो निष्कुटः। गृहारामकल्पः। वयं वञ्चिताः प्रस्थान-समयेऽप्रेषितनियोगदेशत्वात् इदमुपचारोक्तिः। सर्वं राज्यं ते निवे-दयाम वयं त्वदीया अतः स्वीय दासगृहे वस ॥ १६ ॥

वन्यं नीवारश्यामाकादि ॥ १७ ॥

---

* "संप्रविष्टः" इति वा पाठः।

† "आर्द्रं शुष्कञ्च मांसञ्च" इति वा पाठः।

आशंसे स्वाशिता सेना वत्स्यत्येनां विभावरीम् ।
अर्चितो विविधैः कामैः श्वः ससैन्यो गमिष्यसि ॥ १८ ॥

इत्यार्षे रामायणे वाल्मीकीये अयोध्याकाण्डे
गुहसमागमो नाम चतुरशीति-
तमः सर्गः ॥ ८४ ॥

स्वाशिता सुष्ठु भोजिता । वत्स्यतीत्याशंसे प्रार्थये । वसत्वेनामिति पाठान्तरं । तत्राशंसे इति पुनरुक्तम् ॥ १८ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके
अयोध्याकाण्डे चतुरशीतितमः सर्गः ॥ ८४ ॥

## पञ्चाशीतितमः सर्गः

---

एवमुक्तस्तु भरतो निषादाधिपतिं गुहम्।
प्रत्युवाच महाप्राज्ञो वाक्यं हेत्वर्थसंहितम्॥ १॥
ऊर्जितः खलु ते कामः कृतो मम गुरोः सखे !।
यो मे त्वमीदृशीं सेनामभ्यर्चयितुमिच्छसि *॥ २॥
इत्युक्त्वा स महातेजा गुहं वचनमुत्तमम्।
अब्रवीद्भरतः श्रीमान् निषादाधिपतिं पुनः॥ ३॥
कतरेण गमिष्यामि भरद्वाजाश्रमं यथा।
गहनोऽयं भृशं देशो गङ्गानूपो दुरत्ययः॥ ४॥

एवमिति। हेत्वर्थसंहितं हेत्वर्थाभ्यामुपपत्तिप्रयोजनाभ्यां संयुक्तम्॥ १॥

ऊर्जितः महांस्तेऽयं कामः कामनाविषयो मत्सत्कारः मम कृतएव खलु। कथं तत्राह,—यो मे इति। तव श्रद्धयैव सर्वं कृतमित्यर्थः॥ २॥

पन्थानं दर्शयन् गन्तव्यपथि सम्मुखं हस्तं कुर्वन् पुनः पुनरब्रवीदित्यन्वयः। आदरेण वारंवारं कथनम्। गुहं वचनमुत्तमं निषादाधिपतिं पुनरिति द्वितीयचतुर्थपादौ पाठान्तरे॥ ३॥

कतरेण यथा गहनो दुष्प्रवेशः॥ ४॥

---

* "एकोऽभ्यर्चितुमिच्छसि" इति वा पाठः।

तस्य तद्वचनं श्रुत्वा राजपुत्रस्य धीमतः ।
अब्रवीत् प्राञ्जलिर्भूत्वा गुहो गहनगोचरः ॥ ५ ॥
दाशास्त्वनुगमिष्यन्ति देशज्ञाः * सुसमाहिताः ।
अहं चानुगमिष्यामि राजपुत्र ! महाबल ! ॥ ६ ॥
कच्चिन्न दुष्टो व्रजसि रामस्याक्लिष्टकर्मणः ।
इयं ते महती सेना शङ्कां जनयतीव मे ॥ ७ ॥
तमेवमभिभाषन्तमाकाश इव निर्मलः ।
भरतः श्लक्ष्णया वाचा गुहं वचनमब्रवीत् ॥ ८ ॥
माभूत् स कालो यत् कष्टं न मां शङ्कितुमर्हसि ।
राघवः स हि मे भ्राता ज्येष्ठः पितृसमो मतः ॥ ९ ॥

गहनगोचरः गहनं वनं गोचरो देशो यस्य सः ॥ ५ ॥

दाशास्त्विति । अतो गहनविषया न काचिच्छङ्केति भावः ॥ ६ ॥

अपितु अक्लिष्टकर्म्मणो रामस्य विषये दुष्टो दुष्टभावो न व्रजसि । कच्चिद्रामद्रोहं कर्त्तुं न व्रजसि कच्चिदित्यर्थः । ननु का ते दोषशङ्का तत्राह,—इयं ते इति । रामसन्दर्शनार्थगमने एतावत्सेनाया व्यर्थत्वान्मम सन्देह इति भावः ॥ ७ ॥

आकाश इवेत्युपमया त्रैकालिकमलसम्बन्धाभावो दर्शितः ॥ ८ ॥

यत् यत्र काले कष्टं त्वदाशङ्कितं रामद्रोहरूपं जायते सकालो माभूत् । हि यतो राघवो ज्येष्ठो भ्राता पितृसमोऽतो मां शङ्कितुं नार्हसि ॥ ९ ॥

---

* "धन्विनः" इति वा पाठः ।

तं निवर्त्तयितुं यामि काकुत्स्थं वनवासिनम्।
बुद्धिरन्या न मे कार्य्या गुह! सत्यं ब्रवीमि ते॥ १०॥
स तु संहृष्टवदनः श्रुत्वा भरतभाषितम्।
पुनरेवाब्रवीद्वाक्यं भरतं प्रति हर्षितः॥ ११॥
धन्यस्त्वं न त्वया तुल्यं पश्यामि जगतीतले।
अयत्नादागतं राज्यं यस्त्वं त्यक्तुमिहेच्छसि॥ १२॥
शाश्वती खलु ते कीर्त्तिर्लोका नह्य चरिष्यति।
यस्त्वं कृच्छ्रगतं रामं प्रत्यानयितुमिच्छसि॥ १३॥
एवं सम्भाषमाणस्य गुहस्य भरतं तदा।
बभौ नष्टप्रभः सूर्य्यो रजनी चाभ्यवर्त्तत॥ १४॥
सन्निवेश्य स तां सेनां गुहेन परितोषितः।
शत्रुघ्नेन समं श्रीमांक्छयनं पुनरागमत् *॥ १५॥
रामचिन्तामयः शोको भरतस्य महात्मनः।

तदेवाह, समिति। मे मयि। न ते कार्य्येति पाठान्तरम्॥ १०॥
॥ ११॥ १२॥
चरिष्यति प्रचरिष्यति॥ १३॥
नष्टप्रभो मन्दीभूतरश्मिः॥ १४॥
गुहेन परिरक्षित इति पाठे परिहृतचोरबाध इत्यर्थः॥ १५॥

---

* "समुपाविशत्" इति वा पाठः।

उपस्थितो ह्यनर्हस्य धर्मप्रेक्षस्य तादृशः॥ १६॥
अन्तर्दाहेन दहनः सन्तापयति राघवम्।
वनदाहाग्निसन्तप्तं गूढोऽग्निरिव पादपम्॥ १७॥
प्रस्रुतः सर्वगात्रेभ्यः स्वेदं शोकाग्निसम्भवम्।
यथा सूर्य्याग्निसन्तप्तो हिमवान् प्रस्रुतो हिमम्॥ १८॥
ध्याननिर्दरशैलेन विनिःश्वसितधातुना।
दैन्यपादपसंघेन शोकायासाधिशृङ्गिणा॥ १९॥
प्रमोहानन्तसत्त्वेन सन्तापौषधिवेणुना।

अनर्हस्य दुःखानर्हस्य। धर्मप्रेक्षस्य धर्मदृष्टेः। तादृशो वाग-गोचरः उपस्थितः प्राप्तः॥ १६॥

दहनः शोकाग्निः राघवं भरतं वनदाहकोऽग्निर्वनदाहाग्निर्दावाग्नि-स्तेन सन्तप्तं शुष्कं गूढोऽग्निः कोटरसंसक्तोऽग्निः॥ १७॥

स्वेदं प्रस्रुतः कर्त्तरि निष्ठा गत्यर्थत्वात्॥ १८॥

दुःखे पर्वतरूपकम्। रामविषयध्यानान्येव निर्दरशैलाः विदारणा-रहितशिलासमूहा यस्मिन् निःशेषतो दीर्णशिलासमूहा यस्मिन्निति वा। विनिःश्वसितमेव गैरिकादिधातुर्यस्मिन् श्वाससम्पर्केण भूषणानाम-न्यवर्णजननात्। दैन्यं करणानां स्वस्वविषयप्रवृत्तिवैमुख्यं स एव पादपसङ्घो यस्मिन्। शोकजा आयासाश्चित्तश्रान्तयः ता एव अधि अधिरूढानि शृङ्गाणि तद्वता॥ १९॥

प्रमोहा एवानन्तसत्त्वानि वन्यप्राणिनो यस्मिन् तेन सन्तापः अन्तर्बहिःकरणसन्ताप एव औषधयो वेणवश्च यस्मिन् मज्जता मग्नं

आक्रान्तो दुःखशैलेन मज्जता कैकयीसुतः ॥ २० ॥

विनिःश्वसन्नेव भृशं दुर्मनास्ततः
प्रमूढसंज्ञः परमापदं गतः ।
शमं न लेभे हृदयज्वरार्दितो
नरर्षभो यूथहतो यथर्षभः ॥ २१

गुहेन सार्द्धं भरतः समागतो
महानुभावः सजनः समाहितः ।
सुदुर्मनास्तं भरतं तदा पुनः
शनैः समाश्वासयदग्रजं प्रति ॥ २२ ॥

इत्यार्षे रामायणे वाल्मीकीये अयोध्याकाण्डे गुहभरतसंवादो नाम पञ्चाशीतितमः सर्गः ॥ ८५ ॥

कुर्वता सकरणग्राममात्मानमधीनयता एवम्भूतेन दुःखरूपशैलेन आक्रान्तोऽभूदिति शेषः ॥ २० ॥

प्रकर्षेण मूढा संज्ञा चेतना यस्य । यूथहतः यूथभ्रष्टः ॥ २१ ॥

समाहितः एकाग्रचित्तः । सजनः सपरिवारः । गुहेन सार्धं समागतो मिलितो भरतः अग्रजं प्रति सुदुर्मना बभूव तादृशं तं भरतं गुहः पुनराश्वासयत् ॥ २२ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके अयोध्याकाण्डे पञ्चाशीतितमः सर्गः ॥ ८५ ॥

## षडशीतितमः सर्गः ।

आचचक्षेऽथ सद्भावं लक्ष्मणस्य महात्मनः ।
भरतायाप्रमेयाय गुहो गहनगोचरः ॥ १ ॥
तं जाग्रतं गुणैर्युक्तं वरचापेषुधारिणम् ।
भ्रातृगुप्त्यर्थमत्यन्तमहं लक्ष्मणमब्रवम् ॥ २ ॥
इयं तात ! सुखा शय्या त्वदर्थमुपकल्पिता ।
प्रत्याश्वसिहि शेष्वास्यां सुखं राघवनन्दन ! ॥ ३ ॥
उचितोऽयं जनः सर्व्वो दुःखानां त्वं सुखोचितः ।
धर्मात्मंस्तस्य गुप्त्यर्थं जागरिष्यामहे वयम् ॥ ४ ॥
न हि रामात्प्रियतरो ममास्ति भुवि कश्चन ।
मोत्सुको भूर्ब्रवीम्येतदथ सत्यन्तवाग्रतः ॥ ५ ॥
अस्य प्रसादादाशंसे लोकेऽस्मिन् सुमहद्यशः ।

सद्भावं ज्येष्ठानुवर्त्तनरूपं साधुत्वम् ॥ १ ॥

तदेवाह,—तमिति । भ्रातृगुप्त्यर्थं जाग्रतं विनिद्रम् । गुणैः स्नेह-सौशील्यादिगुणैः चत्त्रगुणैश्च युक्तम् ॥ २ ॥

इयं तातेत्यादिरुक्तानुवादः पूर्बमेव व्याख्यातः ॥ ३ ॥

तस्य रामस्य ॥ ४ ॥

धर्मावाप्तिं च विपुलामर्थकामौ च केवलौ ॥ ६ ॥
सोऽहं प्रियसखं रामं शयानं सह सीतया।
रक्षिष्यामि धनुष्पाणिः सर्वैः स्वैर्ज्ञातिभिः सह * ॥ ७ ॥
न हि मेऽविदितं किञ्चिद्वनेऽस्मिंश्चरतः सदा।
चतुरङ्गं ह्यपि बलं प्रसहेम वयं युधि ॥ ८ ॥
एवमस्माभिरुक्तेन लक्ष्मणेन महात्मना।
अनुनीता वयं सर्वे धर्ममेवानुपश्यता ॥ ९ ॥
कथं दाशरथौ भूमौ शयाने सह सीतया।
शक्या निद्रा मया लब्धुं जीवितानि सुखानि वा ॥ १० ॥
यो न देवासुरैः सर्वैः शक्यः प्रसहितुं युधि।
तं पश्य गुहसंविष्टं तृणेषु सह सीतया ॥ ११ ॥
महता तपसा लब्धो विविधैश्च परिश्रमैः।
एको दशरथस्यैष पुत्रः सदृशलक्षणः ॥ १२ ॥
अस्मिन् प्रव्रजिते राजा न चिरं वर्तयिष्यति।
विधवा मेदिनी नूनं क्षिप्रमेव भविष्यति ॥ १३
विनद्य सुमहानादं श्रमेणोपरताः स्त्रियः।
निर्घोषोविरतो नूनमद्य राजनिवेशने ॥ १४ ॥
कौसल्या चैव राजा च तथैव जननी मम।
नाशंसे यदि ते सर्वे जीवेयुः शर्वरीमिमाम् ॥ १५ ॥

* "वृतः" इति वा पाठः।

जीवेदपि च मे माता शत्रुघ्नस्यान्ववेक्षया ।
दुःखिता या हि कौशल्या वीरसूर्विनशिष्यति ॥ १६ ॥
अतिक्रान्तमतिक्रान्तमनवाप्य मनोरथम् ।
राज्ये राममनिक्षिप्य पिता मे विनशिष्यति ॥ १७ ॥
सिद्धार्थाः पितरं वृत्तं तस्मिन् काले ह्युपस्थिते ।
प्रेतकार्य्येषु सर्वेषु संस्करिष्यन्ति भूमिपम् ॥ १८ ॥
रम्यचत्वरसंस्थानां सुविभक्तमहापथाम् ।
हर्म्यप्रासादसम्पन्नां सर्वरत्नविभूषिताम् ॥ १९ ॥
गजाश्वरथसम्बाधां तूर्य्यनादविनादिताम् ।
सर्वकल्याणसम्पूर्णां हृष्टपुष्टजनाकुलाम् ॥ २० ॥
आरामोद्यानसम्पन्नां समाजोत्सवशालिनीम् ।
सुखिता विचरिष्यन्ति राजधानीं पितुर्मम ॥ २१ ॥
अपि सत्यप्रतिज्ञेन सार्द्धं कुशलिना वयम् ।
निवृत्ते समये ह्यस्मिन् सुखिताः प्रविशेमहि ॥ २२ ॥
परिदेवयमानस्य तस्यैवं हि महात्मनः ।
तिष्ठतो राजपुत्रस्य शर्वरी सा न्यवर्त्तत ॥ २३ ॥
प्रभाते विमले सूर्य्ये कारयित्वा जटा उभौ ।
अस्मिन् भागीरथीतीरे सुखं सन्तारितौ मया ॥ २४ ॥
　　जटाधरौ तौ द्रुमचीरवाससौ

वरेषुधीचापधरौ परन्तपौ
व्यपेक्षमाणौ सह सीतया गतौ ॥ २५ ॥

इत्यार्षे रामायणे वाल्मीकीये अयोध्याकाण्डे
गुहवाक्यं नाम षडशीति-
तमः सर्गः ॥ ८६ ॥

पञ्चविंशतिश्लोका अत्र सर्गे ॥ ५ ॥ ६ ॥ ७ ॥ ८ ॥ ९ ॥ १० ॥ ११ ॥
॥ १२ ॥ १३ ॥ १४ ॥ १५ ॥ १६ ॥ १७ ॥ १८ ॥ १९ ॥ २० ॥ २१ ॥ २२ ॥
॥ २३ ॥ २४ ॥ २५ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके
अयोध्याकाण्डे षडशीतितमः सर्गः ॥ ८६ ॥

## सप्ताशीतितमः सर्गः।

गुहस्य वचनं श्रुत्वा भरतो भृशमप्रियम्।
ध्यानं जगाम तत्रैव यत्र तत् श्रुतमप्रियम्॥ १॥

सुकुमारो महासत्त्वः सिंहस्कन्धो महाभुजः।
पुण्डरीकविशालाक्षस्तरुणः प्रियदर्शनः॥ २॥

प्रत्याश्वस्य मुहूर्त्तन्तु कालं परमदुर्मनाः।
ससाद * सहसा तोत्रैः हृदि विद्ध इव द्विपः॥ ३॥

भरतं मूर्च्छितं दृष्ट्वा विवर्णवदनो गुहः।
बभूव व्यथितस्तत्र भूमिकम्पे यथा द्रुमः॥ ४॥

भृशमप्रियं जटाधारणरूपं यत्र तत्रैव यत्र क्षणे इत्यर्थः। ध्यानं जगाम स्वाभिलषितकार्य्यसङ्कटं जातमिति चिन्तां प्राप इत्यर्थः॥ १॥

सुकुमारत्वादिगुणेन जटादिकं धृतम्, अतो निवृत्तिर्दुर्लभेति चिन्तां जगाम॥ २॥

ततो मुहूर्त्तं कालं परमदुर्मनाः परमखिन्नः। प्रत्याश्वस्य पुनश्च

* "पपात" इति वा पाठः।

तदवस्थन्तु भरतं शत्रुघ्नोऽनन्तरस्थितः।
परिष्वज्य रुरोदोच्चैः विसंज्ञः शोककर्शितः॥ ५ ॥
ततः सर्वाः समापेतुर्मातरो भरतस्य ताः।
उपवासकृशा दीना भर्तृव्यसनकर्शिताः॥ ६ ॥
ताश्च तं पतितं भूमौ रुदत्यः पर्य्यवारयन्।
कौसल्या त्वनुसृत्यैनं दुर्मनाः परिषस्वजे॥ ७ ॥
वत्सला स्वं यथा वत्समुपगुह्य तपस्विनी।
परिपप्रच्छ भरतं रुदती शोकलालसा॥ ८ ॥
पुत्र! व्याधिर्नते कच्चिच्छरीरं प्रतिबाधते।
अस्य राजकुलस्याद्य त्वदधीनं हि जीवनम्॥ ९ ॥
त्वां दृष्ट्वा पुत्र! जीवामि रामे सभ्रातृके गते।
वृत्ते दशरथे राज्ञि नाथ एकस्त्वमद्य नः॥ १० ॥
कच्चिन्न लक्ष्मणे पुत्र! श्रुतं ते किञ्चिदप्रियम्।
पुत्रे वा ह्येकपुत्रायाः सह भार्य्ये वनं गते॥ ११ ॥

सहसा दुःखवेगेन ससाद अवशोऽभूत्। तोत्त्रैरङ्कुशैः हृदि हृदयदेशे ॥ ३ ॥ ४ ॥

तदवस्थं अचेतनावस्थम्। अनन्तरस्थितः समीपस्थितः॥ ५ ॥ ६ ॥

अनुसृत्य समीपं प्राप्य॥ ७ ॥

स्वं वत्सं स्वपुत्रं यथा तथोपगुह्य॥ ८ ॥

व्याधिः पित्तप्रकोपादिलक्षणो भ्रमभूर्च्छादिः॥ ९ ॥ १० ॥

स मुहूर्त्तं समाश्वस्य रुदन्नेव महायशाः ।
कौशल्यां परिसान्त्वेदं गुहं वचनमब्रवीत् ॥ १२ ॥
भ्राता मे क्वावसद्रात्रिं क्व सीता क्व च लक्ष्मणः ।
अस्वपच्छयने कस्मिन् किं भुक्ता गुह ! शंस मे ॥ १३ ॥
सोऽब्रवीद्भरतं हृष्टो निषादाधिपतिर्गुहः ।
यद्विधं प्रतिपेदे च रामे प्रियहिते तिथौ ॥ १४ ॥
अन्नमुच्चावचं भक्ष्याः फलमूलानि चैव हि ।
रामायाभ्यवहारार्थं बहु चोपहृतं मया ॥ १५ ॥
तत् सर्वं प्रत्यनुज्ञासी*द्रामः सत्यपराक्रमः ।

भ्रममूर्च्छादेः कारणान्तरं पृच्छति । कच्चिदिति । अप्रियं प्राणात्ययरूपं एकपुत्राया ममेति शेषः ॥ ११ ॥

मुहूर्त्तं विसंज्ञः सन् पश्चात् समाश्वस्येत्यर्थः । परिसान्त्व्य त्वच्छङ्कितं किमपि नास्ति किन्तु तयोर्जटाधारणश्रवणजदुःखेन मूर्च्छितोऽस्मि इत्युक्ता ॥ १२ ॥ १३ ॥

हृष्टः लक्ष्मणवत् भरतस्यापि पूर्णभ्रातृभक्तिदर्शनेन तुष्टः । यद्विधं यादृशं व्यवहारं रामे प्रतिपेदे कृतवान् तमब्रवीत् रामकृतञ्च इत्यन्वयः ॥ १४ ॥

तमेवाह,—अन्नमित्यादि ॥ १५ ॥

---

* "प्रत्यनुज्ञाप्य" इति वा पाठः ।

न हि तत् प्रत्यगृह्णात् स चत्त्रधर्ममनुस्मरन् ॥ १६ ॥
न ह्यस्माभिः प्रतिग्राह्यं सखे ! देयन्तु सर्वदा ।
इति तेन वयं सर्वे अनुनीता महात्मना ॥ १७ ॥
लक्ष्मणेन यदानीतं पीतं * वारि महात्मना ।
औपवास्यं तदा कार्षीद्राघवः सह सीतया ॥ १८ ॥
ततस्तु जलशेषेण लक्ष्मणोऽप्यकरोत्तदा ।
वाग्यतास्ते त्रयः सन्ध्यां समुपासन्त संहिताः ॥ १९ ॥

प्रत्यनुज्ञासीत् मद्दनुग्रहार्थं केवलमङ्गीकृत्य पुनर्मह्यमेव दत्तवान् क्षत्त्रधर्ममप्रतिग्रहरूपम् । न प्रत्यगृह्णात् अभ्यवहाराय न स्वीकृतवान् ॥ १६ ॥

तमेव धर्ममाह,—नहीति । नन्वेवं भरद्वाजादिदत्ताङ्गीकारः कथमिति चेन्न, मधुपर्कादिना राजपूजाया ब्राह्मणं प्रति विधानेन तद्दत्ताङ्गीकारस्य स्वाभ्युदयफलकत्वेन च तस्य युक्तत्वात् गुहस्य निषादत्वेन राजपूजानधिकारात् । अस्वदेश्यत्वेन करग्रहणायोग्यत्वाच्च तदीयानङ्गीकार इति न दोषः । यद्यपि गुहस्य तत्त्वज्ञत्वेनास्त्येव भगवत्पूजाधिकारस्तथापि व्रतस्थत्वात्तदभोजनमिति तत्त्वम् ॥ १७ ॥

औपवास्यमुपवासं स्वार्थे ष्यञ् ॥ १८ ॥

---

* "पीत्वा" इति वा पाठः ।

सौमित्रिस्तु ततः पश्चादकरोत् स्वास्तरं शुभम् ।
स्वयमानीय बर्हींषि क्षिप्रं राघवकारणात् ॥ २० ॥
तस्मिन् समाविशद्रामः स्वास्तरे सह सीतया ।
प्रक्षाल्य च तयोः पादान् व्यपाक्रामत् स लक्ष्मणः ॥ २१ ॥
एतत्तदिङ्गुदीमूलमिदमेव च तत् तृणम् ।
अस्मिन् रामश्च सीता च रात्रिं तां शयितावुभौ ॥ २२ ॥

नियम्य पृष्ठे तु तलाङ्गुलित्रवान्
शरैः सुपूर्णाविषुधी परन्तपः ।
महद्धनुः सज्यमुपोह्य लक्ष्मणो
निशामतिष्ठत् परितोऽस्य केवलम् ॥ २३ ॥
ततस्त्वहं चोत्तमबाणचापभृत्
स्थितो भवन्तत्र स यत्र लक्ष्मणः ।

अकरोत्स्नानक्रियामिति शेषः । त्रयः सुमन्त्रेण । संहिताः समाहितचित्ताः ॥ १९ ॥

ततः पश्चात् सन्ध्यावन्दनोत्तरम् । बर्हींषि दर्भान् स्वास्तरं शयनम् ॥ २० ॥

व्यपाक्रामच्छयनप्रदेशात् बहिर्दूरमिति शेषः ॥ २१ ॥ २२ ॥

इषुधी पृष्ठे बध्वा तलयोः करतलयोरङ्गुलित्राणवान् । सज्यं धनुरुपोह्य धृत्वा अस्य परितो भ्रमन्नतिष्ठत् । केवलं निद्रारहितः ॥ २३ ॥

अतन्द्रितैर्ज्ञातिभिरात्तकार्मुकै-
र्महेन्द्रकल्पं परिपालयं तदा ॥ २४ ॥

इत्यार्षे रामायणे वाल्मीकीये अयोध्याकाण्डे गुहवाक्यं नाम सप्ताशीतितमः सर्गः ॥ ८७ ॥

परिपालयं पर्य्यपालयम् ॥ २४ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके
अयोध्याकाण्डे सप्ताशीतितमः सर्गः ॥ ८७ ॥

## अष्टाशीतितमः सर्गः ।

तत् श्रुत्वा निपुणं सर्वं भरतः सह मन्त्रिभिः ।
इङ्गुदीमूलमागम्य रामशय्यामवेक्षत ॥ १ ॥
अब्रवीज्जननीः सर्वा इह तेन महात्मना ।
शर्वरी शयिता भूमाविदमस्य विमर्दितम् ॥ २ ॥
महाराजकुलीनेन महाभागेन धीमता ।
जातो दशरथेनोर्व्यां न रामः स्वप्तुमर्हति ॥ ३ ॥
अजिनोत्तरसंस्तीर्णे वरास्तरणसञ्चये ।
शयित्वा पुरुषव्याघ्रः कथं शेते महीतले ॥ ४ ॥

तदिति ॥ १ ॥

इह भूमौ शर्वरी शयिता । अधिकरणे निष्ठा । एतद्देशावच्छिन्नशयनाधिकरणं शर्वरीत्यर्थः । इदमस्य विमर्दितमङ्गानामिति शेषः । विमर्दनाधिकरणमित्यर्थः ॥ २ ॥

उक्तविशेषणेन दशरथेन हेतुना जातो नोर्व्यां स्वप्तुमर्हति ॥ ३ ॥

अजिनेन राजार्हकन्दलीचमूर्वादिमृगाजिनविशेषरूपेणोत्तरेण महोत्तरच्छदेन संस्तीर्णे । तानि चाजिनानि शीताद्यागोरव्याशीते ।

प्रासादाग्रविमानेषु बलभीषु च सर्वदा।
हैमराजतभौमेषु वरास्तरणशालिषु ॥ ५ ॥
पुष्पसञ्चयचित्रेषु चन्दनागरुगन्धिषु।
पाण्डुराभ्रप्रकाशेषु शुकसङ्घरुतेषु च ॥ ६ ॥
प्रासादवरवर्य्येषु गीतवत्सु सुगन्धिषु।
उषित्वा मेरुकल्पेषु कृतकाञ्चनभित्तिषु ॥ ७ ॥
गीतवादित्रनिर्घोषैर्वराभरणनिःस्वनैः।
मृदङ्गवरशब्दैश्च सततं प्रतिबोधितः ॥ ८ ॥
वन्दिभिर्वन्दितः काले बहुभिः सूतमागधैः।
गाथाभिरनुरूपाभिः स्तुतिभिश्च परन्तपः ॥ ९ ॥

वरास्तरणानां कार्पासवस्त्ररत्नकम्बलाद्यास्तरणानां सञ्चयः समूहो यत्र पर्य्यङ्के। शीतकाले आच्छाद्यार्थं तद्बाऊल्यम् ॥ ४ ॥

प्रासादाग्रविमानेषु विमानाकारप्रासादाग्रगृहेषु बलभी कूटागारम्। हैमानि राजतानि च भौमानि भूतलानि येषु ॥ ५ ॥

शुकसङ्घरुतेषु तद्रुतवत्सु ॥ ६ ॥

प्रासादवराणां प्रासादश्रेष्ठानां मध्ये वर्येषु श्रेष्ठेषु तेषूषित्वा कथं भूमौ शेत इति सम्बन्धः ॥ ७ ॥

वराभरणानां परिचारिकानूपुराद्याभरणानां निःस्वनैर्गीतादिशब्दैः स्तुतिभिश्च प्रतिबोध्यमानः कथं भूमौ केवलं शेत इति सम्बन्धः ॥ ८ ॥
॥ ९ ॥

अश्रद्धेयमिदं लोके न सत्यं प्रतिभाति माम्।
मुह्यते खलु मे भावः स्वप्नोऽयमिति मे मतिः॥ १०॥
न नूनं दैवतं किञ्चित् कालेन बलवत्तरम्।
यत्र दाशरथी रामो भूमावेवं शयीत सः॥ ११॥
यस्मिन् विदेहराजस्य सुता च प्रियदर्शना।
दयिता शयिता भूमौ स्नुषा दशरथस्य च॥ १२॥
इयं शय्या मम भ्रातुरिदमावर्त्तितं शुभम् *।
स्थण्डिले कठिने सर्वं गात्रैर्विमृदितं तृणम्॥ १३॥
मन्ये साभरणा सुप्ता सीतास्मिञ्छयने शुभा।
तत्र तत्र हि दृश्यन्ते सक्ताः कनकबिन्दवः॥ १४॥

इदं रामस्य भूशयनं लोके अचलजनेषु तन्मध्ये तन्मुखाच्छ्रुतमपि अश्रद्धेयमेव। तदेव विवृणोति। सा मां सत्यं न प्रतिभाति। तस्मात् एतद्विषये भावोऽन्तःकरणं मुह्यते मम मोह इत्यर्थः। अथवा, स्वप्नोऽयं भवितुमर्हतीति मतिः स्वप्नेऽप्यसम्भावितमपि सम्भाव्यते॥ १०॥

कालेन कालतो बलवत्तरं किञ्चित् किमपि दैवतं नास्तीति नूनं मन्ये। यत्र काले प्राप्ते सति रामोऽपि भूमावशेत॥ ११॥

यस्मिन् काले दशरथदयिता प्रिया स्नुषा भूमौ शयिता ततो न बलवत् किञ्चित्॥ १२॥ १३॥

---

* "इदं हि परिवर्त्तितं" इति वा पाठः।

उत्तरीयमिहासक्तं सुव्यक्तं सीतया तदा।
तथा ह्येते प्रकाशन्ते सक्ताः कौशेयतन्तवः ॥ १५ ॥
मन्ये भर्तुः सुखा शय्या येन बाला तपस्विनी।
सुकुमारी सती दुःखं न विजानाति मैथिली ॥ १६ ॥
हा हतोऽस्मि नृशंसोऽस्मि यत् सभार्य्यः कृते मम।
ईदृशीं राघवः शय्यामधिशेते ह्यनाथवत् ॥ १७ ॥
सार्वभौमकुले जातः सर्वलोकसुखावहः।
सर्वप्रियकरस्त्यक्त्वा राज्यं प्रियमनुत्तमम् ॥ १८ ॥
कथमिन्दीवरश्यामो रक्ताक्षः प्रियदर्शनः।
सुखभागी च दुःखार्हः शयितो भुवि राघवः ॥ १९ ॥
धन्यः खलु महाभागो लक्ष्मणः शुभलक्षणः।
भ्रातरं विषमे काले यो राममनुवर्त्तते ॥ २० ॥
सिद्धार्था खलु वैदेही पतिं यानुगता वनम्।

कनकबिन्दवः भूषणावयवकनकशकलानीति कतकः ॥ १४ ॥ १५ ॥

भर्त्तुः शय्या कोमला वा कठिना वा स्त्रीणां सुखैव मन्ये यतः सुकुमारीत्यादि ॥ १६ ॥

मम कृते कैकेयीप्रवृत्तेः स्वानुमतिराहित्येऽपि स्वमुद्दिश्य जातत्वादिति भावः ॥ १७ ॥ १८ ॥ १९ ॥

विषमे काले सङ्कटकाले ॥ २० ॥

वयं संशयिता सर्वे हीनास्तेन महात्मना ॥ २१ ॥
अकर्णधारा पृथिवी शून्येव प्रतिभाति मे ।
गते दशरथे स्वर्गं रामे चारण्यमास्थिते ॥ २२ ॥
न च प्रार्थयते कश्चिन्मनसापि वसुन्धराम् ।
वने निवसतस्तस्य बाहुवीर्य्याभिरक्षिताम् ॥ २३ ॥
शून्यसम्वरणारक्षामयन्त्रितहयद्विपाम् ।
अनावृतपुरद्वारां राजधानीमरक्षिताम् ॥ २४ ॥
अप्रहृष्टबलां न्यूनां विषमस्थामनावृताम् ।
शत्रवो नाभिमन्यन्ते भक्ष्यान् विषकृतानिव ॥ २५ ॥
अद्यप्रभृति भूमौ तु शयिष्येऽहं तृणेषु वा ।

या पतिम् अनु अनुसृत्य वनं गता सा सिद्धार्था वयं संशयिताः रामसेवाविषयसंशयमापन्नाः कालान्तरप्रार्थनीयसेवत्वात् "इदानीमस्मत्सेवानुमता संशयादिति भावः ॥ २१ ॥

अकर्णधारा नौरिव शून्या नायकरहिता ॥ २२ ॥

कश्चिन्मादृशः ॥ २३ ॥

शून्यसंवरणारक्षां संवरणानां प्राकाराणामासमन्तात् रक्षया शून्यां हीनां अनावृतत्वं रक्षकाभावात् ॥ २४ ॥

अप्रहृष्टं बलं यस्यां अतएव शून्यां क्षीणबलां नाभिमन्यन्ते स्वीकर्त्तुं नेच्छन्ति । अत्र तद्बाहुवीर्य्यरक्षितत्वं हेतुः ॥ २५ ॥

फलमूलाशनो नित्यं जटाचीराणि धारयन् ॥ २६ ॥
तस्यार्थमुत्तरं कालं निवत्स्यामि सुखं वने ।
तत् प्रतिश्रुतमार्य्यस्य नैव मिथ्या भविष्यति * ॥ २७ ॥
वसन्तं भ्रातुरर्थाय शत्रुघ्नो मानुवत्स्यति ।
लक्ष्मणेन सहायोध्यामार्यो मे पालयिष्यति ॥ २८ ॥
अभिषेक्ष्यन्ति काकुत्स्थमयोध्यायां द्विजातयः ।
अपि मे देवताः कुर्य्युरिमं सत्यं मनोरथम् * ॥ २९ ॥
प्रसाद्यमानः शिरसा मया स्वयं
बहुप्रकारं यदि न प्रपत्स्यते ।

अतस्त्वमेव राज्यार्हम् आनेष्यामि यदि स व्रतभङ्गः कथं कार्य्य इति वदेत् तदा तत्प्रतिनिधितयाहं व्रतमनुष्ठास्ये इत्याह,—अद्येत्यादि ॥ २६ ॥

तस्य व्रतसङ्कल्पं स्वयं गृहीत्वा तत्परिपालनार्थमुत्तरं कालं चतुर्दशवर्षपर्य्यन्तमहं वने वत्स्यामि । एवं सति नार्य्यस्य तत्प्रतिश्रुतं मिथ्या भविष्यति ॥ २७ ॥

वसन्तमिति ॥ २८ ॥ २९ ॥

---

* "तं प्रतिश्रवमामुच्य नास्य मिथ्या भविष्यति" इति वा पाठः ।

ततोऽनुवत्स्यामि चिराय राघवं
वने चिरं नार्हति मामुपेक्षितुम् ॥ ३० ॥

इत्यार्षे रामायणे वाल्मीकीये अयोध्याकाण्डे
भरतवाक्यं नाम अष्टाशीतितमः
सर्गः ॥ ८८ ॥

प्रसाद्येति । प्रपत्स्यते निवृत्तिविषये प्रसादमिति शेषः । उपेक्षितुं नार्हति भक्तवत्सलत्वादिति भावः ॥ ३० ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके
अयोध्याकाण्डे अष्टाशीतितमः सर्गः ॥ ८८ ॥

## एकोननवतितमः सर्गः।

व्युष्य रात्रिं तु तत्रैव गङ्गाकूले स राघवः।
काल्यमुत्थाय शत्रुघ्नमिदं वचनमब्रवीत्॥ १॥
शत्रुघ्नोत्तिष्ठ किं शेषे निषादाधिपतिं गुहम्।
शीघ्रमानय भद्रं ते तारयिष्यति वाहिनीम्॥ २॥
जागर्मि नाहं स्वपिमि तथैवार्य्यं विचिन्तयन्।
इत्येवमब्रवीद् भ्राता शत्रुघ्नो विप्रचोदितः॥ ३॥
इति संवदतोरेवमन्योऽन्यं नरसिंहयोः।
आगत्य प्राञ्जलिः काले गुहो वचनमब्रवीत्॥ ४॥
कच्चित् सुखं नदीतीरेऽवात्सीः काकुत्स्थ! शर्वरीम्।
कच्चिच्च सह सैन्यस्य तव नित्यमनामयम्॥ ५॥
गुहस्य तत्तु वचनं श्रुत्वा स्नेहादुदीरितम्।

व्युष्य उषित्वा। काल्यमुषःकाले। उषः पर्य्यायौ कल्यकाल्यावुभावपीति ख्यायते॥ १॥ २॥

आर्य्यं विचिन्तयन्नहमपि यथा त्वं तथैव जागर्मि न स्वपिमीत्येवमब्रवीदित्यन्वयः॥ ३॥ ४॥

शर्वरीमवात्सीः अत्यन्तसंयोगे द्वितीया॥ ५॥

रामस्यानुवशो वाक्यं भरतोऽपीदमब्रवीत्॥ ६॥
सुखा नः शर्वरी धीमन्! पूजिताश्चापि ते वयम्।
गङ्गा तु नौभिर्बह्वीभिर्दाशाः सन्तारयन्तु नः॥ ७॥
ततो गुहः सन्त्वरितः श्रुत्वा भरतशासनम्।
प्रतिप्रविश्य नगरं तं ज्ञातिजनमब्रवीत्॥ ८॥
उत्तिष्ठत प्रबुध्यध्वं भद्रमस्तु हि वः सदा।
नावः समुपकर्षध्वं तारयिष्याम वाहिनीम्॥ ९॥
ते तथोक्ताः समुत्थाय त्वरिता राजशासनात्।
पञ्च नावां शतान्येव समानिन्युः समन्ततः॥ १०॥
अन्याः स्वस्तिकविज्ञेया महाघण्टाधराधराः।
शोभमानाः पताकिन्यो युक्तवाहाः सुसंहताः॥ ११॥

रामस्यानुवशो रामाधीनः॥ ६॥
ते त्वया पूजिताः॥ ७॥
प्रतिप्रविश्य ततो निवृत्तिपूर्वकं प्रविश्य॥ ८॥ ९॥
नावां पञ्चशतानि समानिन्युः॥ १०॥

अन्याः पञ्चशतनौकाऽभ्योन्याः स्वस्तिकविज्ञेयाः स्वस्तिकाख्यया लोकप्रसिद्धा राजार्हनौभेदाः महाघण्टां धारयन्ति ता महाघण्टाधराः पताकास्ता धारयन्तीत्यर्थः। शोभमानाः स्वर्णादिरूषितचित्रैः शोभमानाः पताकिन्यः बहुरित्रवत्यः। अरित्रं नावाकर्षणदण्डः। युक्तवाहाः नौवहननाविकवत्यः। युक्तवाता इति पाठे युक्तगतयः। सुसंहताः दृढसन्धिबन्धाः॥ ११॥

ततः स्वस्तिकविज्ञेयां पाण्डुकम्बलसंवृताम्।
सनन्दिघोषां कल्याणीं गुहो नावमुपाहरत्॥ १२॥
तामारुरोह भरतः शत्रुघ्नश्च महाबलः।
कौशल्या च सुमित्रा च याश्चान्या राजयोषितः॥ १३॥
पुरोहितश्च तत्पूर्वं गुरवो ब्राह्मणाश्च ये।
अनन्तरं राजदारास्तथैव शकटापणाः॥ १४॥
आवासमादीपयतां तीर्थं चाप्यवगाहताम्।
भाण्डानि चाददानानां घोषस्तु दिवमस्पृशत्॥ १५॥
पताकिन्यस्तु ता नावः स्वयं दाशैरधिष्ठिताः।
वहन्त्यो जनमारूढं तदा सम्पेतुराशुगाः॥ १६॥

सनन्दिघोषाम् उपरिप्रतिष्ठितमङ्गलवादित्रघोषसहिताम्। ततः इतरस्वस्तिकाभ्यो विलक्षणां स्वस्तिकाख्यां पाण्डुकंबलो राजास्तरणकंबलः तद्वतीं राजार्हां नावं गुहः स्वयमेवोपाहरत्॥ १२॥ १३॥

तत्पूर्वं समारूढभरतारोहात् पूर्वम् अनन्तरं तेषां तासां चानन्तरं राजदाराः अनुचरप्रभुस्त्रियः शकटानि आपणाः पण्यानि इतरनौषु आरोपिता इति शेषः॥ १४॥

आवासम् उषितावासं दीपयताम् अग्निसात् कुर्वतां स्वयं सेनाधर्मः। तीर्थं नद्यवतारमवगाहतामहमहमिकया प्रविशतां भाण्डानि उपकरणानि॥ १५॥

आशुगाः शीघ्राः॥ १६॥

नारीणामभिपूर्णास्तु काश्चित्काश्चित्तु वाजिनाम् ।
काश्चित्तत्र वहन्ति स्म यानयुग्यं महाधनम् ॥ १७ ॥
तास्तु गत्वा परं तीरमवरोप्य च तं जनम् ।
निवृत्ताः काण्डचित्राणि क्रियन्ते दाशबन्धुभिः ॥ १८ ॥
सवैजयन्तास्तु गजा गजारोहैः प्रचोदिताः ।
तरन्ति स्म प्रकाशन्ते सपक्षा इव पर्वताः ॥ १९ ॥
नावश्चारुरुहुस्त्वन्ये प्लवैस्तेरुस्तथापरे ।
अन्ये कुम्भघटैस्तेरुरन्ये तेरुश्च बाहुभिः ॥ २० ॥
सा पुण्या ध्वजिनी गङ्गां दाशैः सन्तारिता स्वयम् ।
मैत्रे मुहूर्त्ते प्रययौ प्रयागवनमुत्तमम् ॥ २१ ॥

नारीणामित्यादौ तृतीयार्थस्य शेषत्वविवक्षायां षष्ठी । नारीभिः पूर्णा इत्याद्यर्थः । यानानि शकटादीनि युग्या अश्वाश्वतरबलीवर्दाद्याः महाधनं बहुमूल्यं यद्वा महाधनं जीवाजीवरूपनानाप्रकारम् ॥ १७ ॥

तं जनमवरोप्य निवृत्ता नावः समारुह्य दाशबन्धुभिः क्रीडार्थं काण्डचित्राणि काण्डे जले चित्राणि चित्रगमनानि लघुत्वात् क्रियन्ते-स्मेत्यर्थः । काण्डोऽस्त्रीदण्डबाणार्ववर्गावसरवारिषु इत्यमरः ॥ १८ ॥

सवैजयन्ताः सध्वजाः ॥ १९ ॥

प्लवाः वेणुतृणादिनिर्मिताः कुम्भा महान्तः । घटाः स्वल्पाः विपरीतं वा ॥ २० ॥

मैत्रे मुहूर्ते उदयात् तृतीयमुहूर्त्ते नाड़ीद्वयं मुहूर्त्तः । रौद्रः सार्पस्तथा मैत्रः पैत्रोवासव एव च । आप्यो वैश्वस्तथा ब्राह्मः प्राजो रौद्रा-

आश्वासयित्वा च चमूं महात्मा
निवेशयित्वा च यथोपजोषम् ।
द्रष्टुं भरद्वाजमृषिप्रवर्य्यं
मृत्विक्सदस्यैर्भरतः प्रतस्थे ॥ २२ ॥

स ब्राह्मणस्याश्रममभ्युपेत्य
महात्मनो देवपुरोहितस्य ।
ददर्श रम्योटजवृक्षदेशं
महद्वनं विप्रवरस्य रम्यम् ॥ २३ ॥

इत्यार्षे रामायणे वाल्मीकीये अयोध्याकाण्डे
भरद्वाजाश्रमप्रवेशो नाम एकोननवति-
तमः सर्गः ॥ ८९ ॥

मिरेव च । ऐन्द्रायनिर्ऋतिश्चैव वारुणौ यमसाधकौ । एते क्रमश्च
विज्ञेया मुहूर्त्ता दशपञ्च चेत्युक्तेः ॥ २१ ॥

यथोपजोषं यथासुखं आश्वासयित्वा विश्राम्य निवेशयित्वा प्रया-
गवने स्थापयित्वा ॥ २२ ॥

देवपुरोहितस्य भरद्वाजो ह्युतथ्यभार्य्यायां ममतायां बृहस्पतेर्जात
इति पुराणे प्रसिद्धम् । तत्र भर्तृभिया त्यक्तुकामां ममतां देवा ऊचुः
उतथ्यस्य क्षेत्रजत्वेन बृहस्पतेरौरसत्वेन भरद्वाजानममुं भरेति तस्मा-
द्भरद्वाज इति तस्य नाम ॥ २३ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके
अयोध्याकाण्डे एकोनवतितमः सर्गः ॥ ८९ ॥

## नवतितमः सर्गः ।

भरद्वाजाश्रमं गत्वा * क्रोशादेव नरर्षभः ।
बलं सर्वमवस्थाप्य जगाम सह मन्त्रिभिः ॥ १ ॥

पद्भ्यामेव तु धर्मज्ञो न्यस्तशस्त्रपरिच्छदः ।
वसानो वाससी क्षौमे पुरोधाय पुरोहितम् ॥ २ ॥

ततः सन्दर्शने तस्य भरद्वाजस्य राघवः ।
मन्त्रिणस्तानवस्थाप्य जगामानुपुरोहितम् ॥ ३ ॥

वसिष्ठमथ दृष्ट्वैव भरद्वाजो महातपाः ।
सञ्चचालासनात्तूर्णं शिष्यानर्घ्यमिति ब्रुवन् ॥ ४ ॥

जगाम द्रष्टुमिति शेषः । अवस्थाप्य आश्रमोपरोधनिवृत्तये इति शेषः ॥ १ ॥

पद्भ्यामिति । विनयप्रदर्शनार्थम् ॥ २ ॥

ततः सन्दर्शने आश्रमप्रवेशानन्तरमृषिदर्शनावसरे अनुपुरोहितं पुरोहितस्य पश्चात् ॥ ३ ॥

शिष्यान् प्रति अर्घ्यमानयतेति ब्रुवन् ॥ ४ ॥

---

* "दृष्ट्वा" इति वा पाठः ।

समागम्य वसिष्ठेन भरतेनाभिवादितः ।
अबुध्यत महातेजाः सुतं दशरथस्य तम् ॥ ५ ॥
ताभ्यामर्घ्यञ्च पाद्यञ्च दत्त्वा पश्चात् फलानि च ।
आनुपूर्व्याच्च धर्मज्ञः पप्रच्छ कुशलं कुले ॥ ६ ॥
अयोध्यायां बले कोशे मित्रेष्वपि च मन्त्रिषु ।
जानन् दशरथं वृत्तं न राजानमुदाहरत् ॥ ७ ॥
वसिष्ठो भरतश्चैनं पप्रच्छतुरनामयम् ।
शरीरेऽग्निषु वृक्षेषु मृगेष्वपि च पक्षिषु ॥ ८ ॥
तथेति च प्रतिज्ञाय भरद्वाजो महायशाः ।
भरतं प्रत्युवाचेदं राघवस्नेहबन्धनात् ॥ ९ ॥
किमिहागमने कार्य्यं तव राज्यं प्रशासतः ।

अबुध्यत वसिष्ठेन सहागमनादिति शेषः ॥ ५ ॥

ताभ्यां वसिष्ठभरताभ्यां आनुपूर्व्यात् क्रमेण प्रथमं ब्राह्मणस्य पश्चात् क्षत्रियस्य कुले गृहे ॥ ६ ॥

वृत्तम् अतीतम् । अतएव राजानम् उदाहरत् राजकुशलं न पृष्टवान् ॥ ७ ॥

शरीरादित्रयस्य यथायोगं तपःसाधनत्वात्तदनामयप्रश्नः । मृगपक्षिणामभयावस्थानद्वारा धर्मसाधनत्वाच्छिष्यवत्प्रियत्वाच्च तदनामयप्रश्नः ॥ ८ ॥

तथेति प्रतिज्ञाय अनामयमित्युक्त्वा राघवो रामः ॥ ९ ॥

एतदाचक्ष्व सर्वं मे न हि मे शुध्यते मनः ॥ १० ॥
सुषुवे यममित्रघ्नं कौसल्या कुलवर्धनम् ।
भ्राता मह सभार्यो यश्चिरं प्रव्राजितो वनम् ॥ ११ ॥
नियुक्तः स्त्रीनिमित्तेन पित्रा योऽसौ महायशाः ।
वनवासी भवेतीह समाः किल चतुर्दश ॥ १२ ॥
कच्चिन्न तस्यापापस्य पापं कर्त्तुमिहेच्छसि ।
अकण्टकं भोक्तुमना राज्यं तस्यानुजस्य च ॥ १३ ॥
एवमुक्तो भरद्वाजं भरतः प्रत्युवाच ह ।
पर्य्यश्रुनयनो दुःखाद्वाचा संसज्जमानया ॥ १४ ॥
हतोऽस्मि यदि मामेवं भगवानपि मन्यते ।
मत्तो न दोषमाशङ्के * मैवं मामनुशाधि हि ॥ १५ ॥

न शुध्यते न विश्वसिति ॥ १० ॥

अविश्वासबीजमाह,—सुषुवे इति । कौशल्या यं सुषुवे, चिरं चिरकालमुद्दिश्य प्रव्राजितः ॥ ११ ॥

वनवासी भवेति नियुक्तः ॥ १२ ॥

इह-वने तस्य रामस्य तस्यानुजस्य लक्ष्मणस्य च । पापं कर्त्तुमिहेच्छसीत्यन्वयः । तत्र हेतुरकण्टकं असपत्नम् ॥ १३ ॥

पर्य्यश्रुनयनः परिस्रुत नयनः । संसज्जमानया स्खलन्त्या ॥ १४ ॥

मामेवं पापप्रसक्तं यदि भगवान् सर्वज्ञो मन्यते तदा हतोऽस्मि

* "मत्तो न दोषमाशङ्की:" इति वा पाठः ।

न चैतदिष्टं माता मे यदवोचन्मदन्तरे।
नाहमेतेन तुष्टश्च न तद्वचनमाददे॥ १६॥
अहन्तु तं नरव्याघ्रमुपयातः प्रसादकः।
प्रतिनेतुमयोध्यायां पादौ चास्याभिवन्दितुम्॥ १७॥
तं मामेवं गतं मत्वा प्रसादं कर्त्तुमर्हसि।
शंस मे भगवन्! रामः क्व सम्प्रति महीपतिः॥ १८॥
वसिष्ठादिभि ऋत्विग्भिर्याचितो भगवांस्ततः।
उवाच तं भरद्वाजः प्रसादाद्भरतं वचः॥ १९॥

थ्यर्थजन्मास्मि। दोषं प्रव्राजनदोषं मत्तो मद्रूपनिमित्ततोनेति अहमा-शङ्के त्वाभवतो जानामि। अतो मामेवं मानुशाधि मेवं कर्णकठोरं ब्रूहि॥ १५॥

ननु कथमपलापः क्रियते अत आह,—मदन्तरे मद्विषये। तत्तु मया विनेति अर्थ इति तन्न, अन्तरेणेत्यव्ययस्यैव तदर्थत्वात्। मम त्ववसर-वाची अन्तरशब्द इति न दोषः। यन्मे मातावोचत् मदभिषेकरामवन-वासादि तन्मे नेष्टम्। तदेव विवृणोति। नाहमिति। एतेन मातृकृत-व्यापारेण न च तद्वचनमाददे अङ्गीकरोमि। इदानीमपि इति शेषः॥१६॥

अथ स्वागमनकारणमाह,—अहं त्विति। प्रसादक उपयातः प्रसा-दयितुमागत इत्यर्थः॥ १७॥

एवं गतं एवं बुद्धिम्। क्व संप्रति कस्मिन् प्रदेशे॥ १८॥

याचितो भरताय प्रसन्नो भवेति प्रार्थितः॥ १९॥

त्वय्येतत् पुरुषव्याघ्र ! युक्तं राघववंशजे ।
गुरुवृत्तिर्दमश्चैव साधूनां चानुयायिता ॥ २० ॥
जाने चैतन्मनस्थन्ते दृढीकरणमस्त्विति ।
अपृच्छन्त्वां तवात्यर्थं कीर्त्तिं समभिवर्धयन् ॥ २१ ॥
जाने च रामं धर्मज्ञं ससीतं सहलक्ष्मणम् ।
अयं वसति ते भ्राता चित्रकूटे महागिरौ ॥ २२ ॥
श्वस्तु गन्तासि तं देशं वसाद्य सह मन्त्रिभिः ।
एतं मे कुरु सुप्राज्ञ ! कामं कामार्थकोविद ! ॥ २३ ॥
ततस्तथेत्येवमुदारदर्शनः
प्रतीतरूपो भरतोऽब्रवीत् वचः ।

एतदुक्तरूपं वचः त्वयि युक्तं तवोचितम् । तदेव समर्थयति, गुरु इति । गुरुवृत्तिर्गुरुसेवा यतो गुरुसेवादित्रयं राघववंशजे प्रायो दृष्ट-मिति शेषः । यद्वा एतत्त्रयं त्वयि युक्तमित्यन्वयः ॥ २० ॥

दृढीकरणम् अन्यथाभावाभिवृत्तिः । बहूनामग्रे उक्तान्यर्थानान्यथाकर्तुं शक्यते । मुख्यप्रयोजनमाह,—कीर्त्तिं समभिवर्धयन् असर्वज्ञजनं प्रतीति शेषः । हेतौ शता । कीर्त्यभिवृद्धिहेतवेऽपृच्छ-मित्यर्थः ॥ २१ ॥

अथ रामः क्वेति प्रश्नस्योत्तरमाह,—जाने चेति ॥ २२ ॥

एतम् अद्यवासरूपं कामार्थकोविद वाञ्छितार्थप्रदानसमर्थ ॥ २३ ॥

चकार बुद्धिञ्च महाश्रमे तदा
निशानिवासाय नराधिपात्मज: ॥ २४ ॥

इत्यार्षे रामायणे वाल्मीकीये अयोध्याकाण्डे
भरद्वाजाश्रमे निवासो नाम नवति-
तमः सर्गः ॥ ९० ॥

प्रतीतरूपः प्रसिद्धयशाः। रूपं यशस्याभिरूप्ये वर्णे चैव निरूपणे इति कोशात्। तदाश्रमे भरद्वाजाश्रमे ॥ २४ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके
अयोध्याकाण्डे नवतितमः सर्गः ॥ ९० ॥

## एकनवतितमः सर्गः ।

कृतबुद्धिं निवासाय तत्रैव स मुनिस्तदा ।
भरतं कैकयीपुत्रमातिथ्येन न्यमन्त्रयत् ॥ १ ॥
अब्रवीत् भरतस्त्वेनं नन्विदं भवता कृतम् ।
पाद्यमर्घ्यमथातिथ्यं वने यदुपपद्यते ॥ २ ॥
अथोवाच भरद्वाजो भरतं प्रहसन्निव ।
जाने त्वां प्रीतिसंयुक्तं तुष्येस्त्वं येन केनचित् ॥ ३ ॥
सेनायास्तु तवैवास्याः कर्तुमिच्छामि भोजनम् ।
मम प्रीतिर्यथारूपा त्वमर्हो मनुजर्षभ ! ॥ ४ ॥

कृतबुद्धिं कृतनिश्चयम् आतिथ्येन विशिष्टभोजनेनेतातिथि-सत्काररूपहेतुना फलमपि हेतुः ॥ १ ॥

वने यदुपपद्यते तेनातिथ्यं कृतं नन्वित्यब्रवीदित्यन्वयः ॥ २ ॥

वनवासित्वेन दरिद्रत्वादेतदधिकातिथ्यकरणेऽसामर्थ्यं मन्यत इत्या-शयेन प्रहसन्निवेति । येन केनचिदपि तुष्येः तुष्टो भवेरिति मन्ये । वन्येनाप्यातिथ्येन प्रीतियुक्त इति जाने ॥ ३ ॥

तथापि सेनाया इत्यादि । मम प्रीतिर्यथारूपा ममेच्छा यादृशी तथारूपान्तां त्वमर्हासि अङ्गीकर्तुमिति शेषः ॥ ४ ॥

किमर्थञ्चापि निक्षिप्य दूरे बलमिहागतः ।
कस्मान्नेहोपयातोऽसि सबलः पुरुषर्षभ ! ॥ ५ ॥
भरतः प्रत्युवाचेदं प्राञ्जलिस्तं तपोधनम् ।
न सैन्येनोपयातोऽस्मि भगवन् ! भगवद्भयात् ॥ ६ ॥
राज्ञा हि भगवन्नित्यं राजपुत्रेण वा तथा ।
यत्नतः परिहर्त्तव्या विषयेषु तपस्विनः ॥ ७ ॥
वाजिमुख्या मनुष्याश्च मत्ताश्च वरवारणाः ।
प्रच्छाद्य भगवन् ! भूमिं महतीमनुयान्ति माम् ॥ ८ ॥
ते वृक्षानुदकं भूमिमाश्रमेषूटजां स्तथा ।
न हिंस्युरिति तेनाहमेक एवागतस्ततः ॥ ९ ॥
आनीयतामितः सेनेत्याज्ञप्तः परमर्षिणा ।
तथानुचक्रे भरतः सेनायाः समुपागमम् ॥ १० ॥

बलं दूरे निक्षिप्य एकाकी किमर्थमागतः अयमेवार्थो व्यतिरेक-मुखेन दर्श्यते कस्मादिति ॥ ५ ॥

अत्रोत्तरमाह,—भरत इति । भगवद्भयाद्भगवदाश्रमपीडाप्रसङ्गभया-दित्यर्थः ॥ ६ ॥

विषयेषु देशेषु परिहर्त्तव्याः तदाश्रमवर्त्तिवृक्षोदकादिबाधाप्रसङ्ग-निमित्तमनुपरोध्याः ॥ ७ ॥

तदेवाह,—वाजीत्यादि ॥ ८ ॥ ९ ॥

परमर्षिणा श्रुतभरतवचसा समुपागमं समीपागमनम् ॥ १० ॥

अग्निशालां प्रविश्याथ पीत्वाप: परिमृज्य च ।
आतिथ्यस्य क्रियाहेतोर्विश्वकर्माणमाह्वयत् ॥ ११ ॥
आह्वये विश्वकर्माणमहन्त्वष्टारमेव च ।
आतिथ्यं कर्तुमिच्छामि तत्र मे सन्विधीयताम् ॥ १२ ॥
आह्वये लोकपालांस्त्रीन् देवान् शक्रपुरोगमान् ।
आतिथ्यं कर्तुमिच्छामि तत्र मे सन्विधीयताम् ॥ १३ ॥
प्राक्स्रोतसश्च या नद्यस्तिर्यक्स्रोतस एव च ।
पृथिव्यामन्तरिक्षे च समायान्त्वद्य सर्वशः ॥ १४ ॥
अन्याः स्रवन्तु मैरेयं सुरामन्याः सुनिष्ठिताम् ।
अपराश्चोदकं शीतमिक्षुकाण्डरसोपमम् ॥ १५ ॥

पीत्वापः परिमृज्येति हृदयङ्गमाभिः द्विरोष्ठौ परिमृज्य तत्सकृदाचम्येत्युक्तरीत्याचम्य । आतिथ्यक्रियाहेतोः आतिथ्यसम्पादननिमित्तम् । विश्वकर्मा सृष्टिकर्तृविशेषः ॥ ११ ॥

आह्वानप्रकारमाह,—आह्वये इति । त्वष्टारं तक्षणादिव्यापारोपेतं विश्वकर्माणम् । संविधीयतां विश्वकर्मसाध्यगृहादिसर्वं सिद्धं क्रियताम् ॥ १२ ॥

त्रीन्यमवरुणकुबेरानिति तीर्थः । कार्य्यविशेषेष्वेषामपि नियोगो बोध्यः ॥ १३ ॥

अन्तरिक्षे नदी अन्तरीक्षे गङ्गा ॥ १४ ॥

तासां कृत्यमाह,—अन्या इति । मैरेयं मद्यभेदः धात्रीधातकी-

आह्वये देवगन्धर्वान्विश्वावसुहहाहुहून् ।
तथैवाप्सरसो दिव्या गन्धर्व्वीश्चैव सर्वशः ॥ १६ ॥
घृताचीमथ विश्वाचीं मिश्रकेशीमलम्बुषाम् ।
नागदत्ताञ्च हेमाञ्च सोमामद्रिकृतस्थलाम् ॥ १७ ॥
शक्रं याश्चोपतिष्ठन्ति ब्रह्माणं याश्च भामिनीः ।
सर्वास्तुम्बुरुणा सार्द्धमाह्वये सपरिच्छदाः ॥ १८ ॥
वनं कुरुषु यद्दिव्यं वासोभूषणपत्त्रवत् ।
दिव्यनारीफलं शश्वत्तत्कौबेरमिहैव तु ॥ १९ ॥
इह मे भगवान् सोमोविधत्तामन्नमुत्तमम् ।
भक्ष्यं भोज्यञ्च चोष्यञ्च लेह्यञ्च विविधं बहु ॥ २० ॥

प्रभृतिनिर्मितः । सुरा गौड़ीमाध्वीपैष्टीचेति त्रिविधा । सुनिष्ठितां सुनिष्पादिताम् । इक्षुकाण्डरसोपमं तद्वन्मधुरम् ॥ १५ ॥

हहा हाहाः छन्दोवशात् ह्रस्वपाठः ॥ १६ ॥ १७ ॥

सपरिच्छदाः सालङ्काराः नृत्यगीताद्यपेक्षितपरिकरोपेताश्च । ब्राह्मणमिति पाठे वृहस्पतिं या उपतिष्ठन्तीत्यनुकर्ष इति कतकः । ताः सर्वा भामिनीराह्वये इति सम्बन्धः ॥ १८ ॥

कुरुषु उत्तरकुरुषु यद्दिव्यं वनं चैत्ररथाख्यं दिव्यत्वोपपादकं वासोभूषणान्येव पत्त्राणि यद्वर्त्तिवृक्षाणां तद्दिव्यनार्य्यएव फलानि यत्र तत् । इहैव तु इह वने एवागच्छतु इति शेषः । इहै तु वै इति पाठान्तरम् । तद्देवताधिष्ठानादिदमेव वनं तथा भवेत्वित्यर्थः ॥ १९ ॥ २० ॥

विचित्राणि च माल्यानि पादपप्रच्युतानि च ।
सुरादीनि च पेयानि मांसानि विविधानि च ॥ २१ ॥
एवं समाधिना युक्तस्तेजसाप्रतिमेन च ।
शिक्षास्वरसमायुक्तं सुव्रतश्चाब्रवीन्मुनिः * ॥ २२ ॥
मनसा ध्यायतस्तस्य प्राङ्मुखस्य कृताञ्जलेः ।
आजग्मुस्तानि सर्वाणि दैवतानि पृथक् पृथक् ॥ २३ ॥
मलयं दर्दुरञ्चैव ततः स्वेदनुदोनिलः ।
उपस्पृश्य ववौ युक्त्या सुप्रियात्मा सुखं शिवः ॥ २४ ॥

पादपप्रच्युतानि वृक्षेभ्यः स्वयं जातानि ॥ २१ ॥

शिक्षास्वरसमायुक्तं शिक्षाप्रतिपाद्यवर्णोच्चारणलक्षणोपेतं तथा व्याकरणोपदिश्यमानप्रकृतिप्रत्ययस्वरोपेतम् । स्वरेत्युपलक्षणम् एकः शब्दः सम्यक् ज्ञातः सुप्रयुक्तः स्वर्गे लोके कामधुग्भवतीत्युक्तेः । समाधितेजस्तपोभिर्युक्त एवं गुणोपेतमाह्वानवाक्यमब्रवीदित्यर्थः । मन्त्रार्थस्तपोबलात्स्वर्गे कामधुक्त्वेन प्रसिद्धादपि वचनादिहैव सर्वं सिद्धमिति भावः ॥ २२ ॥

मनसा ध्यायतः मनसा ध्यानपूर्वकृताह्वानस्य । तानि आहूतानि ॥२३॥

मलयदर्दुरौ चन्दनपर्वतौ उपस्पृश्य स्पृष्ट्वा युक्त्या यथोचितवृष्ट्या शैत्यमान्द्यसौरभयोगेन सुप्रियात्मा सुप्रियस्वरूपः । अतएव शिवः सुखदः । ईदृशोऽनिलः सुखम्ववौ ॥ २४ ॥

---

* "तपसा चाब्रवीन्मुनिः" इति वा पाठः ।

ततोऽभ्यवर्षन्त घना दिव्याः कुसुमवृष्टयः।
देवदुन्दुभिघोषश्च दिक्षु सर्वासु शुश्रुवे ॥ २५ ॥
प्रववुश्चोत्तमा वाता ननृतुश्चाप्सरोगणाः।
प्रजगुर्देवगन्धर्वा वीणाः प्रमुमुचुः स्वरान् ॥ २६ ॥
स शब्दो द्याञ्च भूमिञ्च प्राणिनां श्रवणानि च।
विवेशोच्चावचः श्लक्ष्णः समो लयगुणान्वितः ॥ २७ ॥
तस्मिन्नेवं गते शब्दे दिव्ये श्रोत्रसुखे नृणाम्।
ददर्श भारतं सैन्यं विधानं विश्वकर्मणः ॥ २८ ॥
बभूव हि समा भूमिः समन्तात् पञ्चयोजनम्।
शाद्वलैर्बहुभिश्छन्ना नीलवैदूर्यसन्निभैः ॥ २९ ॥
तस्मिन् विल्वाः कपित्थाश्च पनसा बीजपूरकाः।
आमलक्योबभूवुश्च चूताश्च फलभूषिताः ॥ ३० ॥

घना मेघाः ॥ २५ ॥

वीणा वाद्यमाना इति शेषः। स्वरान् षड्जादीन् ॥ २६ ॥

लयो नृत्तगीतानुगततालप्रमाणम् ॥ २७ ॥

भरतस्येदं भारतं सैन्यं विश्वकर्मणो विधानं ददर्श ॥ २८ ॥

तदेव विधानं दर्शयति। बभूवेत्यादि। छन्ना बभूवेत्यनुकर्षः। शाद्वलं कोमलतृणमत्र ॥ २९ ॥

तस्मिन् पञ्चयोजनमिते देशे फलभूषिताः कपित्थादयो बभूवुरित्यन्वयः ॥ ३० ॥

उत्तरेभ्यः कुरुभ्यश्च वनं दिव्योपभोगवत् ।
आजगाम नदी सौम्या तीरजैर्बहुभिर्वृता ॥ ३१

चतुःशालानि शुभ्राणि शालाश्च गजवाजिनाम् ।
हर्म्यप्रासादसंयुक्ततोरणानि शुभानि च ॥ ३२ ॥

सितमेघनिभञ्चापि राजवेश्म सुतोरणम् ।
शुक्लमाल्यकृताकारं दिव्यगन्धसमुक्षितम् ॥ ३३ ॥

चतुरस्रमसम्बाधं शयनासनयानवत् ।
दिव्यैः सर्वरसैर्युक्तं दिव्यभोजनवस्त्रवत् ॥ ३४ ॥

उपकल्पितसर्वान्नं धौतनिर्मलभाजनम् ।
कॢप्तसर्वासनं श्रीमत् स्वास्तीर्णशयनोत्तमम् ॥ ३५ ॥

प्रविवेश महाबाहुरनुज्ञातो महर्षिणा ।
वेश्म तद्रत्नसम्पूर्णं भरतः कैकयीसुतः ॥ ३६ ॥

अनुजग्मुश्च ते सर्वे मन्त्रिणः सपुरोहिताः ।

वनं चैत्ररथम् । नदी जातावेकवचनम् । तीरजैर्वृक्षैः ॥ ३१ ॥

चतुःशालानि शुभ्राणि गृहाणि जातानीति शेषः । तथा गजादीनां शालाश्च जाताः । तोरणानि पुरद्वाराणि ॥ ३२ ॥

सितमेघनिभं सुधालेपेन, शुक्लमाल्यैः कृत आकारो यस्य । दिव्यैः गन्धैः गन्धवज्जलैरुक्षितं सिक्तम् ॥ ३३ ॥

यानं शिबिकादि ॥ ३४ ॥

धौतत्वेन प्रक्षालितत्वेन निर्मलानि भाजनानि यस्मिन् ॥ ३५ ॥ ३६ ॥

बभूवुश्च मुदायुक्ता स्तं दृष्ट्वा वेश्मसन्निधिम् ॥ ३७ ॥
तत्र राजासनं दिव्यं व्यजनं च्छत्रमेव च।
भरतो मन्त्रिभिः सार्धमभ्यवर्त्तत राजवत् ॥ ३८ ॥
आसनं पूजयामास रामायाभिप्रणम्य च।
वालव्यजनमादाय न्यषीदत्सचिवासने ॥ ३९ ॥
आनुपूर्व्यान्निषेदुश्च सर्वे मन्त्रिपुरोहिताः।

वेश्मसंविधिं वेश्मसंविधानम् ॥ ३७ ॥

राजासनं सिंहासनं राजवद्राजयोग्यं तदभ्यवर्त्तत प्रदक्षिणीकृतवान् ॥ ३८ ॥

न तु तत्रोपविष्ट इत्याह,—आसनं पूजयामासेति। रामचन्द्रीयमेतदिति बुद्ध्या रामाय प्रणम्य असनोपरि प्रतिष्ठितं रामं ध्यात्वेति शेषः। बालव्यजनमादाय रामसेवार्थमेतदेति शेषः। सचिवासने सचिवार्थक्लृप्तासने सिंहासनाधस्तले। अत्रेदं बोध्यम्। भरतेन वाचोक्तमपि राज्यानभिलाषं लोका न श्रद्दधुरतः क्रिययापि सर्वलोकप्रत्यायनाय महर्षिणा तपोव्ययेनापीदृशमातिथ्यकरणम्। किञ्च पुष्पादिभिः पूजेवेयमपि क्रिया विष्णोरंशभूतभरततुष्ट्यै इति तत्करणम्। किञ्च भरतं प्रति त्वं दुष्टबुध्यागतोसि किमिति प्रश्ने तस्य ऋषेरसर्वज्ञत्वासामर्थ्यादिशङ्कावारणाय स्वसामर्थ्यदर्शनम्। अपि च भगवदेकचित्तानां स्वर्गसुखमिहापि भवतीति भगवद्धामप्रीतिमाहात्म्यं प्रदर्शयितुं तद्दर्शनेन च तेषां तत्राधिकां प्रीतिमुत्पादयितुं तथाकरणं मुनेरिति दिक् ॥ ३९ ॥

ततः सेनापतिः पश्चात् प्रशास्ता च न्यषीदत ॥ ४० ॥
ततस्तत्र मुहूर्त्तेन नद्यः पायसकर्दमाः ।
उपातिष्ठन्त भरतं भरद्वाजस्य शासनात् * ॥ ४१ ॥
आसामुभयतः कूलं पाण्डुमृत्तिकलेपनाः ।
रम्याश्चावसथा दिव्या ब्राह्मणस्य प्रसादजाः ॥ ४२ ॥
तेनैव च मुहूर्त्तेन दिव्याभरणभूषिताः ।
आगुर्विंशतिसाहस्रा ब्रह्मणा प्रहिताः स्त्रियः ॥ ४३ ॥
सुवर्णमणिमुक्तेन प्रवालेन च शोभिताः ।
आगुर्विंशतिसाहस्राः कुबेरप्रहिताः स्त्रियः ॥ ४४ ॥
याभिर्गृहीतः पुरुषः सोन्माद इव लक्ष्यते ।
आगुर्विंशतिसाहस्रा नन्दनादप्सरोगणाः ॥ ४५ ॥

आनुपूर्व्याद्यथोचितोपवेशनप्रकारेण प्रशास्ता शिबिररक्षकः ॥ ४० ॥ ४१ ॥

उभयतःकूलं उभयोः कूलयोः पाण्डुमृत्तिकलेपनाः सुधालिप्ताः । ब्राह्मणस्य भरद्वाजस्य ॥ ४२ ॥

आगुरागतवत्यः ॥ ४३ ॥

सुवर्णमणिमुक्तेनेति समाहारद्वन्द्वः ॥ ४४ ॥

गृहीतोऽदर्शनादिनात्मवशीकृतः सोन्मादः उद्भूतसन्तोषसहित इत्यर्थः । नन्दनमिन्द्रवनम् ॥ ४५ ॥

* "तेजसा" इति वा पाठः ।

नारदस्तुंवुरुर्गोपः प्रभया सूर्य्यवर्चसः।
एते गन्धर्वराजानो भरतस्याग्रतो जगुः॥ ४६॥
अलम्बुषा मिश्रकेशी पुण्डरीकाथ वामना।
उपानृत्यन्त भरतं भरद्वाजस्य शासनात्॥ ४७॥
यानि माल्यानि देवेषु यानि चैत्ररथे वने।
प्रयागे तान्यदृश्यन्त भरद्वाजस्य तेजसा॥ ४८॥
बिल्वा मार्दङ्गिका आसञ्छम्याग्राहा विभीतकाः।
अश्वत्था नर्त्तकाश्चासन् भरद्वाजस्य तेजसा॥ ४९॥
ततः सरलतालाश्च तिलकाः सतमालकाः। *
प्रहृष्टास्तत्र सम्पेतुः कुब्जा भूत्वाथ वामनाः॥५०॥
शिंशपामलकीजंवूर्याश्चान्याः कानने लताः।
प्रमदाविग्रहं कृत्वा भरद्वाजाश्रमेवसन्॥ ५१॥

नारदादयो गन्धर्वराजाः कान्त्या सूर्य्यसमा जगुः॥ ४६॥ ४७॥

प्रयागे प्रयागक्षेत्रे॥ ४८॥

बिल्वा बिल्ववृक्षा मार्दङ्गिका मृदङ्गवादकरूपधराः। एवं विभीतकाः शम्याख्य तालग्राहकाः। वंशो तालविशेषे च शमे तालक्रियान्तरे। शम्या यज्ञायुधे इति॥ ४९॥

सरलो देवदारुविशेषः॥ ५०॥

शिंशपादयो ये स्त्रीलिङ्गशब्दवाच्या वृक्षाः। लतामल्लिकामाल-

---

* "नक्तमालकाः" इति वा पाठः।

सुरां सुरापाः पिबत पायसञ्च बुभुक्षिताः ।
मांसानि च सुमेध्यानि भक्ष्यन्तां यो यदिच्छति ॥ ५२ ॥
उच्छाद्य स्नापयन्तिस्म नदीतीरेषु वल्गुषु ।
अप्येकमेकं पुरुषं प्रमदाः सप्तचाष्ट च ॥ ५३ ॥
संवाहन्त्यः समापेतुर्नार्य्यो विपुललोचनाः ।
परिमृज्य तदान्योन्यं पाययन्ति वराङ्गनाः ॥ ५४ ॥
हयान् गजान् वरानुष्ट्रांस्तथैव सुरभेः सुतान् ।
अभोजयन्वाहनपास्तेषां भोज्यं यथाविधि ॥ ५५ ॥
इक्षूंश्च मधुलाजांश्च भोजयन्तिस्म वाहनान् ।
इक्ष्वाकुवरयोधानाञ्चोदयन्तो महाबलाः ॥ ५६ ॥

त्यादयः । मुनेस्तपोमाहात्म्यादेव वृक्षादीनां तत्तद्रूपतापत्तिः पुनर्लतादिरूपप्रत्यापत्तिश्चेति मन्तव्यम् ॥ ५१ ॥

तत्र प्रमदारूपं धृत्वा किं कुर्य्युस्तदाह,—सुरामिति। एवमूचुरिति शेषः ॥ ५२ ॥

उच्छाद्य उद्वर्त्तनं कृत्वा एकमेकं पुरुषं अनेकं बहुव्रीहिवदिति बहुव्रीहिर्वद्भावाभाव आर्षः ॥ ५३ ॥ ( उद्वर्त्तनोच्छादने द्वे इत्यमरः ।)

संवाहन्त्यः पादसंवाहनादि कुर्वन्त्यः । परिमृज्य जलार्द्रमङ्गं वस्त्रादिना परिमृज्य । अलङ्कृत्य च पाययन्ति मध्वादिकमिति शेषः ॥ ५४ ॥

सुरभेः सुताः वृषभाः तेषां हयादीनां भोज्यं तान् तत्तत्पालकाः अभोजयन्नित्यर्थः ॥ ५५ ॥

नाश्वबन्धोऽश्वमाजानन्न गजं कुञ्जरग्रहः।
मत्तप्रमत्तमुदिता सा चमूस्तत्र संबभौ॥ ५७॥
तर्पिताः सर्वकामैस्ते रक्तचन्दनरूषिताः।
अप्सरोगणसंयुक्ताः सैन्या वाचमुदीरयन्॥ ५८॥
नैवायोध्यां गमिष्यामो न गमिष्याम दण्डकान्।
कुशलं भरतस्यास्तु रामस्यास्तु तथा सुखम्॥ ५९॥
इति पादातयोधाश्च हस्त्यश्वारोहबन्धकाः।
अनाथास्तं विधिं लब्ध्वा वाचमेतामुदीरयन्॥ ६०॥
संप्रहृष्टा विनेदुस्ते नरास्तत्र सहस्रशः।

इक्ष्वाकुवरयोधानां वाहनानि चोदयन्तः भक्षणाय प्रेरयन्तः तान् इक्ष्वादीन् भोजयन्तिस्म॥ ५६॥

मत्ता मदकरद्रव्यसेवया प्रमत्ता मधुपानेन कार्य्याकार्य्यविवेकशून्या मुदिता स्रक्चन्दनस्त्र्यादिभोगेन॥ ५७॥

सैन्याः सेनासमवेताः। उदीरयन् उदैरयन्॥ ५८॥

तां वाचमाह,—नैवेति। न गमिष्यामेत्यार्षः सलोपः। भरतस्य कुशलमस्तु यत्सङ्गत्या भूमा स्वर्गसुखलाभः॥ ५९॥

हस्त्यश्वारोहास्तद्बन्धकाश्च पादातरूपयोधाः चेन रथिकसंग्रहः। तं विधिं तादृशसत्कारं अनाथा अपरतन्त्रा इवेत्यर्थ इति कतकः। अयाचका इत्यर्थ इत्यन्ये। वक्तॄणामुक्तिहर्षयुक्ततया कवेरपि वर्णनीयमयीभावात् पुनरुक्तिर्न दोषाय॥ ६०॥

भरतस्यानुयातारः स्वर्गोऽयमिति चाब्रुवन् ॥ ६१ ॥
नृत्यन्तश्च हसन्तश्च गायन्तश्चैव सैनिकाः ।
समन्तात् परिधावन्तो माल्योपेताः सहस्रशः ॥ ६२ ॥
ततो भुक्तवतां तेषां तदन्नममृतोपमम् ।
दिव्यानुद्वीक्ष्य भक्ष्यांस्तानभवद्भक्षणे मतिः ॥ ६३ ॥
प्रेष्याश्चेट्यश्च बध्वश्च बलस्थाश्चापि सर्वशः ।
बभूवुस्ते भृशं प्रीताः सर्वे चाहतवाससः ॥ ६४ ॥
कुञ्जराश्च खरोष्ट्राश्च गोऽश्वाश्च मृगपक्षिणः ।
बभूवुः सुभृतास्तत्र नातोह्यन्यमकल्पयन् ॥ ६५ ॥
नाशुक्लवासास्तत्रासीत् क्षुधितो मलिनोऽपि वा ।
रजसा ध्वस्तकेशो वा नरः कश्चिददृश्यत ॥ ६६ ॥

विनादः प्रहृष्टानां शब्दविशेषः ॥ ६१ ॥ ६२ ॥

अभवद्भक्षणे मतिः । तृप्तानामपि भक्ष्यसौष्ठवात् पुनराकाङ्क्षाभूदित्यर्थः ॥ ६३ ॥

प्रेष्याः सेवकाः । चेट्यो दास्यः । बलस्थाः सेनास्थाः अहतवाससः नूतनवस्त्रपरीधानाः ॥ ६४ ॥

अतो मुनिदत्तादन्यपदार्थं नाकल्पयन् नाभुञ्जन्नित्यर्थः । नान्योह्यन्यमकल्पयदिति पाठे हिरण्यर्थ अन्योपि सेनानन्तर्गतोपि मार्गस्थः प्रसङ्गात्तद्देशमागतः अन्यं ऋषिकल्पितादन्यं पदार्थं नाकल्पयत् न भुक्तवानित्यर्थः अनेनात्याधिक्यं सामग्र्याः सूचितम् ॥ ६५ ॥ ६६ ॥

आजैश्चापि च वाराहैर्निष्ठानवरसञ्चयैः।
फलनिर्यूहसंसिद्धैः सूपैर्गन्धरसान्वितैः॥६७॥
पुष्पध्वजवतीः पूर्णाः शुक्लस्यान्नस्य चाभितः।
ददृशुर्विस्मितास्तत्र नरा लौहीः सहस्रशः॥६८॥
बभूवुर्वनपार्श्वेषु कूपाः पायसकर्दमाः।
ताश्च कामदुघा गावो द्रुमाश्चासन्मधुश्च्युतः॥६९॥
वाप्यो मैरेयपूर्णाश्च मृष्टमांसचयैर्वृताः।
प्रतप्तपैठरैश्चापि मार्गमायूरकौक्कुटैः॥७०॥
पात्राणाञ्च सहस्राणि स्थालीनां नियुतानि च।

निष्ठानं व्यञ्जनं ज्ञेयमिति हलायुधः। आम्रादिफलसम्बन्धिक्वथितरससिद्धैरिति आजादिविशेषणं गन्धरसान्वितैरिति च। वार्य्यापीड़क्वाथरसे निर्यूहोनागदन्तके इति वैजयन्ती। एतैराजादिभिः पूर्णा लौहीः स्वर्णरजतादिपात्रीर्ददृशुरित्यन्वयः। लौहशब्दः पञ्चलौहसाधारणः पात्रीणां विशेषणं शोभार्थं कल्पितपुष्पध्वजयुक्ताः अभितः शुक्लस्यान्नस्यौदनस्य च पूर्णाः पात्रीर्ददृशुः॥६७॥६८॥

वनपार्श्वेषु चैत्ररथवनवत् प्रतिभासमानवनप्रदेशेषु पञ्चयोजनमितेषु तत्रत्याः कूपाः पायसकर्दमा बभूवुः तत्रत्या गावश्च कामदुघा बभूवुः॥६९॥

निषादादिबलतृप्त्यर्थं प्रतापमात्रेण संस्कार्य्याः प्रतप्तास्तथ पिठरः कपालं तेषु संस्कृता पक्वाः पैठरास्तैर्मृगादिसम्बन्धिमांसचयैर्वृताः॥७०॥

न्यर्बुदानि च पात्राणि शातकुम्भमयानि च ॥ ७१ ॥
स्थाल्यः कुम्भ्यः करम्भ्यश्च दधिपूर्णाः सुसंस्कृताः।
यौवनस्थस्य गौरस्य कपित्थस्य सुगन्धिनः ॥ ७२ ॥
ह्रदाः पूर्णा रसालस्य दध्नः श्वेतस्य चापरे।
बभूवुः पयसश्चान्ये शर्कराणाञ्च सञ्चयाः ॥ ७३ ॥
कल्कांश्चूर्णकषायांश्च स्नानानि विविधानि च।

पात्रीणाम् अन्नाधाराणां स्थालीनां व्यञ्जनस्थालीनां पात्राणि भोजनपात्राणीति कतकः। पात्राणां हस्तप्रक्षालनाद्युपयुक्तानां स्थालीनां क्षुद्रजनपानपात्राणामिति तीर्थः ॥ ७१ ॥

कुम्भ्यः स्थाल्यः जलपानपात्रविशेषः। करम्भ्यो दधिमन्थनपात्राणि यौवनस्थस्य मथनोत्तरं यामान्तरितस्य सुपक्वस्य च केसरादिसम्बन्धात् गौरस्य पीतवर्णस्य। पीतोगौरोहरिद्राभः। कपित्थस्य तक्रस्य सुगन्धिनः तादृशद्रव्यसंयुक्तस्य ॥ ७२ ॥

ह्रदाः पूर्णा इति पूर्वान्वयि। तथा रसालस्य तक्रविशेषस्य। अपक्वतक्रं सव्योषं चतुर्जातं गुडार्द्रकम्। सजीरकं रसालं स्यान्मज्जिकाशिखरिण्यपीति वैजयन्ती। तक्रमत्र निर्जलम्। व्योषं शुण्ठीमरीचपिप्पल्यः। चतुर्जातं त्रिगन्धमेलात्वक्पत्रैस्तुर्जातं सकेसरैः इति शार्ङ्गधरे। पत्रन्तजपत्रं गुडः खण्डशर्करा आर्द्रकं प्रसिद्धं तस्य च पूर्णा ह्रदाः। श्वेतस्य दध्नश्चापरे पयसोऽन्ये पूर्णा ह्रदा इत्यनुषङ्गः। शर्कराणाञ्च सञ्चयाः ॥ ७३ ॥

दद्दशुर्भाजनस्थानि तीर्थेषु सरितां नराः॥ ७४॥
शुक्लांश्चांशुमतश्चापि दन्तधावनसञ्चयान्।
शुक्लांश्चन्दनकल्कांश्च समुद्गेष्ववतिष्ठतः॥ ७५॥
दर्पणान् परिमृष्टांश्च वाससाञ्चापि सञ्चयान्।
पादुकोपानहञ्चैव युग्मान्यत्र सहस्रशः॥ ॥ ७६॥
आञ्जनीः कङ्कतान् कूर्चान् शस्त्राणि च धनूंषि च।
मर्मत्राणानि चित्राणि शयनान्यासनानि च॥ ७७॥
प्रतिपानहृदान् पूर्णान् खरोष्ट्रगजवाजिनाम्।
अवगाह्यसुतीर्थांश्च हृदान् सोत्पलपुष्करान्॥ ७८॥

कल्कान् आमलकादीनाम्। चूर्णकषायान् सुरभिचूर्णानि कषायेऽथ सुरभौ लोहितेऽपि च। चूर्णकषाया नलदादिचूर्णक्वथित-कषाया इति कतकः। स्नानानि स्नानार्थानि उष्णोदकानि तदर्थान्यन्य-द्रव्याणि च सरितां तीर्थेषु स्नानघट्टेषु॥ ७४॥

शुक्लान्निर्मलानंशुमतः अग्रे कूर्चवतः। दन्तधावनानां अपामार्गादि-काष्ठानां सञ्चयान्। चन्दनकल्कान् घृष्टचन्दनान्। समुद्गेषु संपुटेषु दद्दशुरिति सम्बन्धः॥ ७५॥

पादुकोपानहम्। पादुका दार्वादिनिर्मिताः उपानहश्चर्मादिकृताः। समाहारे टच् समासान्तः॥ ७६॥

आञ्जनीः अञ्जनयुक्तकरण्डिकाः। कङ्कतान् केशमार्जनानि। कूर्चान् श्मश्रुप्रसाधकान्मर्मत्राणानि कवचानि॥ ७७॥

आकाशवर्णप्रतिमान् स्वच्छतोयान् सुखाप्लवान् ।
नीलवैदूर्य्यवर्णांश्च मृदून्यवससञ्चयान् ॥ ७९ ॥
निर्वापार्थं पशूनां ते ददृशुस्तत्र सर्वशः ।
व्यस्मयन्त मनुष्यास्ते स्वप्नकल्पं तदद्भुतम् ॥ ८० ॥
दृष्ट्वातिथ्यं कृतं तावद्भरतस्य महर्षिणा ।
इत्येवं रममाणानां देवानामिव नन्दने ॥ ८१ ॥
भरद्वाजाश्रमे रम्ये सा रात्रिर्व्यत्यवर्त्तत ।
प्रतिजग्मुश्च ताः सर्वा गन्धर्वाश्च यथागतम् ।
भरद्वाजमनुज्ञाप्य ताश्च सर्वा वराङ्गनाः ॥ ८२ ॥
तथैव मत्ता मदिरोत्कटा नरा-
स्तथैव दिव्यागरुचन्दनोक्षिताः ।

भुक्तजरणार्थं यत् पीयते तत्प्रतिपानम् । ह्रदादीनामवगाहनयोग्य-सुखावतारान् पद्मोत्पलसहितान् ह्रदान् ददृशुरिति सम्बन्धः ॥ ७८ ॥

आकाशेत्याद्यर्धं पूर्वान्वयि । उपाधिविशेषान् नीलवर्णानित्यर्थः । सुखेनाप्लवः स्नानं येषु तान् । यवसं तृणम् ॥ ७९ ॥

निर्वापार्थं भक्षणार्थम् । स्वप्नकल्पं मर्त्यदुर्लभम् । द्रागुत्पन्नविचित्रपदार्थत्वात् ॥ ८० ॥ ८१ ॥

ताः सर्वा अप्सरसः । अनुज्ञाप्य दत्तानुमतिकं कृत्वा ॥ ८२ ॥

स्वप्नादिवदेतदृषिकृतमातिथ्यं मिथ्या नेति दर्शयति । तथैवेति । मत्ताः दृप्ताः । मदिरया उत्कटाः प्रमत्ताः । मत्ते शौण्डोत्कटक्षीबाः ।

तथैव दिव्या विविधाः स्रगुत्तमाः

पृथक्विकीर्णामनुजैः प्रमर्दिताः ॥ ८२ ॥

इत्यार्षे रामायणे वाल्मीकीये अयोध्याकाण्डे
भरद्वाजातिथ्यं नाम एकनवति-
तमः सर्गः ॥ ९१ ॥

तथैव अनुभवकाल इव वर्त्तन्त इति शेषः। स्रगुत्तमाः उपभोग वशात्प्रकीर्णाः प्रमर्दितास्च ॥ ८२ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके
अयोध्याकाण्डे एकनवतितमः सर्गः ॥ ९१ ॥

---

## द्विनवतितमः सर्गः ।

ततस्तां रजनीं व्युष्य भरतः सपरिच्छदः ।
कृतातिथ्यो भरद्वाजं कामादभिजगाम ह ॥ १ ॥
तमृषिः पुरुषव्याघ्रं प्रेक्ष्य प्राञ्जलिमागतम् ।
हुताग्निहोत्रो भरतं भरद्वाजोऽभ्यभाषत ॥ २ ॥
कच्चिदत्र सुखा रात्रिस्तवास्मद्विषये गता ।
समग्रस्ते जनः कच्चिदातिथ्ये शंस मेऽनघ ! ॥ ३ ॥
तमुवाचाञ्जलिं कृत्वा भरतोऽभिप्रणम्य च ।
आश्रमादुपनिष्क्रान्तमृषिमुत्तमतेजसम् ॥ ४ ॥

व्युष्य उषित्वा सपरिच्छदः सपरिवारः कामाद्रामप्राप्तिकामात् ॥ १ ॥ २ ॥

अस्मद्विषये अस्मदाश्रमे सुखा सुखरूपा । आतिथ्ये ते जनः समग्रः सम्यक् तृप्तिकः अभूदिति शेषः । अनेन हि तप एव महत्सर्वैश्वर्यसाधनं नतु राज्यादीति ऋषिणा बोधितो भरतः ॥ ३ ॥

जनसमूहस्य बहुत्वात्सर्वेषां स्वदर्शनेन कृतकृत्यत्वायाश्रमान्निष्क्रान्तमृषिमुवाच ॥ ४ ॥

सुखोषितोऽस्मि भगवन्! समग्रबलवाहनः।
बलवत्तर्पितश्चाहं बलवान् * भगवंस्त्वया॥ ५॥
अपेतक्लमसन्तापाः सुभिक्षाः सुप्रतिश्रयाः।
अपि प्रेष्यानुपादाय सर्वे स्म सुसुखोषिताः॥ ६॥
आमन्त्रयेऽहं भगवन्! काममद्यामृषिसत्तम!।
समीपं प्रस्थितं भ्रातुर्मैत्रेणेक्षस्व चक्षुषा॥ ७॥
आश्रमं तस्य धर्मज्ञ! धार्मिकस्य महात्मनः।
आचक्ष्व कतमो मार्गः कियानिति च शंस मे॥ ८॥
इति पृष्टस्तु भरतं भ्रातुर्दर्शनलालसम्।
प्रत्युवाच महातेजा भरद्वाजो महातपाः॥ ९॥
भरतार्द्धतृतीयेषु योजनेष्वजने वने।
चित्रकूटगिरिस्तत्र रम्यनिर्दरकाननः॥ १०॥

बलवदत्यन्तं बलवान् सेनासहितः॥ ५॥

क्लमो ग्लानिः सन्तापो देहौष्ण्यम्। अपि प्रेष्यानुपादाय प्रेष्यानप्यादाय तैरपि सहेत्यर्थः। सुभिक्षाः सुसम्पन्नान्नपानाः। सुप्रतिश्रयाः शोभनावासाः॥ ६॥

आमन्त्रये पृच्छामि कामम् अधिकं मैत्रेण स्निग्धेन॥ ७॥

तस्य रामस्य कियान् कियद्दूरदेशे कतमस्तस्य मार्ग इति शंस॥ ८॥ ९॥

---

* "सामात्यः" इति वा पाठः।

उत्तरं पार्श्वमासाद्य तस्य मन्दाकिनी नदी ।
पुष्पितद्रुमसंच्छन्ना रम्यपुष्पितकानना ॥ ११ ॥
अनन्तरं तत्सरितश्चित्रकूटश्च पर्वतम् ।
तयोः पर्णकुटीं तात ! तत्र तौ वसतो ध्रुवम् ॥ १२ ॥
दक्षिणेन च मार्गेण सव्यदक्षिणमेव च ।
गजवाजिसमाकीर्णां वाहिनीं वाहिनीपते ! ॥ १३ ॥
वाहयस्व महाभाग ! ततो द्रक्ष्यसि राघवम् ।
प्रयाणमिति च श्रुत्वा राजराजस्य योषितः ॥ १४ ॥
हित्वा यानानि यानार्हा ब्राह्मणं पर्य्यवारयन् ।

अर्द्धतृतीययोजनेषु सार्द्धयोजनद्वयेतीते इत्यर्थः । ( अर्द्धं तृतीयं येषां तेषु ) निर्दराः विदीर्णाः पाषाणाः । वर्त्तत इति शेषः ॥ १० ॥

मन्दाकिनी तदाख्या काचिन्नदी । चित्रकूटोत्तरपार्श्वं प्राप्य तिष्ठतीति शेषः ॥ ११ ॥

तस्या अनन्तरं तत् परपार्श्वे चित्रकूटं पर्वतं तयो रामलक्ष्मणयोः पर्णकुटीञ्च द्रक्ष्यसि तत्र पर्वते वसतः । ध्रुवं निश्चयेन ॥ १२ ॥

दक्षिणेनैव मार्गेण यमुनाया दक्षिणतीरमार्गेणैव गत्वा किञ्चिद्दूरं ततः पश्चात्सव्यदक्षिणं तस्य मार्गस्य शाखामार्गयोः सव्यभागवर्त्ती यो दक्षिणदिग्गामी मार्गोऽस्ति तं मार्गं वाहिनीं वाहयस्व नतन्यं शाखामार्गं तस्याल्पत्वात् वनमार्गत्वाच्च ॥ १३ ॥

राजराजस्य दशरथस्य ॥ १४ ॥

वेपमाना कृशा दीना सह देव्या सुमित्रया ॥ १५ ॥
कौशल्या तत्र जग्राह कराभ्यां चरणौ मुनेः।
असमृद्धेन कामेन सर्वलोकस्य गर्हिता ॥ १६ ॥
कैकेयी तस्य जग्राह चरणौ सव्यपत्रपा।
तं प्रदक्षिणमागम्य भगवन्तं महामुनिम् ॥ १७ ॥
अदूराद्भरतस्यैव तस्थौ दीनमनास्तदा।
ततः पप्रच्छ भरतं भरद्वाजो महामुनिः ॥ १८ ॥
विशेषं ज्ञातुमिच्छामि मातृणां तव राघव!।
एवमुक्तस्तु भरतो भरद्वाजेन धार्मिकः ॥ १९ ॥
उवाच प्राञ्जलिर्भूत्वा वाक्यं वचनकोविदः।
यामिमां भगवन्! दीनां शोकानशनकर्शिताम् ॥ २० ॥

ब्राह्मणं भरद्वाजं पर्य्यवारयन् नमस्कारार्थं स्त्रिय इति शेषः। वेपमानत्वादिगुणविशिष्टा कौशल्या ॥ १५ ॥

असमृद्धेन फलसमृद्धिरहितेन कामेन मनोरथेनोपलक्षिता इत्यादि कैकेयीविशेषणम् ॥ १६ ॥

सव्यपत्रपा अतएव सलज्जा ॥ १७ ॥

दीनमनाः अप्राप्तमनोरथत्वात् कैकेयीति विशेष्यम् ॥ १८ ॥

विशेषं तत्तन्नामरूपम् ॥ १९ ॥

शोकानशनकर्शितां शोकवशप्राप्तानशनेन कृशीकृताम्॥ २० ॥

पितुर्हि महिषीं देवीं देवतामिव पश्यसि ।
एषा तं पुरुषव्याघ्रं सिंहविक्रान्तगामिनम् ॥ २१ ॥
कौशल्या सुषुवे रामं धातारमदितिर्यथा ।
अस्या वामभुजं श्लिष्टा यैषा तिष्ठति दुर्मनाः ॥ २२ ॥
इयं सुमित्रा दुःखार्त्ता देवी राज्ञश्च मध्यमा ।
कर्णिकारस्य शाखेव शीर्णपुष्पा वनान्तरे ॥ २३ ॥
एतस्यास्तौ सुतौ देव्याः कुमारौ देववर्णिनौ ।
उभौ लक्ष्मणशत्रुघ्नौ वीरौ सत्यपराक्रमौ ॥ २४ ॥
यस्याः कृते नरव्याघ्रौ जीवनाशमितो गतौ ।
राजा पुत्रविहीनश्च स्वर्गं दशरथो गतः ॥ २५ ॥
क्रोधनामकृतप्रज्ञां दृप्तां सुभगमानिनीम् ।
ऐश्वर्य्यकामां कैकेयीमनार्य्यामार्य्यरूपिणीम् ॥ २६ ॥

यां पश्यसि एषेत्यन्वयः । सिंहवद्विक्रान्तगमनशीलम् ॥ २१ ॥
धातारम् उपेन्द्रम् ॥ २२ ॥
कर्णिकारो वृक्षविशेषः ॥ २३ ॥
देववर्णिनौ देवतुल्यरूपौ ॥ २४ ॥
यस्याः कैकेय्याः जीवनाशं गतौ तादृशापदं प्राप्तौ ॥ २५ ॥
दृप्तां गर्वितां अकृतप्रज्ञां अशिक्षितबुद्धिम् । आर्य्यरूपिणीं सतीमिव प्रतिभासमानाम् ॥ २६ ॥

ममैतां मातरं विद्धि नृशंसां पापनिश्चयाम्।
यतो मूलं हि पश्यामि व्यसनं महदात्मनः॥ २७॥
इत्युक्त्वा नरशार्दूलो बाष्पगद्गदया गिरा।
विनिःश्वस्य स ताम्राक्षः क्रुद्धो नाग इव श्वसन् * ॥२८॥
भरद्वाजो महर्षिस्तं ब्रुवन्तं भरतं तदा।
प्रत्युवाच महाबुद्धिरिदं वचनमर्थवित्॥ २९॥
न दोषेणावगन्तव्या कैकेयी भरत! त्वया।
रामप्रव्राजनं ह्येतत् सुखोदर्कं भविष्यति॥ ३०॥
देवानां दानवानाञ्च ऋषीणां भावितात्मनाम्।
हितमेव भविष्यद्धि रामप्रव्राजनादिह॥ ३१॥
अभिवाद्य तु संसिद्धः कृत्वा चैनं प्रदक्षिणम्।

यतो मूलं यन्मूलम्॥ २७॥ २८॥ २९॥

दोषेण दुष्टकृत्यकर्त्तृत्वेन। सुखोदर्कं देवानामृषीणाञ्च सुखफलम्॥ ३०॥

तदेवाह,—देवानामित्यादि। भविष्यदिति शत्रन्तं जानीहीति शेषः। एवं देवादिकृतोऽयं मन्थरादारा कैकेय्याबुद्धिमोह इति भावः। अतएव नैषादोषभागिति बोध्यं देवादीनां सुखदत्वात्॥ ३१॥

* "इवासकृत्" इति वा पाठः।

आमन्त्र्य भरतः सैन्यं युज्यतामिति चाब्रवीत् ॥ ३२ ॥
ततो वाजिरथान् युक्ता दिव्यान् हेमविभूषितान् ।
अध्यारोहत् प्रयाणार्थं बहून् बहुविधो जनः ॥ ३३ ॥
गजकन्या गजाश्चैव हेमकक्षाः पताकिनः ।
जीमूता इव घर्मान्ते सघोषाः संप्रतस्थिरे ॥ ३४ ॥
विविधान्यपि यानानि महान्ति च लघूनि च ।
प्रययुः सुमहार्हाणि पादैरपि पदातयः ॥ ३५ ॥
अथ यानप्रवेकैस्तु कौसल्याप्रमुखाः स्त्रियः ।
रामदर्शनकाङ्क्षिण्यः प्रययुर्मुदितास्तदा ॥ ३६ ॥
चन्द्रार्कतरुणाभासां नियुक्तां शिविकां शुभाम् ।
आस्थाय प्रययौ श्रीमान् भरतः सपरिच्छदः ॥ ३७ ॥
सा प्रयाता महासेना गजवाजिसमाकुला ।
दक्षिणां दिशमावृत्य महामेघ इवोत्थितः ॥ ३८ ॥

संसिद्धः प्राप्ताशीर्वादरूपानुग्रहः स्वमाटकृत्यस्य आतिहितावहत्वाच्च युज्यतां गमनाय संनह्यताम् ॥ ३२ ॥ ३३ ॥

गजकन्याः करेणवः । सघोषाः घण्टाघोषसहिताः ॥ ३४ ॥

सुमहार्हाणि यानान्यारुह्य तद्योग्याः प्रययुः । पदातयस्तु पादैरेव प्रययुः ॥ ३५ ॥

यानप्रवेकैः यानोत्तमैः ॥ ३६ ॥

चन्द्रार्कतरुणाभासां तरुणतन्द्रार्कसदृशीम् । क्वचिद्भागे स्फटिकादि

वनानि च व्यतिक्रम्य जुष्टानि मृगपक्षिभिः ।

गङ्गायाः परवेलायां गिरिष्वथ नदीष्वपि ॥ ३९ ॥

सा संप्रहृष्टद्विपवाजियूथा

वित्रासयन्ती मृगपक्षिसङ्घान् ।

महद्वनं तत् प्रविगाहमाना

रराज सेना भरतस्य तत्र ॥ ४० ॥

इत्यार्षे रामायणे वाल्मीकीये अयोध्याकाण्डे
भरतस्य चित्रकूटाभिमुखगमनं नाम
द्विनवतितमः सर्गः ॥ ९२ ॥

निर्मितां क्वचिद्भागे पद्मरागादिर्निर्मितामिति यावत् । नियुक्तां वाहकैरिति शेषः ॥ ३७ ॥ ३८ ॥

गङ्गायाः परवेलायां पश्चिमतीरे स्थिता सेना गिरिषु नदीषु च वर्त्तमानवनान्यतिक्रम्य प्रयाता बभूवेति शेषः ॥ ३९ ॥

सेति ॥ ४० ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके
अयोध्याकाण्डे द्विनवतितमः सर्गः ॥ ९२ ॥

## त्रिनवतितमः सर्गः ।

तया महत्या यायिन्या ध्वजिन्या वनवासिनः ।
अर्दिता यूथपा मत्ताः सयूथाः संप्रदुद्रुवुः ॥ १ ॥
ऋक्षाः पृषतमुख्याश्च रुरवश्च समन्ततः ।
दृश्यन्ते वनवाटेषु गिरिष्वपि नदीषु च ॥ २ ॥
स संप्रतस्थे धर्मात्मा प्रीतो दशरथात्मजः ।
वृतो महत्या नादिन्या * सेनया चतुरङ्गया ॥ ३ ॥
सागरौघनिभा सेना भरतस्य महात्मनः ।
महीं संच्छादयामास प्रावृषि द्यामिवाम्बुदः ॥ ४ ॥
तुरङ्गौघैरवतता वारणैश्च महाबलैः ।
अनालक्ष्या चिरं कालं तस्मिन् काले बभूव सा ॥ ५ ॥

यायिन्या गच्छन्त्या । यूथपाः यूथनाथाः ॥ १ ॥
पृषताः संबिन्दवो रुरवोऽबिन्दवः अर्दिता दृश्यन्त इत्यर्थः ॥ २ ॥
नादिन्या घोषवत्या ॥ ३ ॥ ४ ॥
तस्मिन् काले मार्गे गमनकाले सा मही ॥ ५ ॥

---

* "यायिन्या" इति वा पाठः ।

स गत्वा दूरमध्वानं सम्परिश्रान्तवाहनः।
उवाच वचनं श्रीमान् वसिष्ठं मन्त्रिणां वरम्॥ ६॥
यादृशं लक्ष्यते रूपं यथा चैव मया श्रुतम्।
व्यक्तं प्राप्ताः स्म तं देशं भरद्वाजो यमब्रवीत्॥ ७॥
अयं गिरिश्चित्रकूटस्तथा मन्दाकिनी नदी।
एतत् प्रकाशते दूरान्नीलमेघनिभं वनम्॥ ८॥
गिरेः सानूनि रम्याणि चित्रकूटस्य संप्रति।
वारणैरवमृद्यन्ते मामकैः पर्वतोपमैः॥ ९॥
मुञ्चन्ति कुसुमान्येते नगाः पर्वतसानुषु।
नीला इवातपापाये तोयन्तोयधरा घनाः॥ १०॥
किन्नराचरितं देशं पश्य शत्रुघ्न! पर्वते।
हयैः समन्तादाकीर्णं मकरैरिव सागरम्॥ ११॥

मन्त्रिणां मन्त्रविदां वरं श्रेष्ठम्॥ ६॥

भरद्वाजो यं देशं चित्रकूटं यादृशमब्रवीत्। यथा चास्माभिः श्रुतं तथैवास्य देशस्य रूपं लक्ष्यते। तस्मात् व्यक्तं तं देशं प्राप्ताः स्म। छान्दसो विसर्गलोपः॥ ७॥

प्राप्तिमेव विवृणोति। अयमिति॥ ८॥

अवमृद्यन्ते पीड्यन्ते॥ ९॥

अतएवैते नगा वृक्षाः गजानमाघातेन चलितशाखाः। पर्वतसानुषु कुसुमानि मुञ्चन्ति॥ १०॥ ११॥

एते मृगगणा भान्ति शीघ्रवेगाः प्रचोदिताः ।
वायुप्रविद्धाः शरदि मेघजाला इवाम्बरे ॥ १२ ॥
कुर्वन्ति कुसुमापीड़ान् शिरःसु सुरभीनमी ।
मेघप्रकाशैः फलकैर्दाक्षिणात्या नरा यथा ॥ १३ ॥
निष्कूजमिव भूत्वेदं वनं घोरप्रदर्शनम् ।
अयोध्येव जनाकीर्णा संप्रति प्रतिभाति मे ॥ १४ ॥

प्रचोदिता सैनिकैः । वायुप्रविद्धाः वायुप्रेरिताः मेघजालाः मेघसमूहाः । मेघराज्य इति पाठान्तरम् ॥ १२ ॥

अमी भटाः मेघप्रकाशैः फलकैः शस्त्रनिवारणचर्मभिरुपलक्षिताः दाक्षिणात्या नरा इव शिरःसु कुसुमापीड़ान् कुसुमनिर्मितभूषणविशेषान् कुर्वन्ति धारयन्तीति तीर्थः । अमी वृक्षाः निविड़प्रत्यग्रपलाशभूयिष्ठतया मेघवदवभासमानैः फलकैर्महास्कन्धशाखाभिरुपलक्षिताः । दाक्षिणात्याः दक्षिणदिग्भवाः शशिप्रभान् सुरभीन् कुसुमापीड़ान् स्तवकशेखरान् कुर्वन्ति । दाक्षिणात्याः शशिप्रभानिति पाठः इति कतकः ॥ १३ ॥ *

इदं वनं पूर्वं निष्कूजं जनशब्दरहितम् । अतएव घोरदर्शनं भूत्वा

* दाक्षिणात्याः दक्षिणदिग्भवा नराः मेघप्रकाशैः कृत्तादिनीलचर्मपिनद्धतया नीलमेघतुल्यैः फलकैः केशबन्धसाधनभूतैः शिरःसु कुसुमापीड़ान् कुसुमसमूहान् यथा कुर्वन्ति धारयन्ति तथैवामी वृक्षाः सुसुरभीन् कुसुमापीड़ान् कुसुमस्तवकान् शिरःसु धारयन्ति । दाक्षिणात्या हि फलकान् कृत्तादिचर्मपिनद्धान् कृत्वा तेषु पुष्पाणि विकीर्य्य शिरःसु धारयन्तीति प्रसिद्धिः । यद्वा अमी भटाः मेघप्रकाशैः फलकैः शस्त्रनिवारणचर्मभिरुपलक्षिताः सन्तो दाक्षिणात्या नरा इव कुसुमापीड़ान् कुसुमनिर्मितभूषणविशेषान् शिरःसु कुर्वन्ति । ना भ ।

खरैरुदीरितो रेणुर्दिवं प्रच्छाद्य तिष्ठति।
तं वहत्यनिलः शीघ्रं कुर्वन्निव मम प्रियम्॥ १५॥
स्यन्दनांस्तुरगोपेतान् सूतमुख्यैरधिष्ठितान्।
एतान् सम्पततः शीघ्रं पश्य शत्रुघ्न! कानने॥ १६॥
एतान् वित्रासितान् पश्य बर्हिणः प्रियदर्शनान्।
एतमापततः * शैलमधिवासं पतत्रिणाम्॥ १७॥
अतिमात्रमयं देशो मनोज्ञः प्रतिभाति मे।
तापमानां निवासोऽयं व्यक्तं स्वर्गपथो यथा॥ १८॥
मृगा मृगीभिः सहिता बहवः पृषता वने।
मनोज्ञरूपा लक्ष्यन्ते कुसुमैरिव चित्रिताः॥ १९॥
साधुसैन्याः प्रतिष्ठन्तां विचिन्वन्तु च काननम्।
यथा तौ पुरुषव्याघ्रौ दृश्येते रामलक्ष्मणौ॥ २०॥

साम्प्रतम् अस्मदागमने जनाकीर्णाटव्योध्येव भाति। पाठान्तरे जनाकीर्ण-मिदं वनमयोध्येव भाति॥ १४॥

वहति अपनयति मम प्रियं कुर्वन्निव चित्रकूटदर्शनेन निरोध-निवर्त्तकत्वादिति भावः॥ १५॥

संपततः गच्छतः॥ १६॥ १७॥

व्यक्तं स्पष्टं स्वर्गपथः स्वर्गप्रदेशः॥ १८॥

पृषतानां सबिन्दुत्वात् कुसुमैश्चित्रिता इवेत्युक्तिः॥ १९॥

* "आविशतः" इति वा पाठः।

भरतस्य वचः श्रुत्वा पुरुषाः शस्त्रपाणयः ।
विविशुस्तद्वनं शूरा धूमाग्रं ददृशुस्ततः ॥ २१ ॥
ते समालोक्य धूमाग्रमूचुर्भरतमागताः ।
नामनुष्ये भवत्यग्निर्व्यक्तमत्रैव राघवौ ॥ २२ ॥
अथ नात्र नरव्याघ्रौ राजपुत्रौ परन्तपौ ।
अन्ये रामोपमाः सन्ति व्यक्तमत्र तपस्विनः ॥ २३ ॥
तच्छ्रुत्वा भरतस्तेषां वचनं साधुसम्मतम् ।
सैन्यानुवाच सर्वांस्तानमित्रबलमर्दनः ॥ २४ ॥
यत्ता भवन्तस्तिष्ठन्तु नातो गन्तव्यमग्रतः ।

साधु यथोचितं प्रतिष्ठन्तां गच्छन्तु । गमनफलं विचिन्वन्त्वित्यादि ॥ २० ॥

धूमाग्रं धूमशिखां तेन वह्निमनुमाय तत्सम्पादकत्वेन राघवावनुमाय भरतमूचुः ॥ २१ ॥

नामनुष्ये वनदाहाद्यभावविशिष्टतया प्रत्यक्षं दृश्यमाने इति शेषः । तस्मान्मनुष्यकारणकवह्न्यनुपपत्त्या अत्रैव राघवाविति जानीमः ॥ २२ ॥

राजभीत्या निश्चयेन तथा वक्तुमशक्नुवन्तः पक्षान्तरमाहुः । अथेति । अत्र न तौ तथाप्यन्ये तपस्विनोऽत्र भविष्यन्ति तन्मुखात्तदासस्थानलाभो भविष्यतीति भावः ॥ २३ ॥

साधुसम्मतं न्यायवित्सम्मतम् तेषां वचनं श्रुत्वा । तत्र प्रदेशे रामावस्थितिं निश्चित्य सर्वान् सैन्यानुवाच ॥ २४ ॥

अहमेव गमिष्यामि सुमन्त्रो धृतिरेव च ॥ २५ ॥
एवमुक्तास्ततः सैन्यास्तत्र तस्थुः समन्ततः ॥
भरतो यत्र धूमाग्रन्तत्र दृष्टिं समादधत् ॥ २६ ॥

व्यवस्थिताया भरतेन सा चमू-
र्निरीक्षमाणापि च धूमसग्रतः ।
बभूव हृष्टा न चिरेण जानती
प्रियस्य रामस्य समागमन्तदा ॥ २७ ॥

इत्यार्षे रामायणे वाल्मीकीये अयोध्याकाण्डे भरतस्य चित्रकूटगमनं नाम त्रिनवतितमः सर्गः ॥ ९३ ॥

वचनमाह,—यत्ता इति। यत्ताः सावधानाः कोलाहलमकुर्वन्तः। धृतिरित्यप्रोक्तमन्त्रिणो नामान्तरम् ॥ २५ ॥ २६ ॥

अपि च या चमूर्भरतेन व्यवस्थिता भरतेन व्यवस्थापिता सा वासाय अग्रतो भूमिं निरीक्षमाणा न चिरेण शीघ्रम् ॥ २७ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके अयोध्याकाण्डे त्रिनवतितमः सर्गः ॥ ९३ ॥

## चतुर्नवतितमः सर्गः ।

दीर्घकालोषितस्तस्मिन् गिरौ गिरिवनप्रियः ।
वैदेह्याः प्रियमाकाङ्क्षन् स्वं च चित्तं विलोभयन् ॥ १ ॥
अथ दाशरथिश्चित्रं चित्रकूटमदर्शयत् ।
भार्य्याममरसङ्काशः शचीमिव पुरन्दरः ॥ १ ॥
न राज्याद् भ्रंशनं भद्रे ! न सुहृद्भिर्विनाभवः ।
मनो मे बाधते दृष्ट्वा रमणीयमिमं गिरिम् ॥ ३ ॥
पश्येममचलं भद्रे ! नानाद्विजगणायुतम् ।

अथ कविस्तत्रस्थितरामवृत्तान्तं वर्णयति । दीर्घेत्यादि । प्रियं सन्तोषम् आकाङ्क्षन् इच्छन् । स्वानुरोधेन घोरं वनमागतायाश्चित्त खेदस्योपशमनीयतया चित्रकूटरामणीयकदर्शनेन तच्चित्तमुपलालयन् । स्वञ्च चित्तं वनवासादिखिन्नं तथा कुर्वन् चित्रकूटमदर्शयदित्यन्वयः ॥ १ ॥ २ ॥

विनाभवः विनावस्थानं मे मनो न बाधत इत्यन्वयः । दृष्ट्वा स्थित-स्येति शेषः ॥ ३ ॥

शिखरैः खमिवोद्विद्धैर्धातुमद्भिर्विभूषितम् ॥ ४ ॥
केचित् रजतसङ्काशाः केचित् क्षतजसन्निभाः ।
पीतमाञ्जिष्ठवर्णाश्च केचिन् मणिवरप्रभाः ॥ ५ ॥
पुष्यार्ककेतकाभाश्च केचित् ज्योतीरसप्रभाः ।
विराजन्तेऽचलेन्द्रस्य देशा धातुविभूषिताः ॥ ६ ॥
नानामृगगणैर्द्वीपितरक्षुवृकगणैर्वृतः ।
अदुष्टैर्भात्ययं शैलो बहुपक्षिसमाकुलः ॥ ७ ॥
आम्रजम्ब्वसनैर्लोध्रैः पियालैः पनसैरपि * ।
अङ्कोलैर्भव्यतिनिशैर्बिल्वतिन्दुकवेणुभिः ॥ ८ ॥

खमिवोद्विद्धैः प्रीणितादित्वात्कर्त्तरि निष्ठा । खस्य वेधकैरित्यर्थः अभ्रंलिहैरिति यावत् ॥ ४ ॥

क्षतजं रुधिरं पीतवर्णा माञ्जिष्ठवर्णाश्च । ( मणिवरप्रभाः इन्द्रनीलप्रभाः ) ॥ ५ ॥

पुष्यः पुष्यरागः अर्कः स्फटिकः केतकानि केतकपुष्पाणि ज्योतिर्नक्षत्रं रसः पारदरसः ॥ ६ ॥

द्वीपी महाव्याघ्रः तरक्षुः क्षुद्रव्याघ्रः अदुष्टैस्तपस्विवैभवात् हिंसादिदोषरहितैः ॥ ७ ॥

* "धवैः" इति वा पाठः ।

काश्मर्य्यरिष्टवरणैर्मधूकैस्तिलकैरपि।
वदर्यामलकैर्नीपैर्वेत्रधन्वनवीजकैः॥ ९॥
पुष्पवद्भिः फलोपेतैश्छायावद्भिर्मनोरमैः।
एवमादिभिराकीर्णः श्रियं पुष्यत्ययङ्गिरिः॥ १०॥
शैलप्रस्थेषु रम्येषु पश्येमान् कामहर्षणान्।
किन्नरान् द्वन्द्वशो भद्रे! रममाणान् मनस्विनः॥ ११॥
शाखावसक्तान् खड्गांश्च प्रवराण्यम्बराणि च।
पश्य विद्याधरस्त्रीणां क्रीड़ोद्देशान् मनोरमान्॥ १२॥
जलप्रपातैरुद्भेदैर्निष्यन्दैश्च क्वचित् क्वचित्।
स्रवद्भिर्भात्ययं शैलः स्रवन् मद इव द्विपः॥ १३॥

असनः पीतसारः प्रियालः राजादनम्। अङ्कोलभव्यतिनिशा वृक्षविशेषाः॥ ८॥

अरिष्टो निम्बः। धन्वन इन्द्रजवः। वीजकाः बीजप्रचुरफलविशेषाः दाड़िमादयः॥ ९॥

पुष्यति वर्धयति॥ १०॥

कामहर्षणान् देशानिति शेषः। तत्र रममाणान् किन्नरान् पश्य॥ ११॥

खड्गान् किन्नराणामिति शेषः। तथा विद्याधरीणां क्रीड़ोद्देशान् पश्य। तासां शाखावसक्तान्यम्बराणि च पश्य॥ १२॥

गुहासमीरणो गन्धान्नानापुष्पभवान्वहन् ।
घ्राणतर्पणमभ्येत्य कं नरं न प्रहर्षयेत् ॥ १४ ॥
यदीह शरदोऽनेकास्त्वया सार्द्धमनिन्दिते ! ।
लक्ष्मणेन च वत्स्यामि न मां शोकः प्रधक्ष्यति ॥ १५ ॥
बहुपुष्पफले रम्ये नानाद्विजगणायुते ।
विचित्रशिखरे ह्यस्मिन् रतवानस्मि भामिनि ! ॥ १६ ॥
अनेन वनवासेन मया प्राप्तं फलद्वयम् ।
पितुश्चानृणता धर्मे भरतस्य प्रियं तथा ॥ १७ ॥
वैदेहि ! रमसे कच्चिच्चित्रकूटे मया सह ।
पश्यन्ती विविधान् भावान् मनोवाक्कायसंमतान् ॥ १८ ॥

जलप्रपातैः उच्चप्रदेशात्पतद्भिर्जलप्रवाहैरुद्भेदैरुद्भिद्य निर्गतैर्निष्यन्दैरल्पनिर्झरैः । स्रवद्भिरित्युभयविशेषणं प्रवहद्भिरित्यर्थकम् ॥ १३ ॥

गुहासमीरणः गुहाद्वारप्रवृत्तः समीरणः घ्राणतर्पणं कुर्वाण इति शेषः । अभ्येत्य प्राप्य ॥ १४ ॥

शरदः संवत्सरान् ॥ १५ ॥

रतवान् रतिमान् रतिःप्रीतिः ॥ १६ ॥

धर्मे सत्यपालनलक्षणे ॥ १७ ॥

मनोवाक्कायसम्मतान् तत्प्रियान् वर्णने वाक्प्रियता भावाः पदार्थाः । संयतेति पाठे सम्यक् नियमितकरणत्रयेत्यर्थः । संयता इति

इदमेवामृतं प्राहु राज्ञि ! राजर्षयः परे ।
वनवासं भवार्थाय प्रेत्य मे प्रपितामहाः ॥ १९ ॥
शिलाः शैलस्य शोभन्ते विशालाः शतशोऽभितः ।
बहुला बहुलैर्वर्णैर्नीलपीतसितारुणैः ॥ २० ॥
निशि भान्त्यचलेन्द्रस्य हुताशनशिखा इव ।
औषध्यः स्वप्रभालक्ष्म्या भ्राजमानाः सहस्रशः ॥ २१ ॥
केचित् क्षयनिभा देशाः केचिदुद्यानसन्निभाः ।
केचिदेकशिला भान्ति पर्वतस्यास्य भामिनि ! ॥ २२ ॥

बहुवचनान्तपाठो भावानित्यस्य विशेषणम् । लिङ्गव्यत्यय आर्ष इति तीर्थस्तत्र न किञ्चिदुक्तमर्थं पश्यामः ॥ १८ ॥

इदमेव नियमसहितं वनेऽवस्थानमेव अमृतं प्राहुः मोक्षसाधनं प्राहुः । मे प्रपितामहा मन्वादयः वनवासं प्रेत्य तत्कर्मीत्यागोत्तरं भवार्थाय भवः शिवो हिरण्यगर्भस्तल्लोकप्राप्तिरूपायार्थाय प्रयोजना याहुरित्येके । भवार्थाय संसारक्लेशनिवृत्तये इति कतको व्याचष्टे ॥१९॥

अभित इति पदम् ॥ २० ॥

अचलेन्द्रसम्बन्ध्यौषध्यः सकान्तिसम्पदा शोभमानाः । अग्निशिखा इव निशि भान्ति ॥ २१ ॥

क्षयनिभाः गृहसदृशाः । अतिनिबिडबहुपलाशवृक्षकत्वात । उद्यानसन्निभाः चम्पकमालत्यादिबाहुल्यात् । एकशिलाः अनेकजनावस्थानक्षमकशिलायुक्ताः ॥ २२ ॥

भित्त्वेव वसुधां भाति चित्रकूटः समुत्थितः।
चित्रकूटस्य कूटोऽयं दृश्यते सर्वतः शुभः ॥ २३ ॥
कुष्ठस्थगरपुन्नागभूर्जपत्रोत्तरच्छदान्।
कामिनां स्वास्तरान् पश्य कुशेशयदलायुतान् ॥ २४ ॥
मृदिताश्चापविद्धाश्च दृश्यन्ते कमलस्रजः।
कामिभिर्वनिते! पश्य फलानि विविधानि च ॥२५॥
वस्वौकसारां नलिनीमतीत्येवोत्तरान् कुरून्।
पर्वतश्चित्रकूटोऽसौ बहुमूलफलोदकः ॥ २६ ॥
एवन्तु कालं वनिते! विजिह्नवां-
स्त्वया च सीते! सह लक्ष्मणेन।

कूटोऽग्रभागः ॥ २३ ॥

कुष्ठमुत्पलमिति तीर्थः। स्थगरः पुत्रजीवकः। भूर्जः भूर्जपत्रवृक्षः। एतेषां पत्राण्युत्तरच्छदा येषां तान् कामिनां स्वास्तरान् आस्तरणानि। कुशेशयं पद्मं तद्दलैरासमन्तायुतानि पश्य ॥ २४ ॥

फलानि भुक्तानीति शेषः ॥ २५ ॥

वस्वौकसारा कुबेरनगरी। नलिनी शक्रनगरी। वस्वौकसारा श्रीदस्य शक्रस्य नलिनी पुरीति हरिः। अतीत्य शोभते इति शेषेणान्वयः ॥ २६ ॥

हे वनिते सीते परैः श्रेष्ठैः स्वैः शीर्यैर्नियमैः सह सतां पथि

रतिं प्रपत्स्ये कुलधर्मवर्द्धिनीं
सतां पथि स्वैर्नियमैः परैः स्थितः ॥ २७ ॥

इत्यार्षे रामायणे वाल्मीकीये अयोध्याकाण्डे
चित्तविनोदनं नाम चतुर्नवति-
तमः सर्गः ॥ ९४ ॥

स्थितः सन् । इमं कालं चतुर्दशवर्षमितं त्वया लक्ष्मणेन च सह विजङ्क्षिवान् प्राप्तविहारो यदि भविष्यामि तदा कुलधर्मवर्धिनीं रतिं सौख्यं प्रपत्स्ये प्राप्स्यामि ॥ २७ ॥

अष्टविंशतिश्लोका अर्चेति कतकः ॥ २८ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके
अयोध्याकाण्डे चतुर्नवतितमः सर्गः ॥ ९४ ॥

---

## पञ्चनवतितमः सर्गः ।



अथ शैलाद्विनिष्क्रम्य मैथिलीं कोशलेश्वरः

अदर्शयच्छुभजलां रम्यां मन्दाकिनीं नदीम् ॥ १ ॥

अब्रवीच्च वरारोहां चारुचन्द्रनिभाननाम्

विदेहराजस्य सुतां रामो राजीवलोचनः ॥ २ ॥

विचित्रपुलिनां रम्यां हंससारससेविताम् ।

कुसुमैरुपसम्पन्नां पश्य मन्दाकिनीं नदीम् ॥ ३ ॥

नानाविधैस्तीररुहैर्वृतां पुष्पफलद्रुमैः ।

राजन्तीं राजराजस्य नलिनीमिव सर्वतः ॥ ४ ॥

मृगयूथनिपीतानि कलुषाम्भांसि साम्प्रतम् ।

तीर्थानि रमणीयानि रतिं सञ्जनयन्ति मे ॥ ५ ॥

अथ नदीप्रदर्शनेनोपलालयति । अथेति ॥ १ ॥

वरारोहाम् उत्तमस्त्रीम् ॥ २ ॥

कुसुमैः पद्मादिभिः ॥ ३ ॥

पुष्पफलयुतैर्द्रुमैस्तीरभवैः राजन्तीं शोभमानाम् । राजराजः कुबेरस्तस्य नलिनी सौगन्धिकाख्या ॥ ४ ॥

जटाजिनधराः काले वल्कलोत्तरवाससः ।
ऋषयस्त्ववगाहन्ते नदीं मन्दाकिनीं प्रिये ! ॥ ६ ॥
आदित्यमुपतिष्ठन्ते नियमादूर्ध्ववाहवः
एते परे विशालाक्षि ! मुनयः संशितव्रताः ॥ ७ ॥
मारुतोद्धूतशिखरैः प्रनृत्त इव पर्वतः ।
पादपैः पुष्पपत्राणि सृजद्भिरभितो नदीम् ॥ ८ ॥
क्वचिन् मणिनिकाशोदां क्वचित् पुलिनशालिनीम् ।
क्वचित् सिद्धजनाकीर्णां पश्य मन्दाकिनीं नदीम् ॥ ९ ॥
निर्धूतान्वायुना पश्य विततान् पुष्पसञ्चयान् ।
पोप्लूयमानानपरान् पश्य त्वन्तनुमध्यमे ! * ॥ १० ॥

तीर्थानि अवतारमार्गाः रतिं प्रीतिम् ॥ ५ ॥ ६ ॥

उपतिष्ठन्ते मन्त्रोपस्थानं कुर्वते । एते परे मुनयः प्रकाशन्ते जपपरा इति शेषः ॥ ७ ॥

प्रनृत्य इव नृत्यं कर्त्तुमुपक्रान्त इव अतएव पुष्पाञ्जलिकरणं पादपैः ॥ ८ ॥

मणिनिकाशं मुक्तासदृशमुदकं यस्यास्ताम् ॥ ९ ॥

अम्भसि पोप्लूयमानान् पुनःपुनः प्लवमानान् पुष्पसञ्चयान् पश्य । पश्येहाचलमध्यमे इति पाठः । हाशलाचलनाशक्तमध्यवर्त्तीत्यर्थं इति कतकः ॥ १० ॥

---

* "जलमध्यगान्" इति वा पाठः ।

पश्यैतद्वल्गुवचसो रथाङ्गाह्वयना द्विजाः।
अधिरोहन्ति कल्याणि! निष्कूजन्तः शुभा गिरः॥ ११॥
दर्शनं चित्रकूटस्य मन्दाकिन्याश्च शोभने!।
अधिकं पुरवासाच्च मन्ये तव च दर्शनात्॥ १२॥
विधूतकल्मषैः सिद्धैस्तपोदमशमान्वितैः।
नित्यविक्षोभितजलां विगाहस्व मया सह॥ १३॥
सखीवच्च विगाहस्व सीते! मन्दाकिनीं नदीम्।
कमलान्यवमज्जन्ती पुष्कराणि च भामिनि!॥ १४॥
त्वं पौरजनवत् व्यालानयोध्यामिव पर्वतम्।
मन्यस्व वनिते! नित्यं सरयूवदिमां नदीम्॥ १५॥
लक्ष्मणश्चैव धर्मात्मा मन्निदेशे ह्यवस्थितः।
त्वञ्चानुकूला वैदेहि! प्रीतिञ्जनयती मम॥ १६॥
उपस्पृशंस्त्रिषवणं मधुमूलफलाशनः।
नायोध्यायै न राज्याय स्पृहयेद्य त्वया सह॥ १७॥

रथाङ्गाह्वयनाः चक्रवाकाः रथाङ्गं तद्वाचकः शब्दआह्वयने नामनि येषामिति विग्रहः। अधिरोहन्ति पुलिनानीति शेषः॥ ११॥

तव दर्शनाच्चाधिकं अधिकसुखावहम्॥ १२॥ १३॥

सखीवत् मन्दाकिन्या इति शेषः। कमलपुष्कारे रक्तसितपद्मे तानि अवमज्जन्ती प्रक्षिपन्ती॥ १४॥ १५॥ १६॥

उपस्पृशन् स्नानं कुर्वन्॥ १७॥

इमां हि रम्यां गजयूथलोडितां
निपीततोयां गजसिंहवानरैः ।
सुपुष्पितां पुष्पभरैरलङ्कृतां
न सोऽस्ति यः स्यान्न गतक्लमः सुखी ॥ १८ ॥
इतीव रामो बहुसङ्गतं वचः
प्रियासहायः सरितं प्रति ब्रुवन् ।
चचार रम्यं नयनांजनप्रभं
स चित्रकूटं रघुवंशवर्द्धनः ॥ १९ ॥

इत्यार्षे रामायणे वाल्मीकीये अयोध्याकाण्डे
विनोदनं नाम पञ्चनवति-
तमः सर्गः ॥ ९५ ॥

सुपुष्पितां सुपुष्पितवनां तामवगाह्य यः सुखी न स्यात् स नास्ती-
त्यन्वयः ॥ १८ ॥
सरितं प्रति सरितं वर्णयन् । नयनयोग्याञ्जनवन्नीलप्रभम् ॥ १९ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके
अयोध्याकाण्डे पञ्चनवतितमः सर्गः ॥ ९५ ॥

## षण्णवतितमः सर्गः । *

तां तदा दर्शयित्वा तु मैथिलीं गिरिनिम्नगाम् ।
निषसाद गिरिप्रस्थे सीतां मांसेन छन्दयन् ॥ १ ॥
इदं मेध्यमिदं स्वादु निष्टप्तमिदमग्निना ।
एवमास्ते स धर्मात्मा सीतया सह राघवः ॥ २ ॥
तथा तत्रासतस्तस्य भरतस्योपयायिनः ।
सैन्यरेणुश्च शब्दश्च प्रादुरास्तां नभस्पृशौ ॥ ३ ॥

मांसेन छन्दयन् । मांसविशेषप्रदर्शनेन लालयन् सान्त्वयन् । गिरिनिम्नगां मन्दाकिनीम् ॥ १ ॥

तेन लालनप्रकारमाह,—इदमिति । एवमित्यस्य ब्रुवन्निति शेषः ॥ २ ॥

आसतः गिरिप्रदेशे आसीनस्य । उपयायिनः रामसमीपे आगच्छतः भरतस्य सैन्यरेणुः सैन्यशब्दश्च प्रादुरास्तां प्रादुर्बभूवतुः ॥ ३ ॥

---

* रामस्तु नलिनीं रम्यां चित्रकूटस्य पर्वतम् ।
उत्तरे तु गिरेः पादे चित्रकूटस्य राघवः ॥ १ ॥

एतस्मिन्नन्तरे त्रस्ताः शब्देन महता ततः ।
अर्दिता यूथपा मत्ताः सयूथा दुद्रुवुर्दिशः ॥ ४ ॥
स तं सैन्यसमुद्भूतं शब्दं शुश्राव राघवः ।
तांश्च विप्रद्रुतान् सर्वान् यूथपानन्ववैक्षत ॥ ५ ॥
तांश्च विप्रद्रुतान् दृष्ट्वा तच्च श्रुत्वा महास्वनम् ।
उवाच रामः सौमित्रिं लक्ष्मणन्दीप्ततेजसम् ॥ ६ ॥
हन्त लक्ष्मण ! पश्येह सुमित्रासुप्रजास्त्वया ।
भीमस्तनितगम्भीरन्तुमुलः श्रूयते स्वनः ॥ ७ ॥
गजयूथानि चारण्ये महिषा वा महावने ।

एतस्मिन्नन्तरे सेनाशब्दप्रवृत्तिसमये ॥ ४ ॥
स राघवो रामः सैन्यसमुद्भूतं तदुत्पादितम् ॥ ५ ॥
स निःस्वनमिति पाठे स इति पदम् ॥ ६ ॥
भीमं भयङ्करं तत् स्तनितं मेघशब्दः तद्वद्गभीरं यथा भवति तथा योऽयं स्वनः श्रूयतेऽस्य कारणं पश्येति योजना ॥ ७ ॥

---

ददर्श कन्दरं रम्यं शिलाधातुसमन्वितम् ।
सुखप्रसेकैस्तरुभिः पुष्पभारावलम्बिभिः ॥ २ ॥
संवृतञ्च रहस्यञ्च मत्तद्विजगणायुतम् ।
तद्दृष्ट्वा सर्वभूतानां मनोदृष्टिहरं वनम् ॥ ३ ॥
उवाच सीतां काकुत्स्थो वनदर्शनविस्मितः ।
वैदेहि ! रमते चक्षुस्तत्रास्मिन् गिरिकन्दरे ॥ ४ ॥

वित्रासिता मृगाः सिंहैः सहसा प्रद्रुता दिशः ॥ ८ ॥
राजा वा राजपुत्रो वा मृगयामटते वने ।
अन्यद्वा श्वापदं किञ्चित् सौमित्रे ! ज्ञातुमर्हसि ॥ ९ ॥
सुदुश्चरो गिरिश्चायं पक्षिणामपि लक्ष्मण ! ।
सर्वमेतद्यथातत्त्वमभिज्ञातुमिहार्हसि ॥ १० ॥
स लक्ष्मणः सन्त्वरितः शालमारुह्य पुष्पितम् ।

यत् सहसा मृगाः प्रद्रुताः दिशस्तस्य कारणम् । तथा सिंहैर्वित्रासितानि गजयूथानि वा । अथ तैर्वित्रासिता महिषा वा दिशः प्रद्रुतास्तत्कारणञ्च पश्य । वा शब्दो चार्थे ॥ ८ ॥

तत्कारणमुन्नयन् स्वयमाह,—राजा वेति राजादिर्मृगयामटते ज्ञातुमर्हसि । अन्यद्वा श्वापदं दुष्टजन्तुः । वनं क्षोभयतीति शेषः ॥ ९ ॥ १० ॥

---

परिश्रमविघातार्थं साधु तावदिहास्यताम् ।
त्वदर्थमिह विन्यस्तास्तियं कृष्णासमा शिला ॥ ५ ॥
यस्याः पार्श्वे तरुः पुष्पैः प्रविष्ट इव केसरैः ।
राघवेणैवमुक्ता सा सीता प्रकृतिदक्षिणा ॥ ६ ॥
उवाच प्रणयस्निग्धमिदं श्लक्ष्णतरं वचः ।
अवश्यं कार्य्यं वचनं तव मे रघुनन्दन ! ॥ ७ ॥
बहुशो भ्रमितस्त्वाद्य तव चैवं मनोरथः ।
एवमुक्त्वा वरारोहा शिलां तामुपसर्प ह ॥ ८ ॥

प्रेक्षमाणो दिशः सर्वाः पूर्वां दिशमवैक्षत ॥ ११ ॥
उदङ्मुखः प्रेक्षमाणो ददर्श महतीं चमूम् ।
गजाश्वरथसम्बाधां यत्तैर्युक्तां पदातिभिः ॥ १२ ॥
तामश्वगजसंपूर्णां रथध्वजविभूषिताम् ।
शशंस सेनां रामाय वचनं चेदमब्रवीत् ॥ १३ ॥

सालो वृक्षः ॥ ११ ॥
यत्तैः सज्जैः ॥ १२ ॥
सेनां शशंस । सेनां श्रुतशब्दकारणामुक्तवान् ॥ १३ ॥

---

सह भर्त्रानवद्याङ्गी रन्तुकामा मनस्विनी ।
तामेवं ब्रुवतीं सीतां रामो वचनमब्रवीत ॥ ९ ॥
रम्यं पश्यमि भूतार्थे वनं पुष्पितपादपम् ।
पश्य देवि ! गिरौ रम्ये रम्यपुष्पाङ्कितानिमान ॥ १० ॥
गजदन्तक्षतान् वृक्षान् पश्य निर्यामवर्षिणः ।
झिल्लिकाविरुतैर्दीर्घैरुदतीव समन्ततः ॥ ११ ॥
पुत्रप्रियोसौ शकुनिः पुत्र पुत्रेति भाषते ।
मधुरां करुणां वाचं पुरेव जननी मम ॥ १२ ॥
विहगो भृङ्गराजोऽयं सालस्कन्धसमाश्रितः ।
सङ्गीतमिव कुर्वाणः कोकिलेनावकूजति ॥ १३ ॥
अयं वा बालकः शङ्के कोकिलानां विहङ्गमः ।
सुखबद्धमसम्बद्धं तथाह्येष प्रभाषते ॥ १४ ॥

अग्निं संशमयत्वार्यः सीता च भजतां गुहाम्।
सज्यं कुरुष्व चापञ्च शरांश्च कवचन्तथा ॥ १४ ॥
तं रामः पुरुषव्याघ्रो लक्ष्मणं प्रत्युवाच ह।
अङ्गावेक्षस्व सौमित्रे! कस्येमां मन्यसे चमूम् ॥ १५ ॥

अग्निं संशमयतु। परसैन्यादर्शनजक्षोभकालिकोऽयं व्यापारः सर्वजनसिद्धः। गुहाम् अन्तर्गृहं शरांश्च गृहाणेति शेषः ॥ १४ ॥

तं युद्धसन्नाहवादिनं रामो विमृश्यकारित्वादाह,—अङ्गेति। यामिमां चमूं भयहेतुं मन्यसे सा कस्येति अवेक्षस्वेत्यर्थः ॥ १५ ॥

---

एषा कुसुमिता नूनं पुष्पभारानता लता।
दृश्यते मामिवात्यर्थं श्रमाद्देवि! त्वमाश्रिता ॥ १५ ॥
एवमुक्ता प्रियस्याङ्के मैथिली प्रियभाषिणी।
भूयस्तरान्त्वनिन्द्याङ्गी समारोहत भामिनी ॥ १६ ॥
अङ्के तु परिवर्त्तन्ती सीता सुरसुतोपमा।
हर्षयामास रामस्य मनो मनसिजार्पितम् ॥ १७ ॥
स निर्घृष्याङ्गुलिं रामो धौते मनःशिलोच्चये।
चकार तिलकं तस्या ललाटे रुचिरं तदा ॥ १८ ॥
बालार्कसमवर्णेन तेजसा गिरिधातुना।
चकासे विनिविष्टेन स सन्ध्येव निशासिता ॥ १९ ॥
केसरस्य च पुष्पाणि करेणामृद्य राघवः।
अलकं पूरयामास मैथिल्याः प्रीतमानसः ॥ २० ॥

एवमुक्तस्तु रामेण लक्ष्मणो वाक्यमब्रवीत्।
दिधक्षन्निव तां सेनां रुषितः पावको यथा ॥ १६ ॥
सम्पन्नं राज्यमिच्छंस्तु व्यक्तं प्राप्याभिषेचनम्।
आवां हन्तुं समभ्येति कैकेय्या भरतः सुतः ॥ १७ ॥

रुषितः क्रुद्धः ॥ १६ ॥
अभिषेचनं राज्यं प्राप्य। सम्पन्नम् अकण्टकम् ॥ १७ ॥

---

अभिरम्य तदा तस्यां शिलायां रघुनन्दनः।
अन्वीयमानो वैदेह्या देशमन्यं जगाम ह ॥ २१ ॥
विचरन्ती तदा सीता ददर्श हरियूथपम्।
वने बहुमृगाकीर्णे वित्रस्ता राममाश्लिषत् ॥ २२ ॥
रामस्तां परिरब्धाङ्गी परिरभ्य महाभुजः।
सान्त्वयामास वामोरुमवभर्त्स्याथ वानरम् ॥ २३ ॥
मनःशिलायास्तिलकः सीतायाः सोऽथ वक्षसि।
समदृश्यत संक्रान्तो रामस्य विपुलौजसः ॥ २४ ॥
प्रजहास तदा सीता गते वानरपुङ्गवे।
दृष्ट्वा भर्त्तरि संक्रान्तमपाङ्ग समनःशिलम् ॥ २५ ॥
नातिदूरेऽत्वशोकानां प्रदीप्तमिव काननम्।
ददर्श पुष्पस्तवकैस्तर्जद्भिरिव वानरैः ॥ २६ ॥
वैदेहीत्यब्रवीद्राममशोककुसुमार्थिनी।
वयं तदभिगच्छामो वनमिक्ष्वाकुनन्दन ! ॥ २७ ॥

एष वै सुमहान् श्रीमान् विटपी सम्प्रकाशते।
विराजत्युज्ज्वलस्कन्धः कोविदारध्वजो रथे॥ १८॥
भजन्त्येते यथाकाममश्वानारुह्य शीघ्रगान्।
एते भ्राजन्ति संहृष्टा गजानारुह्य सादिनः॥ १९॥

तच्चिह्नमाह,—एष इति। य एष वृक्षो महान् संप्रकाशते तत्समीपे तं लक्षीकृत्य रथे कोविदारध्वजो विराजते॥ १८॥

भजति एतद्देशमागच्छन्ति। सादिनो गृहीतसादिचिह्ना गजारोहाः॥ १९॥

---

तस्याः प्रिये स्थितो रामो देव्या दिव्यार्थरूपया।
सहितस्तदशोकानां विशोकः प्रययौ वनम्॥ २८॥
तदाशोकवनं रामः सभार्य्यो व्यचरत्तदा।
गिरिपुत्र्या पिनाकीव सह हैमवतं वनम्॥ २९॥
तावन्योऽन्यमशोकस्य पुष्पैः पल्लवधारिभिः।
समलञ्चक्रतुरुभौ कामिनौ नीललोहितौ॥ ३०॥
आबद्धवनमालौ तौ कृतापीड़ावतंसकौ।
भार्य्यापतो तावचलं शोभयाञ्चक्रतुर्भृशम्॥ ३१॥
एवं स विविधान् देशान् दर्शयित्वा प्रियां प्रियः।
आजगामाश्रमपदं सुसंश्लिष्टमलङ्कृतम्॥ ३२॥
प्रत्युज्जगाम तं भ्राता लक्ष्मणो गुरुवत्सलः।
दर्शयन् विविधं धर्मं सौमित्रिः सुकृतं तदा॥ ३३॥

गृहीतधनुषावावां गिरिं वीर! श्रयावहे।
अपि द्रक्ष्यामि भरतं यत् कृते व्यसनं महत्॥ २०॥
अथवेहैव तिष्ठावः सन्नद्धावुद्यतायुधौ।
अपि नौ वशमागच्छेत् कोविदारध्वजो रणे॥ २१॥

अतो गृहीतधनुषाविति॥ २०॥
अपि नौ वशमागच्छेदिति कामप्रवेदने लिङ्। महद्व्यसनं त्वया प्राप्तमित्युत्तरेणान्वयः॥ २१॥

---

शुद्धबाणहतांस्तत्र मेध्यान् कृष्णमृगान् दश।
राशीकृतान् शुष्यमाणानन्यान् कांश्चन कांश्चन॥ ३४॥
तद्दृष्ट्वा कर्म सौमित्रेर्भ्राता प्रीतोऽभवत्तदा।
क्रियन्तां बलयश्चेति रामः सीतामथान्वशात्॥ ३५॥
अग्रं प्रदाय भूतेभ्यः सीताथ वरवर्णिनी।
तयोरुपददद्भ्रात्रोर्मधुमांसञ्च तद्भृशम्॥ ३६॥
तयोस्तुष्टिमथोत्पाद्य वीरयोः कृतशौचयोः।
विधिवज्जानकी पश्चाच्चक्रे सा प्राणधारणम्॥ ३७॥
शिष्टं मांसं निकृष्टं यच्छोषणायावकल्पितम्।
तद्रामवचनात् सीता काकेभ्यः पर्य्यरक्षत॥ ३८॥
तां ददर्श तदा भर्त्ता काकेनायासितां दृढम्।
यस्या हारान्तरचरः कामचारी विहङ्गमः॥ ३९॥
काकेनारोध्यमानां तां सा मुमोह तदातुरम्।

त्वया राघव! सम्प्राप्तं सीतया च मया तथा।
यन्निमित्तं भवान् राज्याच्च्युतो राघव! शाश्वतात् ॥२२॥
सम्प्राप्तोऽयमरिर्वीर! भरतो वध्य एव मे।
भरतस्य वधे दोषं नाहं पश्यामि राघव! । २३ ॥

यन्निमित्तं यस्माद्धेतोः ॥ २२ ॥
वध्यत्वे अयमेव हेतुः ॥ २३ ॥

---

सा चुकोपानवद्याङ्गी भर्तृप्रणयदर्पिता ॥ ४० ॥
इतश्चेतश्च तां काको वारयन्तीं पुनः पुनः।
पक्षतुण्डनखाग्रैश्च कोपयामास कोपनाम् ॥ ४१ ॥
तस्याः प्रस्फुरमाणौष्ठं भ्रुकुटीपुटसूचितम्।
मुखमालोक्य काकुत्स्थस्तं काकं प्रत्यषेधयत् ॥ ४२ ॥
स धृष्यमाणो विहगो रामवाक्यमचिन्तयन्।
सीतामभिपपातैव ततश्चुक्रोध राघवः ॥ ४३ ॥
सोऽभिमन्त्र्य शरैषीकामैषीकास्त्रेण वीर्यवान्।
काकं तमभिसन्धाय ससर्ज पुरुषर्षभः ॥ ४४ ॥
स तेनाभिद्रुतः काकस्त्रीन् लोकान् पर्य्यगात्ततः।
देवैर्दानवरः पक्षी द्वारान्तरचरो लघुः ॥ ४५ ॥
यत्र यत्रागमत्काकस्तत्र तत्र ददर्श ह।
इषीकाभूतसङ्काशं स रामं पुनरागमत् ॥ ४६ ॥
स मङ्क्त्वा न्यपतत्काको राघवस्य महात्मनः।

पूर्वापकारिणं हत्वा नह्यधर्मेण युज्यते ।
पूर्वापकारी भरतः त्यागे धर्मश्च राघव ! ॥ २४ ॥
एतस्मिन्निहते कृत्स्नामनुशाधि वसुन्धराम् ।
अद्य पुत्रं हतं संख्ये कैकेयी राज्यकामुका ॥ २५ ॥
मया पश्येत् सुदुःखार्त्ता हस्तिभिन्नमिव द्रुमम् ।
कैकेयीञ्च बधिष्यामि सानुबन्धां सबान्धवाम् ॥ २६ ॥

त्यागे बधे ॥ २४ ॥

संख्ये युद्धे । मया पश्येदित्युत्तरेणान्वयः । मृधमास्कन्दनं संख्यं समीकं सांपरायिकम् ॥ २५ ॥

---

सीतायास्तत्र पश्यन्त्या मानुषीभिरर्यादूरम् ॥ ४७ ॥
प्रसादं कुरु मे राम ! प्राणैः सामग्र्यमस्तु मे ।
अस्त्रस्यास्य प्रभावेण शरणं न लभे क्वचित् ॥ ४८ ॥
तं काकमब्रवीद्रामः पादयोः शिरसागतम् ।
सानुक्रोशतया धीमानिदं वचनमर्थवत् ॥ ४९ ॥
मया रोषपरीतेन सीताप्रियहितार्थिना ।
अस्त्रमेतत्समाधाय त्वद्बधायाभिमन्त्रितम् ॥ ५० ॥
यत्तु मे चरणौ मूर्द्धा गतस्त्वं जीवितेप्सया ।
अथास्त्यवेक्षा त्वयि मे रक्ष्यो हि शरणागतः ॥ ५१ ॥
अमोघं क्रियतामस्त्रमेकमङ्गं परित्यज ।
किमङ्गं शातयतु ते शरैषीका ब्रवीहि मे ॥ ५२ ॥

कलुषेणाद्य महता मेदिनी परिमुच्यताम् ।
अद्येमं संयतं क्रोधमसत्कारञ्च मानद ! ॥ २७ ॥
मोक्ष्यामि शत्रुसैन्येषु कक्षेष्विव हुताशनम् ।
अद्यैव चित्रकूटस्य काननं निशितैः शरैः ॥ २८ ॥
छिन्दंश्छत्रुशरीराणि करिष्ये शोणितोक्षितम् ।
शरैर्निर्भिन्नहृदयान् कुञ्जरांस्तुरगांस्तथा ॥ २९ ॥
श्वापदाः परिकर्षन्तु नरांश्च निहतान् मया ।
शराणां धनुषश्चाहमनृणोऽस्मिन् महावने ॥ ३० ॥

सानुबन्धां सकुञ्जाम् ॥ २६ ॥
कलुषेण पापेन कैकेयीरूपेण असत्कारं कैकेयीकृतम् ॥ २७ ॥ २८ ॥
॥ २९ ॥ ३० ॥

---

एतावद्धि मता शक्यं तव कर्त्तुं प्रियं खग ! ।
एकाङ्गहीनं त्वस्त्रेण जीवितं मरणाद्वरम् ॥ ५३ ॥
एवमुक्तस्तु रामेण सम्प्रधार्य्य स वायसः ।
अभ्यगच्छद्द्वयोरन्त्यास्त्यागमेकस्य पण्डितः ॥ ५४ ॥
सोऽब्रवीद्राघवं काको नेत्रमेकं त्यजाम्यहम् ।
एकनेत्रोऽपि जीवेऽहं त्वत्प्रसादान्नराधिप ! ॥ ५५ ॥
रामानुज्ञातमस्त्रं तत्काकस्य नयने पतत् ।
वैदेही विस्मिता तत्र काकस्य नयने हृते ॥ ५६ ॥

ससैन्यं भरतं हत्वा भविष्यामि न संशयः ॥ ३१ ॥

इत्यार्षे रामायणे वाल्मीकीये अयोध्याकाण्डे
क्रोधविजृम्भनं नाम षण्णवति-
तमः सर्गः ॥ ९६ ॥

भरतलक्ष्मणयोः समतया रामोपकरणत्वाल्लक्ष्मणस्य भरतविषये एवं वादः रामस्य तूभयोरपि स्वोपकरणत्वान्न क्वापि क्रोध इति तत्त्वमत्र ॥ ३१ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके
अयोध्याकाण्डे षण्णवतितमः सर्गः ॥ ९६ ॥

---

निपत्य शिरसा काको जगामाशु यथेप्सितम् ।
लक्ष्मणानुचरो रामश्चकारानन्तरक्रियाः ॥ ३७ ॥
अयं सर्गः प्रक्षिप्तः ।

## सप्तनवतितमः सर्गः ।

सुसंरब्धन्तु सौमित्रिं लक्ष्मणं क्रोधमूर्च्छितम् ।
रामस्तु परिसान्त्वय्याथ वचनं चेदमब्रवीत् ॥ १ ॥
किमत्र धनुषा कार्य्यमसिना वा सचर्म्मणा ।
महाबले महोत्साहे * भरते स्वयमागते ॥ २ ॥
पितुः सत्यं प्रतिश्रुत्य हत्वा भरतमाहवे † ।
किं करिष्यामि राज्येन सापवादेन लक्ष्मण ! ॥ ३ ॥
यद्‌द्रव्यं बान्धवानां वा मित्राणां वा क्षये भवेत् ।
नाहं तत्प्रतिगृह्णीयां भक्ष्यान् विषकृतानिव ॥ ४ ॥

अथ तत् क्रोधमपनयति भगवान् सर्वभूतभावज्ञस्तदागमनप्रयोजनकथनेन । भरतं प्रति सुसंरब्धम् अत्यन्तं युद्धोद्योगवन्तम् ॥ १ ॥

अत्र भरतविषये ॥ २ ॥

पितुः सत्यं पालयिष्यामीति प्रतिज्ञाय सापवादेन पित्रा भरताय दत्तं रामोपहृतवानित्येवंरूपापवादसहितेन ॥ ३ ॥

क्षये नाशे कृत इति शेषः ॥ ४ ॥

---

* "महेष्वासे महाप्राज्ञे" इति वा पाठः ।

† "आगतम्" इति वा पाठः ।

धर्ममर्थञ्च कामञ्च पृथिवीं चापि लक्ष्मण!।
इच्छामि भवतामर्थे एतत्प्रतिशृणोमि ते॥ ५॥
भ्रातॄणां संग्रहार्थञ्च सुखार्थं चापि लक्ष्मण!।
राज्यमप्यहमिच्छामि सत्येनायुधमालभे॥ ६॥
नेयं मम मही सौम्य! दुर्लभा सागरांवरा।
नहीच्छेयमधर्मेण शक्रत्वमपि लक्ष्मण!॥ ७॥
यद्विना भरतं त्वाञ्च शत्रुघ्नं वापि मानद!।
भवेन् मम सुखं किञ्चिद्भस्म तत् कुरुतां शिखी॥ ८॥
मन्येहमागतोयोध्यां भरतो भ्रातृवत्सलः।
मम प्राणैः प्रियतरः कुलधर्ममनुस्मरन्॥ ९॥
श्रुत्वा प्रव्राजितं मां हि जटावल्कलधारिणम्।
जानक्या सहितं वीर! त्वया च पुरुषोत्तम!॥ १०॥
स्नेहेनाक्रान्तहृदयः शोकेनाकुलितेन्द्रियः।

एतदुक्तार्थजातमुद्दिश्य प्रतिशृणोमि प्रतिजाने॥ ५॥

तमेवार्थं शपथेन दृढ़यति। भ्रातॄणामिति। संग्रहार्थं सम्यक्पालनार्थम्। अतएव तेषां सुखार्थञ्च॥ ६॥

दुर्लभेति नापितु सुलभैव किं तु तां नेच्छामि शक्रत्वमपि नेच्छेयम् इमां महीमेव नेच्छामि इति नेत्यर्थः॥ ७॥ ८॥

मन्येहमिति द्रष्टुमभ्यागत इति मन्ये इत्यन्वयः। आगतो मातुलगृहादिति शेषः। कुलधर्मं ज्येष्ठस्य राज्यमित्येवं रूपम्॥ ९॥ १०॥११॥

द्रष्टुमभ्यागतो ह्येष भरतो नान्यथा गतः ॥ ११ ॥
अम्बाञ्च कैकयीं रुष्य परुषञ्चाप्रियं वदन्।
प्रसाद्य पितरं श्रीमान् राज्यं मे दातुमागतः ॥ १२ ॥
प्राप्तकालं यदेषोऽस्मान् भरतो द्रष्टुमर्हति।
अस्मासु मनसाप्येष नाहितं किञ्चिदाचरेत् ॥ १३ ॥
विप्रियं कृतपूर्व्वन्ते भरतेन कदा नु किम्।
ईदृशं वा भयन्तेऽद्य भरतं यद्विशङ्कसे ॥ १४ ॥
न हि ते निष्ठुरं वाच्यो भरतो नाप्रियं वचः।
अहं ह्यप्रियमुक्तः स्यां भरतस्याप्रिये कृते ॥ १५ ॥
कथन्नु पुत्राः पितरं हन्युः कस्याञ्चिदापदि।
भ्राता वा भ्रातरं हन्यात् सौमित्रे! प्राणमात्मनः ॥ १६ ॥

रुष्य तद्विषयरोषं कृत्वेत्यर्थः। प्रसाद्य त्वद्दत्तं राज्यं मया प्राप्तं तन्मया रामाय दीयते अतो न ते सत्यभङ्गदोष इति तदनुमन्यस्वेति प्रसाद्य ॥ १२ ॥

यथैष भरतस्तथा एतत्कर्त्तृकमस्मद्दर्शनयोग्यत्वम् प्राप्तकालम् उचितम् ॥ १३ ॥

कृतपूर्वं यत् अद्य भरतं शङ्कसे। ईदृशं वा भयं भयजनकं वाक्यम् कृतपूर्वम् उक्तपूर्वं वा यदद्य भरतं शङ्कसे इत्यन्वयः ॥ १४ ॥

अतः ते त्वया भरतोऽप्रियं निष्ठुरं न वाच्यः। यतो भरतस्याप्रिये अप्रियवचने कृते उक्ते अहमपि अप्रियमुक्तः स्यां त्वया ॥ १५ ॥

यदि राज्यस्य हेतोस्त्वमिमां वाचं प्रभाषसे ।
वक्ष्यामि भरतं दृष्ट्वा राज्यमस्मै प्रदीयताम् ॥ १७ ॥
उच्यमानो हि भरतो मया लक्ष्मण ! तत्त्वतः ॥
राज्यमस्मै प्रयच्छेति बाढ़मित्येव मंस्यते ॥ १८ ॥
तथोक्तो धर्मशीलेन भ्रात्रा तस्य हिते रतः ।
लक्ष्मणः प्रविवेशेव स्वानि गात्राणि लज्जया ॥ १९ ॥
तद्वाक्यं लक्ष्मणः श्रुत्वा व्रीडितः प्रत्यवाच ह ।
त्वां मन्ये द्रष्टुमायातः पिता दशरथः स्वयम् ॥ २० ॥
व्रीडितं लक्ष्मणं दृष्ट्वा राघवः प्रत्युवाच ह ।
एष मन्ये महाबाहुरिहास्मान्द्रष्टुमागतः ॥ २१ ॥

आत्मनः प्राणं प्राणसमं भ्रातरमित्यन्वयः ॥ १६ ॥

इमां वाचं भरतवधविषयां प्रदीयतामिति वक्ष्यामीत्यन्वयः ॥ १७ ॥

ननु त्वदुक्तोपि स न दद्यात्तत्राह,—उच्यमान इति । प्रयच्छेत्युच्य-
ान इत्यर्थः । राज्यलिप्साचेत्तदेव दापयिष्यामि । किं भ्रातृवधेनेत्या-
[यः ॥ १८ ॥

लज्जया गात्राणि प्रविवेशेव अत्यन्तसङ्कुचितोभूदित्यर्थः । तस्य
ामस्य हिते रतः ॥ १९ ॥

एवमनुचितोक्तिलज्जापरिहारायोचितं वाक्यमाह,—तदिति ।
ारतप्रसङ्गस्तु त्वदाशयपरिज्ञमायैव केवलमुपन्यस्त इत्याशयः ॥ २० ॥

अथवा नौ ध्रुवं मन्ये मन्यमानः सुखोचितौ।
वनवासमनुध्याय गृहाय प्रतिनेष्यति॥ २२॥
इमां वाप्येष वैदेहीमत्यन्तसुखसेविनीम्।
पिता मे राघवः श्रीमान् वनादादाय यास्यति॥ २३॥
एतौ तौ सम्प्रकाशन्ते गोत्रवन्तौ मनोरमौ।
वायुवेगसमौ वीरौ! जवनौ तुरगोत्तमौ॥ २४॥
स एष सुमहाकायः कम्पते वाहिनीमुखे।
नागः शत्रुञ्जयो नाम वृद्धस्तातस्य धीमतः॥ २५॥
न तु पश्यामि तच्छत्रं पाण्डुरं लोकविश्रुतम्।

एवं पितृप्रसङ्गो लक्ष्मणस्य व्रीडापरिहारमल इति ज्ञात्वा तदेव अनुकुर्वन्नाह,—व्रीडितमिति। एषः लक्ष्मणप्रस्तावितः पिता॥ २१॥

नौ सुखोचितौ मन्यमानः। वनवासम् अनुध्याय कष्टं विचिन्त्य॥ २२॥

इमां सीताम्॥ २३॥

गोत्रवन्तौ प्रशस्तनामानौ प्रशस्तकुलौ वा। गात्रवन्ताविति पाठे प्रशस्तशरीरौ। जवनौ वेगवन्तौ॥ २४॥

पितुरागमने चिह्नान्तरमाह,—स एष इति। कम्पते चलति आगच्छति। अयं शत्रुञ्जयो रामेण सुयज्ञाय दत्तादन्य एव अतएव तातस्य शत्रुञ्जय इत्युक्तम्॥ २५॥

पितुर्दिव्यं महाभाग ! संशयो भवतीह मे ॥ २६ ॥
वृक्षाग्रादवरोह त्वं कुरु लक्ष्मण ! मद्वचः ।
इतीव रामो धर्मात्मा सौमित्रिं तमुवाच ह ॥ २७ ॥
अवतीर्य्य तु सालाग्रात् तस्मात् स समितिञ्जयः ।
लक्ष्मणः प्राञ्जलिर्भूत्वा तस्थौ रामस्य पार्श्वतः ॥ २८ ॥
भरतेनाथ सन्दिष्टा संमर्दो न भवेदिति ।
समन्तात् तस्य शैलस्य सेनावासमकल्पयत् ॥ २९ ॥
अध्यर्द्धमिक्ष्वाकुचमूर्योजनं पर्वतस्य ह ।
पार्श्वे न्यविशदावृत्य गजवाजिनराकुला ॥ ३० ॥
सा चित्रकूटे भरतेन सेना
धर्मं पुरस्कृत्य विधूय दर्पम् ।

इह कृत्तविषये ॥ २६ ॥

इतीव इत्येव। सौमित्रिं वृक्षाग्रस्थितम्। अथ वृक्षावरोहणमाज्ञापयति। वृक्षाग्रादिति। मद्वचः कुरु शङ्कां विहाय मद्वचसा सालावरोहणं कुर्वित्यर्थः ॥ २७ ॥

अवतीर्य्येति रामाज्ञयेति आदिः ॥ २८ ॥

रामाश्रमस्य सम्मर्दो न भवेदिति सन्दिष्टा आज्ञप्ता सेना शैलस्य समन्तात् दूरभागे वासमकल्पयत् ॥ २९ ॥

अध्यर्द्धं सार्द्धयोजनम् ॥ ३० ॥

प्रसादनार्थं रघुनन्दनस्य
विरोचते नीतिमता प्रणीता ॥ ३१ ॥

इत्यार्षे रामायणे वाल्मीकीये अयोध्याकाण्डे
रामलक्ष्मणसंवादो नाम सप्तनवति-
तमः सर्गः ॥ ९७ ॥

धर्मं पुरस्कृत्य दर्पं विधूय प्रणीता शिक्षिता सेना ॥ ३१ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके
अयोध्याकाण्डे सप्तनवतितमः सर्गः॥ ९७ ॥

---

## अष्टनवतितमः सर्गः ।

निवेश्य सेनान्तु विभुः पद्भ्यां पादवताम्वरः ।
अभिगन्तुं स काकुत्स्थमियेष गुरुवर्त्तकम् ॥ १ ॥
निविष्टमात्रे सैन्ये तु यथोद्देशं विनीतवत् ।
भरतो भ्रातरं वाक्यं शत्रुघ्नमिदमब्रवीत् ॥ २ ॥
क्षिप्रं वनमिदं सौम्य ! नरसङ्घैः समन्ततः ।
लुब्धैश्च सहितैरेभिस्त्वमन्वेषितुमर्हसि ॥ ३ ॥
गुहो ज्ञातिसहस्रेण शरचापासिपाणिना ।
समन्वेषतु काकुत्स्थावस्मिन् परिवृतः स्वयम् ॥ ४ ॥
अमात्यैः सहपौरैश्च गुरुभिश्च द्विजातिभिः ।

पादवतां चरप्राणिनां वरः श्रेष्ठो विभुर्भरतः गुरुवर्त्तकं गुरुशुश्रूषापरम् ॥ १ ॥

यथोद्देशम् अमुकस्यामुक दिशि वास इति स्वाम्युपदिष्टप्रदेशमनतिक्रम्य निविष्टे सैन्ये इत्यर्थः । विनीतवत् विनीतार्हं ॥ २ ॥

लुब्धाः निषादाः एभिः आसन्नैर्गुहभृत्यैः ॥ ३ ॥

ज्ञातिसहस्रेण परिवृत इत्यन्वयः ॥ ४ ॥

सह सर्वं चरिष्यामि पङ्कां परिवृतः स्वयम् ॥ ५ ॥
यावन्न रामं द्रक्ष्यामि लक्ष्मणं वा महाबलम् ।
वैदेहीं वा महाभागां न मे शान्तिर्भविष्यति ॥ ६ ॥
यावन्न चन्द्रसङ्काशं तद्द्रक्ष्यामि शुभाननम् ।
भ्रातुः पद्मविशालाक्षं न मे शान्तिर्भविष्यति ॥ ७ ॥
सिद्धार्थः खलु सौमित्रिर्यश्चन्द्रविमलोपमम् ।
मुखं पश्यति रामस्य राजीवाक्षं महाद्युतिम् ॥ ८ ॥
यावन्न चरणौ भ्रातुः पार्थिवव्यञ्जनान्वितौ ।
शिरसा प्रग्रहीष्यामि न मे शान्तिर्भविष्यति । ९ ॥
यावन्न राज्ये राज्यार्हः पितृपैतामहे स्थितः ।
अभिषेकजलक्लिन्नो न मे शान्तिर्भविष्यति ॥ १० ॥
कृतकृत्या महाभागा वैदेही जनकात्मजा ।
भर्त्तारं सागरान्तायाः पृथिव्या या नु गच्छति ॥ ११ ॥

चरिष्यामि अहमन्वेषयन्निति शेषः। पौरैः सह वर्त्तमानैरमात्यैर्द्विजातिभिः सह वर्त्तमानैर्गुरुभिश्च परिवृतः ॥ ५ ॥ ६ ॥

शुभाननमिति कर्मधारयः। शान्तिर्दुःखशान्तिः ॥ ७ ॥

चन्द्रविमलोपमं विमलचन्द्रसदृशम् ॥ ८ ॥

पार्थिवव्यञ्जनं रेखाध्वजकुलिशातपत्रादि तावन्मे न शान्तिरित्यन्वयः ॥ ९ ॥ १० ॥ ११ ॥

सुभगश्चित्रकूटोऽसौ गिरिराजसमो गिरिः।
यस्मिन् वसति काकुत्स्थः कुवेर इव नन्दने ॥ १२ ॥
कृतकार्य्यमिदं दुर्गं वनं व्यालनिषेवितम्।
यदध्यास्ते महाराजो रामः शस्त्रभृतां वरः ॥ १३ ॥
एवमुक्त्वा महाबाहुर्भरतः पुरुषर्षभः।
पद्भ्यामेव महातेजाः प्रविवेश महद्वनम् ॥ १४ ॥
स तानि द्रुमजालानि जातानि गिरिसानुषु।
पुष्पिताग्राणि मध्येन जगाम वदतां वरः ॥ १५ ॥
स गिरेश्चित्रकूटस्य सालमारुह्य सत्वरम् *।
रामाश्रमगतस्याग्नेर्ददर्श ध्वजमुच्छ्रितम् ॥ १६ ॥

गिरिराजसमः हिमवत्सदृशः ॥ १२ ॥

कृतकार्यं कृतार्थं स्थावरत्वमोचकरामपादरजो व्याप्ततयेति भावः। दुर्गं दुष्प्रवेशम्। व्यालाः सर्पाः ॥ १३ ॥ १४ ॥

द्रुमजालानि मध्येन द्रुमजालानां मध्ये इत्यर्थः। तद्योगे त्वनीति द्वितीया ॥ १५ ॥

अग्नेर्ध्वजं धूमं रामाश्रमगतस्यान्ते इति पाठे तदाश्रमगतस्य सालस्यान्ते उपरि बद्धम् उच्छ्रितं ध्वजं कोविदारध्वजं दृष्ट्वेत्यर्थः। धूमदर्शनस्य पूर्वमेव जातत्वेन तस्या निर्णायकत्वादिति कतकः ॥ १६

* "आसाद्य पुष्पितम्" इति वा पाठः।

तं दृष्ट्वा भरतः श्रीमान् मुमोद सह बान्धवैः।
अत्र राम इति ज्ञात्वा गतः पारमिवाम्भसः॥ १७॥

स चित्रकूटे तु गिरौ निशम्य
रामाश्रमं पुण्यजनोपपन्नम्।
गुहेन सार्द्धं त्वरितो जगाम
पुनर्निवेश्यैव चमूं महात्मा॥ १८॥

इत्यार्षे रामायणे वाल्मीकीये अयोध्याकाण्डे
भरतस्य चित्रकूटवनप्रवेशो नाम अष्ट-
नवतितमः सर्गः॥ ९८॥

तं ध्वजम्॥ १७॥

पुण्यजनास्तपस्विनः। पुनर्निवेश्य अन्वेषणनियोजितामपि चमूं स्थापयित्वा। गुहेनेति प्रधानजनोपलक्षणम्॥ १८॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके
अयोध्याकाण्डे अष्टनवतितमः सर्गः॥ ९८॥

## एकोनशततमः सर्गः ।

निविष्टायान्तु सेनायामुत्सुको भरतस्ततः ।
जगाम भ्रातरं द्रष्टुं शत्रुघ्नमनुदर्शयन् ॥ १ ॥
ऋषिं वसिष्ठं सन्दिश्य मातॄर्मे शीघ्रमानय ।
इति त्वरितमग्रे स जगाम गुरुवत्सलः ॥ २ ॥
सुमन्त्रस्त्वपि शत्रुघ्नमदूरादन्ववर्त्तत * ।
रामदर्शनजस्तर्षो भरतस्येव तस्य च ॥ ३ ॥

निविष्टायामिति । शत्रुघ्नमिति प्रतियोगे द्वितीया । शत्रुघ्नस्य रामाश्रमप्रत्यासत्तिचिह्नादि दर्शयन्नित्यर्थः ॥ १ ॥

आनयेति सन्दिश्य स्वयं त्वरितः सन्नग्रे जगाम । नतु मातॄः प्रतीक्ष्य स्थित इत्यर्थः ॥ २ ॥

रामदर्शनजस्तर्षः रादर्शनमुद्दिश्य जनितोऽभिलाषः स भरतवत्तस्य च शत्रुघ्नस्य सुमन्त्रस्य च । अतः शत्रुघ्नं भरतमनुधावन्तम् अदूरात्तत्समीपं यथा भवति तथान्ववर्त्तत अन्वधावत् ॥ ३ ॥

---

* "अन्वपद्यत" इति वा पाठः ।

गच्छन्नेवाथ भरतस्तापसालयसंस्थिताम्।
भ्रातुः पर्णकुटीं श्रीमानुटजञ्च ददर्श ह॥ ४॥
शालायास्त्वग्रतस्तस्या ददर्श भरतस्तदा।
काष्ठानि चावभग्नानि पुष्पाण्यपचितानि च॥ ५॥
लक्ष्मणस्य च रामस्य ददर्शाश्रममेयुषः।
कृतं वृक्षेष्वभिज्ञानं कुशचीरैः क्वचित् क्वचित्॥ ६॥
ददर्श भवने तस्मिन् महतः सञ्चयान् कृतान्।
मृगाणां महिषाणाञ्च करीषैः शीतकारणात्॥ ७॥

तापसानामालयैः सह संस्थिताम्। तापसालयसमानसंस्थानां पर्णकुटीं पर्णप्राधान्येन निर्मितां कुटीं शालाम्। इयं दर्शनार्थमागततपस्व्यादिसंव्यवहारप्रयोजना उटजबहिःस्था। उटजं सभित्तिकवाटं दारुबद्धं गृहं सीतानिवेशार्थं कृतम्॥ ४॥

तस्याः शालायाः पर्णकुटीसंज्ञायाः अवभग्नानि होमार्थम् अपचितानि बल्यर्थं सम्पादितानि॥ ५॥

एयुषः (प्राप्तवतः) आङ्पूर्वादिणः क्वसुः। कुशैर्वल्कलैश्च मार्गपरिज्ञानार्थं कृतम् अभिज्ञानं चिह्नं ददर्श॥ ६॥

शीतकारणाच्छीतनिवृत्तिकारणात् तद्रूपप्रयोजनार्थं मृगादीनाङ्करीषैः कृतान् सञ्चयान् ददर्श। चैत्रशुक्लदशम्यां प्रस्थानेन तत्र काले वैशाखान्समपरत्रे शीतस्य जायमानत्वात्॥ ७॥

गच्छन्नेव महाबाहुर्द्युतिमान् भरतस्तदा ।
शत्रुघ्नञ्चाब्रवीद्धृष्टस्तानमात्यांश्च सर्वशः ॥ ८ ॥
मन्ये प्राप्ताः स्म तं देशं भरद्वाजो यमब्रवीत् ।
नातिदूरे हि मन्येऽहं नदीं मन्दाकिनीमितः ॥ ९ ॥
उच्चैर्बद्धानि चीराणि लक्ष्मणेन भवेदयम् ।
अभिज्ञानकृतः पन्था विकाले गन्तुमिच्छता ॥ १० ॥
इतश्चोदात्तदन्तानां कुञ्जराणां तरस्विनाम् ।
शैलपार्श्वे परिक्रान्तमन्योन्यमभिगर्ज्जताम् ॥ ११ ॥
यमेवाधातुमिच्छन्ति तापसाः सततं वने ।
तस्यासौ दृश्यते धूमः सङ्कुलः कृष्णवर्त्मनः ॥ १२ ॥

एवमेतान् पदार्थान् पश्यन् गच्छन्नेव शत्रुघ्नमब्रवीत् ॥ ८ ॥

मन्दाकिनीमित अस्मात् प्रदेशात् ॥ ९ ॥

यत उच्चैर्बद्धानि चीराणि । तस्मात् विकाले मार्गस्य स्पष्टदर्शनायोग्ये काले जलाहरणाद्यर्थं गन्तुमिच्छता लक्ष्मणेनाभिज्ञानकृतः कृताभिज्ञानः आश्रमपन्थाः अयमेव भवेत् ॥ १० ॥

अभिज्ञानकरणकारणं वनमार्गं दर्शयति । इतश्चेति । इदश्चेति पाठान्तरम् । उदात्तदन्तानां महादन्तानां परिक्रान्तं परिक्रमणं स्यात् गमनमार्ग इति यावत् । तत्र गमननिवृत्त्यर्थश्चेदमभिज्ञानकरणमिति भावः ॥ ११ ॥

अत्राहं पुरुषव्याघ्रं गुरुसत्कारकारिणम् ।
आर्य्यं द्रक्ष्यामि संहृष्टो महर्षिमिव राघवम् ॥ १३ ॥
अथ गत्वा मुहूर्त्तन्तु चित्रकूटं स राघवः ।
मन्दाकिनीमनुप्राप्तस्तं जनञ्चेदमब्रवीत् ॥ १४ ॥
जगत्यां पुरुषव्याघ्र आस्ते वीरासने रतः ।
जनेन्द्रो निर्जनं प्राप्य धिङ्मे जन्म सजीवितम् ॥ १५ ॥
मत्कृते व्यसनं प्राप्तो लोकनाथो महाद्युतिः ।
सर्वान् कामान् परित्यज्य वने वसति राघवः ॥ १६ ॥
इति लोकसमाक्रुष्टः पादेष्वद्य प्रसादयन् ।
रामं तस्य पतिष्यामि सीताया लक्ष्मणस्य च ॥ १७ ॥
एवं स विलपंस्तस्मिन् वने दशरथात्मजः ।
ददर्श महतीं पुण्यां पर्णशालां मनोरमाम् ॥ १८ ॥

तापसा वने समाधातुं सायं प्रातर्होमार्थमिच्छन्ति तस्यायं दृश्यते धूमः ॥ १२ ॥ १३ ॥

स राघवः भरतः मन्दाकिनीमनु चित्रकूटं प्राप्त इत्यन्वयः । तं जनममात्यादिजनम् ॥ १४ ॥

वीरासने योगिनामासने ॥ १५ ॥ १६ ॥

इति लोकेन समाक्रुष्टः निन्दितो यस्मादतो मे जन्म धिक् । सोऽह-मेतदपयशःपरिहाराय रामं प्रसादयन् रामप्रसादहेतवे तस्य रामस्य

सालतालाश्वकर्णानां पर्णैर्बहुभिरावृताम् ।
विशालां मृदुविस्तीर्णां कुशैर्वेदिमिवाध्वरे ॥ १९ ॥
शक्रायुधनिकाशैश्च कार्मुकैर्भारसाधनैः ।
रुक्मपृष्ठैर्महासारैः शोभितां शत्रुबाधकैः ॥ २० ॥
अर्करश्मिप्रतीकाशैर्घोरैस्तूणगतैः शरैः ।
शोभितां दीप्तवदनैः सर्पैर्भोगवतीमिव ॥ २१ ॥
महारजतवासोभ्यामसिभ्याञ्च विराजिताम् ।
रुक्मविन्दुविचित्राभ्यां चर्मभ्याञ्चातिशोभिताम् ॥ २२ ॥
गोधाङ्गुलित्रैरासक्तैश्चित्रैः काञ्चनभूषितैः ।
अरिसङ्घैरनाधृष्यां मृगैः सिंहगुहामिव ॥ २३ ॥

पादेषु पूजायां बहुवचनम् । सीताया लक्ष्मणस्य च पादयोः पतिष्यामि । स्वापराधप्रसादनाय कनीयःस्वपि प्रणामो लोकप्रसिद्ध इति कतकः । अन्यस्तु शत्रुघ्नाज्ञात् सीतायाश्च पुनःपुनरिति पाठं कल्पयति ॥ १७ ॥ १८ ॥

सालाः वटपलाशादिदृढविशालपर्णवन्तो वृक्षाः । अश्वकर्णो वृक्षविशेषः ॥ १९ ॥

भारसाधनैः अतिगुरुकार्य्यसाधनैः । सारो बले स्थिरांशे च ॥२०॥

भोगवती नागलोकः ॥ २१ ॥

महारजतवासोभ्यां स्वर्णमयकोशाभ्याम् । चर्म फलकम् ॥ २२ ॥

प्रागुदक्प्रवणां वेदिं विशालां दीप्तपावकाम्।
ददर्श भरतस्तत्र पुण्यां रामनिवेशने॥ २४॥
निरीक्ष्य स मुहूर्त्तन्तु ददर्श भरतो गुरुम्।
उटजे राममासीनं जटामण्डलधारिणम्॥ २५॥
कृष्णाजिनधरन्तन्तु चीरवल्कलवाससम्।
ददर्श राममासीनमभितः पावकोपमम्॥ २६॥
सिंहस्कन्धं महाबाहुं पुण्डरीकनिभेक्षणम्।
पृथिव्याः सागरान्ताया भर्त्तारं धर्मचारिणम्॥ २७॥
उपविष्टं महाबाहुं ब्रह्माणमिव शाश्वतम्।
स्थण्डिले चर्मसंस्तीर्णे * सीतया लक्ष्मणेन च॥ २८॥
तं दृष्ट्वा भरतः श्रीमान् दुःखमोहपरिप्लुतः।

काञ्चनभूषितैर्गोधाङ्गुलित्रैरुपलक्षितामिति शेषः। सिंहगुहामिव पर्णशालां ददर्शेत्यन्वयः॥ २३॥

प्रागुदक्प्रवणाम् ईशानभागे निम्नाम्॥ २४॥

निरीक्ष्येति। अग्निमिति शेषः। गुरुं रामं ददर्श कृष्णाजिनेत्या-द्युच्यमानविशेषणं रामम्॥ २५॥

अभितः समीपे ददर्श॥ २६॥ २७॥

शाश्वतं ब्रह्माणं हिरण्यगर्भम्॥ २८॥

---

* "दर्भसंस्तीर्णे" इति वा पाठः।

अभ्यधावत धर्मात्मा भरतः कैकयीसुतः ॥ २९ ॥
दृष्ट्वैव विललापार्त्तो बाष्पसंदिग्धया गिरा ।
अशक्नुवन् धारयितुं धैर्य्याद्वचनमब्रुवन् ॥ ३० ॥
यः संसदि प्रकृतिभिर्भवेद्युक्त उपासितुम् ।
वन्यैर्मृगैरुपासीनः सोऽयमास्ते ममाग्रजः ॥ ३१ ॥
वासोभिर्बहुसाहस्रैर्यो महात्मा पुरोचितः ।
मृगाजिने सोऽयमिह प्रवस्ते धर्ममाचरन् ॥ ३२ ॥
अधारयद्यो विविधाश्चित्राः सुमनसः सदा * ।
सोऽयं जटाभारमिमं सहते राघवः कथम् ॥ ३३ ॥

अभ्यधावत धावन्निव त्वरया जगाम। अत्र भरतस्येव कवेरपि र्णनीयमयीभावेनातिहर्षाविष्टत्वादत्रप्रकरणे द्विरुक्तिर्न दोषाय॥ २९ ॥

दृष्ट्वैव दर्शनमात्रेणैवार्त्तः खिन्नः सन् ताश्वार्त्तिं धैर्याद्धारयितुमशक्नुवन्। अतएव बाष्पसन्दिग्धवर्णया गिरा वागिन्द्रियेण वचनमब्रुवन् ा व्यक्तं वदन् विललाप॥ ३० ॥

विलापप्रकारमाह,—यः संसदीति॥ ३१ ॥

वङ्कसहस्रद्रव्यमूल्यैर्वासोभिरलङ्कर्त्तुं यः पुरे उचितः स मृगाजिने अन्तरीयोत्तरीयरूपे मृगचर्मणि प्रवस्ते। धर्मं पितृवचनपरिपालनरूपम्॥ ३२ ॥ ३३ ॥

---

* "तदा" इति वा पाठः।

यस्य यज्ञैर्यथादिष्टैर्युक्तो धर्मस्य संचयः ।
शरीरक्लेशसम्भूतं स धर्मं परिमार्गते ॥ ३४ ॥
चन्दनेन महार्हेण यस्याङ्गमुपसेवितम् ।
मलेन तस्याङ्गमिदं कथमार्य्यस्य सेव्यते ॥ ३५ ॥
मन्निमित्तमिदं दुःखं प्राप्तो रामः सुखोचितः ।
धिग् जीवितं नृशंसस्य मम लोकविगर्हितम् ॥ ३६ ॥
इत्येवं विलपन् दीनः प्रस्विन्नमुखपङ्कजः ।
पादावप्राप्य रामस्य पपात भरतो रुदन् ॥ ३७ ॥
दुःखाभितप्तो भरतो राजपुत्रो महाबलः ।
उक्त्वार्य्येति सकृद्दीनं पुनर्नोवाच किञ्चन ॥ ३८ ॥
बाष्पैः पिहितकण्ठस्य प्रेक्ष्य रामं यशस्विनम् ।
आर्य्येत्येवाभिसंक्रुश्य व्याहर्तुं नाशकत्ततः ॥ ३९ ॥
शत्रुघ्नश्चापि रामस्य ववन्दे चरणौ रुदन् ।
तावुभौ च समालिङ्ग्य रामोऽप्यश्रूण्यवर्त्तयत् ॥ ४० ॥

यथादिष्टैर्यथाविहितैः ऋत्विक्क्लेशसाध्यैर्यस्य धर्मसञ्चयो युक्तः स स्वशरीरक्लेशेन सम्भूतमुत्पन्नं धर्मं मार्गते ॥ ३४ ॥

मलेन दण्डवत् चिषवणाप्लवमाचान्मलस्थितिरङ्गे ॥ ३५ ॥ ३६ ॥

पादावप्राप्येति दुःखातिशयवशात् ॥ ३७ ॥

तत एव पुनर्नोवाच ॥ ३८ ॥

ततः बाष्पावरुद्धकण्ठत्वात् ॥ ३९ ॥ ४० ॥

ततः सुमन्त्रेण गुहेन चैव
समीयतू राजसुतावरण्ये।
दिवाकरश्चैव निशाकरश्च
यथाम्बरे शुक्रबृहस्पतिभ्याम् ॥ ४१ ॥

तान् पार्थिवान् वारणयूथपाभान्
समागतांस्तत्र महत्यरण्ये।
वनौकसस्तेऽभिसमीक्ष्य सर्वे
त्वश्रूण्यमुञ्चन् प्रविहाय हर्षम् ॥ ४२ ॥

इत्यार्षे रामायणे वाल्मीकीये अयोध्याकाण्डे
समागमो नाम नवनवतितमः
सर्गः ॥ ९९ ॥

राजसुतौ रामलक्ष्मणौ ॥ ४१ ॥

अश्रूण्यमुञ्चन् प्रविहाय हर्षम्। पूर्वं तद्दर्शनजसन्तोषः पश्चात्तद्दुःख-दर्शनजदुःखादश्रुपाताश्च ॥ ४२ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके
अयोध्याकाण्डे नवनवतितमः सर्गः ॥ ९९ ॥

---

# शततमः सर्गः।

जटिलं चीरवसनं प्राञ्जलिं पतितं भुवि।
ददर्श रामो दुर्दर्शं युगान्ते भास्करं यथा॥ १॥
कथञ्चिदभिविज्ञाय विवर्णवदनं कृशम्।
भ्रातरं भरतं रामः परिजग्राह पाणिना॥ २॥
आघ्राय रामस्तं मूर्ध्नि परिष्वज्य च राघवम्।
अङ्के भरतमारोप्य पर्य्यपृच्छत सादरम्॥ ३॥
क्व नु तेऽभूत् पिता तात! यदरण्यं त्वमागतः।
न हि त्वं जीवतस्तस्य वनमागन्तुमर्हसि॥ ४॥

जटिलमिति। अद्य प्रभृति भूमौ तु शयिष्ये जटाचीराणि धारयन्नित्यष्टाशीतितमे भरतोक्तेर्भरतस्य जटिलत्वम्। यद्यपि नवतितमे सर्गे वसानो वाससी क्षौमे इति भरद्वाजदर्शनवेलायां श्रूयते तथापि गुहग्रामे प्रतिज्ञातस्य भरद्वाजाश्रमनिर्गमनानन्तरं धारणमिति न विरोधः। युगान्ते भास्करं यथेति भुवि पतितमिति शेषः॥ १॥ २॥

पर्य्यपृच्छत् समाहित इति पाठे समाहितः कुशलप्रश्नद्वारा धर्मबोधने सावधानचित्तः॥ ३॥

हे तात! ते पिता क्वाभूत् इह परञ्चवेत्यर्थः। कुत एवं संशय-

चिरस्य वत पश्यामि दूराद्भरतमागतम् ।
दुष्प्रतीकमरण्येऽस्मिन् किन्तात ! वनमागतः ॥
कच्चिन्नु धरते तात ! राजा यत्त्वमिहागतः ।
कच्चिन्नु दीनः सहसा राजा लोकान्तरङ्गतः ॥ ६ ॥
कच्चित् सौम्य ! न ते राज्यं भ्रष्टं बालस्य शाश्वतम् ।
कच्चिच्छुश्रूषसे तात ! पितुः सत्यपराक्रम ! ॥ ७ ॥
कच्चित् दशरथो राजा कुशली सत्यसङ्गरः ।

स्तत्राह,—नहीति । जीवतस्तस्य सेवां हित्वेति शेषः । नार्हसि मद्‌सन्निधौ तवैव पितृशुश्रूषाया अवश्यकर्त्तव्यत्वादिति भावः ॥ ४ ॥

दूरान्मातामहदेशात् चिरस्यागतं भरतं पश्यामि वनेति हर्षे । दुष्प्रतीकमिति भरतविशेषणं वनविशेषणञ्च । आद्ये कार्श्यवैवर्ण्यादिना दुर्ज्ञेयाकारं वनमपि भीषणतया । तथा ईदृशं वनं किमागतः किमागमनप्रयोजनं ईदृशारण्ये इत्यर्थः । अरण्यं गजाद्युपभोग्यं तद्भिन्नंवनमाम्रादियुतं मनुष्यभोग्यम् ॥ ५ ॥

अथ भरतागमनं राजाज्ञया वा स्यात् राजमरणे दुःखाद्वा । तत्राद्यमुत्प्रेक्ष्यति । कच्चिन्नु इति । धरते प्राणान् धारयति । अथवा लोकान्तरं गतः । यत्त्वमिहागत इत्यनुकर्षः ॥ ६ ॥

अन्त्यमेव पक्षमवलम्ब्याह,—न ते राज्यं भ्रष्टमिति । मूलप्रभेरत्ययात्प्राप्तभ्रंशकम् । अनिश्चयाल्लोकप्रतारणाय वा पुनर्जीवनपक्षमवलम्ब्याह,—कच्चिच्छुश्रूषस इति ॥ ७ ॥

राजसूयाश्वमेधानामाहर्त्ता धर्मनिश्चितः ॥ ८ ॥
स कच्चिद्ब्राह्मणो विद्वान् धर्मनित्यो महाद्युतिः।
इक्ष्वाकूणामुपाध्यायो यथावत् तात! पूज्यते ॥ ९ ॥
तात! कच्चिच्च कौशल्या सुमित्रा च प्रजावती।
सुखिनी कच्चिदार्य्या च देवी नन्दति कैकयी ॥ १० ॥
कच्चित् विनयसम्पन्नः कुलपुत्रो बहुश्रुतः।
अनसूयुरनुद्रष्टा सत्कृतस्ते पुरोहितः ॥ ११ ॥
कच्चिदग्निषु ते युक्तो विधिज्ञो मतिमानृजुः।
हुतञ्च होष्यमानञ्च काले वेदयते! सदा ॥ १२ ॥
कच्चित् देवान् पितॄन् भृत्यान् गुरून् पितृसमानपि।
वृद्धांश्च तात! वैद्यांश्च ब्राह्मणांश्चाभिमन्यसे ॥ १३ ॥

धर्मनिश्चितः धर्मे निश्चितं निश्चयो यस्य सः ॥ ८ ॥

उपाध्यायो वसिष्ठः ॥ ९ ॥

नन्दति मद्वनवास लब्धराज्यलाभाभ्यामिति व्यङ्ग्यम् ॥ १० ॥

कुलपुत्रो महाकुलप्रसूतः ते पुरोहितः तावकसकलहितकृत्यानुष्ठाता। एतेन वसिष्ठपुत्रः कश्चिदुक्तः ॥ ११ ॥

विधिज्ञः सकलहोमविधिज्ञः युक्तो नियुक्तः काले होमकाले वेदयते हुतं होष्यमाणञ्चाग्निम् ॥ १२ ॥

वैद्याः विद्यासु सर्वासु निपुणास्तान् ब्राह्मणानभिमन्यसे बहुमन्यसे। ब्राह्मणसामान्यविषयः प्रश्नोऽग्रे भविष्यति। यद्वा वैद्यान् चिकित्सा-

इष्वस्त्रवरसम्पन्नमर्थशास्त्रविशारदम् ।
सुधन्वानमुपाध्यायङ्कच्चित्त्वं नावमन्यसे ॥ १४ ॥
कच्चिदात्मसमाः शूराः श्रुतवन्तो जितेन्द्रियाः ।
कुलीनाश्चेङ्गितज्ञाश्च कृतास्ते तात ! मन्त्रिणः ॥ १५ ॥
मन्त्रो विजयमूलं हि राज्ञां भवति राघव ! ।
सुसंवृतो मन्त्रिधुरैरमात्यैः शास्त्रकोविदैः ॥ १६ ॥
कच्चिन्निद्रावशं नैषि कच्चित्कालेऽवबुध्यसे ।
कच्चिच्चापररात्रेषु चिन्तयस्यर्थनैपुणम् ॥ १७ ॥
कच्चिन्मन्त्रयसे नैकः कच्चिन्न बहुभिः सह ।

प्रवीणान् आम्नातानित्यर्थः । अपूतो ह्येषोऽमेध्यो योऽभिषज्यतीति श्रुत्युक्त-निन्दा तु शास्त्रानभिज्ञचिकित्साप्रवृत्तपरा । शास्त्राभिज्ञस्य भैषज्यं महते पुण्याय तज्जीविकापरो वा निषेध इति दिक् ॥ १३ ॥

इषुरमन्त्रो बाणप्रयोगः अस्त्रं समन्त्रः सः । वरशब्द उभयसम्बद्धः । अर्थशास्त्रं राजनीतिशास्त्रं तत्र विशारदं पण्डितं सुधन्वानं तन्नामानम् । उपाध्यायं धनुर्वेदाचार्य्यम् ॥ १४ ॥ १५ ॥

मन्त्रिधुरैः मन्त्रिश्रेष्ठैः शास्त्रकोविदैर्नीतिशास्त्रज्ञैः । सुसंवृतः सुतरां गुप्तः ॥ १६ ॥

अर्थनैपुणमर्थप्राप्त्युपायम् ॥ १७ ॥

नैकः एकेन मन्त्रे क्रियमाणे स्वकार्य्याभिनिवेशेन गुणागुणयोर्याथार्थ्यग्रहणं न सिध्यति । बहुभिर्मन्त्रणे प्रथममैकमत्यमेव न घटेत मन्त्र-

कच्चित्ते मन्त्रितो मन्त्रो राष्ट्रं न परिधावति ॥ १८ ॥
कच्चिदर्थं विनिश्चित्य लघुमूलं महोदयम्।
क्षिप्रमारभसे कर्तुं न दीर्घयसि राघव! ॥ १९ ॥
कच्चित्तु सुकृतान्येव कृतरूपाणि वा पुनः।
विदुस्ते सर्वकार्य्याणि न कर्त्तव्यानि पार्थिवाः ॥ २० ॥
कच्चिन्न तर्कैर्युक्त्या वा ये चाप्यपरिकीर्त्तिताः।
त्वया वा तव वामात्यैर्बुध्यते तात! मन्त्रितम् ॥ २१ ॥
कच्चित्सहस्रैर्मूर्खाणामेकमिच्छसि पण्डितम्।

भेदश्च भवेदिति भावः। राष्ट्रं न परिधावति लोकैर्न ज्ञायत इत्यर्थः ॥ १८ ॥

लघुमूलमल्पयत्नसाध्यं महोदयं महाफलम्। न दीर्घयसि न विलम्बयसि ॥ १९ ॥

पार्थिवाः सामन्ताः। ते मन्त्रितानि सर्वकार्य्याणि सुकृतानि निष्पन्नान्येव कृतरूपाणि कृतकल्पानि वा विदन्ति। न कर्त्तव्यानि भावित्वेनेत्यर्थः ॥ २० ॥

ये त्वदीया मन्त्रास्त्वयामात्यैश्चापरिकीर्त्तिता अपि युक्त्यार्थापत्त्या तर्कैस्तत्साध्यैरनुमानैर्वा। यद्वा तर्कास्तत्कारणानुमापकाः युक्तयः साक्षात्तदनुमापिकाः परैर्न बुध्यन्ते किल। किञ्च परकृतं मन्त्रितं त्वया तदमात्यैर्वा बुध्यते किल ॥ २१ ॥

सहस्रैस्त्यक्त्वैरपीति शेषः। पण्डित्यपरिग्रहे हेतुमाह,—पण्डित इति।

पण्डितो ह्यर्थकृच्छ्रेषु कुर्य्यान्निःश्रेयसं महत् ॥ २२ ॥
सहस्राण्यपि मूर्खाणां यद्युपास्ते महीपतिः।
अथवाप्ययुतान्येव नास्ति तेषु सहायता ॥ २३ ॥
एकोऽप्यमात्यो मेधावी शूरो दक्षो विचक्षणः।
राजानं राजपुत्रं वा प्रापयेन्महतीं श्रियम् ॥ २४ ॥
कच्चिन्मुख्या महत्स्वेव मध्यमेषु च मध्यमाः।
जघन्याश्च जघन्येषु भृत्यास्ते तात ! योजिताः * ॥ २५ ॥
अमात्यानुपधातीतान् पितृपैतामहान् शुचीन्।
श्रेष्ठान् श्रेष्ठेषु कच्चित्त्वं नियोजयसि कर्मसु ॥ २६ ॥
कच्चिन्नोग्रेण दण्डेन भृशमुद्वेजिताः प्रजाः।

अर्थकृच्छ्रेषु अर्थसङ्कटेषु निःश्रेयसङ्कुर्य्यात् अव्यभिचरितनिस्तारोपायबोधनेनेति शेषः ॥ २२ ॥

सहायता सहायकार्य्यक्षमता ॥ २३ ॥

विचक्षणोऽभ्यस्तनीतिशास्त्रः ॥ २४ ॥

मुख्या महान्तः ॥ २५ ॥

उपधा० उत्कोचस्तमतीतान् तदग्राहिणः। यद्वोपाधिप्रयुक्तासंश्रयरहिताम्। अतएव पितृपैतामहान् शुचीन् बाह्यान्तरेन्द्रियशुद्धान् ॥ २६ ॥

---

* "कर्मसु योजिताः" इति वा पाठः।

राष्ट्रे तवानुजानन्ति मन्त्रिण: केकयीसुत ! ॥ २७ ॥
कच्चित्त्वां नावजानन्ति याजका: पतितं यथा ।
उग्रप्रतिग्रहीतारं कामयानमिव स्त्रियः ॥ २८ ॥
उपायकुशलं वैद्यं भृत्यं सन्दूषणे रतम् ।
शूरमैश्वर्य्यकामञ्च यो न हन्ति स हन्यते ॥ २९ ॥
कच्चिद्धृष्टश्च शूरश्च धृतिमान् मतिमान् शुचि: ।
कुलीनश्चानुरक्तश्च दक्ष: सेनापति: कृत: ॥ ३० ॥

उद्वेजिताः प्रजा मन्त्रिणश्च राष्ट्रे तव त्वां नानुजानन्ति नावमन्यन्ते ॥ २७ ॥

याजकाः किच्चित्पापानुसन्धानेन पतितमिव त्वामयाज्योयमिति मत्वा नावजानन्ति किल। तत्र दृष्टान्तः। उग्रेत्यादि। स्त्रियः कुलस्त्रियः उग्राच्छुद्रीमजातीयस्त्रीप्रतिग्रहीतारं ताश्च कामयानं कामयमानं तस्यामत्यन्तासक्तं यथावजानन्तीत्यर्थ इति कतकः। उग्रप्रतीति पाठः। उग्रेण कर्मणा बलात्कारादिना प्रतिग्रहीतारं कामयानं कामुकं स्त्रिय इव याजकाः पतितमिव च नावजानन्ति प्रजा इति शेषः। प्रजातिक्रमणामुग्रकरग्रहणाच्च त्वयि नास्ति कच्चिदिति भाव इति तीर्थः। परन्तु उग्रप्रतिग्रहीतारम्। उग्रः शिवस्तत्प्रतिग्रहीतारमल्पमुक्तं तत्प्रतिग्रहीतुरिदृशपराकृतायाः कर्मविपाकशास्त्रे उक्तेरित्याहुः ॥ २८ ॥

उपायकुशलं सामाद्युपायचतुरं वैद्यं विद्याविदं राजनीतिशास्त्रज्ञम्। भृत्यं सन्दूषणे रतम्। येन केनापि हेतुना स्वामिभृत्यविघटने

बलवन्तश्च कच्चित्ते मुख्या युद्ध*विशारदाः ।
दृष्टापदाना विक्रान्तास्त्वया सत्कृत्य मानिताः ॥ ३१ ॥
कच्चिद्बलस्य भक्तञ्च वेतनञ्च यथोचितम् ।
सम्प्राप्तकालं दातव्यं ददासि न विलम्बसे ॥ ३२ ॥
कालातिक्रमणे ह्येव भक्तवेतनयोर्भृताः ।
भर्त्तुः कुप्यन्ति दुष्यन्ति सोऽनर्थः सुमहान् कृतः † ॥ ३३ ॥

रतम् । शूरं मरणानिभयम् । ऐश्वर्य्यकामं राज्याभिलाषिणं यो न हन्ति स वध्यते हन्यत इत्यर्थ इति तीर्थः । उपायकुशलं राज्ञः सकाशादर्थग्रहणार्थं व्याधिवर्धनोपायकुशलं वैद्यं भिषजम् । स्वामि-सन्दूषणे रतं भृत्यं सेवकञ्च राजाममर्पक्रिय तदैश्वर्य्यकामं शूरं सेवक-रूपं प्रभुञ्च यो न हन्ति स राजा तैरेव भिषजादिभिर्हन्यते इत्यर्थं कतक आह ॥ २९ ॥

शूराः परयोधाभिभवनसमर्थाः । धृतिमान् विपदि प्रशस्तधैर्य्यः दक्षः चतुरः ॥ ३० ॥

मुख्याः गणमुख्याः । दृष्टापदानाः दृष्टं द्वित्रिवारानुभूतं अपदानं पूर्ववृत्तं पौरुषं येषां ते । विक्रान्ताः शूराः ॥ ३१ ॥

भक्तं दैनन्दिनदेयान्नम् । वेतनं प्रतिमासदेयम् ॥ ३२ ॥

भृताः भृतिजीविनो भृत्याः ॥ ३३ ॥

---

* "मुख्यायुध" इति वा पाठः ॥

† "स्मृतः" इति वा पाठः ।

कच्चित्सर्वेऽनुरक्तास्त्वां कुलपुत्राः प्रधानतः।
कच्चित्प्राणांस्तवार्थेषु सन्त्यजन्ति समाहिताः॥ ३४॥
कच्चिज्जानपदो विद्वान् दक्षिणः प्रतिभानवान्।
यथोक्तवादी दूतस्ते कृतो भरत! पण्डितः॥ ३५॥
कच्चिदष्टादशान्येषु स्वपक्षे दशपञ्च च।
त्रिभिस्त्रिभिरविज्ञातैर्वेत्सि तीर्थानि चारणैः॥ ३६॥

कुलपुत्राः ज्ञातयः। प्रधानतः प्रधानाः॥ ३४॥

प्रतिभानवान् प्रत्युत्पन्नमतिः। यथोक्तवादी यथोक्तसन्देशप्रतिसन्देशवक्ता। पण्डितः परिच्छेत्ता। दूतश्चैव प्रकुर्वीतसर्वशास्त्रविशारदम्। इङ्गिताकारचेष्टाज्ञं शुचिं दक्षं कुलोद्भवमिति मनोः॥ ३५॥

कच्चिदष्टादशेति। तानि च मन्त्री॥ १॥ पुरोहितः॥ २॥ युवराजा॥ ३॥ सेनापतिः॥ ४॥ दौवारिकः॥ ५॥ अन्तःपुराधिकृतः॥ ६॥ बन्धनागाराधिकृतः॥ ७॥ धनाध्यक्षः॥ ८॥ राजाज्ञया आज्ञाप्येषु वक्ता॥ ९॥ प्राड्विवाकसंज्ञो व्यवहारप्रष्टा॥ १०॥ धर्मासनाधिकृतः॥ ११॥ व्यवहारनिर्णेता सभ्याख्यः॥ १२॥ सेनाया जीवितभृतिदानाध्यक्षः॥ १३॥ कर्मान्ते वेतनग्राहिणः॥ १४॥ नगराध्यक्षः॥ १५॥ राष्ट्रान्तपालः अयमेवाटविकः॥ १६॥ दुष्टानां दण्डनाधिकारी॥ १७॥ जलगिरिवनस्थलदुर्गपालाः॥ १८॥ एतान्येव स्वपक्षे मन्त्रिपुरोहितयुवराजान् हित्वा च पञ्चदश। एकैकस्मिन् विषये त्रिभिस्त्रिभिरविज्ञातैः परस्परमितरैश्चाभिज्ञातैः।

कच्चिद्व्यपास्तानहितान् प्रतियातांश्च सर्वदा ।
दुर्बलाननवज्ञाय वर्त्तसे रिपुसूदन ! ॥ ३७ ॥
कच्चिन्न लोकायतिकान् ब्राह्मणांस्तात ! सेवसे ।
अनर्थकुशला ह्येते बालाः पण्डितमानिनः ॥ ३८ ॥
धर्मशास्त्रेषु मुख्येषु विद्यमानेषु दुर्बुधाः ।
बुद्धिमान्वीक्षिकीं प्राप्य निरर्थं प्रवदन्ति ते ॥ ३९ ॥

एतान्यष्टादशतीर्थानि वेत्सि कच्चित् । येनो जलावतारे च मन्त्रशा-स्त्राष्टादशस्वपि । पुण्यक्षेत्रे तथा पात्रे तीर्थं स्याद्दर्शनेष्वपीति । स्वदेशेष्वेतैर्न्यायतो व्यवहारः प्रवर्त्तते न वेति विचारणीयं परदेशे चेति भावः ॥ ३६ ॥

व्यपास्तान्निष्कासितान् । प्रतियातान् पुनरागतान् दुर्बलान् दुर्बला-नपि । अनवज्ञायेति । दुर्बलोऽयमहितः किमस्माकं करिष्यतीत्युपेक्षां न करोषि कच्चित् ॥ ३७ ॥

लोकायतिकान् चार्वाकमतानुचारिणः प्रत्यक्षमात्रप्रमाणकान् । अपरे लोकायतिकाः शुष्कतर्कवावदूकाः । ब्राह्मणत्वेपि तदपरिग्रह-हेतुमाह,—अनर्थेति । परलोके तत्साधनाभावरूपानर्थप्रतिपादन-कुशलाः अतएव बालाः अज्ञाः वेदस्वसन्निधाविति शेषः । पण्डित-मानिनः । स्वयूथ्येष्वेव केवलमात्मनः पण्डितान्मन्यन्ते नान्यत्र ॥ ३८ ॥

द्वितीयलोकायतानां त्यागे हेतुमाह,— धर्मेत्यादि । मुख्येषु मुख्य-प्रमाणभूतेषु । आन्वीक्षिकी तर्कविद्या । शुष्कतर्कविद्याजनितां बुद्धि-

वीरैरध्युषितां पूर्वमस्माकं तात ! पूर्वकैः ।
सत्यनामां दृढ़द्वारां हस्त्यश्वरथसंकुलाम् ॥ ४० ॥
ब्राह्मणैः क्षत्रियैर्वैश्यैः स्वकर्मनिरतैः सदा ।
जितेन्द्रियैर्महोत्साहैर्वृतामार्य्यैः सहस्रशः ॥ ४१ ॥
प्रासादैर्विविधाकारैर्वृतां वैद्यजनाकुलाम् ।
कच्चित् समुदितां स्फीतामयोध्यां परिरक्षसि ॥ ४२ ॥
कच्चिच्चैत्यशतैर्जुष्टः सुनिविष्टजनाकुलः ।
देवस्थानैः प्रपाभिश्च तटाकैश्चोपशोभितः ॥ ४३ ॥
प्रहृष्टनरनारीकः समाजोत्सवशोभितः ।
सुकृष्टसीमापशुमान् हिंसाभिरभिवर्जितः ॥ ४४ ॥

सवलम्बत्र निरर्थं निष्प्रयोजनं वदन्ति। यथात्मनो ज्ञानाश्रयत्वम्। इच्छा जगन्निमित्तकारणम् नित्यज्ञानादिगुणकस्येत्यादिश्रुतिविरुद्धवादाभिप्रायमिदम् ॥ ३९ ॥

सत्यनामामयोध्येत्यन्वर्थनामाम् ॥ ४० ॥

आर्य्यैस्त्रैवर्णिकैः ॥ ४१ ॥

समुदितां प्रसिद्धाम्। स्फीतां समृद्धाम् ॥ ४२ ॥

चित्यशतैरश्वमेधान्तयागानेकचयनप्रदेशैः। कच्चिच्चैत्यशतैरिति पाठः। सुनिविष्टैः सुप्रतिष्ठितैर्जनैराकुलोनिबिड़ः॥ ४३ ॥

प्रभिन्ननरनारीक इति पाठे। प्रभेदः सन्तोषः। सुकृष्टाः सीमाः तत्तत् क्षेत्रप्रान्तदेशाः पशवश्च यस्मिन् स तथा ॥ ४४ ॥

अदेवमातृको रम्यः श्वापदैः परिवर्जितः ।
परित्यक्तो भयैः सर्वैः खनिभिश्चोपशोभितः ॥ ४५ ॥
विवर्जितो नरैः पापैर्मम पूर्वैः सुरक्षितः ।
कच्चिज्जनपदस्फीतः सुखं वसति राघव ! ॥ ४६ ॥
कच्चित्ते दयिताः सर्वे कृषिगोरक्षजीविनः ।
वार्त्तायां साम्प्रतं तात ! * लोकोऽयं सुखमेधते ॥ ४७ ॥
तेषां गुप्तिपरीहारैः कच्चित्ते भरणं कृतम् ।
रक्ष्या हि राज्ञा धर्मेण सर्वे विषयवासिनः ॥ ४८ ॥

अदेवमातृक इति नदीमातृक इत्यर्थः । नद्यम्बुजीवनो देशो नदीमातृक उच्यते । वृष्टिनिष्पाद्यसस्यस्तु विज्ञेयो देवमातृक इति । खनिः स्वर्णरत्नाद्याकरः । ईदृशो जनपदः सर्वभयैः परित्यक्तः कच्चिदस्ति ॥ ४५ ॥

स च सुखं वसति कच्चिदित्यर्थः ॥ ४६ ॥

कृषिगोरक्षजीविनो वैश्याः । वार्त्ता कृषिगोरक्षवाणिज्यक्रियं वार्त्तेत्युदाहृतं तत्र साम्प्रतं वर्त्तन्ते इति शेषः । लोको जीवलोकः कृष्यादौ स्थितः सुखमेधते कच्चित् ॥ ४७ ॥

गुप्तिपरीहारैः गुप्तिरिष्टप्रापणं परीहारोऽनिष्टपरिहारः तैस्तेषां कृष्यादिजीविनां भरणं कृतं कच्चिदिति तार्थः । गुप्तपरीहारैरिति

* "संश्रितस्तात" इति वा पाठः ।

कच्चित् स्त्रियः सान्त्वयसे कच्चित्ताश्च सुरक्षिताः।
कच्चिन्न श्रद्दधास्यासां कच्चिद् गुह्यं न भाषसे ॥ ४९ ॥
कच्चिन्नागवनं गुप्तं कच्चित्ते सन्ति धेनुकाः।
कच्चिन्न गणिकाश्वानां कुञ्जराणाञ्च तृप्यसि ॥ ५० ॥
कच्चिद्दर्शयसे नित्यं मानुषाणां विभूषितम्।
उत्थायोत्थाय पूर्वाह्णे राजपुत्र ! महापथे * ॥ ५१ ॥
कच्चिन्न सर्वे कर्मान्ताः प्रत्यक्षास्तेऽविशङ्कया।

पाठः। गुप्त्यर्थनियुक्तै राजमनुष्यैः क्रियमाणतस्करादनर्थपरिहारैस्ते त्वया भरणं कृतं कच्चिदिति कतकः ॥ ४८ ॥

ताः स्त्रियः सुरक्षितास्त्वयेत्यर्थः। न श्रद्दधास्यासामिति वचनादिकं वास्तवमिति शेषः। गुह्यम् अप्रकाश्यवृत्तान्तमिष्टेति मत्वा न भाषसे कच्चित् ॥ ४९ ॥

नागवनं गजोत्पत्तिस्थानभूतं वनम्। धेनुका धेनवः स्वार्थे कः। गणिकाः करिण्यः वेश्याकरिण्योर्गणिका। करिण्यादिसम्पादनविषये तृप्तिं नाप्नोषि कच्चित् ॥ ५० ॥

भूषितं सभायां स्थित्वात्मानमिति शेषः। तथा महापथे चात्मानं दर्शयसे ॥ ५१ ॥

कर्मान्ताः कर्मकराः अविशङ्कया निर्भयतया ते प्रत्यक्षा न किल वा अथवा सर्वे ते उत्सृष्टाः परित्यक्तदर्शना न। अत्र कर्मकर-

---

* "महारथ !" इति वा पाठः।

सर्वं वा पुनरुत्सृष्टा मध्यमेवात्र कारणम् ॥ ५२ ॥
कच्चिद्दुर्गाणि सर्वाणि धनधान्यायुधोदकैः ।
यन्त्रैश्च प्रतिपूर्णानि तथा शिल्पिधनुर्धरैः ॥ ५३ ॥
आयस्ते विपुलः कच्चित् कच्चिदल्पतरो व्ययः ।
अपात्रेषु न ते कच्चित् कोशो गच्छति राघव ! ॥ ५४ ॥
देवतार्थे च पित्रर्थे ब्राह्मणेभ्यागतेषु च ।
योधेषु मित्रवर्गेषु कच्चिद्गच्छति ते व्ययः ॥ ५५ ॥
कच्चिदार्य्योऽपि शुद्धात्मा क्षारितश्चोरकर्म्मणा ।
अदृष्टः शास्त्रकुशलैर्न लोभाद्बध्यते शुचिः ॥ ५६ ॥
गृहीतश्चैव पृष्टश्च काले दृष्टः सकारणः ।
कच्चिन्न मुच्यते चोरो धनलोभान्नरर्षभ ! ॥ ५७ ॥

विषये मध्यमेव नातिदर्शनादर्शनयोर्मध्यरीत्याकरणमेव कारणमर्थप्राप्तिकारणम् । ( निःशङ्कतया प्रवेशनेऽवज्ञादि सम्भवात् दर्शनाभावे कार्य्यहानिः स्यात् इति भावः ) ॥ ५२ ॥ ५३ ॥

आयो धनागमः व्ययो भोगबलरक्षाद्यर्थं त्यागः । अपात्रेषु नटगायकादिषु ॥ ५४ ॥

अभ्यागतोऽतिथिर्यैः कच्चिद्व्ययः आयात् न्यून इति शेषः ॥ ५५ ॥

आर्यः साधुः शुद्धात्मापि सन् । अपकर्मणा स्तेयागम्यागमनादिदोषेण क्षारितोऽभिशस्तः । शास्त्रकुशलैर्धर्मशास्त्रकुशलैरदृष्टएवानिर्णीतदोषएव । लोभाद्धनलोभात्कुचिरपि न बध्यते न दण्ड्यते कच्चित् ॥ ५६ ॥

व्यसने कच्चिदाढ्यस्य दुर्बलस्य च * राघव!।
अर्थं विरागाः पश्यन्ति तवामात्या बहुश्रुताः॥ ५८॥
यानि मिथ्याभिशस्तानां पतन्त्यश्रूणि राघव!।
तानि पुत्रपशून् घ्नन्ति प्रीत्यर्थमनुशासतः॥ ५९॥
कच्चिद् वृद्धांश्च बालांश्च वैद्यमुख्यांश्च राघव!।
दानेन मनसा वाचा त्रिभिरेतैर्बुभूषसे॥ ६०॥

गृहीतः पालकैर्धनस्वामिना वा। सकारणो दृष्टः चोरत्वेन ग्रहणकारणैर्युक्तो दृष्टः। पृष्टः प्रश्नेनापि निश्चितचौर्य्यः। धनलोभाच्चोरेणोत्कोचतया दीयमानधनलोभात्पालकेन मुच्यते कच्चित्॥ ५७॥

आढ्यस्य धनिकस्य दुर्बलस्य दरिद्रस्य च व्यसने विवादरूपसङ्कटे। राजकीयैकनिवर्त्ये प्राप्ते तवामात्या विरागाः सन्तः विगतधनरागाः सन्तः अर्थं तयोर्व्यवहारं पश्यन्ति कच्चित्॥ ५८॥

मिथ्याभिशस्तानां राज्ञाविचार्य्यानिवर्त्तितमिथ्याभियोगानां प्रजानां यान्यश्रूणि पतन्ति। पादन्यासानीति पाठान्तरं तदा जायन्ते इति शेषः आर्षं नपुंसकत्वम्। तानि प्रीत्यर्थं राज्यभोगजप्रीतिमात्रार्थं राज्यमनुशासतो राज्ञः पुत्रादीन् घ्नन्ति॥ ५९॥

वैद्याः भिषजः। दानमभिमतवस्तुनः। मनः स्नेहयुतम्। वाक् सान्त्वयुता। एतैस्त्रिभिः प्रत्येकं बुभूषसे प्राप्तुमिच्छसि वशीकर्त्तुमिच्छसि सम्भावयितुमिच्छसि वा कच्चित्॥ ६०॥

---

* "दुर्गतस्य" इति वा पाठः।

कच्चिद् गुरूंश्च वृद्धांश्च तापसान् देवतातिथीन् ।
चैत्यांश्च सर्वान् सिद्धार्थान् ब्राह्मणांश्च नमस्यसि ॥ ६१ ॥
कच्चिदर्थेन वा धर्मम् अर्थं धर्मेण वा पुनः ।
उभौ वा प्रीतिलोभेन कामेन न विबाधसे ॥ ६२ ॥
कच्चिदर्थञ्च कामञ्च धर्मञ्च जयतां वर ! ।
विभज्य काले कालज्ञ ! सर्वान् वरद ! सेवसे ॥ ६३ ॥
कच्चित्ते ब्राह्मणाः शर्म धर्मशास्त्रार्थकोविदाः ।
आशंसन्ते महाप्राज्ञ ! पौरजानपदैः सह ॥ ६४ ॥

चैत्यान् चतुष्पथस्थमहावृत्तान् देवतावासभूतान् । सिद्धार्थान् विद्यावृत्ततपोभिः कृतार्थितजन्मनो ब्राह्मणान् ॥ ६१ ॥

कच्चिदर्थेनेति । धर्मार्जनयोग्यपूर्वाह्णे अर्थार्जनेन धर्मबाधः । तथा तद्योग्यमध्याह्ने धर्मार्जनेन तद्बाधः । प्रीतिलोभेन कामेन विषय-सन्तोषलोभरूपेण कामेन तदुभयकालसेवितेन तयोर्बाध इति तीर्थः । अर्थप्राप्तिरूपेण हेतुना धर्मं न बाधसे धर्मं हित्वार्थं न गृह्णासीत्यर्थः । धर्मेण धर्मप्राप्तिहेतुना अर्थम् कुटुम्बनिर्वाहापेक्षितमर्थं न बाधसे उभयमपि विषयसन्तोषलोभेन गणिकाद्यासक्त्या बाधसे नेत्यर्थ इति कतकः ॥ ६२ ॥

विभज्य सेवसे । काले पूर्वाह्ण तदुत्तरकालसार्धयामोत्तररात्रि-रूपेण क्रमेण धर्मार्थकामसेवाकाले ॥ ६३ ॥

शर्मसुखमाशंसते प्रार्थयते ॥ ६४ ॥

नास्तिक्यमनृतं क्रोधं प्रमादं दीर्घसूत्रताम्।
अदर्शनं ज्ञानवतामालस्यं पञ्चवृत्तिताम्॥ ६५॥
एकचिन्तनमर्थानामनर्थज्ञैश्च मन्त्रणम् *।
निश्चितानामनारम्भं मन्त्रस्यापरिरक्षणम्॥ ६६॥
मङ्गलाद्यप्रयोगञ्च प्रत्युत्थानञ्च सर्वतः।
कच्चित् त्वं वर्जयस्येतान् राजदोषांश्चतुर्दश॥ ६७॥
दशपञ्चचतुर्वर्गान् सप्तवर्गञ्च तत्त्वतः।

प्रमादोऽनवधानता। दीर्घसूत्रश्चिरक्रियः तद्भावः। अवश्यकर्त्तव्यस्य विचारादिना कालविलम्बनम्। ज्ञानवतां विदुषामदर्शनम्। आलस्यं नित्यकृत्यालस्यम्। पञ्चवृत्तितां चक्षुरादिपञ्चेन्द्रियपरवशताम्॥ ६५॥

अर्थानां राज्यप्रयोजनानामेकेन चिन्तनम्। अनर्थज्ञैर्विपरीतदर्शिभिः। निश्चितानां मन्त्रिभिः सह कर्त्तव्यत्वेन निश्चितानामनारम्भम्॥ ६६॥

मङ्गलस्यादौ प्रातःकाले अप्रयोगमननुष्ठानम्। सर्वतः प्रत्युत्थानं सर्वदिगवस्थितरिपूद्देशेन युगपद्दण्डयात्रामित्यर्थ इति तीर्थः। कस्यचन-प्रत्युत्थानायोग्यं पुरुषमुद्दिश्यापि प्रभावमुक्त्वा चापल्यादासनाच्चलन-मित्यर्थ इति कतकः॥ ६७॥

दशवर्गादीन् बुध्वा यथावदनुमन्यसे तेषु त्याज्यांश्चमुपादेयांश्च ज्ञात्वानुजानासीति तृतीयस्थेन सम्बन्धः। दशवर्गस्तु मृगयाद्यौ

* "चिन्तनम्" इति वा पाठः।

अष्टवर्गं त्रिवर्गञ्च विद्यास्तिस्रश्च राघव ! ॥ ६८ ॥

इन्द्रियाणां जयं बुद्ध्वा षाड्गुण्यं दैवमानुषम् ।

दिवास्वापः परिवादः स्त्रियोमदः । तौर्यत्रिकम् वृथाट्या च कामजो दशको गण इति मनूक्तः । तौर्यत्रिकं नृत्यगीतवाद्यम् । वृथाट्या वृथापर्यटनम् । पञ्चवर्गस्तु औदकं पार्वतं वार्क्षमैरिणं धान्वनं तथा इति दुर्गं पञ्चविधं पञ्चवर्ग उदाहृतः । इरिणं सर्वसस्यशून्यप्रदेशः तत्सम्बन्धिदुर्गमैरिणं तस्यापि परैर्गन्तुमशक्यत्वात् । धान्वनम् उष्णकाले दुर्गं भवति । चतुवर्गस्तु सामदानञ्च भेदश्च दण्डश्चेति चतुर्गणः । सप्तवर्गस्तु, स्वाम्यमात्यश्च राष्ट्रञ्च दुर्गकोशौ बलं सुहृद् । परस्परोपकारीदं राज्यं सप्ताङ्गमुच्यते । अष्टवर्गस्तु, पैशुन्यं साहसं द्रोहमीर्ष्यासूयार्थदूषणम् । वाग्दण्डयोश्च पारुष्यं क्रोधजोऽपि गणोऽष्टक इति । कृषिवाणिज्यदुर्गसेतुकुञ्जरबन्धनखन्याकरकरादानशून्यनिवेशनान्यष्टवर्ग इति तीर्थः । त्रिवर्गो धर्मार्थकामाः उत्साहप्रभुमन्त्रशक्तित्रयं वा । तिस्रो विद्याः, त्रयी वार्त्ता दण्डनीतिः । त्रयी-वेदत्रयी वार्त्ता कृष्यादि दण्डनीतिर्नीतिशास्त्रम् ॥ ६८ ॥

इन्द्रियाणां जयं जयोपायं स च योगाभ्यास एव । षाड्गुण्यं षड्गुणाः । सन्धिर्नाविग्रहो यानमासनं द्वैधमाश्रय इति । द्वैधं शत्रुवर्गाणामुपजापः । दैवमानुषं दैवं मानुषञ्च व्यसनमित्यर्थः । हुताशनो जलं व्याधिर्दुर्भिक्षो मरकस्तथेत्येतद्दैवम् । मरको मरणनिमित्तं मार्य्यादि । मानुषन्तु आयुक्तकेभ्यश्चोरेभ्यः परेभ्यो राजवल्लभात् । पृथिवीपतिलोभाच्च व्यसनं मानुषन्त्विदमिति । आयुक्तका अधिकारिणः । कृत्यन्तु अलब्धवेतनो लुब्धो मानी चाप्यवमानितः । क्रुद्धश्च

कृत्यं विंशतिवर्गञ्च तथा प्रकृतिमण्डलम् ॥ ६८ ॥

कोपितोऽकस्मात्तथा भीतश्च भीषितः। भेद्याः शत्रौ तु चत्वारो नृपकार्यमिदं स्मृतम्। विंशतिवर्गस्तु असन्धेयो विग्राह्य एव। स च बालो वृद्धो दीर्घरोगी तथा ज्ञातिबहिष्कृतः। भीरुको भीरुजनको लुब्धो लुब्धजनस्तथा। विरक्तप्रकृतिश्चैव विषयेष्वतिशक्तिमान्। अनेकचित्तमन्त्रश्च देवब्राह्मणनिन्दकः। दैवोपहतकश्चैव दैवचिन्तक एव च। दुर्भिक्षव्यसनोपेतो बलव्यसनसंयुतः। अदेशस्थो बहुरिपुः युक्तो कालेन यश्च सः। सत्यधर्मारतश्चैव विंशतिः पुरुषा अमी। एतः सन्धिं न कुर्वीत विग्रही स्यात् केवलमिति। कृतकस्तु राज्यस्त्रीस्थानदेशानां ज्ञातिधनयोश्च यस्यापहारस्ते षट्। मदमानदेशपीडावन्तस्त्रयः। ज्ञानार्थशक्तिधर्माणां येषां विघातस्ते चत्वारः। दैवचिन्तकः, रिपुमित्रावमन्तारौ, बन्धुविनाशनं यस्य, लोकानुग्रहरहितः, दूषितमण्डलः एकार्थाभिनिवेशित्वं यस्य, एते विग्राह्या एवेत्याह। प्रकृतयश्च मण्डलञ्च प्रकृतिमण्डलम्। प्रकृतिवर्गस्तु अमात्यो राष्ट्रदुर्गाणि कोषो दण्डश्च पञ्चमः। एताः प्रकृतयस्तज्ज्ञैर्विजिगीषोरुदाहृता इति। मण्डलं द्वादशराजमण्डलम्। तत्र विजीगिषुमध्ये। अरिर्मित्रमरेर्मित्रं मित्रामित्रमतःपरम्। मित्रारिमित्रमित्रञ्च विजिगीषोः पुरःसराः। पार्ष्णिग्राहस्ततः पश्चादाक्रन्दस्तदनन्तरम्। आसारावनयोश्चैव विजिगीषोस्तु पृष्ठतः। आसारौ पार्ष्णिग्राहासाराक्रन्दासाराविति। आसारपृष्ठभागस्थौ मध्यमोदासीनाविति। अरेश्च विजिगीषोश्च मध्यमो भूम्यनन्तरः। अनुग्रहे संहतयोर्व्यस्तयोर्निग्रहे प्रभुरिति। मण्डलाद्बहिरेतेषामुदासीनो बलाधिकः। अनुग्रहे संहतानां व्यस्तानाञ्च बधे प्रभुरिति ॥६८॥

यात्रा दण्डविधानञ्च द्वियोनी सन्धिविग्रहौ ।
कच्चिदेतान् महाप्राज्ञ ! यथावदनुमन्यसे ॥ ७० ॥
मन्त्रिभिस्त्वं यथोद्दिष्टं चतुर्भिस्त्रिभिरेव वा ।
कच्चित् समस्तैर्व्यस्तैश्च मन्त्रं मन्त्रयसे बुध ! * ॥ ७१ ॥

यात्रा यानं तच्च पञ्चविधम् । विगृह्य सन्धाय तथासम्भूयाथ प्रसङ्गतः । उपेक्ष्य चेति निपुणैर्यानं पञ्चविधं स्मृतम् । बलवत्तया पार्ष्णिग्राहादिभिर्विगृह्य अन्यत्र शत्रौ यानं विगृह्ययानम् । तैः सन्धायान्यत्र यानं सन्धाययानम् । सामन्तैः सह यानं सम्भूययानम् । अन्योद्देशेन यात्राप्रसङ्गमुत्पाद्यान्यं प्रति यानं प्रसङ्गयानम् । बलवत्तया शत्रुमुपेक्ष्य तस्य मित्रेषु यानमुपेक्ष्ययानम् । दण्डविधानं दण्डः सेना तद्विधानं व्यूहरचनाभेदः । दण्डो यमे मानभेदे लकुटे मदसैन्ययोः । द्वियोनी सन्धिविग्रहाविति सन्धिविग्रहयानेत्यादि षट्गुणानां मध्ये सन्धिविग्रहौ द्वयोर्योनी तत्र द्वैधीभावसमाश्रयो सन्धियोनिकौ यानासने विग्रहयोनिके इति भेदः । तत्र द्वैधीभावो नाम बलिनोर्द्विषतो-र्मध्ये वाचात्मानं समर्पयन् । द्वैधीभावेन वर्त्तेत काकाक्षिवदलक्षित-मिति । अरिभिः पीड्यमानस्य बलवदाश्रयणं समाश्रयः । कालप्रती-क्षया तूष्णीमवस्थानमासनम् ॥ ७० ॥

यथोद्दिष्टं नीतिशास्त्रोक्तमन्त्रविचारमार्गमनतिक्रम्येत्यर्थः । यथो-द्दिष्टैरिति पाठे मन्त्रिलक्षणलक्षितैरित्यर्थः । व्यस्तैरेकैकशः । एवं हि

---

* "मिथः" इति वा पाठः ।

कच्चित्ते सफला वेदाः कच्चित्ते सफलाः क्रियाः।
कच्चित्ते सफला दाराः कच्चित्ते सफलं श्रुतम्॥ ७२॥
कच्चिदेषैव ते बुद्धिर्यथोक्ता मम राघव!।
आयुष्या च यशस्या च धर्मकामार्थसंहिता॥ ७३॥
यां वृत्तिं वर्त्तते तातो याश्च नः प्रपितामहाः।
तां वृत्तिं वर्त्तसे कच्चिद् या च सत्पथगा शुभा॥ ७४॥
कच्चित् स्वादुकृतं भोज्यमेको नाश्नासि राघव!।
कच्चिदाशंसमानेभ्यो मित्रेभ्यः संप्रयच्छसि॥ ७५॥

तत्तन्मनःपरिज्ञानं भवति। त्रिभिश्चतुर्भिरित्यनेन न वऊभिर्नैकेनेति सूचितम्॥ ७१॥

वेदाः सफलास्तद्विहितकर्मप्रवृत्त्या। क्रिया राजकार्य्याणि तत्तदुद्देश्यफलयुक्तानि। यद्वा क्रियाः सम्पादितधनादीनि क्रियास्तेषां सफलत्वञ्च दानभोगाभ्याम्। दाराणां सफलत्वं धर्मरतिप्रजाभिः। श्रुतसाफल्यम् विनीतत्वम्॥ ७२॥

उक्ता एषा बुद्धिर्यया मम तथैव तवापि वर्त्तते कच्चित्। कच्चिदेष्वेवेति पाठान्तरम्॥ ७३॥

सत्पथगा शिष्टानुष्ठानमार्गगा॥ ७४॥

स्वादुकृतं स्वादुतया कृतं सिद्धम्। आशंसमानेभ्यः स्नेहवृद्ध्यपेक्षयेच्छद्भ्यः मित्रेभ्यः स्निग्धेभ्यः॥ ७५॥

राजा तु धर्मेण हि पालयित्वा
महीपतिर्दण्डधरः प्रजानाम् ।
अवाप्य कृत्स्नां वसुधां यथाव-
दितश्च्युतः स्वर्गमुपैति विद्वान् ॥ ७६ ॥

इत्यार्षे रामायणे वाल्मीकीये अयोध्याकाण्डे
कच्चित् सर्गो नाम शततमः
सर्गः ॥ १०० ॥

महीपतिः राजा क्षत्रियः इतश्च्युतः एतद्देहलोकाभ्याम् ॥ ७६ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके
अयोध्याकाण्डे शततमः सर्गः ॥ १०० ॥

---

## एकाधिकशततमः सर्गः ।

तन्तु रामः समाज्ञाय भरतं गुरुवत्सलम् ।
लक्ष्मणेन सह भ्राता प्रष्टुं समुपचक्रमे ॥ १ ॥
किमेतदिच्छेयमहं श्रोतुं प्रव्याहृतं त्वया ।
यस्मात्त्वमागतो देशमिमं चीरजटाजिनी ॥ २ ॥
यन्निमित्तमिमं देशं कृष्णाजिनजटाधरः ।
हित्वा राज्यं प्रविष्टस्त्वं तत् सर्वं वक्तुमर्हसि ॥ ३ ॥
इत्युक्तः कैकयीपुत्रः काकुत्स्थेन महात्मना ।
प्रगृह्य बलवद्भूयः प्राञ्जलिर्वाक्यमब्रवीत् ॥ ४ ॥

एवं कश्चित् प्रश्नानन्तरं स्वस्य राजत्वाभावं सूचयितुं तदुत्तरमप्रयच्छन्तं भरतं प्रति रामेणागमनप्रयोजनप्रश्नः । तन्त्विति । समाज्ञाय कुशलप्रश्नव्याजेन सर्वधर्मान् ज्ञापयित्वा । यद्वा प्राप्तराज्यपरित्यागेन जटादिधारणेन गुरौ स्वस्मिन् भक्तियुक्तं ज्ञात्वा ॥ १ ॥

यस्मात्त्वमिमं देशं चीरजटाजिनी भूत्वा आगतोऽसि । तस्मादेवंरूपेणागमनं किं कारणकमिति त्वया प्रस्पष्टं व्याहृतं श्रोतुमहमिच्छेयम् ॥ २ ॥

एतस्यैव श्लोकस्य व्याख्यानं यदितिं ॥ ३ ॥

आर्य्य! तातः परित्यज्य कृत्वा कर्म सुदुष्करम् ॥
गतः स्वर्गं महाबाहुः पुत्रशोकाभिपीड़ितः ॥ ५ ॥
स्त्रिया नियुक्तः कैकेय्या मम मात्रा परन्तप! ।
चकार सा महत् पापमिदमात्मयशोहरम् ॥ ६ ॥
सा राज्यफलमप्राप्य विधवा शोककर्शिता ।
पतिष्यति महाघोरे नरके जननी मम ॥ ७ ॥
तस्य मे दासभूतस्य प्रसादं कर्त्तुमर्हसि ।
अभिषिञ्चस्व चाद्यैव राज्येन मघवानिव ॥ ८ ॥
इमाः प्रकृतयः सर्वा विधवा मातरश्च याः ।
त्वत्सकाशमनुप्राप्ताः प्रसादं कर्त्तुमर्हसि ॥ ९ ॥

प्रगृह्य बलवत् यथा तथा शोकं निगृह्येत्यर्थः ॥ ४ ॥

पूर्वपृष्टमेवार्थं क्व नु तेऽभूत् पितेत्येवं रूपं भंग्यन्तरेण पुनःपृष्टं ज्ञात्वा तदुत्तरमाह,—आर्य्येति। परित्यज्य अस्मान् सर्व्वानिमञ्च लोकमिति शेषः। आर्य्यं परित्यज्येति पाठे विवास्येत्यर्थः। सुदुष्करं कर्म ज्येष्ठार्हं राज्यं कनिष्ठसात् कृत्वा ॥ ५ ॥

मम मात्रा कैकेय्या नियुक्त इति पूर्वश्लोकान्वयि। सा चकारेत्यन्वयः। सुमहदिति पाठे सेत्यध्याहारः ॥ ६ ॥ ७ ॥

एवं पितृमरणे श्रुते तदुचितकृत्ये कृते ततः परं यद्वक्तव्यं तत्संक्षेपेणाधुनैव ब्रूते भरतः। तस्य मे इति। कैकेयीपुत्रत्वात् प्राप्तापवादस्य राज्येन राज्यनिमित्तम् ॥ ८ ॥

तथानुपूर्व्या युक्तश्च युक्तश्चात्मनि मानद!।
राज्यं प्राप्नुहि धर्मेण सकामान् सुहृदः कुरु ॥ १० ॥
भवत्वविधवा भूमिः समग्रा पतिना त्वया।
शशिना विमलेनेव शारदी रजनी यथा ॥ ११ ॥
एभिश्च सचिवैः सार्द्धं शिरसा याचितो मया।
भ्रातुः शिष्यस्य दासस्य प्रसादं कर्त्तुमर्हसि ॥ १२ ॥
तदिदं शाश्वतं पित्र्यं सर्वं सचिवमण्डलम्।
पूजितं पुरुषव्याघ्र! नातिक्रमितुमर्हसि ॥ १३ ॥
एवमुक्त्वा महाबाहुः सबाष्पः कैकयीसुतः।
रामस्य शिरसा पादौ जग्राह भरतः पुनः ॥ १४ ॥
तं मत्तमिव मातङ्गं निःश्वसन्तं पुनः पुनः।

यस्मान्मातरो वयञ्च सर्वे त्वत्प्रसादनार्थमागताः ॥ ९ ॥

यतश्च त्वमानुपूर्व्या ज्येष्ठत्वलक्षणया युक्तः यतश्चात्मनि त्वयि अभिषेचनं युक्तं तस्माद्धर्मेण राज्यं प्राप्नुहि ॥ १० ॥

रजनी यथा तादृशी भूमिः शशिनेव त्वया युताऽविधवा भवतु इत्यन्वयः। पतिनेत्यार्षम्। विमलेनेहेति पाठान्तरम् ॥ ११ ॥ १२ ॥

शाश्वतं परम्पराप्राप्तं सचिवमण्डलम् तत्प्रार्थनं पूर्वं सदा पूजितं सफलं कृतं तदिदानीमतिक्रमितुं नार्हसि ॥ १३ ॥ १४ ॥

मत्तमथाप्यकस्मात् प्राप्तदुःखेन निःश्वसन्तं मातङ्गमिव स्थितं भरतमित्यन्वयः ॥ १५ ॥

भ्रातरं भरतं रामः परिष्वज्येदमब्रवीत् ॥ १५ ॥
कुलीनः सत्वसम्पन्नस्तेजस्वी चरितव्रतः ।
राज्यहेतोः कथं पापमाचरेन्मद्विधो जनः ॥ १६ ॥
न दोषं त्वयि पश्यामि सूक्ष्ममप्यरिसूदन ! ।
न चापि जननीं बाल्यात्त्वं विगर्हितुमर्हसि ॥ १७ ॥
कामकारो महाप्राज्ञ ! गुरूणां सर्वदानघ ! ।
उपपन्नेषु दारेषु पुत्रेषु च विधीयते ॥ १८ ॥
वयमस्य यथालोके संख्याताः सौम्य ! साधुभिः ।
भार्य्याः पुत्राश्च शिष्याश्च त्वमपि ज्ञातुमर्हसि ॥ १९ ॥
वने वा चीरवसनं सौम्य ! कृष्णाजिनांवरम् ।
राज्ये वापि महाराजो मां वासयितुमीश्वरः ॥ २० ॥

पापं पित्राज्ञाभङ्गरूपम् ॥ १६ ॥

बाल्यादज्ञानात् ॥ १७ ॥

कथं कैकेयीगर्हणमज्ञानमूलं तत्राह,— कामकार इति । स्वच्छन्दाचरणमित्यर्थः स्वेच्छया नियोजनमिति यावत् । गुरूणां पित्रादीनाम् । उपपन्नेषु सम्मतेषु दारेषु पुत्रेषु च कामकारो विधीयत इति सम्बन्धः ॥ १८ ॥

ततः किमत आह,—वयमिति । भार्य्याः पुत्राः शिष्याश्च लोके साधुभिर्यथा समाख्याता इच्छाविनियोगार्हतया तथास्य राज्ञो वयं सर्वे इति त्वमपि ज्ञातुमर्हसि ॥ १९ ॥

यावत् पितरि धर्मज्ञ! गौरवं लोकसत्कृते ।
तावद्धर्मभृतां श्रेष्ठ! जनन्यामपि गौरवम् ॥ २१ ॥
एताभ्यां धर्मशीलाभ्यां वनं गच्छेति राघव! ।
मातापितृभ्यामुक्तोऽहं कथमन्यत् समाचरे ॥ २२ ॥
त्वया राज्यमयोध्यायां प्राप्तव्यं लोकसत्कृतम् ।
वस्तव्यं दण्डकारण्ये मया वल्कलवाससा ॥ २३ ॥
एवमुक्त्वा * महाराजो विभागं लोकसन्निधौ ।
व्यादिश्य च महाराजो दिवं दशरथो गतः ॥ २४ ॥
स च प्रमाणं धर्मात्मा राजा लोकगुरुस्तव ।

प्रकृते किं तत्राह,— वने इत्यादि ॥ २० ॥

प्रकृतमम्बागर्हाभावमुपसंहरति यावदिति। तावत् तावत्परिमाणकमित्यर्थः। अतः कैकेय्या अप्यस्मिन्नियोजने तथैवाधिकार इति भावः ॥ २१ ॥

समाचरे समाचरिष्यामि ॥ २२ ॥

त्वया राज्यं प्राप्तव्यम्। मया दण्डके वस्तव्यम् ॥ २३ ॥

एवं विभागं लोकसन्निधौ मन्त्रिपुरोहितादिजनसन्निधौ उक्त्वा तानेवं विभागं कुरुतेति व्यादिश्य च आज्ञाप्य च दिवं गत इत्यन्वयः ॥ २४ ॥

---

* "कृत्वा" इति वा पाठः ।

पित्रा दत्तं यथाभागमुपभोक्तुं त्वमर्हसि ॥ २५ ॥
चतुर्दश समाः सौम्य ! दण्डकारण्यमाश्रितः ।
उपभोक्ष्ये त्वहं दत्तं भागं पित्रा महात्मना ॥ २६ ॥
यदब्रवीन्मां नरलोकसत्कृतः
पिता महात्मा विबुधाधिपोपमः ।

यथाभागं पितृकल्पितचतुर्दशवर्षपर्य्यन्तम् अनेन तदनन्तरमहं भोक्ष्यामीति सूचितम् । मात्रापि चतुर्दशवर्षपर्य्यन्तं वनवास एव वृतः न तु सर्वथा मे राज्यत्यागः, पित्रापि तावदेवानुमतमिति भावः ॥ २५ ॥ २६ ॥

पिता महात्मा ब्रह्मणा तुल्यः । अयं सर्वलोकेश्वरत्वं ब्रह्मत्वं पित्रनुमतमिति शेषः । न हितमित्यन्वयः । ननु पितृमरणश्रवणोत्तरं शोकमुल्लंघ्याभिषेकप्रत्याख्यानमेव कुत इति चेच्छृणु । भरतस्याभिषेककरणप्रत्याशावारणाय कैकेय्या लोकानां चान्यथासंभावनावारणाय शोककालेऽपि धैर्य्यमवलंब्य तत्करणं शोककालेप्येवं धर्थ्यं कर्त्तव्यमिति लोकोपदेशायेति मम प्रतिभाति । तीर्थस्तु पूर्वं न स्वर्गं गतः मृतकल्पः विधवास्तत्कल्पा इत्यर्थं मत्वा मरणनिश्चयाभावेन राज्यस्वीकारायैव राजानं मृतकल्पं वदतीति बुद्ध्वा शोकाकरणपूर्वकमभिषेकप्रत्याख्यानं कृतवान् । स्ववाक्ये दिवं गत इत्यत्राप्येवमेवेत्याह । कतकस्तु गतः स्वर्गमिति भरतेनोक्तेऽपि पितृमरणोचितसर्वकार्य्यकरणे कृते भरतस्तस्य मे

तदेव मन्ये परमात्मनो हितं
न सर्वलोकेश्वरभावमव्ययम् ॥ २७ ॥

इत्यार्षे रामायणे वाल्मीकीये अयोध्याकाण्डे
रामभरतसंवादो नाम एकाधिक-
शततमः सर्गः ॥ १०१ ॥

इत्याद्युक्तवान्। कविस्तु संक्षेपेणादावुक्ताग्रे विस्तरेण वदतीति प्रायः कवेः स्वभाव इत्याह ॥ २७ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके
अयोध्याकाण्डे एकाधिकशततमः सर्गः ॥ १०१ ॥

---

## द्व्युत्तरशततमः सर्गः ।



रामस्य वचनं श्रुत्वा भरतः प्रत्युवाच ह ।
किं मे धर्माद्विहीनस्य राजधर्मः करिष्यति ॥ १ ॥
शाश्वतोऽयं सदा धर्मः स्थितोऽस्मासु नरर्षभ ! ।
ज्येष्ठे पुत्रे स्थिते राज्ञां न कनीयान् भवेन्नृपः ॥ २ ॥
स समृद्धां मया सार्द्धमयोध्यां गच्छ राघव ! ।
अभिषेचय चात्मानं कुलस्यास्य भवाय नः ॥ ३ ॥

अथ भरतः पितृवृत्तान्तप्रश्नोत्तरमुक्त्वा कच्चित्प्रश्नोत्तरमाह,—रामस्येति । धर्माद्राज्यायोग्यत्वेन राजधर्माद्राज्याद्विहीनस्य त्वत्पृष्ट-राजधर्मो मे कोपयुक्तः अनुपनीतयागवत् अतोऽनवसरदुस्थो मयि कच्चिदादिप्रश्न इति भावः ॥ १ ॥

कुतस्ते उक्तधर्माभावोऽत आह,—शाश्वत इति । शाश्वतः कुल-क्रमागतः अस्मासु अस्मत्पूर्वेषु । सदा सर्वदा । यथेति पाठे,—यथा-शास्त्रं स्थितः प्रतिष्ठितः । अयं कस्तत्राह,—ज्येष्ठे इति । एवञ्च कनीयस्त्वान्मे न राज्यत्वमिति भावः ॥ २ ॥

राजानं मानुषं प्राहुर्देवत्वे सम्मतो मम।
यस्य धर्मार्थसहितं वृत्तमाहुरमानुषम्॥ ४॥
केकयस्थे तु च मयि त्वयि चारण्यमाश्रिते।
धीमान् स्वर्गं गतो राजा यायजूकः सतां मतः॥ ५॥
निष्क्रान्तमात्रे भवति सीतायां सहलक्ष्मणे।
दुःखशोकाभिभूतस्तु राजा त्रिदिवमभ्यगात्॥ ६॥
उत्तिष्ठ पुरुषव्याघ्र! क्रियतामुदकं पितुः।
अहञ्चायञ्च शत्रुघ्नः पूर्वमेव कृतोदकौ॥ ७॥
प्रियेण किल दत्तं हि पितृलोकेषु राघव!।
अक्षयं भवतीत्याहुर्भवांश्चैव पितुः प्रियः॥ ८॥

यदेवमतः स इति। गच्छ आगच्छ। भवाय अभ्युदयाय। ननु देवत्वप्रापकं तपो विहाय किं मे राज्येन तत्राह,—राजानमिति। सर्वे जना यद्यपि राजानं मानुषं प्राहुस्तथापि मम स देवत्वे सम्मतः। तत्र हेतुमाह,—यस्येति। अमानुषं मनुष्येऽसम्भावितमित्यर्थः॥ ४॥

उक्तमपि राजमरणं रामेण विषयान्तरोत्तरदानादश्रुतमिव मत्वा पुनस्तदेवाह,—केकयस्थे इति। सतां मतः सद्भिः पूज्यमानः॥ ५॥ ६॥

कृतोदकाविति। कृतसपिण्डीकरणान्तसर्वकृत्यौ॥ ७॥

तर्हि किं कृतकरणेनेत्यत आह,—प्रियेणेति। भवान् प्रियो ज्येष्ठत्वादिति भावः॥ ८॥

त्वामेव शोचंस्तव दर्शनेप्सु-
स्त्वय्येव सक्तामनिवर्त्य बुद्धिम् ।
त्वया विहीनस्तव शोकरुग्न-
स्त्वां संस्मरन्नेव गतः * पिता ते ॥ ९ ॥

इत्यार्षे रामायणे वाल्मीकीये अयोध्याकाण्डे
भरतवाक्यं नाम द्व्युत्तरशततमः
सर्गः ॥ १०२ ॥

प्रकारान्तरेणापि प्रियत्वमेवोपपादयति । त्वामेवेति । तव शोकरुग्ण इत्यनेन त्वच्छोक एव तदवसादहेतुरिति दर्शितम् ॥ ९ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके
अयोध्याकाण्डे द्व्युत्तरशततमः सर्गः ॥ १०२ ॥

---

* "त्वां संस्मरन्नस्तमितः" इति वा पाठः ।

## त्र्युत्तरशततमः सर्गः।

---

तां श्रुत्वा करुणां वाचं पितुर्मरणसंहिताम्।
राघवो भरतेनोक्तां बभूव गतचेतनः॥ १॥
तन्तु वज्रमिवोत्सृष्टमाहवे दानवारिणा।
वाग्वज्रं भरतेनोक्तममनोज्ञं परन्तपः॥ २॥
प्रगृह्य रामो बाहू वै पुष्पिताङ्ग इव * द्रुमः।
वने परशुना कृत्तस्तथा भुवि पपात ह॥ ३॥
तथा हि पतितं रामं जगत्यां जगतीपतिम्।
कूलघातपरिश्रान्तं प्रसुप्तमिव कुञ्जरम्॥ ४॥

करुणां शोकावहाम्॥ १॥
तं भरतोक्तं वाग्वज्रं रणे इन्द्रोत्सृष्टवज्रतुल्यं श्रुत्वा॥ २॥
बाहू प्रगृह्य अतिशिथिलौ कृत्वा उद्धृत्य वा निष्पीड्य वा भूवि पपात भरतादिदर्शनेन हर्षात् पुष्पिताङ्गद्रुमसादृश्यम्॥ ३॥ ४॥

---

* "पुष्पिताग्रो यथा" इति वा पाठः।

भ्रातरस्ते महेष्वासं सर्व्वतः शोककर्षिताः।
रुदन्तः सह वैदेह्या सिषिचुः सलिलेन वै ॥ ५ ॥
स तु संज्ञां पुनर्लब्ध्वा नेत्राभ्यामस्रुमुत्सृजन्।
उपाक्रामत काकुत्स्थः कृपणं बहु भाषितुम् ॥ ६ ॥
स रामः स्वर्गतं श्रुत्वा पितरं पृथिवीपतिम्।
उवाच भरतं वाक्यं धर्मात्मा धर्मसंहितम् ॥ ७ ॥
किं करिष्याम्ययोध्यायां ताते दिष्टाङ्गतिं गते।
कस्तां राजवराद्धीनामयोध्यां पालयिष्यति ॥ ८ ॥
किं नु तस्य मया कार्य्यं दुर्जातेन महात्मनः।
यो मृतो मम शोकेन स मया न च संस्कृतः ॥ ९ ॥
अहो भरत! सिद्धार्थो येन राजा त्वयानघ!।
शत्रुघ्नेन च सर्व्वेषु प्रेतकृत्येषु सत्कृतः ॥ १० ॥
निष्प्रधानामनेकाग्रां नरेन्द्रेण विनाकृताम्।
निवृत्तवनवासोऽपि नायोध्यां गन्तुमुत्सहे ॥ ११ ॥

सिषिचुः मोहशान्तये सर्वगात्राणि जलेन सिषिचुः ॥ ५ ॥
कृपणं भाषितुं लोकानुसारेण विलपितुमित्यर्थः ॥ ६ ॥ ७ ॥
दिष्टां गतिं दैवकल्पितां गतिं स्वसुकृतातिसृष्टां वा ॥ ८ ॥
दुर्जातेन वृथाजन्मना ॥ ९ ॥
सत्कृतः संस्कारकर्मणा पूजितः ॥ १० ॥

समाप्तवनवासं मामयोध्यायां परन्तप!।
कोऽनुशासिष्यति पुनस्ताते लोकान्तरं गते ॥ १२ ॥
पुरा प्रेक्ष्य सुवृत्तं मां पिता यान्याह सान्त्वयन्।
वाक्यानि तानि श्रोष्यामि कुतः कर्णसुखान्यहम् ॥ १३ ॥
एवमुक्त्वा तु भरतं भार्य्यामभ्येत्य राघवः।
उवाच शोकसन्तप्तः पूर्णचन्द्रनिभाननाम् ॥ १४ ॥
सीते! मृतस्ते श्वशुरः पितृहीनोऽसि लक्ष्मण!।
भरतो दुःखमाचष्टे स्वर्गतिं पृथिवीपतेः ॥ १५ ॥
ततो बहुगुणं तेषां वाष्पं नेत्रेष्वजायत।
तथा ब्रुवति काकुत्स्थे कुमाराणां यशस्विनाम् ॥ १६ ॥
ततस्ते भ्रातरः सर्वे भृशमाश्वास्य दुःखितम्।
अब्रुवन् जगतीभर्त्तुः क्रियतामुदकं पितुः ॥ १७ ॥

निष्प्रधानां प्रधानहीनाम् अतएवानेकाग्रां बहुनायकाम्। अन्यो-भयत्रहेतुर्नरेन्द्रेण विनाकृतामिति ॥ ११ ॥

अनुशासिष्यति। हिताहितविषयप्रवृत्तिनिवृत्ती कारयिष्यति ॥ १२ ॥

सुवृत्तं शोभननियोगाचरणम्। कुतः पुरुषात् ॥ १३ ॥

अभ्येत्य अभिमुखो भूत्वा ॥ १४ ॥

स्वर्गतिरूपं दुःखम् ॥ १५ ॥ १६ ॥

सा सीता श्वशुरं श्रुत्वा स्वर्गलोकगतं नृपम् ।
नेत्राभ्यामश्रुपूर्णाभ्यां न शशाकेक्षितुं प्रियम् * ॥ १८ ॥
सान्त्वयित्वा तु तां रामो रुदन्तीं जनकात्मजाम् ।
उवाच लक्ष्मणं तत्र दुःखितो दुःखितं वचः ॥ १९ ॥
आनयेङ्गुदिपिण्याकं चीरमाहर चोत्तरम् ।
जलक्रियार्थं तातस्य गमिष्यामि महात्मनः ॥ २० ॥
सीता पुरस्तात् व्रजतु त्वमेनामभितो व्रज ।
अहं पश्चाद्गमिष्यामि गतिर्ह्येषा सुदारुणा ॥ २१ ॥
ततो नित्यानुगस्तेषां विदितात्मा महामतिः ।
मृदुर्दान्तश्च कान्तश्च रामे च दृढभक्तिमान् ॥ २२ ॥

क्रियतामिति अब्रुवन् ॥ १७ ॥ १८ ॥ १९ ॥

इङ्गुदिपिण्याकम् तपस्विभोज्यतापसतरुफलपिण्याकम् । अनिः-सारिततैलं पिष्ट्वा चूर्णीकृतमिङ्गुदीबीजमत्र पिण्याकत्वेनोपचर्यते । निः-सारितसारस्य तस्य निषिद्धत्वात् । उत्तरमुत्तमं नवीनं चीरम् ॥ २० ॥

अभितः पश्चात् । एषा गतिः सुदारुणा प्रेतादिकालिकी । तदुक्तम् । सर्वे कनिष्ठप्रथमा इतरे तु स्त्रियोऽग्रत इति आश्वलायनप्रकरणे ॥ २१ ॥

नित्यानुगः कुलक्रमादागतानुचरः विदितात्मा ज्ञातात्मस्वरूपः । तेषां कुमाराणाम् ॥ २२ ॥

* "पतिम्" इति वा पाठः ।

सुमन्त्रस्तैर्नृपसुतैः सार्द्धमाश्वास्य राघवम्।
अवतारयदालम्ब्य नदीं मन्दाकिनीं शिवाम् ॥ २३ ॥
ते सुतीर्थां ततः कृच्छ्रादुपगम्य यशस्विनः।
नदीं मन्दाकिनीं रम्यां सदा पुष्पितकाननाम् ॥ २४ ॥
शीघ्रस्रोतसमासाद्य तीर्थं शिवमकर्दमम्।
सिषिचुस्तूदकं राज्ञे तत एतद्भवत्विति ॥ २५ ॥
प्रगृह्य तु महीपालो जलपूरितमञ्जलिम्।
दिशं याम्यामभिमुखो रुदन् वचनमब्रवीत् ॥ २६ ॥
एतत्ते राजशार्दूल ! विमलं तोयमक्षयम्।
पितृलोकगतस्याद्य मद्दत्तमुपतिष्ठतु ॥ २७ ॥

अवतारयत् अवातारयत् ॥ २३ ॥

ते सीतादयः ॥ २४ ॥

अकर्दमं तीर्थम् अवतारमार्गं तत एतद्भवत्वित्युच्चार्य्य सिषिचुरदुः ततेत्येतत्पितुर्नामगोत्ररूपोपलक्षणं बोध्यम्। सम्बोधने प्लुतकरणाद-सन्धिः। केचित्तु ततेत्युक्तौ नामाद्युच्चारणस्य न प्रयोजनमस्मादेवाचारा-दित्याहुः ॥ २५ ॥

एतदेव विवृणोति। प्रगृह्येति। याम्यां दक्षिणाम्। यत्त्वाधु-निकनिबन्धेषु सुमन्तुनाम्ना लिखितं वचनं क्षत्रियाणामुदकाञ्जल-दानबोधकं तन्निर्मूलम् एतदाचारविरोधात् निकृष्टक्षत्रियपरं वा। रुदन्नित्यनेन पित्रादिविषये रोदने न निषेध इति सूचितम् ॥ २६ ॥ २७ ॥

ततो मन्दाकिनीतीरं प्रत्युत्तीर्य्य स राघवः।
पितुश्चकार तेजस्वी निर्वापं भ्रातृभिः सह ॥ २८ ॥
ऐङ्गुदं वदरैर्मिश्रं पिण्याकं दर्भसंस्तरे।
न्यस्य रामः सुदुःखार्त्तो रुदन् वचनमब्रवीत् ॥ २९ ॥
इदं भुङ्क्ष्व महाराज! प्रीतो यदशना वयम्।
यदन्नः पुरुषो भवति तदन्नास्तस्य देवताः ॥ ३० ॥
ततस्तेनैव मार्गेण प्रत्युत्तीर्य्य सरित्तटात्।
आरुरोह नरव्याघ्रो रम्यसानुं महीधरम् ॥ ३१ ॥
ततः पर्णकुटीद्वारमासाद्य जगतीपतिः।
परिजग्राह पाणिभ्यामुभौ भरतलक्ष्मणौ ॥ ३२ ॥
तेषां तु रुदतां शब्दात् प्रतिशब्दोऽभवद्गिरौ।

प्रत्युत्तीर्य तीरमागत्य निर्वापश्चकार पिण्डं ददौ। न च यदा कदाचित्पितुर्मरणश्रवणे पुत्रस्य दशाहाशौचतायाः स्मृतिप्राप्तत्वेन कथं कृतक्रियस्य पितुः प्रथमदिन एव पिण्डदानमिति वाच्यं तस्याः स्मृतेः क्षत्रियेतरविषयत्वात् कलिविषयत्वाद्वा न दोषः ॥ २८ ॥

ऐङ्गुदं इङ्गुदीबीजसम्बन्धि। बदरैः बदरफलैः ॥ २९ ॥

ननु राज्ञे कथं पिण्याकपिण्डदानं तत्राह,—यदशना इत्यस्य तदशनाः अस्मत्पितर इति शेषः। तत्र सामान्येनार्थान्तरन्यासमाह,—यदन्न इति ॥ ३० ॥

प्रत्युत्तीर्य्य परावृत्य ॥ ३१ ॥ ३२ ॥

भ्रातॄणां सह वैदेह्या सिंहानां नर्दतामिव ॥ ३३ ॥

महाबलानां रुदतां कुर्वतामुदकं पितुः।

विज्ञाय तुमुलं शब्दं त्रस्ता भरतसैनिकाः ॥ ३४ ॥

अब्रुवंश्चापि रामेण भरतः सङ्गतो ध्रुवम्।

तेषामेष महान् शब्दः शोचतां पितरं मृतम् ॥ ३५ ॥

अथ वाहान् परित्यज्य तं सर्वेऽभिमुखाः स्वनम्।

अप्येकमनसो जग्मुर्यथास्थानं प्रधाविताः ॥ ३६ ॥

हयैरन्ये गजैरन्ये रथैरन्ये स्वलङ्कृतैः।

सुकुमारास्तथैवान्ये पद्भिरेव नरा ययुः ॥ ३७ ॥

अचिरप्रोषितं रामं चिरविप्रोषितं यथा।

द्रष्टुकामो जनः सर्वो जगाम सहसाश्रमम् ॥ ३८ ॥

प्रतिशब्दः प्रतिध्वनिः ॥ ३३ ॥

त्रस्ताः का विपत्प्रादुरभूदिति भीताः ॥ ३४ ॥

ततो निश्चित्याब्रुवन्निति ॥ ३५ ॥

स्वनमभिमुखाः स्वनोत्पत्तिदिशमभिमुखाः। यथास्थानं यथोचितं प्रधाविताास्त्वरिता गच्छन्ति स्म ॥ ३६ ॥

कैस्तत्राह,—हयैरित्यादि। सुकुमारा इति पूर्वान्वयि। अन्ये तेभ्यो भिन्नाः ॥ ३७ ॥

आश्रममिति परम् ॥ ३८ ॥

भ्रातृणां त्वरितास्ते तु द्रष्टुकामाः समागमम् ।
ययुर्बहुविधैर्यानैः खुरनेमिसमाकुलैः ॥ ३९ ॥
सा भूमिर्बहुभिर्यानै रथनेमिसमाहता ।
मुमोच तुमुलं शब्दं द्यौरिवाभ्रसमागमे ॥ ४० ॥
तेन वित्रासिता नागाः करेणुपरिवारिताः ।
आवासयन्तो गन्धेन जग्मुरन्यद्वनं ततः ॥ ४१ ॥
वराहमृगसिंहाश्च महिषाः सृमरास्तथा * ।
व्याघ्रगोकर्णगवया वित्रेसुः पृषतैः सह ॥ ४२ ॥
रथाङ्गहंसा नत्यूहाः प्लवाः कारण्डवाः परे ।
तथा पुंस्कोकिलाः क्रौञ्चा विसंज्ञा भेजिरे दिशः ॥ ४३ ॥

खुरसमाकुलयानाः पश्वादयः । नेमिसमाकुलानि रथशकटादीनि ॥ ३९ ॥

समाहता अभिहता आक्रान्तेति यावत् ॥ ४० ॥

तेन शब्देन गन्धेन आवासयन्तः मदगन्धेन दिङ्मुखानि सुरभी कुर्वन्तः ॥ ४१ ॥

गोकर्णसृमरौ मृगविशेषौ ॥ ४२ ॥

* "सर्पवानराः" इति वा पाठः ।

तेन शब्देन वित्रस्तैराकाशं पक्षिभिर्वृतम्।
मनुष्यैरावृता भूमिरुभयं प्रबभौ तदा ॥ ४४ ॥
ततस्तं पुरुषव्याघ्रं यशस्विनमकल्मषम्।
आसीनं स्थण्डिले रामं ददर्श सहसा जनः ॥ ४५ ॥
विगर्हमाणः कैकेयीं मन्थरासहितामपि *।
अभिगम्य जनो रामं वाष्पपूर्णमुखोऽभवत् ॥ ४६ ॥
तान् नरान् वाष्पपूर्णाक्षान् समीक्ष्याथ सुदुःखितान्।
पर्य्यष्वजत धर्म्मज्ञः पितृवन्मातृवच्च सः ॥ ४७ ॥
स तत्र कांश्चित् परिषस्वजे नरान्
नराश्च केचित्तु तमभ्यवादयन्।
चकार सर्वान् सवयस्यबान्धवान्
यथार्हमासाद्य तदा नृपात्मजः ॥ ४८ ॥

रथाङ्गः चक्रवाकः। नत्यूहो जलकुक्कुटः। प्लवाः वकविशेषाः ॥ ४३ ॥ ४४ ॥ ४५ ॥ ४६ ॥
पर्य्यष्वजत परिष्वङ्गयोग्यानिति शेषः ॥ ४७ ॥
तदेवाह,—स तत्रेति ॥ ४८ ॥

---

* "सहितो मन्थरामपि" इति वा पाठः।

ततः स तेषां रुदतां महात्मनां
भुवञ्च खञ्चानुविनादयन् स्वनः ।
गुहागिरीणाञ्च दिशश्च सन्ततं
मृदङ्गघोषप्रतिमो विशुश्रुवे ॥ ४८ ॥

इत्यार्षे रामायणे वाल्मीकीये अयोध्याकाण्डे
पिण्डदानं नाम त्र्युत्तरशततमः
सर्गः ॥ १०३ ॥

अनुविनादयन् प्रतिध्वनयन् ॥ ४८ ॥
अत्र कतकरीत्या श्लोकद्वयं गतम् ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके
अयोध्याकाण्डे त्र्युत्तरशततमः सर्गः ॥ १०३ ॥

---

## चतुरुत्तरशततमः सर्गः।

वसिष्ठः पुरतः कृत्वा दारान् दशरथस्य च।
अभिचक्राम तं देशं रामदर्शनतर्षितः॥ १॥
राजपत्न्यश्च गच्छन्त्यो मन्दं मन्दाकिनीं प्रति।
ददृशुस्तत्र तत्तीर्थं रामलक्ष्मणसेवितम्॥ २॥
कौसल्या वाष्पपूर्णेन मुखेन परिशुष्यता।
सुमित्रामब्रवीद्दीना याश्चान्या राजयोषितः॥ ३॥
इदं तेषामनाथानां क्लिष्टमक्लिष्टकर्मणाम्।
वने प्राक्कलनं तीर्थं ये ते निर्विषयीकृताः॥ ४॥
इतः सुमित्रे! पुत्रस्ते सदा जलमतन्द्रितः।
स्वयं हरति सौमित्रिर्मम पुत्रस्य कारणात्॥ ५॥

दशरथस्य दारानित्यन्वयः। तर्षितः साभिलाषः॥ १॥
तीर्थमवतारमार्गम्॥ २॥ ३॥
ये ते प्रसिद्धा रामादयो निर्विषयीकृता राज्यान्निष्कासितास्तेषां वने वसतां प्राक्कलनं बहुव्रीहिरयम्। प्रथमपरिग्रहवत् तीर्थं पुण्यतीर्थम्। गङ्गायमुनापरपारभवं इदमेव। प्राक्केवलमिति पाठे आधु-

जघन्यमपि ते पुत्रः कृतवान्न तु गर्हितः।
भ्रातुर्यदर्थरहितं सर्वं तद्गर्हितं गुणैः ॥ ६ ॥
अद्यायमपि ते पुत्रः क्लेशानामतथोचितः।
नीचानर्थसमाचारं सज्जं कर्म प्रमुञ्चतु ॥ ७ ॥
दक्षिणाग्रेषु दर्भेषु सा ददर्श महीतले।
पितुरिङ्गुदिपिण्याकं न्यस्तमायतलोचना ॥ ८ ॥

निकल्पितः। नापि तत्रार्थसामञ्जस्यमिति कतकः। तत्रापि पाठे प्राक् परिगृहीतमिति शेषः। प्राक् परिगृहीतं तीर्थं जलानयनादि-व्यवहारोपयोगी मार्गः। इदमेवेति केवलं निश्चितमित्यर्थो वक्तुं शक्यः। केवलं निश्चिते क्लीवं वाच्यवच्चैकवत्स्नयोरिति ॥ ४ ॥ ५ ॥

जघन्यं हीनमपि जलाहरणादिकं ते पुत्रः कृतवानथाप्यसौ न गर्हितः। कुतस्तत्राह,—गुणैर्ज्येष्ठत्वसौभ्रात्रधार्मिकत्वादिभिर्विशिष्टस्य भ्रातुर्यदर्थरहितं प्रयोजनरहितं तदेव गर्हितं भवति। तीर्थस्तु भ्रातुरर्थसहितं प्रयोजनसहितम् तद्गुणैः प्रयोजनैर्विहितं कल्पितं तत् सर्वगुणफलकमित्यर्थसहितं विहितमिति पाठस्त्वाह ॥ ६ ॥

क्लेशानामनुभूयमानानां तथा यथानुभवमुचितो नेत्यतथोचितस्तेऽयं पुत्रो नीचार्हो योऽनर्थो दुःखजनकः समाचरोऽनुष्ठानं यस्मिन् तत्तथा सज्जं प्रस्तुतं यथोक्तं कर्म मुञ्चतु रामस्य प्रत्यावर्त्तिष्यमाणत्वादिति भावः। एकः शत्रुघ्नस्तु भरतसङ्गादेतत्कर्म न करोत्येवायमपि मुञ्चत्विति अपरेरर्थः ॥ ७ ॥

न्यस्तं रामेण ॥ ८ ॥

तं भूमौ पितुरार्त्तेन न्यस्तं रामेण वीक्ष्य सा।
उवाच देवी कौशल्या सर्वा दशरथस्त्रियः॥ ९॥
इदमिक्ष्वाकुनाथस्य राघवस्य महात्मनः।
राघवेण पितुर्दत्तं पश्यतैतद् यथाविधि॥ १०॥
तस्य देवसमानस्य पार्थिवस्य महात्मनः।
नैतदौपयिकं मन्ये भुक्तभोगस्य भोजनम्॥ ११॥
चतुरन्तां महीं भुक्त्वा महेन्द्रसदृशो भुवि।
कथमिङ्गुदिपिण्याकं स भुङ्क्ते वसुधाधिपः॥ १२॥
अतो दुःखतरं लोके न किञ्चित् प्रतिभाति मे।
यत्र रामः पितुर्दद्यादिङ्गुदीक्षोदमृद्धिमान्॥ १३॥
रामेणेङ्गुदिपिण्याकं पितुर्दत्तं समीक्ष्य मे।
कथं दुःखेन हृदयं न स्फोटति सहस्रधा॥ १४॥
श्रुतिस्तु खल्वियं सत्या लौकिकी प्रतिभाति मे।

स्त्रियः प्रतीति शेषः॥ ९॥ १०॥

औपयिकम् उचितं न भवतीति मन्ये। तत्र हेतुर्भुक्तभोगस्येति भुक्ता भोगा येन तस्य॥ ११॥

चतुरन्तां चतुःसमुद्रावसानाम्॥ १२॥

क्षोदं पिष्टम्॥ १३॥

न स्फोटति न स्फुटति न विशीर्णं भवति॥ १४॥

यदन्नः पुरुषो नूनं तदन्नास्तस्य देवताः ॥ १५ ॥
एवमार्त्तां सपत्नयस्ता जग्मुराश्वास्य तां तदा ।
ददृशुश्चाश्रमे रामं स्वर्गच्युतमिवामरम् ॥ १६ ॥
तं भोगैः संपरित्यक्तं रामं संप्रेक्ष्य मातरः ।
आर्त्ता मुमुचुरश्रूणि सस्वरं शोककर्षिताः ॥ १७ ॥
तासां रामः समुत्थाय जग्राह चरणाम्बुजान् ।
मातॄणां मनुजव्याघ्रः सर्वासां सत्यसङ्गरः ॥ १८ ॥
ताः पाणिभिः सुखस्पर्शैर्मृद्वङ्गुलितलैः शुभैः ।
प्रममार्जू रजः पृष्ठाद्रामस्यायतलोचनाः ॥ १९ ॥
सौमित्रिरपि ताः सर्वा मातॄः संप्रेक्ष्य दुःखितः ।
अभ्यवादयदासक्तं शनैरामादनन्तरम् ॥ २० ॥
यथा रामे तथा तस्मिन् सर्वा ववृतिरे स्त्रियः ।
वृत्तिं दशरथाज्जाते लक्ष्मणे शुभलक्षणे ॥ २१ ॥

अतिरित्याद्याश्वासनप्रकारः । सत्या सत्यार्था । लौकिकी लोकविदिता लोकप्रसिद्धा ॥ १५ ॥

एवं श्रुतिस्त्वित्यादिप्रकारेण ॥ १६ ॥ १७ ॥ १८ ॥

पृष्ठात् पृष्ठदेशात् । पृष्ठन्तु चरमन्तनोः ॥ १९ ॥

आसक्तं भावे निष्ठा स्नेहासक्त्योपेतम् ॥ २० ॥

ववृतिरे वर्त्तितवत्यः ॥ २१ ॥

सीतापि चरणांस्तासामुपसंगृह्य दुःखिता।
श्वश्रूणामश्रुपूर्णाक्षी संबभूवाग्रतः स्थिता॥ २२॥
तां परिष्वज्य दुःखार्त्ता माता दुहितरं यथा।
वनवासकृतां दीनां कौसल्या वाक्यमब्रवीत्॥ २३॥
विदेहराजस्य सुता स्नुषा दशरथस्य च।
रामपत्नी कथं दुःखं संप्राप्ता विजने वने॥ २४॥
पद्ममातपसन्तप्तं परिक्लिष्टमिवोत्पलम्।
काञ्चनं रजसा ध्वस्तं क्लिष्टं चन्द्रमिवाम्बुदैः॥ २५॥
मुखन्ते प्रेक्ष्य मां शोको दहत्यग्निरिवाश्रयम्।
भृशं मनसि वैदेहि! व्यसनारणिसम्भवः॥ २६॥
ब्रुवन्त्यामेवमार्त्तायां जनन्यां भरताग्रजः।
पादावासाद्य जग्राह वसिष्ठस्य स राघवः॥ २७॥

पुरोहितस्याग्निसमस्य तस्य वै
बृहस्पतेरिन्द्र इवामराधिपः।

उपसंगृह्य स्पृष्ट्वा॥ २२॥

वनेत्यादि। वनवासकृतदीनत्ववतीमिति यावत्॥ २३॥ २४॥

परिक्लिष्टं परिम्लदितम् उत्पलं रक्तोत्पलं ध्वस्तमभिभूतम्॥ २५॥

ते मुखं प्रेक्ष्य स्थितामिति शेषः मनसि संक्रान्तो व्यसनारणिसम्भवः

प्रगृह्य पादौ सुसमृद्धतेजसः
सहैव तेनोपविवेश राघवः ॥ २८ ॥
ततो जघन्यं सहितैः स्वमन्त्रिभिः
पुरप्रधानैश्च तथैव सैनिकैः ।
जनेन धर्मज्ञतमेन धर्मवा-
नुपोपविष्टो भरतस्तदाग्रजम् ॥ २९ ॥
उपोपविष्टस्तु तदातिवीर्य्यवां-
स्तपस्विवेषेण समीक्ष्य राघवम् ।
श्रिया ज्वलन्तं भरतः कृताञ्जलि-
र्यथा महेन्द्रः प्रयतः प्रजापतिम् ॥ ३० ॥
किमेष वाक्यं भरतोऽद्य राघवं
प्रणम्य सत्कृत्य च साधु वक्ष्यति ।
इतीव तस्यार्य्यजनस्य सर्वतो
बभूव कौतूहलमुत्तमं तदा ॥ ३१ ॥

श्लोकः । अभिराश्रयं गृहमिव कान्तामीव वा मां दहति । आश्रयमिति पाठेऽपि आश्रयो गृहमेव । आश्रयतेऽत्रेति व्युत्पत्तेः ॥२६॥ २७ ॥ २८ ॥

तत इति । वशिष्ठरामोपवेशनानन्तरं जघन्यं जघनभागं पृष्ठभागमाश्रितः सन् उपोपविष्टो बभूवेत्यन्वयः ॥ २९ ॥

उपोपविष्ट इत्यादिजनाभिप्रायानुभाषणम् ॥ ३० ॥

स राघवः सत्यधृतिश्च लक्ष्मणो
महानुभावो भरतश्च धार्मिकः।
वृता सुहृद्भिश्च विरेजिरेऽध्वरे
यथा सदस्यैः सहितास्त्रयोऽग्नयः॥ ३२॥

इत्यार्षे रामायणे वाल्मीकीये अयोध्याकाण्डे
समागमो नाम चतुरुत्तरशततमः
सर्गः॥ १०४॥

किमिति किं साधु वक्ष्यति वदिष्यतीति योजना॥ ३१॥
त्रयोऽग्नयः शत्रुघ्नस्याप्राधान्येन परिहरणात्॥ ३२॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके
अयोध्याकाण्डे चतुरुत्तरशततमः सर्गः॥ १०४॥

---

## पञ्चमोत्तरशततमः सर्गः ।

ततः पुरुषसिंहानां वृतानां तैः सुहृद्गणैः ।
शोचतामेव रजनी दुःखेन व्यत्यवर्त्तत ॥ १ ॥

रजन्यां सुप्रभातायां भ्रातरस्ते सुहृद्वृताः ।
मन्दाकिन्यां हुतं जप्यं कृत्वा राममुपागमन् ॥ २ ॥

तूष्णीं ते समुपासीना न कश्चित् किञ्चिदब्रवीत् ।
भरतस्तु सुहृन्मध्ये रामं वचनमब्रवीत् ॥ ३ ॥

सान्त्विता मामिका माता दत्तं राज्यमिदं मम ।
तद्ददामि तवैवाहं भुंक्ष्व राज्यमकण्टकम् ॥ ४ ॥

पूर्वसर्गान्तोक्तरीत्या सुहृद्गणवृतत्वं शोचतां पितृमरणादुःखेन ॥ १ ॥

मन्दाकिन्याम् तत्तीरे हुतं प्रातरौपासनहोमं जप्यं गायत्री-जपम् । द्वारमिति पाठे उटजद्वारमित्यर्थः इति केचित्तन्न । उत्तर-सर्गे मन्दाकिनीतीरे राममुपास्येत्युक्तेः । तस्माद्राममिति पाठः रामाधि-ष्ठितनदीतीरमित्यर्थ उचितः ॥ २ ॥ ३ ॥

माता कैकेयी प्रथमं राज्ञा राज्यदानेन सान्त्विता कृताश्वासा । अनन्तरं तया ममेदं राज्यं दत्तं तस्माद्राज्यम् अकण्टकं उक्तप्रकारेण पितृवचनस्यापि परिपालनात् प्रत्यूहरहितम् ॥ ४ ॥

सह ते वाम्बुवेगेन भिन्नसेतुर्जलागमे।
दुरावरं त्वदन्येन राज्यखण्डमिदं महत्॥ ५ ॥
गतिं खर इवाश्वस्य तार्क्ष्यस्येव पतत्रिणः।
अनुगन्तुं न शक्तिर्मे गतिं तव महीपते!॥ ६ ॥
सजीवं नित्यशस्तस्य यः परैरुपजीव्यते।
राम! तस्य तु दुर्जीवं यः परानुपजीवति॥ ७ ॥
यथा तु रोपितो वृक्षः पुरुषेण विवर्द्धितः।
ह्रस्वकेन दुरारोहो रूढ़स्कन्धो महाद्रुमः॥ ८ ॥

जलागमे वर्षाकालेऽम्बुवेगेन भिन्नः सेतुरिव। इदं महदयोध्या-देशीयं राज्यखण्डं भरतखण्डाख्यं राज्यं त्वदन्येन दुरावरं आवरितु-मशक्यम्॥ ५ ॥

ननु त्वया वीरेण सुरक्ष्यमेतत्तत्राह,—गतिमिति। अश्वगतिमनु-गन्तुं खरो यथा न शक्तः। तार्क्ष्यगत्यनुगमने यथेतरपक्षिणोऽशक्ता-स्तथा तव गतिं त्वदीयां राज्यपालनशक्तिमनुगन्तुं मे न शक्तिः। इवशब्दो यथार्थे निपातानामनेकार्थत्वात्॥ ६ ॥

सजीवमिति। यः परैर्नित्यश उपजीव्यते तस्य सुजीवं शोभनं जीवनमित्यर्थः। भावघञन्तं क्लीबमपि क्वचित्। घञजपाः पुंसीति तु प्रायिकमिति बोध्यम्। तस्येत्यर्थे तेनेत्यार्षम्। दुर्जीवं दुःखं जीवनं तस्मात्तव राज्यकरणमेवोचितमिति भावः॥ ७ ॥

लोकरक्षणार्थं दशरथेनोत्पाद्य वर्धितः। सकलगुणसम्पन्नो यदि

स यदा पुष्पितो भूत्वा फलानि न विदर्शयेत् ।
स तां नानुभवेत् प्रीतिं यस्य हेतोः प्ररोपितः ॥ ९ ॥
एषोपमा महाबाहो ! तदर्थं वेत्तुमर्हसि ।
यत्र त्वमस्मान् वृषभो भर्त्ता भृत्यान्न शाधि हि ॥ १० ॥
श्रेणयस्त्वां महाराज ! पश्यन्त्वग्र्याश्च सर्वशः ।
प्रतपन्तमिवादित्यं राज्ये स्थितमरिन्दमम् ॥ ११ ॥
तवानुयाने काकुत्स्थ ! मत्ता नर्दन्तु कुञ्जराः ।
अन्तःपुरगता * नार्य्यो नदन्तु सुसमाहिताः ॥ १२ ॥

लोकरक्षणं न करिष्यसि तदा व्यर्थस्तत्प्रयास इत्यमुमर्थमुपमानप्रदर्शनमुखेनाह,—यथात्विति । यथा वृक्षः फलार्थिना पुंसा रोपितः कृतबीजावापोऽनन्तरं शनैर्वर्धितः । तत्र वृध्यतिशयमाह,—ऋस्वेन वामनेन दुरारोहोऽतएव रूढ़स्कन्धो महाद्रुमोऽथ पुष्पितो भूत्वा यदा फलानि न दर्शयति तदा सः तदारोपकः पुमान् यस्य फलस्य हेतोः स द्रुमः प्ररोपितः उत्पादितः स तां प्रीतिं स्वाभिमतफलप्राप्तिजां प्रीतिं नानुभवेत् तथा त्वमिति । एषोपमा त्वयि भवति । यत्र रक्षणकाले वृषभः श्रेष्ठस्त्वं भर्त्ता पालनसमर्थोऽस्मान् भृत्यान् न शाधि न शिक्षयसि अतस्तदर्थं तस्या उपमाया अर्थं राजप्रयासामर्थ्यरूपं वेत्तुमर्हसि ॥ ८ ॥ ९ ॥ १० ॥

---

* "अन्तःपुरचरा" इति वा पाठः ।

तस्य साध्वनुमन्यन्त नागरा विविधा जनाः।
भरतस्य वचः श्रुत्वा रामं प्रत्यनुयाचतः॥ १३॥
तमेवं दुःखितं प्रेक्ष्य विलपन्तं यशस्विनम्।
रामः कृतात्मा भरतं समाश्वासयदात्मवान्॥ १४॥
नात्मनः कामकारो हि पुरुषोऽयमनीश्वरः।
इतश्चेतरतश्चैनं कृतान्तः परिकर्षति॥ १५॥
सर्वे क्षयान्ता निचयाः पतनान्ताः समुच्छ्रयाः।
संयोगा विप्रयोगान्ता मरणान्तञ्च जीवितम्॥ १६॥

निचयाः संग्रहाः नाशान्ताः। समुच्छ्रया विद्यादिकृतमौन्नत्यं तस्मान्न-श्वरत्वेन निश्चिते कः शोक इति भावः॥ १६॥

श्रेणयो नानाजातीयसङ्घाः अग्र्याः प्रधानाः॥ ११॥ १२॥

तस्यः वचः साध्वित्यनुमन्यन्तेति योजना अन्वमन्यन्तेत्यर्थः॥ १३॥

दुःखितं प्रेक्ष्य दुःखेनैवं वक्तीत्यालोच्य। कृतात्मा शिक्षितबुद्धिः। आत्मवान् धीरः॥ १४॥

आश्वासनप्रकारो नात्मन इति। आत्मनो जीवस्य कामकारः स्वेच्छया यत्किञ्चित्प्रवर्त्तनसामर्थ्यं न नास्ति हि। यतोऽयं पुरुषो नीश्वरः ईश्वरवत् स्वातन्त्र्यरहितः तस्मादेनमितस्मात् देशाच्च लोकाच्च इतरतः परस्माद्देशाच्च लोकाच्च कृतान्तः कालोऽन्तर्यामिरूपः कर्मानुरूपं कर्षति एवञ्च मम वनवासे न राजा नापि कैकेयीकारणम् किन्तु दैवादीनामदृष्टमित्यान्तरो भावः॥ १५॥

इदानीं राजमरणशोकावकाशोऽपि नास्तीत्याह,—सर्वे इति।

यथा फलानां पक्कानां नान्यत्र पतनाद्भयम् ।
एवं नरस्य जातस्य नान्यत्र मरणाद्भयम् ॥ १७ ॥
यथागारं दृढस्थूणं जीर्णं भूत्वावसीदति ।
तथावसीदन्ति नरा जरामृत्युवशं गताः ॥ १८ ॥
अत्येति रजनी या तु सा न प्रतिनिवर्त्तते ।
यात्येव यमुना पूर्णा समुद्रमुदकार्णवम् ॥ १९ ॥
अहोरात्राणि गच्छन्ति सर्वेषां प्राणिनामिह ।
आयूंषि क्षपयन्त्याशु ग्रीष्मे जलमिवांशवः ॥ २० ॥
आत्मानमनुशोच त्वं किमन्यमनुशोचसि ।
आयुस्ते हीयते यस्य स्थितस्य च गतस्य च ॥ २१ ॥

यथा फलानां पतनमशक्यपरिहारम् एवं मरणमपि तथा । तस्मान्नृपस्य तस्य न शोच्यता ॥ १७ ॥

तदेव दृष्टान्तान्तरेणोपपादयति यथेति ॥ १८ ॥

अतीतरजन्यप्रतिनिवृत्तौ दृष्टान्तो यमुना यात्येव न प्रतिनिवर्त्तत इत्यर्थः । उदकार्णवमित्यत्रोदकपदमधिकम् ॥ १९ ॥

गच्छन्तीति शत्रन्तम् । अंशवो रविकिरणाः । आशये इति पाठे जलाशये इत्यर्थः ॥ २० ॥

यदेवमतस्त्वमात्मानं प्रति अनुशोच मृत्युर्दुर्वार आयाति का मे गतिरिहामुत्रेति चिन्तय । अन्यं राजानम् । तदेव शोच्यत्वमाह,—आयुरिति । आयुस्ते यस्य । यस्य कस्यापि हीयत इत्यर्थः ॥ २१ ॥

सहैव मृत्युर्व्रजति सह मृत्युर्निषीदति।
गत्वा सुदीर्घमध्वानं सह मृत्युर्निवर्त्तते॥ २२॥
गात्रेषु वलयः प्राप्ताः श्वेताश्चैव शिरोरुहाः।
जरया पुरुषो जीर्णः किं हि कृत्वा प्रभावयेत्॥ २३॥
नन्दन्त्युदितआदित्ये नन्दन्त्यस्तमितेऽहनि *।
आत्मनो नावबुध्यन्ते मनुष्या जीवितक्षयम्॥ २४॥
हृष्यन्त्यृतुमुखं दृष्ट्वा नवं नवमिवागतम्।

तदेवाह,—सहेति। मृत्युः सह व्रजति सह निषीदति सह गत्वा सह निवर्त्तते। अन्तर्यामिण एव मृत्युरूपत्वात्। अतोऽपरिहार्य्यः स इति भावः॥ २२॥

वलयो जराकृताः। किं हि कृत्वा किं बलं प्राप्य प्रभावयेत् प्रभुत्वं भावयेत्। यद्वा किं कृत्वा कमुपायं कृत्वा एतत्सर्वपरिहारे समर्थो भवेदित्यर्थः॥ २३॥

आयुःक्षयकारकत्वेनानिष्टसाधने रव्युदयादौ इष्टसाधनत्वबुद्ध्याति-मूढा मनुष्या इत्याह,—नन्दन्तीति॥ २४॥

नवं नवमिव इतः प्रागप्राप्तमिव ऋतुमुखं ऋतुप्रारम्भपरिवर्त्तः

---

* "अस्तमितेऽपि च" इति वा पाठः।

ऋतूनां परिवर्त्तेन प्राणिनां प्राणसंक्षयः ॥ २५ ॥
यथा काष्ठञ्च काष्ठञ्च समेयातां महार्णवे ।
समेत्य तु व्यपेयातां कालमासाद्य कञ्चन ॥ २६ ॥
एवं भार्य्याश्च पुत्राश्च ज्ञातयश्च वसूनि च ।
समेत्य व्यवधावन्ति ध्रुवो ह्येषां विनाभवः ॥ २७ ॥
नात्र कश्चिद्यथाभावं प्राणी समभिवर्त्तते ।
तेन तस्मिन्नसामर्थ्यं प्रेतस्यास्यानुशोचतः ॥ २८ ॥
यथा हि सार्थं गच्छन्तं ब्रूयात्कश्चित्पथि स्थितः ।
अहमप्यागमिष्यामि पृष्ठतो भवतामिति ॥ २९ ॥

पुनःपुनः प्राप्तिः तं दृष्ट्वा हृष्यन्ति, न जानन्ति तत्परिवर्त्तनेन प्राणिनां नाश इतीत्यन्वयः। आत्ममुखमिति पाठे स्वस्वाभिमुखं ऋतूनां परिवर्त्तं दृष्ट्वा हृष्यन्तीत्यर्थः ॥ २५ ॥

काष्ठं काष्ठं पोतद्वयम् ॥ २६ ॥

विनाभवः विप्रयोग इति यावत् ॥ २७ ॥

अत्र संसारे कश्चिदपि प्राणी यथाभावं यथाप्राप्तं स्वभावं मृतिजनिलक्षणं न समतिवर्त्तते न लङ्घयति। तेन हेतुना प्रेतस्य सम्बन्धसामान्ये षष्ठी। प्रेतमनुशोचतोऽस्य तस्मिन् स्वीयप्रेतभावनिवर्त्तने सामर्थ्यं नास्ति ॥ २८ ॥

पूर्वगतिसमागतित्वे दृष्टान्तः यथेति। पुरतो गच्छन्तं सार्थम्। पथि स्थितः पथिकः ॥ २९ ॥

एवं पूर्व्वैर्गतो मार्गः पितृपैतामहैर्ध्रुवः।
तमापन्नः कथं शोचेद् यस्य नास्ति व्यतिक्रमः॥ ३० ॥
वयसः पतमानस्य स्रोतसो वानिवर्त्तिनः।
आत्मा सुखे नियोक्तव्यः सुखभाजः प्रजाः स्मृताः॥ ३१ ॥
धर्मात्मा सुशुभैः कृत्स्नैः क्रतुभिश्चाप्तदक्षिणैः। *

उक्ताया लोकस्थितेः प्रकृतोपयोगमाह,—एवमिति। पितृपैतामहैः वृद्धिरार्षी। पैतृपितामहैरित्यर्थः। पितृपैतामह इति पाठे तत्सम्बन्धी मार्ग इत्यर्थः। ध्रुवः अवश्यं प्राप्यः। यस्य मार्गस्य व्यतिक्रमो लङ्घनं नास्ति तमापन्नः स्वयमपि तं प्राप्तः पित्रादीन् कथं शोचेत्॥ ३० ॥
स्रोतसो वा गङ्गादिप्रवाहस्येवानिवर्त्तिनः प्रत्यावृत्तिरहितस्य

---

* "स्वर्गं दशरथः प्राप्तः पिता नः पृथिवीपतिः।
भृत्यानां भरणात् सम्यक् प्रजानां परिपालनात्॥
अर्थदानाच्च धर्मेण पिता नस्त्रिदिवं गतः।
कर्मभिः सुशुभैरिष्टैः क्रतुभिश्चाप्तदक्षिणैः॥
स्वर्गं दशरथः प्राप्तः पिता नः पृथिवीपतिः।
इष्ट्वा बहुविधैर्यज्ञै भोगांश्चावाप्य पुष्कलान्।
उत्तमश्चायुरासाद्य स्वर्गतः पृथिवीपतिः" ॥
इत्यतिरिक्तं पाश्चात्त्याः पठन्ति।

स न शोच्यः पिता तात ! स्वर्गतः सत्कृतः सताम् ॥ ३२ ॥
स जीर्णं मानुषं देहं परित्यज्य पिता हि नः ।
दैवीमृद्धिमनुप्राप्तो ब्रह्मलोकविहारिणीम् ॥ ३३ ॥
तन्तु नैवंविधः कश्चित् प्राज्ञः शोचितुमर्हति ।
त्वद्विधो मद्विधश्चापि श्रुतवान् बुद्धिमत्तरः ॥ ३४ ॥
एते बहुविधाः शोका विलापरुदिते तदा * ।
वर्जनीया हि धीरेण सर्वावस्थासु धीमता ॥ ३५ ॥

एतमानस्य गच्छतो वयसः नाशं दृष्ट्वेति शेषः । आत्मा सुखे तत्साधने धर्मे नियोक्तव्यः । कुतः यतः प्रजाः सुखभाजः सुखसाधनाप्तिनिमित्त-जन्मभाजः स्मृताः ॥ ३१ ॥

यदेवमतो धर्मात्मेति । उपसंहरति स स इति । सतां सत्कृतः सद्भिः पूज्यमानः ॥ ३२ ॥

ब्रह्मलोकविहारिणीं तल्लोके विहारार्हां दैवीमृद्धिं देवसम्बन्धिनीं तपआदिसमृद्धिम् ॥ ३३ ॥

श्रुतवानधीतात्मविद्यः । त्वद्विधोमद्विधश्चासीति पाठे श्रुतवान् बुद्धिमत्तरश्च यद्विधोसि तद्विधो भवान्न शोचितुमर्हतीत्यर्थ इति तीर्थः । ब्रह्मलोकं प्राप्तस्यात्यन्तं शोकोऽनुचित इति भावः ॥ ३४ ॥

बहुविधा दशरथमरणमद्विवासनादिविषयभेदेन बहुप्रकाराः शोका मानसः विलापरुदिते तत्कार्ये ॥ ३५ ॥

---

* "विलापरुदितास्तथा" इति वा पाठः ।

स स्वस्थो भव मा शोको यात्वा चावस तां पुरीम्।
तथा पित्रा नियुक्तोऽसि वशिना वदतां वर! ॥ ३६ ॥
यत्राहमपि तेनैव नियुक्तः पुण्यकर्मणा।
तत्रैवाहं करिष्यामि पितुरार्य्यस्य शासनम् ॥ ३७ ॥
न मया शासनं तस्य त्यक्तुं न्याय्यमरिन्दम!।
स त्वयापि सदा मान्यः स वै बन्धुः स नः पिता ॥ ३८ ॥
तद्वचः पितुरेवाहं सम्मतं धर्मचारिणाम्।
कर्मणा पालयिष्यामि वनवासेन राघव! ॥ ३९ ॥
धार्मिकेणानृशंसेन नरेण गुरुवर्त्तिना।
भवितव्यं नरव्याघ्र! परलोकं जिगीषता ॥ ४० ॥
आत्मानमनुतिष्ठ त्वं स्वभावेन नरर्षभ!।
निशाम्य तु शुभं वृत्तं पितुर्दशरथस्य नः ॥ ४१ ॥

स्वस्थः शोकरहितः मा शोकस्त्वां परिभवत्विति शेषः। यात्वा गत्वा तां पुरीमयोध्यामावस। कुत एवं नियोगस्तत्राह,—तथेति वशिना सत्यवशवता सत्याधीनत्ववता ॥ ३६ ॥

यत्र यस्मिन् कृत्ये तत्रैव प्रवृत्तः सन्निति शेषः ॥ ३७ ॥

त्यागस्यान्याय्यत्वे हेतुः। सदा मान्य इत्यादि ॥ ३८ ॥

कर्मणा तदुचितव्यापारेण ॥ ३९ ॥

नरेण नृपेणेति पाठः। क्षत्रियेणेत्यर्थ इति कतकः। परलोकं जिगीषता धार्मिकत्वादिस्वभाववता भवितव्यम् ॥ ४० ॥

इत्येवमुक्त्वा वचनं महात्मा
पितुर्निर्देशप्रतिपालनार्थम् ।
यवीयसं भ्रातरमर्थवच्च
प्रभुर्मुहूर्त्ताद्विरराम रामः ॥ ४२ ॥

इत्यार्षे रामायणे वाल्मीकीये अयोध्याकाण्डे
प्रबोधनं नाम पञ्चोत्तरशत-
तमः सर्गः ॥ १०५ ॥

नः पितुर्वृत्तं शुभं निशाम्य पर्य्यालोच्य तेन स उत्तमां गतिं गत इति ज्ञात्वा त्वं स्वभावेन धार्मिकत्वादिलक्षणेनोपलक्षितः आत्मानम् आत्मनः परलोकहितमनुतिष्ठ चिन्तयेत्यर्थः ॥ ४१ ॥ ४२ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके
अयोध्याकाण्डे पञ्चाधिकशततमः सर्गः ॥ १०५ ॥

---

## षडुत्तरशततमः सर्गः ।

एवमुक्त्वा तु विरते रामे वचनमर्थवत् ।
ततो मन्दाकिनीतीरे रामं प्रकृतिवत्सलम् ॥ १ ॥
उवाच भरतश्चित्रं धार्मिको धार्मिकं वचः ॥
कोहि स्यादीदृशो लोके यादृशस्त्वमरिन्दम ! ॥ २ ॥
न त्वां प्रव्यथयेद्दुःखं प्रीतिर्वा न प्रहर्षयेत् ।
सम्मतश्चापि वृद्धानां तांश्च पृच्छसि संशयान् ।
यथामृतस्तथाजीवन्यथासति तथा सति ।
यस्यैष बुद्धिलाभः स्यात् परितप्येत केन सः ॥ ४ ॥

अथ भरतः क्षात्रधर्मावष्टम्भेन रामप्रत्यावृत्तिं प्रार्थयते । एवमुक्त्वेति ॥ १ ॥

चित्रम् उक्तियुक्तिविशेषोपपन्नत्वाल्लोकस्य विस्मयजनकम् । कोहि स्यात् न कोऽपीत्यर्थः । यादृशो यादृशमाहात्म्यवान् ॥ २ ॥

वृद्धानां सम्मतोऽपि धर्मविषये रामवदेव वर्त्तितव्यमिति दृष्टान्तभूतोऽपि लोकमर्य्यादामनुसरंस्तान् वृद्धान् संशयान् संशयास्पदधर्मान् पृच्छसि । एवञ्च सर्वज्ञाप्तकामत्वात् तव न दुःखम् इति भावः ॥ ३ ॥

यथामृतस्तथा जीवन् अस्य यथाजीवंस्तथामृत इति वाक्यशेष आर्थिको बोध्यः । यथामृतस्त्यक्तदेह आत्मा देहपुत्रादिभिरसम्बद्धः

परावरज्ञो यश्च स्याद् यथा त्वं मनुजाधिप ! ।
स एव व्यसनं प्राप्य न विषीदितुमर्हति ॥ ५ ॥
अमरोपमसत्त्वस्त्वं महात्मा सत्यसङ्गरः ।
सर्वज्ञः सर्वदर्शी च बुद्धिमांश्चासि राघव ! ॥ ६ ॥

तथाजीवन्नपि तैरसम्बद्धः । नित्यशुचिसुखचिदात्मनोऽनित्याशुचिदुःख-जड़ेन देहेन तदीयैश्चासम्बन्धात् । यथा च जीवन् स्वकर्मानुरूपं संसरति तथामृतोऽपि स्वकर्मानुरूपं परत्र । किञ्च यथा जीवन् सर्वैः सम्बन्धः तथामृतोऽपि सर्वात्मत्वादस्य । किञ्च यथाऽसति अविद्यमाने न रागो जायते तथा सति विद्यमानेऽपि रागो न युक्तः । यथा वा सति साधौ द्वेषो न युक्तस्तथाऽसति असाधावपि द्वेषो न युक्तः । किञ्च यथाऽसति प्रपञ्चेऽनुरागः तथा सति ब्रह्मणि युक्तः । किञ्च सति ब्रह्मणि तन्निष्ठितस्य यथा न बन्धो मुक्तिश्च भवति तथा लोकसंग्रहार्थमसन्निष्ठस्यापि न बन्धो मुक्तिश्च भवति । यस्य त्वादृशस्य एष उक्तार्थविषयको बुद्धिलाभः स्यात् स राजयोगी केन परितप्यते न केनापि हेतुनेत्यर्थः ॥ ४ ॥

परावरज्ञः सप्रपञ्चात्मतत्त्वज्ञः । विषीदितुमित्यार्षं विषत्तुमित्यर्थः ॥ ५ ॥

अमरः ईश्वरः स यथा शुद्धसत्त्वोपाधिस्तद्वच्छुद्धसत्त्वप्रधानः । अत्रोपमाशब्दप्रयोगो लोकप्रतारणाय । सत्त्वोपाधिरीश्वरस्त्वमेवेति भावः । सर्वज्ञः सर्वविषयकज्ञानरूपोपाधिवृत्तिमान् । सर्वदर्शी सर्वसाक्षी । बुद्धिमान् सर्वबुद्धिप्रवर्त्तकोऽन्तर्यामीति यावत् ॥ ६ ॥

न त्वामेवं गुणैर्युक्तं प्रभवाभवकोविदम्।
अविषह्यतमं दुःखं नासादयितुमर्हति ॥ ७ ॥
प्रोषिते मयि यत्पापं मात्रा मत्कारणात् कृतम्।
क्षुद्रया तदनिष्टं मे प्रसीदतु भवान् मम ॥ ८ ॥
धर्म्मबन्धेन बद्धोऽस्मि तेनेमां नेह मातरम्।
हन्मि तीव्रेण दण्डेन दण्डार्हां पापकारिणीम् ॥ ९ ॥
कथं दशरथाज्जातः शुद्धाभिजनकर्मणः।
जानन्धर्ममधर्मं च कुर्य्यां कर्म जुगुप्सितम् ॥ १० ॥
गुरुः क्रियावान् वृद्धश्च राजा प्रेतः पितेति च।
तातं न परिगर्हेऽहं दैवतं चेति संसदि ॥ ११ ॥

प्रभवाभवकोविदं भूतानाम् उत्पत्तिनाशज्ञम्। आसादयितु-मवसादयितुम्। एवं च त्वामेवम्बिधं यद्यपि दुःखं न पीड़यति तथापि मातृशुं पीड़यत्येवेति स्वस्थोभव माशोक इत्यस्योत्तरमेतत् पर्य्यन्तम् ॥ ७ ॥

मत्कारणान्मद्राज्यनिमित्ततः। मेऽनिष्टं मदसम्मतमेव अतो भवान् प्रसीदतु मद्दत्तं राज्यं परिगृह्णात्विति यावत ॥ ८ ॥

धर्म्मबन्धेन धर्मरूपेण बन्धनेन इह ईदृशापराधविषये इमां सर्वाकार्यामिणस्तवद्वेषिणीम् अतएव दण्डार्हाम् ॥ ९ ॥ १० ॥

मातृवत् पिताप्यन्याय्यकारीत्याह,—गुरुरिति। क्रियावान् कृतश्रेष्ठ-क्रतुः प्रेतः सन् श्राद्धादौ ॥ ११ ॥

को हि धर्मार्थयोर्हीनमीदृशं कर्म किल्बिषम् ।
स्त्रियाः प्रियचिकीर्षुः सन् कुर्य्याद्धर्मज्ञ धर्मवित् ॥ १२ ॥
अन्तकाले हि भूतानि मुह्यन्तीति पुरा श्रुतिः ।
राज्ञैवं कुर्वता लोके प्रत्यक्षा सा श्रुतिः कृता ॥ १३ ॥
साध्वर्थमभिसन्धाय क्रोधान्मोहाच्च साहसात् ।
तातस्य यदतिक्रान्तं प्रत्याहरतु तत् भवान् ॥ १४ ॥
पितुर्हि समतिक्रान्तं पुत्रोयः साधु मन्यते ॥
तदपत्यं मतं लोके विपरीतमतोऽन्यथा ॥ १५ ॥

एवं गुरुत्वादि हेतुभिर्यद्यप्यहं न परिगर्हे तथापि वस्तुतोगर्ह्य एवेत्याह,—को हीति। को हि धर्मवित् धर्मार्थयोर्हीनं ताभ्यां हीनं कामप्रधानम् ॥ १२ ॥

अन्तकाले मृतिकाले मुह्यन्ति विपरीतबुद्धिं प्राप्नुवन्ति । पुराश्रुतिः पुरातनी गाथा प्रत्यक्षा सत्या ॥ १३ ॥

क्रोधाद्विषमद्यैव पास्यामीत्युक्तिसूचितात् कैकेयीक्रोधात् तत्क्रोधभयादिति यावत् । मोहात् कैकेयीविषयात् । साहसात् अविमृश्यकारित्वात् । तातस्य यदतिक्रान्तं भावे निष्ठा । ज्येष्ठाभिषेकलक्षणसाध्वर्थाननुष्ठानं तत्साध्वर्थमभिसन्धाय राजोक्तार्थेषु कृतमस्य साधुत्वमिति विचार्य्य प्रत्याहरतु निवर्त्तयतु ॥ १४ ॥

तदेवोपपादयति पितुर्हीति । अतिक्रान्तमतिक्रमस्तं साधु मन्यते तद्विपरीताचरणेन साधु यथा तथा सम्पादयति । तदपत्यं मतम् पितुरपतनहेतुत्वात् ॥ १५ ॥

तदपत्यं भवानस्तु मा भवान्दुष्कृतं पितुः।
अतियत्तत् कृतं कर्म लोके धीरविगर्हितम् ॥ १६ ॥
कैकेयीं मां च तातञ्च सुहृदो बान्धवांश्च नः।
पौरजानपदान् सर्वान् त्रातुं सर्वमिदं भवान् ॥ १७ ॥
क्व चारण्यं क्व च क्षात्रं क्व जटाः क्व च पालनम्।
ईदृशं व्याहतं कर्म न भवान् कर्तुमर्हति ॥ १८ ॥
एष हि प्रथमो धर्मः क्षत्रियस्याभिषेचनम्।
येन शक्यं महाप्राज्ञ! प्रजानां परिपालनम् ॥ १९ ॥
कश्च प्रत्यक्षमुत्सृज्य संशयस्थमलक्षणम्।

अपत्यमस्तु इन्वर्थापत्यमस्तु। मा भवान् दुष्कृतं पितुरनुमन्यतामिति शेषः। तदेवाह,—अतीति। यत्तत्कृतं दशरथकृतं कर्म्म तदतिधर्म्ममतिक्रम्य प्रवृत्तम्। अतएव लोके धीरैर्विगर्हितम्। अतस्तदनुमननमनुचितमिति पितृवचसः परिपाल्यत्वेयुक्ते धर्मवदभिषेकवचनमेव परिपालयेति व्यङ्ग्रम् ॥ १६ ॥

सर्वान् त्रातुं इदं सर्वं मदुक्तम्भवाननुमन्यतामिति भावः ॥ १७ ॥

पित्रुक्तवनवासस्य गर्हितत्वमेवाह,—क्वचेति ॥ १८ ॥

ननु वानप्रस्थाश्रमः क्षत्रियस्याप्यस्ति तत्राह,—एष हीति। येनाभिषेचनेन पालनं तद्रूपधर्म्मसम्पादनं प्रथम आद्यो धर्म्म इत्यर्थः। एवञ्च स आश्रमो राज्यपरिपालनोत्तरं वार्धके उचितो नापि स मुख्यो धर्मइति भावः ॥ १९ ॥

हीनबुद्धिगुणो बालो हीनस्थानेन चाप्यहम् ।
भवता च विनाभूतो न वर्त्तयितुमुत्सहे ॥ २४ ॥
इदं निखिलमव्यग्रं राज्यं पित्र्यमकण्टकम् ।
अनुशाधि स्वधर्मेण धर्मज्ञ! सह बान्धवैः ॥ २५ ॥
इहैव त्वाभिषिञ्चन्तु सर्वाः प्रकृतयः सह ।
ऋत्विजः सवसिष्ठाश्च मन्त्रविन्मन्त्रकोविदाः ॥ २६ ॥
अभिषिक्तस्त्वमस्माभिरयोध्यां पालने व्रज ।
विजित्य तरसा लोकान् मरुद्भिरिव वासवः ॥ २७ ॥
ऋणानि त्रीण्यपाकुर्वन्दुर्हृदः साधु निर्दहन् ।
सुहृदस्तर्पयन् कामैस्त्वमेवात्रानुशाधि माम् ॥ २८ ॥

अनेन विद्यया बालोऽवरः जन्मना । तत् सम्पादेन स्थानेन कनिष्ठभ्रातृत्वेन च बालः ॥ २३ ॥

हीनो बुद्धिगुणः सत्वं यस्य सः तेन हीनसत्वगुण इत्यर्थः । हीनस्थानेन चोपलक्षितः अतएव बालः । त्वया विना वर्त्तयितुं जीवितुमपि नोत्सहे । किं पुनाराज्यं पालयितुमित्यर्थः ॥ २४ ॥ २५ ॥

सहसम्भूय, मन्त्रविदिति सम्बोधनम् ॥ २६ ॥

पालने राज्यपरिपालननिमित्तं तरसा बलेन लोकान् प्रत्वलोकान् मरुद्भिरिवास्माभिः सह.वासव इव त्वं विजित्य तां पालयेति शेषः ॥२७॥

ऋणानीति । जायमानो वै ब्राह्मणस्त्रिभिर्ऋणवान् जायते इति श्रुतो ब्राह्मणपदमुपलक्षणमिति भावः । अत्रायोध्यायां स्थित्वेति शेषः ॥ २८ ॥

आयतिस्थश्चरेत् धर्मं चत्रबन्धुरनिश्चितम् ॥ २० ॥
अथ क्लेशजमेव त्वं धर्मं चरितुमिच्छसि ।
धर्मेण चतुरो वर्णान् पालयन् क्लेशमाप्नुहि ॥ २१ ॥
चतुर्णामाश्रमाणां हि गार्हस्थ्यं श्रेष्ठमाश्रमम् ।
आहुर्धर्मज्ञ ! धर्मज्ञास्तं कथं त्यक्तुमिच्छसि ॥ २२ ॥
श्रुतेन बालः स्थानेन जन्मना भवतो ह्यहम् ।
स कथं पालयिष्यामि भूमिं भवति तिष्ठति ॥ २३ ॥

तस्यामुख्यत्वमेव दर्शयति। कस्येति। प्रत्यक्षं प्रत्यक्षसुखसाधनं धर्मं प्रजापालनरूपमुत्सृज्य संशयस्थमप्रत्यक्षत्वात्। को हि तद्वेद यद-मुष्मिन् लोकेऽस्ति वा नवेति श्रुत्याभिनोयमानसन्देहास्पदम्। अलक्षणम् असुखलक्षणम्। आयतिस्थमुत्तरवयःप्राप्यम्। अनिश्चितम् अनि-त्यानुष्ठानम्। न हि प्रजापालनवत् क्षत्रियस्य नित्यप्राप्तोऽयं धर्म्मः। नित्यत्वे तदुचितदण्डधारणादेः पापित्व प्रसङ्गः। तं क्षत्रबन्धुः क्षत्राणां बन्धुरिति समासेन क्षत्रियकुलसम्मत इत्यर्थः। निन्दायां बन्धुचप्रत्य-यान्तस्तु निन्द्यक्षत्रियादिवाचीति कतकः। कश्चरेत् न कोपीत्यर्थः। अन्ये तु क्षत्रबन्धुरपि निन्द्यक्षत्रियोऽपि राज्यानर्होपीदृशं धर्म्मं न चरेत् किं पुनर्वाच्यं राज्याधिकारीत्यर्थमाहुः ॥ २० ॥

ननु शरीरक्लेशसाध्यधर्म्म एवान्तरङ्गस्तत्राह,—अथेति पक्षान्तरे-ऽथेति शब्दः ॥ २१ ॥

ननूत्तमत्वेन श्रुतत्वात् तदाश्रमकरणं युक्तमत आह,—चतुर्णामिति। सर्वेषां गृहस्थपाल्यत्वादिति भावः ॥ २२ ॥

आर्य्य ! मुदिताः सन्तु सुहृदस्तेऽभिषेचनात् ।
अद्य भीताः पलायन्तु दुष्प्रदास्ते दिशो दश ॥ २९ ॥
आक्रोशं मम मातुश्च प्रमृज्य पुरुषर्षभ ! ।
अद्य तत्रभवन्तञ्च पितरं रक्ष किल्बिषात् ॥ ३० ॥
शिरसा त्वाभियाचेऽहं कुरुष्व करुणां मयि ।
बान्धवेषु च सर्व्वेषु भूतेष्विव महेश्वरः ॥ ३१ ॥
अथवा पृष्ठतः कृत्वा वनमेव भवानितः ।
गमिष्यति गमिष्यामि भवता सार्द्धमप्यहम् ॥ ३२ ॥

तथाहि रामो भरतेन ताम्यता
प्रसाद्यमानः शिरसा महीपतिः ।
नचैव चक्रे गमनाय सत्ववान्
मतिं पितुस्तद्वचने प्रतिष्ठितः ॥ ३३ ॥
तदद्भुतं स्थैर्य्यमवेक्ष्य राघवे
समं जनो हर्षमवाप दुःखितः ।

दुष्प्रदाः दुःखप्रदाः ॥ २९ ॥
आक्रोशं निन्दां तत्रभवन्तं पूज्यम् ॥ ३० ॥
त्वा त्वां मयि बान्धवेषु च करुणां कुर्व्विति सम्बन्धः ॥ ३१ ॥
पृष्ठतः कृत्वा तिरस्कृत्य मत्प्रार्थनामिति शेषः । इतोऽपि वनमेव जनसम्बाधभयेनास्माद्वनादपि वनान्तरमित्यर्थः ॥ ३२ ॥
ताम्यता ग्लायता गमनाय अयोध्यां प्रतीति शेषः ॥ ३३ ॥

न यात्ययोध्यामिति दुःखितोऽभवत्
स्थिरप्रतिज्ञत्वमवेक्ष्य हर्षितः ॥ ३४ ॥
तमृत्विजो नैगमयूथवल्लभा-
स्तथा विसंज्ञाश्रुकलाश्च मातरः ।
तथाब्रुवाणं भरतं प्रतुष्टुवुः
प्रणम्य रामञ्च ययाचिरे सह ॥ ३५ ॥

इत्यार्षे रामायणे वाल्मीकीये अयोध्याकाण्डे
प्रत्यावृत्तिप्रार्थनं नाम षष्ठोत्तरशत-
तमः सर्गः ॥ १०६ ॥

तत् स्थैर्यं पितृवचनस्थितिस्थैर्यं दुःखहर्षयोर्युगपत्प्रवृत्तौ निमित्तं स्वयमेव व्याकरोति कश्चिन्न यातीति ॥ ३४ ॥

नैगमाः पुरे भवाः । निगमो निश्चये वेदे पुरे पथि वणिक्पथे इति । तद्यूथवल्लभास्तद्गणमुख्याः विसंज्ञा विचित्ताश्च ता अश्रुकला अश्रुप्रचुराश्च ॥ ३५ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके
अयोध्याकाण्डे षडधिकशततमः सर्गः ॥ १०६ ॥

## सप्तोत्तरशततमः सर्गः ।

पुनरेवं ब्रुवाणं तं भरतं भरताग्रजः ।
प्रत्युवाच ततः श्रीमान् ज्ञातिमध्ये सुसत्कृतः ॥ १ ॥
उपपन्नमिदं वाक्यं यत्त्वमेवमभाषथाः ।
जातः पुत्रो दशरथात् कैकेय्यां राजसत्तमात् ॥ २ ॥
पुरा भ्रातः ! पिता नः स मातरन्ते समुद्वहन् ।
मातामहे समाश्रौषीद्राज्यशुल्कमनुत्तमम् ॥ ३ ॥
देवासुरे च संग्रामे जनन्यै तव पार्थिवः ।
संप्रहृष्टो ददौ राजा वरमाराधितः प्रभुः ॥ ४ ॥

रामो राजनियोगपालनमेव परमो धर्मो बहूनां सुखसाधनत्वादित्याशयेनावददित्याह,—पुनरिति ॥ १ ॥

उपपन्नमिति । इदम् उक्तवाक्यम् उपपन्नं युक्तिमत् । तत्र हेतुः जात इत्यादि ॥ २ ॥

इदानीं त्वया राज्यस्य मया वनवासस्य चाकरणे राज्ञः प्रतिज्ञाहानिकृतो महानधर्म इत्याह,—पुरेति । तव पुत्रां जनिष्यते तस्मै राज्यं दास्यामीति प्रतिज्ञातवानित्यर्थः ॥ ३ ॥

ननु स्त्रीषु नर्मविवाहे च वृत्त्यर्थे प्राणसङ्कटे । गोब्राह्मणार्थे

ततः सा संप्रतिश्राव्य तव माता यशस्विनी।
अयाचत नरश्रेष्ठ! द्वौ वरौ वरवर्णिनी॥ ५॥
तव राज्यं नरव्याघ्र! मम प्रव्राजनं तथा।
तच्च राजा तथा तस्यै नियुक्तः प्रददौ वरम्॥ ६॥
तेन पित्राहमप्यत्र नियुक्तः पुरुषर्षभ!।
चतुर्दश वने वासं वर्षाणि वरदानिकम्॥ ७॥
सोऽहं वनमिदं प्राप्तो निर्जनं लक्ष्मणान्वितः।
सीतया चाप्रतिद्वन्द्वः सत्यवादे स्थितः पितुः॥ ८॥

हिंसायां नानृतं स्याज्जुगुप्सितमिति स्मृतेः। कौशल्यायां विद्यमानायां कैकेयीविवाहस्य नर्मविवाहत्वात्तत्प्रतिज्ञाहानिर्न दोषायेत्यत आह,—देवासुरे चेति। देवासुरे तत्सम्बन्धिनि रणे च उपकारप्रत्युपकाररूपत्वादेतदनृते महान् दोष इति भावः। वरं वरद्वयम्॥ ४॥

ततोऽहेतोः सम्प्रतिश्राव्य प्रतिज्ञां कारयित्वा॥ ५॥

याचनप्रकारमाह,—तवेति। नियुक्तः वरबलेन नियोजितः तद्वरं तद्रूपवरम्॥ ६॥

अत्र दण्डकारण्ये वने चतुर्दशवर्षाणि वरदानिकं वरदाननिमित्तकं वासं नियुक्तः तं प्रति प्रेरित इत्यर्थः। अत्राप्यमप्यर्थः। देवेभ्यो महत्तवरदाननिमित्तकम् अन्तर्यामिणा तथा प्रेरणात्। अतएवात्र दण्डकारण्ये। एतत्प्रसङ्गेनैव तत्प्रयोजननिष्पत्तेरिति॥ ७॥

ननु वने रक्षआदिभ्यो नानादुःखसम्भावनेत्यतोऽप्रतिद्वन्द्व इति।

भवानपि तथेत्येव पितरं सत्यवादिनम् ।
कर्तुमर्हसि राजेन्द्र ! क्षिप्रमेवाभिषेचनात् । ९ ॥
ऋणान्मोचय राजानं मत्कृते भरत ! प्रभुम् ।
पितरं चापि धर्मज्ञ ! मातरञ्चाभिनन्दय ॥ १० ॥
श्रूयते हि पुरा तात ! श्रुतिर्गीता यशस्विना ।
गयेन यजमानेन गयेष्वेव पितृन् प्रति ॥ ११ ॥
पुन्नाम्नो नरकाद् यस्मात् पितरं त्रायते सुतः ।
तस्मात् पुत्र इति प्रोक्तः पितृन् यः पाति सर्वतः ॥ १२ ॥
एष्टव्या बहवः पुत्रा गुणवन्तो बहुश्रुताः ।

समाधिकबलशत्रुहीनः सर्वोऽपि मत्तोहीनबला एवेति न तद्भयावकाश इति व्यङ्ग्यार्थः । आपाततस्तु अप्रतिद्वन्द्वः स्पर्द्धारहित इति ॥ ८ ॥

तथेत्येव तथैवेति पितृनियुक्त एवेति । अर्हसीत्यार्षम् । अर्हतीति पाठान्तरम् । अतएव सम्बोधनं राजन्द्रेति ॥ ९ ॥

ऋणात् कैकेयीसम्बन्धिऋणात् । मत्कृते मत्प्रीत्यर्थं चीर्हीत्यार्षम् । अभिनन्दय मतु निन्दय । तत्कृतस्यार्थस्य बहुप्रकारकत्वादिति व्यङ्ग्यम् ॥ १० ॥

स्वोक्तस्यावश्यकत्वे सम्मतिमाह,—श्रूयते इति । गयेषु गयाप्रदेशेषु । यजमानेन यागं कुर्वता पितृन् प्रति पितृप्रीतिमुद्दिश्य ॥ ११ ॥

तां श्रुतिमाह,—पुन्नाम्न इति । पुदिति नरकनाम त्रायते कः प्रत्ययः व्युत्पत्त्यन्तरमाह,—पितृनिति । पितृन् पाति इत्यर्थे पुत्रस्य

तेषां वै समवेतानां यदि कश्चिद्गयां व्रजेत् ॥ १३ ॥

एवं राजर्षयः सर्वे प्रतीता रघुनन्दन ! ।

तस्मात् त्राहि नरश्रेष्ठ ! पितरं नरकात् प्रभो ॥ १४ ॥

अयोध्यां गच्छ भरत ! प्रकृतीरनुरञ्जय ।

शत्रुघ्नसहितो वीर ! सह सर्वैर्द्विजातिभिः ॥ १५ ॥

प्रवेक्ष्ये दण्डकारण्यमहमप्यविलम्बयन् ।

आभ्यां तु सहितो वीर ! सीतया लक्ष्मणेन च ॥ १६ ॥

त्वं राजा भरत ! भव स्वयं नराणां
वन्यानामहमपि राजराण्मृगाणाम् ।
गच्छ त्वं पुरवरमद्य संप्रहृष्टः
संहृष्टस्त्वहमपि दण्डकान् प्रवेक्ष्ये ॥ १७ ॥
छायान्ते दिनकरभाः प्रबाधमानं
वर्षत्रं भरत ! करोतु मूर्ध्नि शीताम् ।

पृषोदरादित्वात्साधुत्वम् । पितॄनुद्दिश्य कृतेष्टापूर्तादिना स्वर्लोकप्रापणेन तेषां रक्षणमित्याहुः ॥ १२ ॥

गयां पितृस्वर्गसाधनं गयाक्षेत्रम् । एषा च पितॄणां परलोकसाधनं पुत्रेणावश्यं कार्यमित्यर्थे सम्मतिः ॥ १३ ॥

एवं पितृपरलोकसाधनं प्रति प्रतीता निश्चितवन्तः ॥१४॥१५॥१६॥

वन्यानामिति । अनेन भाविवानरराजाधिपत्यादिसूचितम् ॥ १७ ॥

एतेषामहमपि काननद्रुमाणां
छायां तामतिशायिनीं सुखं श्रयिष्ये ॥ १८ ॥
शत्रुघ्नः कुशलमतिस्तु ते सहायः
सौमित्रिर्मम विदितः प्रधानमित्रम् ।
चत्वारस्तनयवरा वयं नरेन्द्रं
सत्यस्थं भरत ! चराम मा विषीद ॥ १९ ॥

इत्यार्षे रामायणे वाल्मीकीये अयोध्याकाण्डे
प्रबोधनं नाम सप्तोत्तरशत-
तमः सर्गः ॥ १०७ ॥

दिनकरभा इति द्वितीया बहुवचनम् । वर्षत्रं छत्रम् । शीतां छायामित्यन्वयः ॥ १८ ॥

सौमित्रिर्लक्ष्मणः चराम । विधौ लोट् । सम्पादयामेत्यर्थः ॥ १९ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके
अयोध्याकाण्डे सप्तोत्तरशततमः
सर्गः ॥ १०७ ॥

## अष्टोत्तरशततमः सर्गः ।

आश्वासयन्तं भरतं जावालिर्ब्राह्मणोत्तमः ।
उवाच रामं धर्मज्ञं धर्मापेतमिदं वचः ॥ १ ॥
साधु राघव ! माभूत्ते बुद्धिरेवं निरर्थिका ।
प्राकृतस्य नरस्येव आर्य्यबुद्धेस्तपस्विनः ॥ २ ॥
कः कस्य पुरुषो बन्धुः किमाप्यं कस्य केनचित् ।
यदेको जायते जन्तुरेक एव विनश्यति ॥ ३ ॥
तस्मान्माता पिता चेति राम ! सज्जेत यो नरः ।
उन्मत्त इव स ज्ञेयो नास्ति कश्चिद्धि कस्यचित् ॥ ४ ॥

भरताश्वासनं कुर्वन्तं रामं धर्मापेतं धर्ममार्गविरुद्धं लोकायतिक-मतावलम्बनमिति यावत् । वच उवाचेत्यन्वयः ॥ १ ॥

साधु सम्यग्युक्तिमदिदं वच इति पूर्वान्वयेनेतत् । इदं शब्दाय राघवेत्यादि । प्राकृतस्य पामरस्य नरस्येव निरर्थिका एवं बुद्धि पितृवचःपालनीयमित्येवंरूपा । आर्यबुद्धेस्तपस्विनस्ते माभूत् ॥ २ ॥

कुतो माभूदित्यत्र पितापुत्रसम्बन्धस्यैव मिथ्यात्वादित्याह,—क इति । कस्य पुरुषस्य केनचित्सम्बन्धात् किमाप्यं किं प्राप्यं न किमपीत्यर्थः । सम्बन्धाभावादिति भावः । सम्बन्धाभावे हेतुमाह,—एक इति ॥ ३ ॥

यथाग्रामान्तरं गच्छन् नरः कश्चित् क्वचिद्वसेत्।
उत्सृज्य च तमावासं प्रतिष्ठेतापरेऽहनि ॥ ५ ॥
एवमेव मनुष्याणां पिता माता गृहं वसु।
आवासमात्रं काकुत्स्थ ! सज्जन्ते नात्र सज्जनाः ॥ ६ ॥
पित्र्यं राज्यं समुत्सृज्य स नार्हसि नरोत्तम !।
आस्थातुं कापथं दुःखं विषमं बहुकण्टकम् ॥ ७ ॥
समृद्धायामयोध्यायामात्मानमभिषेचय।
एकवेणीधरा हि त्वा नगरी संप्रतीक्षते ॥ ८ ॥
राजभोगाननुभवन् महार्हान् पार्थिवात्मज !।
विहर त्वमयोध्यायां यथा शक्रस्त्रिविष्टपे ॥ ९ ॥
न ते कश्चिद्दशरथस्त्वं च तस्य न कश्चन।
अन्यो राजा त्वमन्यस्तु तस्मात् कुरु यदुच्यते ॥ १० ॥

यः सज्जेत स उन्मत्त इव ज्ञेयः ॥ ४ ॥ ५ ॥

आवासमात्रं पान्थानामिव। अतो नात्र सज्जनाः सज्जन्ते ॥ ६ ॥

पित्र्यं राज्यमित्यास्तिकमतावलम्बिरामाभिप्रायेणोक्तिः। कापथं वनमार्गम् आस्तिकसेव्यं मार्गञ्च ॥ ७ ॥

एकवेणीधरत्वं विरहिणीलक्षणम्। त्वा त्वाम् ॥ ८ ॥ ९ ॥

उक्तं सम्बन्धाभावमुपसंहरति न ते इति। मिथ्यापितृवचनाभिनिवेशमुक्त्वा राज्यं कुर्विति यदुच्यते तत् कुरु। अन्यः त्वज्जनकादन्यः सम्प्रति राजा एवं छायाभङ्गवादेनाग्यत्वं गूढाशयतयोक्तम्। नन्वेवमपि

बीजमात्रं पिता जन्तोः शुक्रं शोणितमेवच।
संयुक्तमृतुमन्मात्रा पुरुषस्येह जन्म तत्॥ ११॥
गतः स नृपतिस्तत्र गन्तव्यं यत्र तेन वै।
प्रवृत्तिरेषा भूतानां त्वं तु मिथ्या विहन्यसे॥ १२॥
अर्थधर्मपरा येये तांस्तांश्छोचामि नेतरान्।

तत्सन्तानानिविष्टतया कश्चित्सम्बन्धो भवेत्। अन्यथा पितरं विनापि पुत्रोत्पत्तिः स्यात् इति चेन्न तावतापि निमित्तकारणत्वमेव नोपादानत्वं तेन यूकालिक्षादेरिव तवापि तेन न कश्चित्सम्बन्धः इत्याशयः॥ १०॥

बीजमात्रं निमित्तकारणमात्रम्। मात्रपदेनोपादानत्वव्यावृत्तिः। तर्ह्युपादानं किं तत्राह,—ऋतुमन्मात्रेति। ऋतुमत्या मात्रेत्यर्थः पुंवद्भावः। यत्नाहृतया मात्रा गर्भे धृतं संयुक्तं परस्परमिलितं शुक्रं शोणितञ्च। तदिह लोके पुरुषस्य शरीरस्य जन्म उपादानकारणं भवतीत्यर्थः। एवञ्च शुक्रशोणितयोगात् आकृष्टपञ्चभूतसमूह एव पुरुषस्तेनतेन न तस्य केनचित्सम्बन्ध इत्याशयः॥ ११॥

गत इति। यत्र येषु भूतेषु गन्तव्यं तत्र तेषु गतो लयं प्राप्तः। त्वमपि तथैव लयं प्राप्स्यसीति स्थिरस्य कस्यचिदभावात् कः केन सम्बन्ध इति भावः। उक्ता एषा भूतसमूहरूपस्य तेषु लयप्राप्तिरूपाप्रवृत्तिर्मर्त्यानां स्वभावप्राप्तेति शेषः। अतस्त्वं मिथ्या विहन्यसे राज्यरूपात् पुरुषार्थादिति शेषः॥ १२॥

नन्वर्थविघातेऽपि धर्मो मे भविष्यतीत्यत्राह,—अर्थेत्यादि। अर्थे प्रत्यक्षसिद्धपुरुषार्थे प्राप्ते तं परित्यज्य ये ये आस्तिका धर्मपरास्तान्

ते हि दुःखमिह प्राप्य विनाशं प्रेत्य लेभिरे ॥ १३ ॥
अष्टका पितृदैवत्यमित्ययं प्रसृतो जनः ।
अन्नस्योपद्रवं पश्य मृतो हि किमशिष्यति ॥ १४ ॥
यदि भुक्तमिहान्येन देहमन्यस्य गच्छति ।
दद्यात्प्रवसतां श्राद्धं न तत्पथ्यशनं भवेत् ॥ १५ ॥
दानसंवनना ह्येते ग्रन्था मेधाविभिः कृताः ।

तान् शोचामि । धर्मफलभोक्तुरभावादिति भावः । तदेवाह,—ते हीति । प्रेत्यान्तसमयं प्राप्य विनाशं लेभिरे तत्त्वेनोपार्जितधर्मस्य तत्रावस्थितिरस्ति । प्राप्य विनाशं प्रतिपेदिरे इति पाठान्तरम् ॥१३॥

नन्वेवं श्राद्धाद्याचारासङ्गतिस्तत्राह,—अष्टकेति । तदादि यत् पितृदैवत्यं श्राद्धकर्म इति तत्र प्रसृतः प्रवृत्तोऽयं जनस्तस्यान्नस्य स्वभोगसाधनस्य उपद्रवं नाशं केवलं करोति । पश्य विचारय तामेव विचार्यां युक्तिमाह,—मृतोहीति ॥ १४ ॥

ननु तैरप्राभोजनेऽपि तदुद्देशेन दत्तं लोकान्तरे तमुपतिष्ठतीत्येतमर्थं भोक्त्रभावेन दूषितमपि युक्त्यन्तरेण दूषयति यदीति । प्रवसतामुद्देशं कृत्वा श्राद्धं दद्यात् । प्राप्तकाले लिङ् । तद्दानमेवोचितमित्यर्थः । नतु तत्पथ्यशनं तस्मै दीयमानं पथ्यशनं पाथेयं न्याय्यं भवेत् । भारवहने न दुःखदत्वादिति भावः । एतेनैव न्यायेन देवार्थदानमपि व्यर्थमित्युपपादितम् ॥ १५ ॥ ( अन्येन भुक्तं अन्यस्य देहं गच्छति यदि तदा प्रवसतः श्राद्धं दद्यात् पथि गच्छन्तमुद्दिश्यान्यं भोजयेत् तदन्नं पथिकस्य पाथेयं भवेत् नतु तथास्तीति टीकान्तरसम्मतोऽर्थः ) ।

यजस्व देहि दीक्षस्व तपस्तप्यस्व सन्त्यज ॥ १६ ॥
स नास्ति परमित्येतत् कुरु बुद्धिं महामते ! ।
प्रत्यक्षं यत्तदातिष्ठ परोक्षं पृष्ठतः कुरु ॥ १७ ॥
सतां बुद्धिं पुरस्कृत्य सर्वलोकनिदर्शिनीम् ।
राज्यं त्वं प्रतिगृह्णीष्व भरतेन प्रसादितः ॥ १८ ॥

इत्यार्षे रामायणे वाल्मीकीये अयोध्याकाण्डे प्रबोधनं नाम अष्टोत्तरशततमः सर्गः ॥ १०८ ॥

एवं वैदिकाचारं प्रदूष्य तत्प्रतिपादकागमाप्रामाण्यमाह,—दानेति। यजस्व देवपूजां कुरु। देहि अन्नादिदानम्। दीक्षस्व यागार्थम्। तपस्तप्यस्व चान्द्रायणादि। सन्त्यज प्रव्रजेत्येवंपरा वेदादयो ग्रन्थाः दानसंवननाः दानाय वशीकरणोपायभूताः मेधाविभिः वार्त्तादिना जीवने क्लेशं पश्यद्भिः। पामरप्रतारणायानायासेन धनग्रहणाय कृताः। अतो न ते प्रमाणमिति भावः ॥ १६ ॥

परम् ऐहिकात्परं परलोकप्रयोजनं किञ्चिद्धर्माख्यं नास्तीति बुद्धिं कुरु। परोक्षम् अनुमानशब्दादिगम्यं पृष्ठतः कुरु त्यज ॥ १७ ॥

सतां प्रत्यक्षसिद्धस्यैव सत्यत्वं वदताम्। तएव हि साधवो न तु शब्दप्रमाणकादेः सत्यत्वं वदन्त इति भावः। भिन्ने पदे वा स त्वं तामुक्तामित्यर्थो वा सर्वलोकनिदर्शिनीं सर्वलोकसम्मतामित्यर्थः ॥ १८ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके अयोध्याकाण्डे अष्टोत्तरशततमः सर्गः ॥ १०८ ॥

## नवोत्तरशततमः सर्गः ।

जाबालेस्तु वचः श्रुत्वा रामः सत्यपराक्रमः ।
उवाच परया सूक्त्या बुद्ध्या विप्रतिपन्नया ॥ १ ॥
भवान्मे प्रियकामार्थं वचनं यदिहोक्तवान् ।
अकार्यं कार्य्यसङ्काशमपथ्यं पथ्यसम्मितम् ॥ २ ॥
निर्मर्य्यादस्तु पुरुषः पापाचारसमन्वितः ।
मानं न लभते सत्सु भिन्नचारित्रदर्शनः ॥ ३ ॥

तदेतत् खण्डयति रामः । जाबालेरिति । सत्यपराक्रमः सत्यप्रधानः पराक्रमो यस्य सः । सत्यात्मनां वर इति पाठे सत्यस्वभावानां श्रेष्ठ इत्यर्थः । विप्रतिपन्नया जाबाल्युक्तार्थे प्रतिपत्तिरहितया बुद्ध्या युक्तः सन् । सूक्त्या वेदशास्त्रानुवचनालम्बनेनोवाच ॥१॥

प्रियकामार्थं प्रीतिहेतुकामभोगसम्पादनार्थम् अकार्यं परमार्थतः कर्त्तुमनर्हं कार्य्यसङ्काशं प्रमाणाभासयुक्तत्वात् । अपथ्यं दुःखोदर्कम् ॥ २ ॥

निर्मर्य्यादः उत्पथवर्त्ती भिन्नचारित्रदर्शनः साधुसम्मतचारित्रप्रतिपादकशास्त्राद्विपरीतव्यवहारप्रतिपादकलोकायतिकादिशास्त्रप्रसक्तः । सत्सु मानं पूजां न लभते ॥ ३ ॥

कुलीनमकुलीनं वा वीरं पुरुषमानिनम् ।
चारित्रमेव व्याख्याति शुचिं वा यदि वाशुचिम् ॥ ४ ॥
अनार्य्यस्त्वार्य्यसंस्थानः शौचाद्धीनस्तथा शुचिः ।
लक्षणवदलक्षण्यो दुःशीलः शीलवानिव ॥ ५ ॥
अधर्मं धर्मवेषेण यदिमं लोकसङ्करम् ।
अभिपत्स्ये शुभं हित्वा क्रियाविधिविवर्जिताम् ॥ ६ ॥
कश्चेतयानः पुरुषः कार्य्याकार्य्यविचक्षणः ।
बहुमन्येत मां लोके दुर्वृत्तं लोकदूषणम् ॥ ७ ॥

इदानीं वेदोक्ताचार एव पुंसामिहामुत्रसम्मानहेतुरित्याह,—कुलीनमिति । पुरुषमानिनम् अवीरमिति यावत् । चारित्रं वेदानुमताचारः तत् सम्पन्नः सन् कुलीनत्वादि ख्यातिं ख्यापयति असम्पन्नस्त्वाकुलीनत्वादीति भावः ॥ ४ ॥

किञ्च त्वत्सम्मताचाराङ्गीकारे सर्वथानर्थप्राप्तिरेवेत्याह,—अनार्य इत्यादि । आर्यसंस्थानस्तत्सदृशः शुचिः शुचिरिव भासमान इति शेषः । लक्षणवल्लक्षणयुक्तवद्भासमानो भवति । तदुक्ताचारव्यवहृत्तेति शेषः ॥ ५ ॥

यदि अहं त्वदुपदिष्टं लोकसङ्करकारकमधर्ममार्गम् धर्मवेषेण युक्तोभिपत्स्ये तदा विधिविवर्जितां अत्याद्युक्तविधानरहितां क्रियां ज्ञात्वा । तत एव शुभं हित्वा अशुभं प्राप्नुयामिति शेषः ॥ ६ ॥

कस्य यास्याम्यहं वृत्तं केन वा स्वर्गमाप्नुयाम् ।
अनया वर्त्तमानोऽहं वृत्त्या हीनप्रतिज्ञया ॥ ८ ॥
कामवृत्तः स्वयं लोकः कृत्स्नः समुपवर्त्तते ।
यद्वृत्ताः सन्ति राजानस्तद्वृत्ताः सन्ति हि प्रजाः ॥ ९ ॥
सत्यमेवानृशंसञ्च राजवृत्तं सनातनम् ।
तस्मात् सत्यात्मकं राज्यं सत्ये लोकः प्रतिष्ठितः ॥ १० ॥

तामेवाशुभप्राप्तिं दर्शयति । कश्चेतयान इति । चेतन इत्यर्थः । लोकदूषणं परलोकदूषणमार्गालम्बिनम् ॥ ७ ॥

अनया त्वदुपदिष्टया वृत्त्या । हीना सत्यपरिपालनविषयिणी प्रतिज्ञा यस्यां तया वर्त्तमानः । केन साधनेन स्वर्गमाप्नुयां न केनापि किञ्चेदं त्वदुपदिष्टं वृत्तं कस्य किं सम्बन्धि अहं यास्यामि यत्पित्रादिषु न कस्यापि । पित्रादिवृत्तानुसरणमेव च येनास्य पितरो याता इति शास्त्रविहितमिति भावः ॥ ८ ॥

किञ्च त्वदुपदिष्टमार्गे तिष्ठन्नहं प्रथमतः कामवृत्तो यथेष्टचारी स्यां तदनु अयं कृत्स्नो लोकस्तथा समुपवर्त्ततेत्यर्थः । एवं निर्बन्धे कारणमाह,—यद्वृत्ता इति ॥ ९ ॥

तस्मात्त्वदुपदिष्टस्य मार्गस्य सर्वलोकनाशकत्वेन शास्त्रीयमार्गालम्बनमेवोचितमित्याह,—सत्यमिति । अनृशंसं भूतानुकम्पाप्रधानम् । सनातनम् अनादिशास्त्रसिद्धं राजवृत्तञ्च । सत्यमेव सत्यवचनमेव मुख्यो राजाचार इत्यर्थः । यतो राजवृत्तं सत्यात्मकं तस्मात्तेषां राज्यमपि

ऋषयश्चैव देवाश्च सत्यमेवहि मेनिरे।
सत्यवादी हि लोकेऽस्मिन् परं गच्छति चाक्षयम् ॥ ११ ॥
उद्विजन्ते यथा सर्पान्नरादनृतवादिनः।
धर्मः सत्यपरो लोके मूलं सर्वस्य चोच्यते ॥ १२ ॥
सत्यमेवेश्वरो लोके सत्ये धर्मः सदाश्रितः।
सत्यमूलानि सर्वाणि सत्यान्नास्ति परं पदम् ॥ १३ ॥

सत्यात्मकं सत्यैकप्रतिष्ठितम्। न केवलं राज्यमेवापि तु सर्वोऽपि लोकः सत्ये प्रतिष्ठितः ॥ १० ॥

सत्यमेव हि मेनिरे सत्यलोकान्तसकललोकप्रदमिति शेषः। परमक्षयं ब्रह्मलोकम् ॥ ११ ॥

अनृतवादिनो नरात्तथोद्विजन्ते यथा सर्पात्। सत्यं परं श्रेष्ठं यस्य सः धर्मः सर्वस्य मूलमुच्यते ॥ १२ ॥

लोके ईश्वरः सत्यमेव सत्यपदवाच्य इति प्रसिद्ध इत्यर्थः। तथा सद्भिराश्रितो धर्मः सत्ये सत्यपदवाच्ये ईश्वरे प्रतिष्ठितः। आदौ तस्यैव धर्मोपदेष्टृत्वादित्यर्थः। सत्ये पद्मा प्रतिष्ठितेति पाठान्तरम्। पद्मा लक्ष्मीः। सत्यमूलानि सर्वाणि इत्यनेन जगदुपादानप्रवर्त्तकत्वे सर्वाधिष्ठानत्वेन च तत्सिद्धिर्दर्शिता। तस्यैव तत्त्वे हेतुमाह,— सत्यात्परं पदं नास्ति। अनेन तदितरस्य सर्वस्य मिथ्यात्वं मचेतनत्वञ्च दर्शितम्। एतेन चेतनानधिष्ठितामायैव जगदुपादानकारणमिति निरस्तं चेतनाधिष्ठानं विनातत्परिणामासम्भवात्। तस्याः परिणामित्वेन मिथ्यात्वेन चेतनाधिष्ठानत्वासम्भवाच्च ॥ १३ ॥

दत्तमिष्टं हुतञ्चैव तप्तानि च तपांसि च ।
वेदाः सत्यप्रतिष्ठानास्तस्मात् सत्यपरो भवेत् ॥ १४ ॥
एकः पालयते लोकमेकः पालयते कुलम् ।
मज्जत्येको हि निरये एकः स्वर्गे महीयते ॥ १५ ॥
सोऽहं पितुर्निदेशन्तु किमर्थं नानुपालये ।
सत्यप्रतिश्रवः सत्यं सत्येन समयो कृतम् ॥ १६ ॥

एवं नास्तिकं प्रति ईश्वरं प्रसाध्य वेदप्रामाण्यं साधयति,—दत्तमित्यादि । दत्तादीनि प्रतिपादयन्तो वेदाः सत्यप्रतिष्ठानाः सत्यादीश्वरात् श्वासप्रश्वासवत् आविर्भूता इति वक्तृदोषशङ्काकलङ्कराहित्येन तत्-प्रतिपादितदानादीनां फलसंवाददर्शनेन च सर्वथाप्रामाण्यशङ्कारहिताः । किन्तु स्वतः प्रमाणभूता एवेति भावः । तस्मात् सत्यस्येश्वर-वाचकवाच्यत्वेन तदभेदात् । सत्यपरः सत्यपालनतत्परो भवेदित्यर्थः ॥ १४ ॥

वेदोक्तधर्माधर्मफलस्य प्रत्यक्षमनुभूयमानत्वेन तत्प्रामाण्यं सिद्धमित्याह,—एक इति । लोकं राज्यं कुलं स्वकुलमात्रं एतेन पालन-साधनधर्मफलतारतम्यस्य वेदोक्तस्यानुभवो दर्शितः निरयोऽत्र दुःखं स्वर्गश्च सुखं तेन धर्माधर्मफलानुभवो दर्शितः ॥ १५ ॥

सोऽहं उक्तरीत्या एवं विवेकवानित्यर्थः । ननु स्त्रीवशतया पितृकृते नियोगे किमियता निर्बन्धनेन तत्राह,—सत्येति । यतो मे पिता सत्यप्रतिश्रवः सत्यप्रतिज्ञः स्वप्रतिज्ञातसत्याङ्गीकारवान् । समयी

नैव लोभान्न मोहाद्वा न चाज्ञानात्तमोऽन्वितः।
सेतुं सत्यस्य भेत्स्यामि गुरोः सत्यप्रतिश्रवः॥ १७॥
असत्यसन्धस्य सतश्चलस्यास्थिरचेतसः।
नैव देवा न पितरः प्रतीच्छन्तीति नः श्रुतम्॥ १८॥
प्रत्यगात्ममिमं धर्मं सत्यं पश्याम्यहं ध्रुवम्।
भारः सत्पुरुषैश्चीर्णस्तदर्थमभिनन्द्यते॥ १९॥
क्षात्रं धर्ममहं त्यक्ष्ये ह्यधर्मं धर्मसंहितम्।

सदाचारवान्। अतस्तेन सत्येन सत्यपरिपालनेन हेतुना सत्यमेव मां प्रति कृतं उक्तमित्यर्थः॥ १६॥

अतो लोभाद्राज्यस्य मोहादुक्तस्य विस्मरणात प्रतिज्ञात्यागे दोष-स्याज्ञानाद्वा त्वदुक्तवाक्यात् शास्त्रादावश्रद्धारूपतमोयुक्तो वा। पूर्वं सत्यप्रतिश्रवः शपथपूर्वकं कृतप्रतिज्ञः सन्नेव भेत्स्यामि न भेत्स्यामि न च भेत्स्यामीति त्रिवारोक्त्या सर्वथा दार्ढ्यं सूचितम्॥ १७॥

एवं सत्ये दृढस्थितौ हेतुमाह। असत्यसन्धस्य प्रतिज्ञाविषयसत्य-हीनस्य चलस्य चञ्चलस्वभावस्य। तस्यैव विवरणमस्थिरेत्यादि। ईदृ-शस्य सतः एतैर्गुणैर्युक्तस्य देवादयो हव्यकव्यादि न गृह्णन्तीति नः श्रुतम्॥ १८॥

प्रत्यगात्मनो जीवानुद्दिश्य प्रवृत्तमित्यर्थे प्रत्यगात्ममित्यार्षत्वात् साधुः। इमं सत्यं सत्यपालनरूपं धर्मम् अहं ध्रुवं सर्वधर्मेषु मुख्यं पश्यामि। अयं भारः वनवासे जटावल्कलादिभारः सत्यपालनरूपो वा पूर्वैः सत्पुरुषैराचीर्णस्तदर्थं मयाप्यभिनन्द्यते आद्रियते॥ १९॥

क्षुद्रैर्नृशंसैर्लुब्धैश्च सेवितं पापकर्मभिः ॥ २० ॥

कायेन कुरुते पापं मनसा सम्प्रधार्य्य तत् ।

अनृतं जिह्वया चाह त्रिविधं कर्मपातकम् ॥ २१ ॥

भूमिः कीर्त्तिर्यशो लक्ष्मीः पुरुषं प्रार्थयन्ति हि ।

सत्यं समनुवर्त्तन्ते सत्यमेव भजेत्ततः ॥ २२ ॥

ननु स्वधर्मराज्यपालनमेव किमिति नाभिनन्द्यते तत्राह,—क्षात्रमिति। धर्मसंहितं धर्मवत्प्रतिभासमानं वस्तुतोऽधर्मं क्षुद्रादिभिः सेवितमीदृशं क्षात्रधर्मं पित्राज्ञाभङ्गेन राज्यकरणरूपं अहं त्यक्ष्ये। नतु न्याय्यं क्षात्रधर्ममिति भावः ॥ २० ॥

अस्य पापस्य शारीरसाध्यत्वेऽपि कायिकवाचिकमानसिकसकलपापप्रसक्तिरित्याह,—कायेनेति। आदौ मनसा एवं कर्म करिष्य इति पापं संप्रधार्य्य। ततो जिह्वया ऋतं धर्मजनकम् ततो भिन्नमनृतं तत्कर्म कर्त्तव्यत्वेन जिह्वया तत्सहायभूतेषु पुरुषेषु आह। ततः कायेन कुरुते। अतः पापं कर्मक्रियारूपं पापं त्रिविधं कायिकवाचिकमानसिकरूपत्रिविधजनकमित्यर्थः। तेन कायिकं पापं बहुदुःखजनकमिति भावः। कलौ तु पापसंकल्पादितो न दोष इत्युक्तं भागवते। नानुद्वेष्टि कलिं सम्राट् सारङ्ग इव सारभुक्। कुशलान्याशु सिध्यन्ति नेतराणि कृतानि यत्। सम्राट् परीक्षित्सारमाह। कुशलानि पुण्यानि आशु सङ्कल्पमात्रात् सिध्यन्ति। यथा मानसपूजा। इतराणि पापानि सङ्कल्पमात्रान्न फलन्ति यत् यतस्तानि कृतान्येव फलन्तीति तदर्थः ॥ २१ ॥

श्रेष्ठं ह्यनार्य्यमेव स्याद्यद्भवानवधार्य्य माम्।
आह युक्तिकरैर्वाक्यैरिदं भद्रं कुरुष्व ह॥ २३॥
कथं ह्यहं प्रतिज्ञाय वनवासमिमं गुरोः।
भरतस्य करिष्यामि वचो हित्वा गुरोर्वचः॥ २४॥
स्थिरा मया प्रतिज्ञाता प्रतिज्ञा गुरुसन्निधौ।
प्रहृष्टमानसा देवी कैकेयी चाभवत्तदा॥ २५॥
वनवासं वसन्नेव शुचिर्नियतभोजनः।
मूलपुष्पफलैः पुण्यैः पितॄन् देवांश्च तर्पयन्॥ २६॥

अथ सत्यस्य सर्वार्थसाधनत्वमाह,—भूमिरिति। प्रार्थयन्तीति सत्यवन्तमिति शेषः। समनुवर्त्तन्ते इति शिष्टा इति शेषः। यदेवं ततः सत्यमेव भजेत् इत्यर्थः॥ २२॥

यद्भवान् अवधार्य्य युक्तत्वेन निश्चित्य मां प्रति युक्तिरेव करः करणं येषां तैर्वाक्यैरिदं भद्रं राज्यं ह निश्चयेन कुरुष्व स्वीकुरुष्वेति श्रेष्ठं हि श्रेष्ठमिवाह,—तदनार्य्यमन्याय्यमेव स्याद्भवेत्॥ २३॥

अनार्य्यत्वमेव दर्शयन् राज्यं त्वं प्रतिगृह्णीष्व भरतेन प्रसादित इत्यस्योत्तरमाह,—कथमिति। गुरोः पुरत इमं गुर्वाज्ञप्तं गुरोर्वचो हित्वेत्यन्वयः॥ २४॥

कैकेयी चेति। एवञ्च तस्या हर्षदस्य पुनरहर्षदत्वमत्यन्तमनुचितमिति भावः॥ २५॥

तर्पयन् प्रतिज्ञां पालयिष्यामीति शेषः॥ २६॥

सन्तुष्टपञ्चवर्गोऽहं लोकयात्रां प्रवाहये * ।
अकुहः श्रद्दधानः सन् कार्याकार्यविचक्षणः ॥ २७ ॥
कर्मभूमिमिमां प्राप्य कर्त्तव्यं कर्म यत् शुभम् ।
अग्निर्वायुश्च सोमश्च कर्मणां फलभागिनः ॥ २८ ॥
शतं क्रतूनामाहृत्य देवराट् त्रिदिवं गतः ।
तपांस्युग्राणि चास्थाय दिवं प्राप्ता महर्षयः ॥ २६ ॥

अमृष्यमाणः पुनरुग्रतेजा
निशम्य तन्नास्तिकवाक्यहेतुम् ।
अथाब्रवीत्तं नृपतेस्तनूजो
विगर्हमाणो वचनानि तस्य ॥ ३० ॥

सन्तुष्टपञ्चवर्गः मूलादिभिस्तुष्टपञ्चेन्द्रियवर्गः । लोकयात्रां पितृवचनपालनव्यवहारम् । प्रवाहये प्रवाहरूपेण प्रवर्त्तयामीत्यर्थः । अकुहः अकपटशीलः श्रद्दधानः आस्तिकः ॥ २७ ॥

शुभकरणे हेतुरग्निरित्यादि । यच्छुभं कर्म कर्त्तव्यम् । तेषां शुभकर्मणां तत्तल्लोकप्राप्तिः फलमिति भावः ॥ २८ ॥

शतमिति । अनेन पूर्वोक्तं समर्थितम् । अतीतानागतचन्द्रादीनां तत्तत् फलानुभवेन पूर्वोक्तस्य प्रामाण्यं दर्शितञ्च ॥ २६ ॥

नास्तिकवाक्यहेतुं नास्ति परलोक इति वचनोपपादकम् । यदि भुक्तमिहान्येनेत्याद्युक्तशुष्कतर्करूपम् अमृष्यमाणो जाबालमिति शेषः ।

* "प्रवर्त्तये" इति वा पाठः ।

सत्यञ्च धर्मञ्च पराक्रमञ्च
भूतानुकम्पां प्रियवादिताञ्च ।
द्विजातिदेवातिथिपूजनञ्च
पन्थानमाहुस्त्रिदिवस्य सन्तः ॥ ३१ ॥

तेनैवमाज्ञाय यथावदर्थ-
मेकोदयं सम्प्रतिपद्य विप्राः ।
धर्मं चरन्तः सकलं यथावत्
काङ्क्षन्ति लोकागममप्रमत्ताः ॥ ३२ ॥

निन्दाम्यहं कर्म कृतं पितुस्त-
द्यत्त्वामगृह्णाद्विषमस्थबुद्धिम् ।

तस्य जाबालस्य । अनेन नास्तिकवृत्तयो ब्राह्मणा अपि राज्ञोवश्यं वाग्दण्डेन दण्ड्या इति सूचितम् ॥ ३० ॥

पराक्रमं चान्द्रायणादि तपः यत इमानि त्रिदिवस्य पन्थानमाहुः सन्तः ॥ ३१ ॥

यतश्च तेन सद्वचनेनैवमर्थमेकोदयं मुख्यफलवन्तं यथावदाज्ञाय श्रुत्वा संप्रतिपद्य श्रुत्यनुकूलतर्कैर्निर्णीय तं धर्ममप्रमत्ताः 'सावधाना यथावच्चरन्तः लोकागमं तत्तल्लोकप्राप्तिं काङ्क्षन्ति ॥ ३२ ॥

अतो निन्दामीति । अनयानुपदोक्तया एवंविधया प्रत्यक्षैकप्रमाणवादिचार्वाकमतानुसारिण्या चरन्तं लोकनाशायाटन्तम् अतएव नास्तिकत्वादिगुणयुक्तं विषमस्थबुद्धिं अवैदिकदुर्मार्गप्रतिष्ठितबुद्धिं

बुद्ध्यानयैवंविधया चरन्तं
सुनास्तिकं धर्मपथादपेतम् ॥ ३३ ॥
यथा हि चोरः स तथा हि बुद्ध-
स्तथागतं नास्तिकमत्र विद्धि ।
तस्माद्धि यः शक्यतमः प्रजानां
न नास्तिकेनाभिमुखो बुधः स्यात् ॥ ३४ ॥
त्वत्तो जनाः पूर्वतरे द्विजाश्च
शुभानि कर्माणि बहूनि चक्रुः ।

त्वां यो मे पिता अस्मात् याजकत्वेनाङ्गीकृतवान् तत्पितुः कर्म निन्दामि ॥ ३३ ॥

बौद्धादयो राज्ञश्चोरवद्दण्ड्या इत्याह,—यथाहीति। बुद्धो बुद्ध-मतानुसारी तथा चोरवद्दण्ड्य इति हि प्रसिद्धं नास्तिकं चार्वाकं तथागतं तत्सदृशं चोरवद्दण्ड्यं विद्धि। नास्तिकविशेषस्तथागतः तमपि चोरवद्दण्ड्यमिति शेष इत्यन्ये। वेदप्रामाण्यापहृतत्वेन तेषामपि चोरत्वात्। हि निश्चयेन तस्मात्प्रजानामनुग्रहाय राज्ञा चोरवदेव दण्डयितुं शक्यतमो यः स चोरवदेव दण्ड्यः। दण्डायोग्ये तु बुधो ब्राह्मणो नास्तिके अभिमुखो न स्यात् तत्सम्भाषणादि न कुर्वीतेत्यर्थः। तुल्यन्यायात् दण्डासमर्थो ब्राह्मणोऽपि तद्विमुखः स्यादिति सूचि-तम् ॥ ३४ ॥

अथ वेदोक्तधर्मे शिष्टाचारं प्रमाणयति। यतः त्वत्तोऽन्ये इति

छित्वा सदेमञ्च परञ्च लोकं
तस्माद्द्विजाः स्वस्ति कृतं कृतञ्च ॥ ३५ ॥
धर्मे रताः सत्पुरुषैः समेता-
स्तेजस्विनो दानगुणप्रधानाः।
अहिंसका वीतमलाश्च लोके
भवन्ति पूज्या मुनयः प्रधानाः ॥ ३६ ॥
इति ब्रुवन्तं वचनं सरोषं
रामं महात्मानमदीनसत्वम्।
उवाच पथ्यं पुनरास्तिकञ्च
सत्यं वचः सानुनयञ्च विप्रः ॥ ३७ ॥

शेषः। त्वदन्ये द्विजा जनाः। पूर्वतरे श्रेष्ठा आर्षमिदम्। यदा इति पाठे नाध्याहारापेक्षा तस्यैव यत इत्यर्थकत्वात्। बहूनि शुभानि चक्रुः। इमं लोकं परञ्च लोकं छित्वा। ऐहिकामुष्मिकफलकामनां त्यक्त्वापि वेदोक्तोऽयं धर्म इत्येतावतैव कर्माणि चक्रुरिति तात्पर्य्यम्। तस्माद्ये द्विजाः स्वस्ति अहिंसासत्यादिकं कृतं तपोदानपरोपकारादि कृतं यज्ञादि कुर्वते वेदप्रामाण्यादेव ॥ ३५ ॥

तथा धर्मे रताः निष्ठावन्तो ते प्रधानाः श्रेष्ठाः मुनयो वसिष्ठाद्या ऋषयः पूज्या भवन्ति लोके न त्वादृशा इत्यर्थः ॥ ३६ ॥

इति धिक्कृतो जाबालिः स्वविषयकोपशमनायाह,—इतीति। पथ्यं परमार्थम् ॥ ३७ ॥

न नास्तिकानां वचनं ब्रवीम्यहं
न नास्तिकोऽहं न च नास्ति किञ्चन ।
समीक्ष्य कालं पुनरास्तिकोभव
भवेय काले पुनरेव नास्तिकः ॥ ३८ ॥
स चापि कालोऽयमुपागतः शनै-
र्यथा मया नास्तिकवागुदीरिता ।
निवर्त्तनार्थं तव राम ! कारणात्
प्रसादनार्थञ्च मयैतदीरितम् ॥ ३९ ॥

इत्यार्षे रामायणे वाल्मीकीये अयोध्याकाण्डे जावालि-
रामसंवादो नाम नवोत्तरशततमः सर्गः ॥१०९॥

तदेवाह,—नेति । किञ्चन परलोकादि नास्ति इति न किन्तु अस्त्येव । कालं पारलौकिकव्यवहारकालं काले लौकिकव्यवहारकाले । एवञ्च सर्वमतज्ञेन कालविशेषेऽन्यथावाग्व्यवहारेऽपि न तस्य नास्तिकत्वं भवतीति भावः ॥ ३८ ॥

स चापि कालः लौकिकव्यवहारप्रयोजन इत्यर्थः । ततः प्रयोजनमाह,—निवर्त्तनार्थमिति । निवर्त्तनरूपं प्रयोजनमुद्दिश्य कारणात् त्वदीयास्तिकत्वाद्यतिशयस्य लोकेतिप्रसिद्धिसम्पादनरूपकारणान्नास्तिकवागुक्ता । तादृशीं वाणीं श्रुत्वा क्रुद्धस्य तव प्रसादनार्थं चैतन्न नास्तिकानामित्यादि उदीरितम् ॥ ३९ ॥

इति श्री रामाभिरामे श्रीरामीये रामायणतिलके अयोध्या-
काण्डे नवोत्तरशततमः सर्गः ॥ १०९ ॥

## दशोत्तरशततमः सर्गः ।

क्रुद्धमाज्ञाय रामन्तु वसिष्ठः प्रत्युवाच ह
जाबालिरपि जानीते लोकस्यास्य गतागतिम् ॥ १ ॥
निवर्त्तयितुकामस्तु त्वामेतद्वाक्यमब्रवीत् ।
इमां लोकसमुत्पत्तिं लोकनाथ ! निबोध मे ॥ २ ॥
सर्वं सलिलमेवासीत् पृथिवी तत्र निर्मिता ।
ततः समभवद् ब्रह्मा स्वयम्भूर्दैवतैः सह ॥ ३ ॥
स वराहस्ततो भूत्वा प्रोज्जहार वसुन्धराम् ।

अथ वसिष्ठो भगवतो जाबालिविषयकोपनाटनं शमयितुमभिषेकस्वीकारशेषतया ब्रह्माणमारभ्य ज्येष्ठाभिषेकरूपं कुलाचारं कथयति,—क्रुद्धमित्यादि । गतागतिं परलोकगमनं ततः पुनरिहागतिञ्च अनेन जाबालेरास्तिकत्वं उक्तं भवति ॥ १ ॥

लोकनाथेत्यनेन लोकनाथावतारत्वं ध्वनयति ॥ २ ॥

सर्वमिति । पूर्वाहान्तेऽपसृतं सर्वं जगत् पराहादौ सलिलमेव सलिलविग्रहहिरण्यगर्भात्मनावस्थितमभूत् तत्र सलिलान्तःपृथिवी निर्मिता सलिलरूपेण भगवता स्वेच्छया । ब्रह्मा विराट् रूपः दैवतैः सह अग्निर्वाग्भूत्वा मुखं प्राविशदित्याद्युपदिष्टरीत्या ॥ ३ ॥

असृजच्च जगत् सर्वं सह पुत्रैः कृतात्मभिः ॥ ४ ॥
आकाशप्रभवो ब्रह्मा शाश्वतो नित्य अव्ययः ।
तस्मात् मरीचिः संजज्ञे मरीचेः कश्यपः सुतः ॥ ५ ॥
विवस्वान् कश्यपाज्जज्ञे मनुर्वैवस्वतः स्वयम् ।
स तु प्रजापतिः पूर्वमिक्ष्वाकुस्तु मनोः सुतः ॥ ६ ॥
यस्येयं प्रथमं दत्ता समृद्धा मनुना मही ।
तमिक्ष्वाकुमयोध्यायां राजानं विद्धि पूर्वकम् ॥ ७ ॥
इक्ष्वाकोस्तु सुतः श्रीमान् कुक्षिरित्येव विश्रुतः ।
कुक्षेरथात्मजो वीर ! विकुक्षिरुदपद्यत ॥ ८ ॥

ततः स त्रिमूर्त्तिर्विराजो विष्ण्वात्मकोंऽशो वराहरूपो भूत्वा वसुन्धरां प्रोज्जहार । तस्यैव विराजो रजःप्रधानः सृष्टिव्यापारवानंशो ब्रह्मा इति व्यवह्रियमाणः सर्वं जगत् पुत्रैः सह निजानुग्रहप्राप्तसृष्ट्यादिशक्तिमद्भिर्दक्षादिभिः सह असृजत् ॥ ४ ॥

नन्वसावेव सर्वादिरित्याह,—आकाशप्रभव इति । आकाशपदेन कारणोपाधिकं ब्रह्मेश्वराख्यम् । ब्रह्मेति त्रिमूर्त्तेर्ग्रहणम् । अस्मिन् शाश्वतत्वनित्यत्वाव्ययत्वान्यापेक्षिकाणि । तस्माद्विराजो ब्रह्मणः ॥ ५ ॥

तत्र मन्वन्ता मानसी सृष्टिः । मनोः क्षेत्रे इक्ष्वाकुः ॥ ६ ॥

तस्य साक्षात् क्षत्रियत्वात् समृद्धा चतुःसमुद्रवसना मही सर्वा भूर्दत्ता पित्रा मनुनेति शेषः ॥ ७ ॥

विकुक्षेस्तु महातेजा बाणः पुत्रः प्रतापवान्।
बाणस्य च महाबाहुरनरण्यो महातपाः॥ ९॥
अनावृष्टिर्बभूवास्मिन्न दुर्भिक्षं सतां वरे।
अनरण्ये महाराजे तस्करो वापि कश्चन॥ १०॥
अनरण्यान्महाराज ! पृथू राजा बभूव ह।
तस्मात् पृथोर्महातेजास्त्रिशङ्कुरुदपद्यत॥ ११॥
स सत्यवचनाद्वीरः सशरीरो दिवङ्गतः।
त्रिशङ्कोरभवत्सूनुर्धुन्धुमारो महायशाः॥ १२॥
धुन्धुमारान्महातेजा युवनाश्वो व्यजायत।
युवनाश्वसुतः श्रीमान् मान्धाता समपद्यत॥ १३॥
मान्धातुस्तु महातेजाः सुसन्धिरुदपद्यत।
सुसन्धेरपि पुत्रौ द्वौ ध्रुवसन्धिः प्रसेनजित्॥ १४॥
यशस्वी ध्रुवसन्धेस्तु भरतो रिपुसूदनः।

विश्रुतः प्रसिद्धः॥ ८॥ ९॥

सतां वरे श्रेष्ठे अस्मिन् अनरण्ये राज्यं कुर्वति नानावृष्टिर्न तन्मूलो वा दुर्भिक्षः॥ १०॥ ११॥

स त्रिशंकुः सत्यवचनात् स्वीयात् भगवतो विश्वामित्रस्य सत्यप्रतिज्ञानाच्च॥ १२॥

धुन्धुमाराद्युवनाश्व इति त्रिशंकुसुतो युवनाश्व इत्यन्यत्र श्रूयमाणं कल्पान्तरविषयम्। यद्वान्वयः त्रिशंकुसुत इत्यस्य तत् पौत्र इत्यर्थः॥ ३॥

भरतात्तु महाबाहोरसितो नाम जायत ॥ १५ ॥
यस्यैते प्रतिराजान उदपद्यन्त शत्रवः।
हैहयास्तालजङ्घाश्च शूराश्च शशविन्दवः ॥ १६ ॥
तांस्तु सर्वान् प्रतिव्यूह्य युद्धे राजा प्रवासितः।
स च शैलवरे रम्ये बभूवाभिरतो मुनिः ॥ १७ ॥
द्वे चास्य भार्य्ये गर्भिण्यौ बभूवतुरिति श्रुतिः।
तत्र चैका महाभागा भार्गवं देववर्चसम् ॥ १८ ॥
ववन्दे पद्मपत्राक्षी काङ्क्षिणी पुत्रमुत्तमम्।
एका गर्भविनाशाय सपत्न्यै गरलं ददौ ॥ १९ ॥
भार्गवश्च्यवनो नाम हिमवन्तमुपाश्रितः।
तमृषिं साभ्युपागम्य कालिन्दी त्वभ्यवादयत् ॥ २० ॥
स तामभ्यवदत् प्रीतो वरेप्सुं पुत्रजन्मनि।
पुत्रस्ते भविता देवि! महात्मा लोकविश्रुतः ॥ २१ ॥
धार्मिकश्च सुभीमश्च वंशकर्त्तारिसूदनः।

पुत्रौ द्वाविति तत्र ध्रुवसंधिर्ज्येष्ठः तत् पुत्रावलम्बनेनाग्रेऽयोध्याराज्यपरम्परावचनेन ज्येष्ठस्यैवाभिषेक इति सूचितम् ॥ १४ ॥ १५ ॥

यस्य असितस्य एते प्रतिशत्रव उदपद्यन्त सोऽभवदित्यन्वयः ॥१६॥

तान् हैहयादिचतुर्विधशत्रून् युद्धे स्वसैन्यं प्रतिव्यूह्यावस्थितोऽपि शत्रुबाहुल्यात् तज्जयोऽशक्य इति बुद्ध्वा प्रवासितः संजातप्रवासो बभूव। शत्रुजयोद्देशेन हिमवद्गिरिं तपसे जगामेत्यन्वयः ॥ १७ ॥

श्रुत्वा प्रदक्षिणं कृत्वा मुनिं तमनुमान्य च ॥ २२ ॥
पद्मपत्रसमानाक्षं पद्मगर्भसमप्रभम् ।
ततः सा गृहमागम्य देवी पुत्रं व्यजायत ॥ २३ ॥
सपत्न्या तु गरस्तस्यै दत्तो गर्भजिघांसया ।
गरेण सह तेनैव तस्मात् स सगरोऽभवत् ॥ २४ ॥
स राजा सगरो नाम यः समुद्रमखानयत् ।
इष्ट्वा पर्वणि वेगेन त्रासयान इमाः प्रजाः ॥ २५ ॥
असमञ्जस्तु पुत्रोऽभूत् सगरस्येति नः श्रुतम् ।
जीवन्नेव स पित्रा तु निरस्तः पापकर्मकृत् ॥ २६ ॥
अंशुमानपि पुत्रोऽभूत् असमञ्जस्य वीर्य्यवान् ।
दिलीपोंऽशुमतः पुत्रो दिलीपस्य भगीरथः ॥ २७ ॥
भगीरथात् ककुत्स्थस्तु काकुत्स्था येन तु स्मृताः ।
ककुत्स्थस्य तु पुत्रोऽभूत् रघुर्य्येन तु राघवाः ॥ २८ ॥
रघोस्तु पुत्रस्तेजस्वी प्रवृद्धः पुरुषादकः ।

इति श्रुतिः प्रसिद्धिः तत्र चेत्यादि बालकाण्डे व्याख्यातप्रायम् ॥ १८ ॥ १९ ॥ २० ॥ २१ ॥ २२ ॥ २३ ॥

तेनैव सह जात इति शेषः ॥ २४ ॥

अखानयत् स्वपुत्रैरिति शेषः इष्ट्वा दीक्षितो भूत्वा वेगेन खननवेगेन त्रासयानः उद्वेजयन् ॥ २५ ॥ २६ ॥ २७ ॥

येन कूटस्थेन ककुत्स्थेन येन रघुणा राघवपदवाच्याः ॥ २८ ॥

कल्माषपादः सौदास इत्येवं प्रथितो भुवि ॥ २९ ॥
कल्माषपादपुत्रोऽभूत् शङ्खणस्त्विति नः श्रुतम् ।
यस्तु तद्वीर्य्यमासाद्य सह सैन्यो व्यनीनशत् ॥ ३० ॥
शङ्खणस्य तु पुत्रोऽभूत् शूरः श्रीमान् सुदर्शनः ।
सुदर्शनस्याग्निवर्ण अग्निवर्णस्य शीघ्रगः ॥ ३१ ॥
शीघ्रगस्य मरुः पुत्रो मरोः पुत्रः प्रशुश्रुकः ।
प्रशुश्रुकस्य पुत्रोऽभूत् अम्बरीषो महामतिः ॥ ३२ ॥
अम्बरीषस्य पुत्रोऽभूत् नहुषः सत्यविक्रमः ।
नहुषस्य च नाभागः पुत्रः परमधार्मिकः । ३३ ॥
अजश्च सुव्रतश्चैव नाभागस्य सुतावभौ ।
अजस्य चैव धर्मात्मा राजा दशरथः सुतः ॥ ३४ ॥
तस्य ज्येष्ठोऽसि दायादो राम इत्यभिविश्रुतः ।
तद्गृहाण स्वकं राज्यमवेक्षस्व जगन्नृप ! ॥ ३५ ॥

रघोः पुत्रः प्रवृद्धादिनामचतुष्टयेन प्रसिद्धः ॥ २९ ॥

कल्माषपादपुत्रः शङ्खणनामा यः शङ्खणस्तु तत् प्रसिद्धं वीर्य्यं पराक्रमं युद्धे प्राप्य दैवात् सह सैन्यो व्यनीनशत् नष्टोऽभूत् स्वार्थे णिरिति कतकः । तीर्थस्तु यः शङ्खणस्तद्वीर्य्यं वसिष्ठवीर्य्यं आसाद्य तच्छापात् राक्षसत्वं प्राप्य कल्माषपादो राक्षसभावेन ससैन्यं सपुत्रं शङ्खणं च भक्षितवानिति कथयत्याह ॥ ३० ॥ ३१ ॥ ३२ ॥ ३३ ॥

अजो नाभागज्येष्ठपुत्रः ॥ ३४ ॥

इक्ष्वाकूणां हि सर्वेषां राजा भवति पूर्वजः।
पूर्वजे नावरः पुत्रो ज्येष्ठो भ्राताभिषिच्यते ॥ ३६ ॥
स राघवाणां कुलधर्ममात्मनः
सनातनं नाद्य विहन्तुमर्हसि।
प्रभूतरत्नामनुशाधि मेदिनीं
प्रभूतराष्ट्रां पितृवन् महायशाः ॥

इत्यार्षे रामायणे वाल्मीकीये अयोध्याकाण्डे वंशकीर्त्तनं नाम दशोत्तरशततमः सर्गः ॥ ११० ॥

दायादः सुतः। दायादौ सुतबान्धवौ। तत्तस्मात् स्वकं राज्यं गृहाण ॥ ३५ ॥

पूर्वजे विद्यमानेऽवरः कनिष्ठो नाभिषिच्यते अपि तु ज्येष्ठ एवाभिषिच्यते ॥ ३६ ॥

कुलधर्मं कुलक्रमागतं ज्येष्ठाभिषेकधर्मं विहन्तुं नार्हसि। प्रभूतराष्ट्रां प्रभूतावान्तरदेशाम् ॥ ३७ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके अयोध्याकाण्डे दशोत्तरशततमः सर्गः ॥ ११० ॥

# एकादशोत्तरशततमः सर्गः ।

वसिष्ठः स तदा राममुक्त्वा राजपुरोहितः ।
अब्रवीद्धर्मसंयुक्तं पुनरेवापरम् वचः ॥ १ ॥
पुरुषस्य हि जातस्य भवन्ति गुरवस्त्रयः ।
आचार्य्यश्चैव काकुत्स्थ ! पिता माता च राघव ! ॥ २ ॥
पिता ह्येनं जनयति पुरुषं पुरुषर्षभ ! ।
प्रज्ञां ददाति चाचार्य्यस्तस्मात्स गुरुरुच्यते ॥ ३ ॥

मनुमारभ्य त्वत्पर्य्यन्तं ज्येष्ठेनैव राज्यं पाल्यते इति न्यायेन निवर्त्यमानस्यापि तदनङ्गीकारमालोच्य पितृवचनादपि मद्वचनं गरीय इति वाक्यमुपक्रमते । वसिष्ठ इति ॥ १ ॥

गुरवः उपास्याः ॥ २ ॥

जनयति शरीरमात्रेण प्रज्ञां ददाति उपनयनसंस्कारपूर्वं वेदविषयां प्रज्ञां ददाति । तस्मात् आचार्य्य एव गुरुसमवाये गुरुरुच्यते । तदुक्तमापस्तम्बेन, आचार्य्यः श्रेष्ठो गुरूणां स हि विद्यातस्तं जनयति तच्छ्रेष्ठं जन्म शरीरमेव मातापितरौ जनयतः श्रीर्य्यत्स्वभावं सर्व्वेषामिसुलभं प्राकृतं मलजं शरीरमिति ॥ ३ ॥

स तेऽहं पितुराचार्य्यस्तव चैव परन्तप!।
मम त्वं वचनं कुर्वन्नातिवर्त्तेः सतां गतिम्॥ ४॥
इमा हि ते परिषदो ज्ञातयश्च नृपास्तथा।
एषु तात! चरन् धर्मं नातिवर्त्तेः सतां गतिम्॥ ५॥
वृद्धाया धर्मशीलाया मातुर्नार्हस्यवर्त्तितुम्।
अस्या हि वचनं कुर्वन्नातिवर्त्तेः सतां गतिम्॥ ६॥
भरतस्य वचः कुर्वन् याचमानस्य राघव!।
आत्मानं नातिवर्त्तेस्त्वं सत्यधर्मपराक्रमः॥ ७॥
एवं मधुरमुक्तः सन् गुरुणा राघवः स्वयम्।
प्रत्युवाच समासीनं वसिष्ठं पुरुषर्षभः॥ ८॥
यन्मातापितरौ वृत्तं तनये कुरुतः सदा।
न सुप्रतिकरं तत्तु मात्रा पित्रा च यत् कृतम्॥ ९॥

नातिवर्त्तेः नातिवर्त्तेथाः। सद्गतिभ्रंशो न भवतीत्यर्थः॥ ४॥

परिषदः त्वत्सम्बन्धिन्यः श्रेणयः ज्ञातयो बान्धवाः। नृपाः सेवक-नृपाः। एषु रक्षार्थं धर्मं चरन्ननुतिष्ठन्नित्यर्थः॥ ५॥

मातुः शुश्रूषणे वचनकरणे च अवर्त्तितुं नार्हसीत्यर्थः। पितुः शतगुणं माता गौरवेणातिरिच्यत इति स्मृतेरित्याशयः॥ ६॥

आत्मानं त्वां प्रति राज्यप्रत्यर्पणपूर्वं प्रतिनिवृत्तिं याचमानस्य भरतस्य वचः कुर्वन्नित्यर्थः॥ ७॥ ८॥

यथाशक्तिप्रदानेन स्वापनोच्छादनेन च ।
नित्यञ्च प्रियवादेन तथा सम्बर्धनेन च ॥ १० ॥
स हि राजा दशरथः पिता जनयिता मम ।
आज्ञापयन्मां यत्तस्य न तत् मिथ्या भविष्यति ॥ ११ ॥
एवमुक्ते तु रामेण भरतः प्रत्यनन्तरम् ।
उवाच विपुलोरस्कः सूतं परमदुर्मनाः ॥ १२ ॥
इह तु स्थण्डिले शीघ्रं कुशानास्तर सारथे ! ।
आर्य्यन् प्रत्युपवेच्यामि यावन्मे सम्प्रसीदति ॥ १३ ॥

मातापितरौ यद्वृत्तं तनये कुरुतः यादृशं पुत्रस्योपकारं कुरुतस्ताभ्यां कृतमुपकाररूपं वस्तु यत्तन्न सुप्रतिकरं अशक्यप्रत्युपकारमित्यर्थः ॥ ९ ॥

तदेवाह,—यथाशक्तिप्रदानेन बालस्य जीवनार्थं पदार्थभोजनशक्त्यनुरोधतः क्षीरान्नादिप्रदानेन । उच्छादनं उद्वर्त्तनं तिलपिष्टादिना । सम्बर्धनं क्रीड़नम् । एतैर्यत्ताभ्यां कृतं तन्न सुप्रतिकरमित्यन्वयः ॥ १० ॥

जनयिता उत्पादकः पिता न तु गौणः पिता यदाज्ञापयद्वनवासरूपं एवञ्च भवदाज्ञातः पूर्वं तेनाज्ञादानात् मया चावश्यमिति प्रतिज्ञानात् भवदाज्ञयापि तदन्यथाकरणमधुनाऽत्यन्तमनुचितमिति भावः ॥ ११ ॥

प्रत्यनन्तरं समीपवर्त्तिनम् ॥ १२ ॥

निराहारो निरालोको धनहीनो यथा द्विजः।
शये पुरस्ताच्छालायां यावन्मां प्रतियास्यति ॥ १४ ॥
स तु राममवेक्षन्तं सुमन्त्रं प्रेक्ष्य दुर्मनाः।
कुशोत्तरमुपस्थाप्य भूमावेवास्थितः स्वयम् ॥ १५ ॥
तमुवाच महातेजा रामो राजर्षिसत्तमः।
किं मां भरत! कुर्वाणं तात! प्रत्युपवेक्ष्यसे ॥ १६ ॥
ब्राह्मणो ह्येकपार्श्वेन नरान् रोद्धुमिहार्हति।
न तु मूर्द्धाभिषिक्तानां विधिः प्रत्युपवेशने। १७ ॥

आर्य्यं प्रत्युपवेक्ष्यामि आर्य्यमुद्दिश्य प्रत्युपवेशनकर्म करिष्य इत्यर्थः। तच्चोपरोद्धव्यस्य गृहद्वारसमीपे कुशेषु यावत्कार्य्यसिद्धि निराहारतया-अवगुण्ठिताननस्य एकपार्श्वेनैव पार्श्वान्तरपरिवृत्तिराहित्येन शयनमिति ॥ १३ ॥

एतदुत्तरं निराहार इत्यादिपद्यं प्रक्षिप्तमिति कतकस्वरसः। धनहीनः अधमर्णेन धनहीनः कृतो द्विजः उत्तमर्णो यथा स्वधनग्रहणाय-अधमर्णद्वारि शेते तद्वदहं शये यावन्मां मद्वचनमङ्गीकृत्य प्रतियास्यति अयोध्यामित्यर्थस्तस्य ॥ १४ ॥

सतु भरतः राममवेक्षन्तं प्रतीक्षमाणं सुमन्त्रं प्रेक्ष्य तदनुरोधात् कुशानयने विलम्बमानमिति यावत्। कुशोत्तरं कुशास्तरणं स्वयमेवोपस्थाप्य आत्मीये भूमावेवास्थितः। प्रत्युपवेशनमनुष्ठितवानित्यर्थः ॥१५॥

किं कुर्वाणं किमन्याय्यं कुर्वाणम् ॥ १६ ॥

उत्तिष्ठ नरशार्दूल ! हित्वैतद्दारुणं व्रतम् ।
पुरवर्य्यामितः क्षिप्रमयोध्यां याहि राघव ! ॥ १८ ॥
आसीनस्त्वेव भरतः पौरजानपदं जनम् ।
उवाच सर्वतः प्रेक्ष्य किमार्य्यं नानुशासथ ॥ १९ ॥
ते तमूचुर्महात्मानं पौरजानपदा जनाः ।
काकुत्स्थमभिजानीमः सम्यग्वदति राघवः ॥ २० ॥
एषोऽपि हि महाभागः पितुर्वचसि तिष्ठति ।
अतएव न शक्ताः स्म व्यावर्त्तयितुमञ्जसा ॥ २१ ॥

ब्राह्मणः धनादिना वियोजित इति शेषः । एकपार्श्वेनेति । प्रत्युपवेशधर्मोपलक्षणम् ॥ अनेन क्षत्रियाणामेतत्करणे प्रायश्चित्तमिति सूचितम् ॥ १७ ॥

तस्मादुत्तिष्ठेति ॥ १८ ॥

आसीन एव प्रत्युपविष्ट एव । नानुशासथ नानुशिष्टेत्यर्थः इति उवाचेत्यन्वयः ॥ १९ ॥

काकुत्स्थं रामं प्रति राघवो भवान् भरतः सम्यग् वदतीति जानीमः । एषोऽपि महाभागो रामः पितुर्वचसि तिष्ठति तदपि सम्यगेव यदेवमत एवेत्यर्थः । अत्र भगवता स्वव्यावर्त्तननिश्चयेनागतानामपि पौरादीनामन्तर्यामिविधया स्वानुकूलवचनप्रयोगः कारितः । भरतस्य तु यशःख्यापनाय ज्येष्ठे कनिष्ठेनैवं वर्त्तितव्यमिति लोकव्यवहारबोधनाय च तथा प्रवर्त्तनमिति प्रतिभाति ॥ २० ॥ २१ ॥

तेषामाज्ञाय वचनं रामो वचनमब्रवीत्।
एवं निबोध वचनं सुहृदां धर्मचक्षुषाम्॥ २२॥
एतच्चैवोभयं श्रुत्वा सम्यक् सम्पश्य राघव!।
उत्तिष्ठ त्वं महाबाहो! माञ्च स्पृश तथोदकम्॥ २३॥
अथोत्थाय जलं स्पृष्ट्वा भरतो वाक्यमब्रवीत्।
शृण्वन्तु मे परिषदो मन्त्रिणः श्रेणयस्तथा॥ २४॥
न याचे पितरं राज्यं नानुशासामि मातरम्।
आर्य्यं परमधर्मज्ञं नानुजानामि राघवम्॥ २५॥
यदि त्ववश्यं वस्तव्यं कर्त्तव्यञ्च पितुर्वचः।
अहमेव निवत्स्यामि चतुर्दश वने समाः॥ २६॥

रामो वचनमब्रवीदिति भरतं प्रतीति शेषः। धर्मचक्षुषां धर्मदर्शिनां निबोध शृणु॥ २२॥

उभयं त्वद्विषयं मद्विषयञ्च वचनं श्रुत्वा सम्पश्य विचारय विचारेणापि कर्त्तव्यं निश्चेतुमशक्तश्चेन्मयोक्तं कुरु इति शेषः। तत् स्वोक्तमाह,—उत्तिष्ठेति। चत्रियाविहितप्रत्युपवेशनप्रायश्चित्तमाह,—माञ्च स्पृश तथोदकम्। उदकस्पर्श आचमनमार्थः॥ २३॥

परिषदः सभ्याः॥ २४॥

न याचे न याचितवान् नानुशासामि नानुशिष्टवान् शबार्थः। नानुजानामि वनवासायेति शेषः। नाभिजानामीति पाठे वनवासोद्युक्तमिति शेषः॥ २५॥

धर्मात्मा तस्य सत्येन भ्रातुर्वाक्येन विस्मितः ।
उवाच रामः संप्रेक्ष्य पौरजानपदं जनम् ॥ २७ ॥
विक्रीतमाहितं क्रीतं यत्पित्रा जीवता मम ।
न तल्लोपयितुं शक्यं मया वा भरतेन वा ॥ २८ ॥
उपाधिर्न मया कार्य्यो वनवासे जुगुप्सितः ।
युक्तमुक्तञ्च कैकेय्या पित्रा मे सुकृतं कृतम् ॥ २९ ॥
जानामि भरतं क्षान्तं गुरुसत्कारकारिणम् ।
सर्वमेवात्र कल्याणं सत्यसन्धे महात्मनि ॥ ३० ॥
अनेन धर्मशीलेन वनात् प्रत्यागतः पुनः ।
भ्रात्रा सह भविष्यामि पृथिव्याः पतिरुत्तमः ॥ ३१ ॥

अहमेव प्रतिनिधित्वेनेति शेषः ॥ २६ ॥

तस्य भ्रातुः भरतस्य ॥ २७ ॥

यज्जीवता पित्रा विक्रीतं मूल्यं गृहीत्वा दत्तम् । आहितम् आधिरूपेण न्यस्तम् । क्रीतं मूल्यं दत्त्वा गृहीतम् । एवञ्चेदं राज्यं कैकेय्यै आधिरूपेण दत्तं विक्रीतं वेति भावः ॥ २८ ॥

उपाधिः प्रतिनिधिः । जुगुप्सितत्वञ्च स्वस्य तत्समर्थत्वात् । असमर्थे हि कर्त्तरि स विहितः । उक्तौ कृतौ च युक्तत्वं वरद्वयरूपऋणापाकरणार्थत्वात् बहूपकारकत्वाच्चातस्तस्याः मातुस्तस्य पितुश्च वचनमवश्यमेव कार्य्यमिति शेषः । अयुक्तवादित्वे हि गुरोरप्यवलिप्तस्येत्यादिन्यायविषयत्वं स्यादिति भावः ॥ २९ ॥

मृतो राजा हि कैकेय्या मया तद्वचनं कृतम् ।
अमृतान्मोचयानेन पितरं तं महीपतिम् ॥ ३२ ॥

इत्यार्षे रामायणे वाल्मीकीये अयोध्याकाण्डे भरत-
रामसंवादो नाम एकादशोत्तरशत-
तमः सर्गः ॥ १११ ॥

अत्र भरते सर्वमेव कल्याणं राज्यपरिपालनादिरूपं सम्भावया-
मीति शेषः ॥ ३० ॥ ३१ ॥

तद्वचनं कैकेयीवचनं मोचयानेन मोचयमानेन एवं मदुक्तकरणेन
त्वमपि पितरमनृतान्मोचयेति ध्वनितम् ॥ ३२ ॥

इति श्री रामाभिरामे श्रीरामीये रामायणतिलके अयोध्या-
काण्डे एकादशोत्तरशततमः सर्गः ॥ १११ ॥

---

# द्वादशोत्तरशततमः सर्गः

तमप्रतिमतेजोभ्यां भ्रातृभ्यां रोमहर्षणम् ।
विस्मिताः सङ्गमं प्रेक्ष्य समुपेता महर्षयः ॥ १ ॥
अन्तर्हिता मुनिगणाः सिद्धाश्च परमर्षयः ।
तौ भ्रातरौ महाभागौ काकुत्स्थौ प्रशशंसिरे ॥ २ ॥
स धन्यो यस्य पुत्रौ द्वौ धर्मज्ञौ धर्मविक्रमौ ।
श्रुत्वा वयं हि सम्भाषामुभयोः स्पृहयामहे ॥ ३ ॥
ततस्त्वृषिगणाः क्षिप्रं दशग्रीववधैषिणः ।
भरतं राजशार्दूलमित्यूचुः सङ्गता वचः ॥ ४ ॥

भ्रातृभ्यामित्यार्षी तृतीया । भ्रात्रोः सङ्गममित्यर्थः । सङ्गमं प्रेक्ष्य विस्मिता इत्यन्वयः । समुपेताः स्वार्थरावणवधसम्पत्तये तत्र, स्थले समवेता महर्षयो नारदाद्याः ॥ १ ॥

अन्तर्हिताः तयोः सङ्गमं द्रष्टुमागताः अदृश्यरूपा आकाशस्थाः ॥ २ ॥

धर्मविक्रमौ धर्ममार्गवर्त्तिनौ उभयोः सम्भाषां सम्भाषणं श्रुत्वोभाभ्यां स्पृहयामहे प्रीता भवामः । यद्वा तादृशसम्भाषणं श्रोतुं पुनःपुनर्वाञ्छामहे इति ॥ ३ ॥

सङ्गता एकमत्यं प्राप्ताः ॥ ४ ॥

कुले जात महाप्राज्ञ महावृत्त महायशः।
ग्राह्यं रामस्य वाक्यं ते पितरं यद्यवेक्षसे ॥ ५ ॥
सदानृणमिमं रामं वयमिच्छामहे पितुः।
अनृणत्वाच्च कैकेय्याः स्वर्गं दशरथो गतः ॥ ६ ॥
एतावदुक्त्वा वचनं गन्धर्वाः समहर्षयः।
राजर्षयश्चैव तथा सर्वे स्वां स्वां गतिङ्गताः ॥ ७ ॥
ह्लादितस्तेन वाक्येन शुशुभे शुभदर्शनः।
रामः संहृष्टवदनस्तानृषीनभ्यपूजयत् ॥ ८ ॥
त्रस्तगात्रस्तु भरतः स वाचा सज्जमानया।
कृताञ्जलिरिदं वाक्यं राघवं पुनरब्रवीत् ॥ ९ ॥
राम! धर्म*मिमं प्रेक्ष्य कुलधर्मानुसन्ततम्।
कर्तुमर्हसि काकुत्स्थ! मम मातुश्च याचनाम् ॥ १० ॥

पितरं यद्यवेक्षसे पितुः सुखं यदीच्छसीत्यर्थः ॥ ५ ॥

सदानृणं सता स्वकृतसमीचीनानुष्ठानेन आ सर्वतोऽनृणमित्यर्थः। अनृणत्वात् रामप्रतिज्ञयेति शेषः। यदि राम इदानीं विपरीतं कुर्य्यात् प्रतिनिधिद्वारा वानुतिष्ठेत्तदा ते पितुः पुनः स्वर्गाद्भ्रंश एवेति ध्वनिः ॥ ६ ॥ ७ ॥

अभ्यपूजयत् सम्यग्मां धर्मतो रक्षितवन्त इत्युक्तवानित्यर्थः ॥ ८ ॥

त्रस्तगात्र उद्विग्नगात्रः स्खलेति पाठान्तरम् ॥ ९ ॥

---

* "राजधर्मम्" इति वा पाठः।

रक्षितुं सुमहद्राज्यमहमेकस्तु नोत्सहे।
पौरजानपदांश्चापि रक्तान् रञ्जयितुं तथा ॥ ११ ॥
ज्ञातयश्चापि योधाश्च मित्राणि सुहृदश्च नः।
त्वामेव हि प्रतीक्षन्ते * पर्जन्यमिव कर्षकाः ॥ १२ ॥
इदं राज्यं महाप्राज्ञ! स्थापय † प्रतिपद्य हि।
शक्तिमान् सहि काकुत्स्थ! लोकस्य परिपालने ॥ १३ ॥

राम इमं धर्मं ज्येष्ठस्य राज्यमित्येवं रूपं कुले कुले धर्मबुध्यानुसन्ततं सम्बद्धम्। धर्ममथ प्रेक्ष्य कालधर्मांश्च सन्ततमिति पाठे धर्ममुक्तम्। अथ अथवा कालधर्मान् कालकृतस्वशक्तिमन्निष्ठतदभावलक्षणान् प्रेक्ष्य विचार्य्य मम मातुः कौशल्यायाश्च याचनां कर्तुमर्हसि ॥ १० ॥

अथ कालकृतां स्वस्य रक्षणाशक्तिं दर्शयति रक्षितुमिति। एकोऽसहायः रक्तानानुरक्तान् ॥ ११ ॥

हि यतस्त्वामेव प्रतीक्षन्ते ॥ १२ ॥

अत इदं राज्यं प्रतिपद्य स्वीकृत्य कस्मिंश्चित् स्थापय हि। हिर्वाक्यालङ्कारे। हि यतः स त्वदत्तराज्यो लोकपालने शक्तिमान् भवति। शक्तिमानसीति पाठे अयं मदीय इति स्वीकारमात्रेण लोकस्य समस्तस्य

---

* "प्रतिकाङ्क्षन्ते" इति वा पाठः।
† "पालय" इति वा पाठः।

एवमुक्त्वापतद्भ्रातुः पादयोर्भरतस्तदा ।
भृशं संप्रार्थयामास राघवेति प्रियं वदन् ॥ १४ ॥
तमङ्के भ्रातरं कृत्वा रामो वचनमब्रवीत् ।
श्यामं नलिनपत्राक्षं मत्तहंसस्वरः स्वयम् ॥ १५ ॥
आगता त्वामियं बुद्धिः स्वजा वैनयिकी च या ।
भृशमुत्सहसे तात ! रक्षितुं पृथिवीमपि ॥ १६ ॥
अमात्यैश्च सुहृद्भिश्च बुद्धिमद्भिश्च मन्त्रिभिः ।
सर्वकार्य्याणि संमन्त्र्य महान्त्यपि हि कारय ॥ १७ ॥
लक्ष्मीश्चन्द्रादपेयाद्वा हिमवान् वा हिमन्त्यजेत् ।
अतीयात् सागरो वेलां न प्रतिज्ञामहं पितुः ॥ १८ ॥

पालने शक्तिमानसि । रामस्य राज्यमित्येतावल्लोकपरिपालनेऽपेक्षित-सहायतयेत्यर्थः ॥ १३ ॥

एवम् उक्तप्रकारम् ॥ १४ ॥

स्वयमङ्के कृत्वेत्यन्वयः ॥ १५ ॥

इयं बुद्धिर्मद्वनवासाविरोधिनी स्वीयत्वेनाङ्गीकृत्य स्थापनविषया आगता जाता सा स्वजा स्वाभाविकी गुरुसेवया प्राप्तो यो विनयः शिक्षा तज्जन्या च इतरा च सर्वा दृष्टेति भावः । अथ या त्वया स्वस्याशक्तिरुक्ता पालने स नास्त्येवेत्याह,—भृशमिति ॥ १६ ॥

अमात्याः प्रधानमन्त्रिणः । मन्त्रिण उपमन्त्रिणः । कारय राजा-ज्ञयेति शेषः ॥ १७ ॥

कामाद्वा तात ! लोभाद्वा मात्रा तुभ्यमिदं कृतम् ।
न तन्मनसि कर्त्तव्यं वर्त्तितव्यञ्च मातृवत् ॥ १९ ॥
एवं ब्रुवाणं भरतः कौशल्यासुतमब्रवीत् ।
तेजसादित्यसङ्काशं प्रतिपच्चन्द्रदर्शनम् ॥ २० ॥
अधिरोहार्य्य पादाभ्यां पादुके हेमभूषिते ।
एते हि सर्वलोकस्य योगक्षेमं विधास्यतः ॥ २१ ॥

अथ मातृयाचनयापि इदानीं परावृत्तिरशक्येत्याह,—लक्ष्मीरित्यादि । पितुः प्रतिज्ञां न त्यजेयमिति शेषः ॥ १८ ॥

कामात् त्वद्गतस्नेहात् । लोभात्त्वद्द्वाजेन राज्यकरणलोभात् । तुभ्यं मात्रा तव मात्रा षष्ठ्यर्थे आर्षी चतुर्थी । यदिदं कृतं तत्तवानिष्टमपि अनिष्टमिति मनसि न कर्त्तव्यं मदाज्ञयेति शेषः । अतस्तस्यां मातृवदेव वर्त्तितव्यं शुश्रूषितव्यं तदर्हमिति वतिः । कामात् देवानामिच्छातः लोभाद्वा लोभादेव तेषां देवलोकराज्यलोभात् तव मात्रा देवैरेव मन्थराद्वारा इदं कृतं कारितमिति गूढ़ोऽर्थः शेषं प्रागवत् ॥ १९ ॥

प्रतिपच्चन्द्रदर्शनमित्यनेन सदादरणीयदर्शनत्वं वर्धिष्णुत्वं चिरमदर्शनञ्च सूचितम् ॥ २० ॥

एते उटजसन्निहिते अधिरोहेत्यनेन भद्रासनस्थानीयपादुकयोः प्रतिनिधिभूतयोरारोहणेन राज्यप्रतिपत्तिः कारिता । एषा च प्रार्थना वसिष्ठनियोगानन्तरं बोध्या । भरद्वाजं प्रति एते प्रयच्छ संहृष्टः पादुके हेमभूषिते इति वसिष्ठोक्तित्वेन वक्ष्यमाणत्वात्प्रतिनिधित्वमेवाह—एते हीत्यादिना ॥ २१ ॥

सोधिरुह्य नरव्याघ्रः पादुके व्यवमुच्य च।
प्रायच्छत्सुमहातेजा भरताय महात्मने ॥ २२ ॥
स पादुके संप्रणम्य रामं वचनमब्रवीत्।
चतुर्दश हि वर्षाणि जटाचीरधरोह्यहम् ॥ २३ ॥
फलमूलाशनो वीर! भवेयं रघुनन्दन!।
तवागमनमाकाङ्क्षन्वसन्वै नगराद्बहिः ॥ २४ ॥
तव पादुकयोर्न्यस्य राज्यतन्त्रं परन्तप!।
चतुर्दशे हि सम्पूर्णे वर्षेऽहनि रघूत्तम! ॥ २५ ॥
न द्रक्ष्यामि यदि त्वान्तु प्रवेक्ष्यामि हुताशनम्।

स रामः पादुकेऽधिरुह्य व्यवमुच्य पुनस्ततोऽवरुह्य भरताय प्रायच्छत्। एतेन प्रतिनिधिदानद्वारा राज्यरक्षानियोगः कृतः। प्रतिपद्य स्थापयेति चिरं भरतप्रार्थनञ्च साधितम्। अधिरोहणेन शक्तिविशेषस्य तत्र स्थापनं यद्दर्शनेन सर्वज्ञत्वसम्पत्तिरिति बोध्यम्। तदुक्तं पाद्मे। ज्ञात्वा तदाज्ञां ताभ्यां च भरतः क्षितिमन्वशादिति। ताभ्यां पादुकाभ्यां तद्दर्शनमात्रेणोद्दिष्टे विषये भगवत एवमाज्ञेति ज्ञात्वा तथा व्यवहारमकरोदित्यर्थः। भरतस्तु पाञ्चजन्यावतारत्वादाच्छादित सार्वज्ञ्य इत्यनेन सूचितम्। भगवत् स्पर्शेनाचेतनेऽपि सार्वज्ञ्यदानशक्तिमत्त्वमिति भगवन्माहात्म्यातिशयद्वारा रामस्येश्वरत्वञ्च सूचितम् ॥ २२ ॥

जटाचीरधर इत्यादिना राज्यकृतभोगाभावः सूचितः ॥ २३ ॥ २४ ॥

राज्यतन्त्रं राज्यव्यापारं न्यस्य त्वद्बुध्या विनिवेद्य। चतुर्दशे वर्षे

तथेति च प्रतिज्ञाय तं परिष्वज्य साद्‌रम् ॥ २६ ॥
शत्रुघ्नञ्च परिष्वज्य वचनञ्चेदमब्रवीत् ।
मातरं रक्ष कैकेयीं मा रोषं कुरु तां प्रति ॥ २७ ॥
मया च सीतया चैव शप्तोऽसि रघुनन्दन ! ।
इत्युक्त्वाश्रुपरीताक्षो भ्रातरं विससर्ज्ज ह ॥ २८ ॥

स पादुके ते भरतः स्वलङ्कृते
महोज्ज्वले संपरिगृह्य धर्मवित् ।
प्रदक्षिणञ्चैव चकार राघवं
चकार चैवोत्तमनागमूर्द्धनि ॥ २९ ॥
अथानुपूर्व्या प्रतिपूज्य तं जनं
गुरूंश्च मन्त्रीन् प्रकृतीस्तथानुजौ ।
व्यसर्जयद्राघववंशवर्धनः
स्थितः स्वधर्मे हिमवानिवाचलः ॥ ३० ॥

सम्पूर्णे चतुर्दशवर्षाद्यदिवसे यदि त्वां न द्रक्ष्यामि तदाग्निं प्रवेक्ष्यामि ॥ २५ ॥ २६ ॥ २७ ॥

शप्तोऽसि रोषाकरणायेति शेषः ॥ २८ ॥

संपरिगृह्य शिरसेति शेषः । उत्तमनागमूर्धनि राजोपवाह्यगजमस्तके तत्कालाभिषिक्तराजाधिरोहणायेति शेषः । सर्वलोकप्रख्यापनार्थमेतत् ॥ २९ ॥ ३० ॥

तं मातरो बाष्पगृहीतकण्ठ्यो
दुःखेन नामन्त्रयितुं हि शेकुः ।
स चैव मातॄनभिवाद्य सर्वा
रुदन् कुटीं स्वां प्रविवेश रामः ॥ ३१ ॥

इत्यार्षे रामायणे वाल्मीकीये अयोध्याकाण्डे
भरतविसर्जनं नाम द्वादशोत्तरशत-
तमः सर्गः ॥ ११२ ॥

सर्वाः स कैकेयीकाः । अनेन कैकेय्यादोषराहित्यं सूचितम् । रुदन् रुदन्निव ॥ ३१ ॥

इति श्री रामाभिरामे श्रीरामीये रामायणतिलके अयोध्या-
काण्डे द्वादशोत्तरशततमः सर्गः ॥ ११२ ॥

---

## त्रयोदशोत्तरशततमः सर्गः ।

ततः शिरसि कृत्वा तु पादुके भरतस्तदा ।
आरुरोह रथं हृष्टः शत्रुघ्नेन समन्वितः ॥ १ ॥
वसिष्ठो वामदेवश्च जाबालिश्च दृढव्रतः ।
अग्रतः प्रययुः सर्वे मन्त्रिणो मन्त्रपूजिताः ॥ २ ॥
मन्दाकिनीं नदीं रम्यां प्राङ्मुखास्ते ययुस्तदा ।
प्रदक्षिणञ्च कुर्वाणाश्चित्रकूटं महागिरिम् ॥ ३ ॥
पश्यन् धातुसहस्राणि रम्याणि विविधानि च ।
प्रययौ तस्य पार्श्वेन ससैन्यो भरतस्तदा ॥ ४ ॥

तत इति। पूर्वं सर्वलोकज्ञानाय गजमस्तके स्थापयित्वा पुनः सादरं तत आदाय स्वमस्तके कृत्वेत्यर्थः। यद्वा शिरसीत्यस्य गजशिरसीत्येवार्थः ॥ १ ॥

मन्त्रे गाढ़कार्य्यविचारे निस्पृहत्वेन पूजिता इत्यर्थः ॥ २ ॥

मन्दाकिनीं चित्रकूटोत्तरपार्श्ववर्त्तिनीं प्रदक्षिणमिति उत्तरपार्श्वस्थां मन्दाकिनीं प्राप्य प्राङ्मुखतया गमनात्सिद्धं तस्य प्रदक्षिणकरणम् ॥ ३ ॥

पार्श्वेन उत्तरपार्श्वेन ॥ ४ ॥

अदूराच्चित्रकूटस्य ददर्श भरतस्तदा।
आश्रमं यत्र स मुनिर्भरद्वाजः कृतालयः॥ ५॥
स तमाश्रममागम्य भरद्वाजस्य वीर्य्यवान्।
अवतीर्य्य रथात्पादौ ववन्दे रघुनन्दनः॥ ६॥
ततो हृष्टो भरद्वाजो भरतं वाक्यमब्रवीत्।
अपि कृत्यं कृतं तात! रामेण च समागतः॥ ७॥
एवमुक्तः स तु ततो भरद्वाजेन धीमता।
प्रत्युवाच भरद्वाजं भरतो धर्मवत्सलः॥ ८॥
स याच्यमानो गुरुणा मया च दृढविक्रमः।
राघवः परमप्रीतो वसिष्ठं वाक्यमब्रवीत्॥ ९॥
पितुः प्रतिज्ञान्तामेव पालयिष्यामि तत्त्वतः।
चतुर्दश हि वर्षाणि या प्रतिज्ञा पितुर्मम॥ १०॥

यत्र यमुनादक्षिणकूले अतएव चित्रकूटस्यादूरात्। अनेन यमुना-दक्षिणतटेऽपि क्वचिद्भरद्वाजाश्रम इति ज्ञायते अतएवाग्रे भरद्वाजा-मन्त्रणोत्तरं ततस्ते यमुनां तीर्त्वेति वक्ष्यति। सम्प्रति तत्र स्थितिस्तु रामभरतयोः संवादं शिष्यद्वारा झटिति श्रोतुमिति बोध्यम्॥ ५॥ ६॥

कृत्यं कर्त्तव्यं कृतमपि अपि प्रश्ने। कृत्यमेवाह,—रामेण चेति॥ ७॥ ८॥

गुरुणा वसिष्ठेन मात्रा च परमप्रीतः सत्यपरिपालनविषय इति शेषः॥ ९॥

एवमुक्तो महाप्राज्ञो वसिष्ठः प्रत्युवाच ह ।
वाक्यज्ञो वाक्यकुशलं राघवं वचनं महत् ॥ ११ ॥
एते प्रयच्छ संहृष्टः पादुके हेमभूषिते ।
अयोध्यायां महाप्राज्ञ ! योगक्षेमकरो भव ॥ १२ ॥
एवमुक्तो वसिष्ठेन राघवः प्राङ्मुखः स्थितः ।
पादुके हेमविकृते मम राज्याय ते ददौ ॥ १३ ॥
निवृत्तोऽहमनुज्ञातो रामेण सुमहात्मना ।
अयोध्यामेव गच्छामि गृहीत्वा पादुके शुभे ॥ १४ ॥
एतच्छ्रुत्वा शुभं वाक्यं भरतस्य महात्मनः ।
भरद्वाजस्तु भरतं मुनिर्वाक्यमुदाहरत् ॥ १५ ॥
नैतच्चित्रं नरव्याघ्रे शीलवृत्तविदाम्बरे ।
यदार्यं त्वयि तिष्ठेत्तु निम्नोत्सृष्टमिवोदकम् ॥ १६ ॥

या कैकेयीनिमित्तं मम पितुः प्रतिज्ञा चतुर्दशवर्षाणि रामेण वने वस्तव्यमिति तामेव पितुः प्रतिज्ञां पालयिष्यामीति सम्बन्धः ॥ १० ॥

एवमुक्तः रामेणेति शेषः ॥ ११ ॥

प्रयच्छ प्रतिनिधित्वेनेति शेषः । अप्राप्तप्राप्तिर्योगः प्राप्तस्य परिपालनं क्षेमः तत्करो भवेति एतत् द्वारा भरते सार्वज्ञसम्पादनेनेति शेषः ॥ १२ ॥

हेमविकृते हेम्ना विचित्रतया कृते मम राज्याय मम राज्यरक्षाशक्त्यनुग्रहार्थमित्यर्थः ॥ १३ ॥ १४ ॥ १५ ॥

अनृणः * स महाबाहुः पिता दशरथस्तव।
यस्य त्वमीदृशः पुत्रो धर्मात्मा धर्मवत्सलः ॥ १७ ॥
तमृषिन्तु महाप्राज्ञमुक्तवाक्यं कृताञ्जलिः।
आमन्त्रयितुमारेभे चरणावुपगृह्य च ॥ १८ ॥
ततः प्रदक्षिणं कृत्वा भरद्वाजं पुनः पुनः।
भरतस्तु ययौ श्रीमानयोध्यां सह मन्त्रिभिः ॥ १९ ॥
यानैश्च शकटैश्चैव हयैर्नागैश्च सा चमूः।
पुनर्निवृत्ता विस्तीर्णा भरतस्यानुयायिनी ॥ २० ॥
ततस्ते यमुनां दिव्यां नदीं तीर्त्वोर्मिमालिनीम्।
ददृशुस्तां पुनः सर्वे गङ्गां शिवजलां नदीम् ॥ २१ ॥
तां रम्यजलसम्पूर्णां सन्तीर्य्य सह बान्धवः।
शृङ्गवेर पुरं रम्यं प्रविवेश ससैनिकः ॥ २२ ॥

यदार्थं शोभनचरित्रं त्वयि तिष्ठेदिति यत्तदुत्कृष्टमुदकं निम्ने तिष्ठेदितिवत्र चित्रं निम्नेति लुप्तसप्तम्यन्तम् ॥ १६ ॥ १७ ॥

उक्तवाक्यम् उक्तरीत्येति शेषः। आमन्त्रयितुमारेभे आमन्त्रणं कृतवान् ॥ १८ ॥ १९ ॥ २० ॥

यमुनां तीर्त्वा गङ्गां ददृशुरिति। यमुनां तीर्त्वा तस्मिन्नेव दिने भरद्वाजं दृष्ट्वा गङ्गां ददृशुरित्यर्थः इति कश्चित् तत्तु पूर्वोक्तरीत्यासाम-

* "अमृत" इति वा पाठः।

शृङ्गवेर पुराद्भूय अयोध्यां सन्ददर्श ह ।
अयोध्यां तु तदा दृष्ट्वा पित्रा भ्रात्रा विवर्जिताम् ॥ २३ ॥
भरतो दुःखसन्तप्तः सारथिञ्चेदमब्रवीत् ।
सारथे ! पश्य विध्वस्ता सायोध्या न प्रकाशते ॥ २४ ॥
निराकारा निरानन्दा दीना प्रतिहतस्वना ॥ २५ ॥

इत्यार्षे रामायणे वाल्मीकीये अयोध्याकाण्डे भरतस्य अयोध्यागमनं नाम त्रयोदशोत्तरशत-तमः सर्गः ॥ ११३ ॥

अस्याद्धेयम् । जलस्य शिवत्वं रम्यत्वञ्च दर्शनमात्रेण सकलपापापहन्तृत्वं मधुरत्वञ्च ॥ २१ ॥ २२ ॥

शृङ्गवेरपुरादिति निर्गत्येति शेषः ॥ २३ ॥

विध्वस्ता विध्वस्तशोभा निराकारा निरलङ्कारा ॥ २४ ॥ २५ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके अयोध्याकाण्डे त्रयोदशाधिकशततमः सर्गः ॥ १३ ॥

---

# चतुर्द्दशोत्तरशततमः सर्गः ।



स्निग्धगम्भीरघोषेण स्यन्दनेनोपयान् प्रभुः ।
अयोध्यां भरतः क्षिप्रं प्रविवेश महायशाः ॥ १ ॥

विड़ालोलूकचरितामालीननरवारणाम् ।
तिमिराभ्याहतां कालीमप्रकाशां निशामिव ॥ २ ॥

राहुशत्रोः प्रियां पत्नीं श्रिया प्रज्वलितप्रभाम् ।
ग्रहेणाभ्युदितेनैकां रोहिणीमिव पीड़िताम् ॥ ३ ॥

अल्पोष्णक्षुब्धसलिलां घर्मोत्तप्तविहङ्गमाम् ।
लीनमीनझषग्राहां कृशां गिरिनदीमिव ॥ ४ ॥

उपयान् उपगच्छन् ॥ १ ॥

बिड़ालादिभिश्चरितां ततस्सञ्चारवतीम् । आ समन्ताल्लीनानि श्लिष्टानि लग्नानि नराणां वारणानि कवाटानि यस्यां तिमिरेणाच्छन्नतां प्राप्तां अतएव कालीं ततएवाप्रकाशां निशामिव स्थितामयोध्यां प्रविवेशेत्यन्वयः ॥ २ ॥

राहुशत्रोश्चन्द्रस्य श्रिया दिव्यैश्वर्य्येण युक्ताम् अतएव प्रज्वलितप्रभाम् अभ्युदितेन ग्रहेण राहुणा पीड़ितभर्त्तृकाम् अतएवैकामसहायां रोहिणीमिव स्थिताम् ॥ ३ ॥

विधूमामिव हेमाभां शिखामग्नेः समुत्थिताम् ।
हविरभ्युक्षितां पश्चाच्छिखां विप्रलयङ्गताम् ॥ ५ ॥
विध्वस्तकवचां रुग्णगजवाजिरथध्वजाम् ।
हतप्रवीरामापन्नाञ्चमूमिव महाहवे ॥ ६ ॥
सफेनां सस्वनां भूत्वा सागरस्य समुत्थिताम् ।
प्रशान्तमारुतोद्धूतां जलोर्मिमिव निःस्वनाम् ॥ ७ ॥
त्यक्तां यज्ञायुधैः सर्वैरभिरूपैश्च याजकैः ।
सुत्याकाले सुनिर्वृत्ते वेदिं गततरवामिव ॥ ८ ॥
गोष्ठमध्ये स्थितामार्त्तामचरन्तीं नवं तृणम् ।

आतपवशादल्पोदकां क्षुब्धं कलुषञ्च सलिलं यस्यास्ताम् । झषो मत्स्यविशेषः । क्षुब्धे त्यार्षम् ॥ ४ ॥

विधूमामतएव हेमाभाम् अग्नेः समुत्थितां शिखामिव पूर्वं रामस्थितिसमये जाज्वल्यमानरूपतया स्थितां पश्चाद्रामविवासनकाले हविरभ्युक्षितां पश्चात् होमीयपयःसिक्तामतएव विप्रलयं गतां शिखामिव स्थिताम् । अध्वराग्नेः समुत्थितामिति पाठो बहुसम्मतस्तत्राप्यर्थः प्रागवदेव शिखामित्यस्य चावृत्तिः ॥ ५ ॥ ६ ॥

समुत्थितां प्रबलमारुतेन समुत्थिताम् अतएव सफेनां सस्वनामूर्मिमिव भूत्वा तत्सदृशं रूपं प्राप्य पश्चात् प्रशान्तमारुतेन उत् अल्पं धूतां कम्पितामतएव निःस्वनां सागरस्य जलोर्मिमिव स्थिताम् ॥ ७ ॥

यज्ञायुधैः स्रुगादिभिः अभिरूपैः प्रशस्तैः सुत्याकाले यागकाले निर्वृत्ते समाप्ते सति ॥ ८ ॥

गोवृषेण परित्यक्तां गवां पत्नीमिवोत्सुकाम् ॥ ९ ॥
प्रभाकराद्यैः सुस्निग्धैः प्रज्वलद्भिरिवोत्तमैः।
वियुक्तां मणिभिर्जात्यैर्नवां मुक्तावलीमिव ॥ १० ॥
सहसा चरितां स्थानान्महीं पुण्यक्षयागताम्।
संवृतद्युतिविस्तारान्तारामिव दिवश्च्युताम् ॥ ११ ॥
पुष्पनद्धां वसन्तान्ते मत्तभ्रमरशालिनीम्।
द्रुतदावाग्निविप्लुष्टां क्लान्तां वनलतामिव ॥ १२ ॥
संमूढनिगमां सर्वां संक्षिप्तविपणापणाम्।
प्रच्छन्नशशिनक्षत्रान्द्यामिवांबुधरैर्युताम् ॥ १३ ॥

गोष्ठो व्रजं तत्र स्थितां गोवृषेण श्रेष्ठगवां वृषभेण। यद्वा गवां प्रियेण वृषेण त्यक्ताम् अतएवात्सां तन्नोत्सुकां नवं तृणमचरन्तीमभक्षयन्तीं गवां तरुणवृषाणां पत्नीमिव स्थिताम्। गवां पङ्क्तिमिवेति पाठान्तरम्। पत्नीमित्यस्य पङ्क्तिमित्यर्थं तीर्थ आह तच्चिन्त्यम् ॥ ९ ॥

प्रभाकराद्यैः पद्मरागाद्यैः स्फटिकाद्यैरिति कतकोक्तं तु न युक्तम् ॥ १० ॥

स्थानात् सहसा चरितां चलिताम्। पुण्यक्षयेति लुप्तसप्तम्यन्तम्। पुण्यक्षये सति महीं प्राप्तां संवृतो द्युतिविस्तारो यस्यास्ताम् ॥ ११ ॥

द्रुतदावाग्निविप्लुष्टां वेगवद्दावाग्निना व्याप्ताम् ॥ १२ ॥

संमूढाः शोकाकुलचित्ता निगमा वणिजो यस्याम्। यद्वा संमूढो जनसञ्चाररहितो निगमः पन्था यस्याम्। निगमो निश्चये वेदे पुरे पथि वणिक्पथे। संक्षिप्ता विपणापणाः पण्यवीथयो यस्याम् ॥ १३ ॥

क्षीणपानोत्तमैर्भग्नैः शरावैरभिसंवृताम्।
हतशौण्डामिवाकाशे पानभूमिमसंस्कृताम् ॥ १४ ॥
वृक्णभूमितलां निम्नां वृक्णपात्रैः समावृताम्।
उपयुक्तोदकां भग्नां प्रपां निपतितामिव ॥ १५ ॥
विपुलां विततां चैव युक्तपाशां तरस्विनाम्।
भूमौ बाणैर्विनिष्कृत्तां पतितां ज्यामिवायुधात् ॥ १६ ॥
सहसा युद्धशौण्डेन हयारोहेण वाहिताम्।
निहतां प्रतिसैन्येन वडवामिव पातिताम् ॥ १७ ॥ *

क्षीणपानोत्तमैः क्षीणमद्यैः भग्नैः शरावैः संवृतां हतशौण्डां हतमद्यपाम् ( आकाशे अनावृत प्रदेशे ) ॥ १४ ॥

वृक्णभूमितलां भिन्नचत्वरां भिन्नपात्रैर्युक्तां भग्नां भग्नस्तम्भाम् उपयुक्तोदकां समाप्तोदकाम् ॥ १५ ॥

विपुलां विशालां विततां धनुष्याततां युक्तपाशां धनुष्कोट्योर्ज्याबन्धनार्थपाशयुतां तरस्विनां बाणैर्विनिष्कृत्तां छिन्नां आयुधाद्धनुषः पतिताम् ॥ १६ ॥

---

"प्रावृषि प्रविगाढायां प्रविष्टस्याभ्रमण्डलम्।
प्रच्छन्नां नीलजीमूतै भास्करस्य प्रभामिव ॥"

इत्यतिरिक्तं पाश्चात्त्याः।

भरतस्तु रथस्थः सन् श्रीमान् दशरथात्मजः।
वाहयन्तं रथश्रेष्ठं सारथिं वाक्यमब्रवीत् ॥ १८ ॥
किन्नु खल्वद्य गम्भीरो मूर्च्छितो न निशाम्यते।
यथा पुरमयोध्यायां गीतवादित्रनिःस्वनः ॥ १९ ॥
वारुणीमदगन्धश्च माल्यगन्धश्च मूर्च्छितः।
चन्दनागुरुगन्धश्च न प्रवाति समन्ततः ॥ २० ॥
यानप्रवरघोषश्च सुस्निग्धहयनिःस्वनः।
प्रमत्तगजनादश्च महांश्च रथनिःस्वनः ॥ २१ ॥
नेदानीं श्रूयते पुर्य्यामस्यां रामे विवासिते।
चन्दनागरुगन्धांश्च महार्हाश्च नवस्रजः ॥ २२ ॥
गते रामे हि तरुणाः सन्तप्ता नोपभुञ्जते।
वहिर्यात्रां न गच्छन्ति चित्रमाल्यधरा नराः ॥ २३ ॥
नोत्सवाः सम्प्रवर्त्तन्ते रामशोकार्दिते पुरे।
सा हि नूनं मम भ्रात्रा पुरस्यास्य द्युतिर्गता ॥ २४ ॥

सहसा बलात्कारेण वाहितां प्रधावितां प्रतिसैन्येन निहतामतएव पालिताम् ॥ १७ ॥ १८ ॥

यथापुरं यथापूर्वं न निशाम्यते खलु अत्र किं कुर्म इति योजना ॥ १९ ॥

मदकरोगन्धः मदगन्धः मूर्च्छितो व्याप्तः ॥ २० ॥ २१ ॥ २२ ॥ २३ ॥

न हि राजत्ययोध्येयं सासारेवार्ज्जुनी क्षपा।
कदा नु खलु मे भ्राता महोत्सव इवागतः॥ २५॥
जनयिष्यत्ययोध्यायां हर्षं ग्रीष्म इवाम्बुदः।
तरुणैश्चारुवेषैश्च नरैरुन्नतगामिभिः॥ २६॥
सम्पतद्भिरयोध्यायां नाभिभान्ति महापथाः।
इति ब्रुवन् सारथिना दुःखितो भरतस्तदा॥ २७॥
अयोध्यां सम्प्रविश्यैव विवेश वसतिं पितुः।
तेन हीनां नरेन्द्रेण सिंहहीनां गुहामिव॥ २८॥

तदा तदन्तःपुरमुज्झितप्रभं
सुरैरिवोत्कृष्टमभास्करं दिनम्।

मम भ्राता सहेति शेषः॥ २४॥

अर्ज्जुनी शारदी शुक्लपक्षसम्बन्धिनी वा सासारा वेगवत् वृष्टिधारासहिता महोत्सव इव ग्रीष्मेऽम्बुद इव च॥ २५॥

उन्नतगामिभिः सन्तोषादुद्धतगामिभिः॥ २६॥ २७॥ २८॥

सुरैरुत्कृष्टं क्षतशोकमभास्करं दिनमिव। एवं हि श्रूयते, पुरा देवासुरे युद्धेऽसुरैर्देवाः पराजिता राहुणा च भानुः पातितः तदा दिवारात्रविभागरहिते काले स्वस्वलोकात् ब्रह्मलोकं गतैर्देवैः प्रार्थितस्य ब्रह्मणो नियोगादत्रिः सप्तरात्रं सूर्य्याधिपत्यं चकारेति तीर्थः। देवैरुत्कृष्टं भास्करहीनं दिनं कविकल्पितमत्रोपमानमिति

निरीक्ष्य सर्वत्रविभक्तमात्मवान्
मुमोच वाष्पं भरतः सुदुःखितः ॥ २९ ॥

इत्यार्षे रामायणे वाल्मीकीये अयोध्याकाण्डे
भरतस्य अयोध्यागमनं नाम चतुर्दशोत्तर-
शततमः सर्गः ॥ ११४ ॥

कतकः । विभक्तं विगतसंस्कारं भक्तं सेवितं संस्कृतं तद्भिन्नमिति यावत् ॥ २९ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके
अयोध्याकाण्डे चतुर्दशोत्तरशततमः
सर्गः ॥ ११४ ॥

---

## पञ्चदशोत्तरशततमः सर्गः ।

ततो निक्षिप्य मातॄस्ता अयोध्यायां दृढव्रतः ।
भरतः शोकसन्तप्तो गुरूनिदमथाब्रवीत् ॥ १ ॥
नन्दिग्रामं गमिष्यामि सर्वानामन्त्रयेऽत्र वः ।
तत्र दुःखमिदं सर्वं सहिष्ये राघवं विना ॥ २ ॥
गतश्चाहो दिवं राजा वनस्थः स गुरुर्मम ।
रामं प्रतीक्षे राज्याय स हि राजा महायशाः ॥ ३ ॥
एतच्छ्रुत्वा शुभं वाक्यं भरतस्य महात्मनः ।
अब्रुवन् मन्त्रिणः सर्वे वशिष्ठश्च पुरोहितः ॥ ४ ॥
सुभृशं श्लाघनीयञ्च यदुक्तं भरत ! त्वया ।
वचनं भ्रातृवात्सल्यादनुरूपं तथैव तत् ॥ ५ ॥
नित्यन्ते बन्धुलुब्धस्य तिष्ठतो भ्रातृसौहृदे ।
मार्गमार्यं प्रपन्नस्य नानुमन्येत कः पुमान् ॥ ६ ॥

तत इति ॥ १ ॥

अत्र अयोध्यायां तेन सहागमनं वारितम् । राघवं विना दुःखं पितृभ्रातृवियोगजं दुःखमिति यावत् ॥ २ ॥

तदेवाह;—गतश्चेति ॥ ३ ॥ ४ ॥ ५ ॥

मन्त्रिणां वचनं श्रुत्वा यथाभिलषितं प्रियम्।
अब्रवीत् सारथिं वाक्यं रथोमे युज्यतामिति ॥ ७ ॥
प्रहृष्टवदनः सर्वा मातॄः समभिभाष्य * च।
आरुरोह रथं श्रीमान् शत्रुघ्नेन समन्वितः ॥ ८ ॥
आरुह्य तु रथं क्षिप्रं शत्रुघ्नभरतावुभौ।
ययतुः परमप्रीतौ वृतौ मन्त्रिपुरोहितैः ॥ ९ ॥
अग्रतो गुरवः सर्वे वशिष्ठप्रमुखा द्विजाः।
प्रययुः प्राङ्मुखाः सर्वे नन्दिग्रामो यतो भवेत् ॥ १० ॥
बलञ्च तदनाहूतं गजाश्वरथसङ्कुलम्।
प्रययौ भरते याते सर्वे च पुरवासिनः ॥ ११ ॥
रथस्थः स तु धर्मात्मा भरतो भ्रातृवत्सलः।
नन्दिग्रामं ययौ तूर्णं शिरस्याधाय पादुके ॥ १२ ॥
ततस्तु भरतः क्षिप्रं नन्दिग्रामं प्रविश्य सः।
अवतीर्य्य रथात्तूर्णं गुरूनिदमभाषत ॥ १३ ॥

बन्धुलुब्धस्य बन्धुजनपरिपालनेऽधिकस्पृहावतः आर्य्यं श्रेष्ठं नानुमन्येत त्वद्वचनमिति शेषः ॥ ६ ॥

यथाभिलषितं स्वाभिलषितमनतिक्रम्य प्रवृत्तम् ॥ ७ ॥ ८ ॥ ९ ॥

नन्दिग्रामो यतो भवेत् येन मार्गेण स प्राप्तो भवेत् तेन ययुः ॥ १० ॥

तदनाहूतं भरतेनाकृताह्वानमपि ॥ ११ ॥ १२ ॥ १३ ॥

---

* "समभिवाद्य च" इति वा पाठः।

एतद्राज्यं मम भ्रात्रा दत्तं सन्न्यासमुत्तमम् *।
योगक्षेमवहे चेमे पादुके हेमभूषिते ॥ १४ ॥
भरतः शिरसा कृत्वा सन्न्यासं पादुके ततः।
अब्रवीत् दुःखसन्तप्तः सर्वं प्रकृतिमण्डलम् ॥ १५ ॥
छत्रं धारयत क्षिप्रमार्य्यपादाविमौ मतौ।
आभ्यां राज्ये स्थितो धर्मः पादुकाभ्यां गुरोर्मम ॥ १६ ॥

एतदयोध्याराज्यं मम भ्रात्रा सन्न्यासवत् समीचीनवस्तुनिक्षेपवन्मयि दत्तं स्थापितं कालान्तरे ग्रहणाय विश्वस्तपुरुषे रक्षणार्थं वस्तुस्थापनं न्यासो निक्षेप इति च न्यासस्यापि राज्यस्य रक्षणं भगवत्पादुकाधीनमेव न मदधीनमित्याह,—योगेत्यादि। इत्युवाचेति पूर्वेणान्वयः ॥ १४ ॥

पादुके सन्न्यासं पादुकात्मकं सद्वस्तुन्यासं वेदाः प्रमाणमितिवत् साधु शिरसा कृत्वा प्रणम्येति यावत् ॥ १५ ॥

इमौ पादुकारूपौ आर्य्यपादाविति पादशब्दः पूजावाची द्विधेयाभिप्रायेण चेमाविति पुल्लिङ्गनिर्देशः। शैत्यं हि यत् सा प्रकृतिर्जलस्येति। तत्परमपूज्यरामभावनाविषये इमे पादुके इत्यर्थः। राज्ये पेच्छितो मम गुरोर्धर्मव्यवहारो अनयोरेव स्थितोऽत आभ्यां पादुकाभ्यां छत्रं धारयत एतत्सन्निधानादेव तत्तद्व्यवहारे धर्मव्यवहारांशज्ञानं ममेति भावः ॥ १६ ॥

---

* "सन्न्यासवत् स्वयम्" इति वा पाठः।

भ्रात्रा तु मयि सन्न्यासो निक्षिप्तः सौहृदादयम्।
तमिमं पालयिष्यामि राघवागमनं प्रति॥ १७॥
क्षिप्रं संयोजयित्वा तु राघवस्य पुनः स्वयम्।
चरणौ तौ तु रामस्य द्रक्ष्यामि सहपादुकौ॥ १८॥
ततो निक्षिप्तभारोऽहं राघवेण समागतः।
निवेद्य गुरवे राज्यं भजिष्ये गुरुवर्त्तिताम्॥ १९॥
राघवाय च सन्न्यासं दत्त्वेमे वरपादुके।
राज्यञ्चेदमयोध्याञ्च धूतपापो भवाम्यहम्॥ २०॥ *
स वल्कलजटाधारी मुनिवेषधरः प्रभुः।

अयं राज्यरूपः सन्न्यासो निक्षिप्तः राघवागमनं प्रति तावत्पर्यन्तम्॥ १७॥

संयोजयित्वा चरणयोः पादुके॥ १८॥

समागतो मिलितः निवेद्य प्रत्यर्प्य गुरुवर्त्तितां गुरुचित्तशुश्रूषाम्॥ १९॥ २०॥

---

* "अभिषिक्ते तु काकुत्स्थे प्रहृष्टे मुदिते जने।
प्रीतिर्मम यशश्चैव भवेद्राज्याच्चतुर्गुणम्॥
एवन्तु विलपन् दीनो भरतः स महायशाः।
नन्दिग्रामेऽकरोद्राज्यं दुःखितो मन्त्रिभिः सह॥".
अतिरिक्तं पाश्चात्त्याः पठन्ति।

नन्दिग्राममेवसद्वीरः ससैन्यो भरतस्तदा ॥ २१ ॥

सबालव्यजनं छत्रं धारयामास स स्वयम् ।

भरतः शासनं सर्वं पादुकाभ्यां निवेदयन् ॥ २२ ॥

ततस्तु भरतः श्रीमानभिषिच्यार्य्यपादुके ।

तदधीनस्तदा राज्यं कारयामास सर्वदा ॥ २३ ॥

तदा हि यत्कार्य्यमुपैति किञ्चिदुपायनं चोपहृतं महार्हम् ।

स पादुकाभ्यां प्रथमं निवेद्य चकार पश्चात् भरतो यथावत् ॥२४॥

इत्यार्षे रामायणे वाल्मीकीये अयोध्याकाण्डे भरतस्य नन्दिग्रामगमनं नाम पञ्चदशोत्तरशततमः सर्गः ॥ ११५ ॥

अवसत् धीरः धीमान् ॥ २१ ॥

वालव्यजनेन सहितं छत्रं स भरतः सर्वं शासनं ताभ्यां निवेदयन् उक्तविशेषणं छत्रं स्वयमेव धारयामास ॥ २२ ॥

आर्य्यपादुके अभिषिच्य तयोः राज्याभिषेकं कृत्वा तदधीनः पादुकाधीनः ॥ २३ ॥

यत्० कार्य्यं राज्यविषयं पश्चाद्यथावत् कोशागारस्थमुपायनं चकार प्रजान्यायकार्य्यञ्च यथावच्छास्त्रानतिक्रमेण चकार ॥ २४ ॥

इति श्री रामाभिरामे श्रीरामीये रामायणतिलके अयोध्याकाण्डे पञ्चदशोत्तरशततमः सर्गः ॥ ११५ ॥

---

# षोड़शोत्तरशततमः सर्गः।

प्रतियाते तु भरते वसन् रामस्तदा वने *।
लक्षयामास सोद्वेगमथौत्सुक्यं तपस्विनाम्॥ १॥
ये तत्र चित्रकूटस्य पुरस्तात्तापसाश्रमे।

सोद्वेगं सभयमौत्सुक्यम् आश्रमान्तरगमनौत्सुक्यम्॥ १॥

पुरस्तात् पूर्वं ये तापसाः चित्रकूटस्य आश्रमे सन्निहिताः। राम-माश्रित्य निरताः नितरां रताः सानन्दाः तानुत्सुकानलक्षयत्। अत्रेदं बोध्यम्। चैत्रशुक्लदशम्यां पुष्ये रामवनप्रस्थानम्। ततः पूर्णिमाया-मर्धरात्रे दशरथमरणम्। ततः पक्षेण भरतागमनमयोध्यायां। तत और्ध्वदेहिकेन पक्षो गतः। एवं वैशाखे गते ज्यैष्ठे भरतस्य चित्रकूटं प्रति प्रस्थानम् अग्रे वर्षाकाले सन्निहिते सति कार्त्तिक्यं तं चित्रकूटे वासो रामस्य। तदनन्तरं तापसौत्सुक्यलक्षणं न तु भरतनिवृत्त्यनन्तर-मेवैतदिति। अतएव पाद्मे भरतस्यायोध्यां प्रति निवृत्त्यनन्तरमुक्तम्।

राघवश्चित्रकूटाद्रौ सानुजोरमत स्त्रिया।
कदाचिदङ्के वैदेह्या निद्राणे रघुनन्दने॥

---

* "तपोवने" इति वा पाठः।

राममाश्रित्य निरतास्तानलक्ष्मणदृष्टकान् ॥ २ ॥

ऐन्द्रः काकः समागम्य जानकीं वीक्ष्य कामुकः ।
विददार नखैस्तीक्ष्णैः पीनोन्नतपयोधरम् ॥
तत् दृष्ट्वा राघवः क्रुद्धः कुशं जग्राह पाणिना ।
ब्राह्मेणास्त्रेण संयोज्य चिक्षेप ध्वाङ्क्षमारणे ॥
तं दृष्ट्वा घोरसङ्काशं ज्वलत्कालानलोपमम् ।
दृष्ट्वा काकः प्रदुद्राव विनदन् दारुणस्वनम् ॥
वायसस्त्रिषु लोकेषु बभ्राम भयपीडितः ।
यत्र यत्र ययौ काकः शरणार्थी च वायसः ॥
तत्र तत्र तदस्त्रं तु प्रविवेश भयावहम् ।
ब्रह्मादीनिन्द्रं रुद्रं मां शरणार्थी जगाम सः ॥
तत् दृष्ट्वा वायसं भीतं देवता न ररक्षिम ।
न शक्ताः स्म वयं त्रातुं राघवास्त्राद्भयङ्करात् ॥
इत्यब्रुम भद्रादेवा अन्यथास्त्रं दहेच्च मः ।
पुनस्तस्मादृषिं काकोदयया विधिराहतम् ॥
भो भो बलिभुजां श्रेष्ठ ! तमेव शरणं व्रज ।
स एव रक्षकः श्रीशः शरणागतवत्सलः ॥
इत्युक्तः सोऽथ बलिभुक् ब्रह्मणा रघुनन्दनम् ।
उपेत्य सहसा भूमौ निपपात भयातुरः ॥
प्राणसंशयमापन्नं दृष्ट्वा सीता तु वायसम् ।
त्राहि त्राहीति भर्त्तारमुवाच दयिता विभुम् ॥
तच्छिरः पादयोस्तस्य युयुजे चाथ जानकी ।

नयनैर्भ्रुकुटीभिश्च रामं निर्दिश्य शङ्किताः।
अन्योऽन्यमुपजल्पन्तः शनैश्चक्रुर्मिथः कथाः॥ ३॥
तेषामौत्सुक्यमालक्ष्य रामस्त्वात्मनि शङ्कितः।
कृताञ्जलिरुवाचेदमृषिं कुलपतिं ततः॥ ४॥
न कच्चित् भगवन्! किञ्चित् पूर्ववृत्तमिदं मयि।
दृश्यते विकृतं येन विक्रियन्ते तपस्विनः॥ ५॥

तमुत्थाप्य करेणाथ कृपापीयूषसागरः॥
ररक्षासौ निजास्त्राय तदेकाक्षि ददौ तदा।
वायसोऽपि मुहुर्नत्वा सीतायै राघवाय च॥
स्वर्लोकं प्रययौ हृष्टो राघवेणाभिपालितः।
ततो रामो महातेजा वैदेह्या लक्ष्मणेन च॥
उवास चित्रकूटाद्रौ स्तूयमानो महर्षिभिरिति॥ २॥

कथमलक्षयत्तत्राह,—नयनैरित्यादि। निर्दिश्य प्रदर्श्य शङ्किताः रामः किं मंस्यत इति भीताः नयनादिभिः प्रदर्श्यान्योन्यमुपजल्पन्तः आकयन्तः। शनैरुपांशुकथास्चक्रुः। अयं राम इह सलोक आस्ते राक्षसास्चैतद्द्वेषेणेह सञ्चरन्तोऽस्मान् बाधन्तेऽतोऽन्यत्र गन्तव्यमित्येवं-रूपाः कथाश्चक्रुः॥ ३॥

शङ्कित आशङ्कितेत्यर्थः। एतदाश्रमत्यागकारणमात्मनिष्ठं दोषमाशङ्कितेत्यर्थः। अतएव कृताञ्जलिः सन् कुलपतिं ऋषिसङ्घस्वामिनमाश्रमस्वामिनं वा। कुलमन्वयसङ्घातगृहेष्वाप्याश्रमेषु च॥ ४॥

मयि पूर्ववृत्तं पूर्वराजवृत्तं न दृश्यते कच्चित् विकृतं वा दृश्यते

प्रमादात् चरितं किञ्चित् कच्चिन्नावरजस्य मे ।
लक्ष्मणस्यर्षिभिर्दृष्टं नानुरूपं महात्मनः *॥ ६ ॥
कच्चिच्छुश्रूषमाणा वः शुश्रूषणपरा मयि ।
प्रमदाभ्यर्चितां वृत्तिं सीता युक्तां न वर्त्तते ॥ ७ ॥
अथर्षिर्जरया वृद्धस्तपसा च जराकृतः ।
वेपमान इवोवाच रामं भूतदयापरम् ॥ ८ ॥
कुतः कल्याणसत्वायाः कल्याणाभिरतेः सदा ।
स्खलनं तात ! वैदेह्यास्तपस्विषु विशेषतः ॥ ९ ॥

कच्चित् । येन तपस्विनो विक्रियन्ते इदं तपस्विविक्रियारूपं किञ्चित्कारणकं भवति तन्निवेदयतु भवानिति शेषः ॥ ५ ॥

अवरजस्य लक्ष्मणस्य नानुरूपं चरितम् अयुक्ताचरणं प्रमादाज्ज्ञातं किञ्चिद्दषिभिर्न दृष्टं कच्चित् ॥ ६ ॥

वः शुश्रूषमाणा अर्घ्यपाद्यादिना युष्मान् सेवमाना अधुना मत्शुश्रूषानुरोधात् प्रमदोचितां युष्मासु युक्तां वृत्तिं शुश्रूषाविषयां सीता न वर्त्तते कच्चित् ॥ ७ ॥

तपसा च वृद्ध इत्यनुकर्षः । वेपमान इव कथं वा रामोऽमंस्यत इति कम्पः जरया वा कम्पः इव शब्दार्थः ॥ ८ ॥

सत्वं स्वभावः ॥ ९ ॥

---

* "नानुरूपमिवात्मनः" इति वा पाठः ।

त्वन्निमित्तमिदं तावत् तापसान् प्रति वर्त्तते।
रक्षोभ्यस्तेन संविग्नाः कथयन्ति मिथः कथाः॥ १० ॥
रावणावरजः कश्चित् खरो नामेह राक्षसः।
उत्पाट्य तापसान् सर्वान् जनस्थाननिवासिनः * ॥ ११ ॥
धृष्टश्च जितकाशी च नृशंसः पुरुषादकः।
अवलिप्तश्च पापश्च त्वाञ्च तात! न मृष्यते ॥ १२ ॥
त्वं यदाप्रभृति ह्यस्मिन्नाश्रमे तात! वर्त्तसे।
तदाप्रभृति रक्षांसि विप्रकुर्वन्ति तापसान् ॥ १३ ॥
दर्शयन्ति हि बीभत्सैः क्रूरैर्भीषणकैरपि।
नानारूपैर्विरूपैश्च रूपैरसुखदर्शनैः ॥ १४ ॥

त्वन्निमित्तं त्वत्तो हेतोः। इदं भयं रक्षोभ्यः समागतमिति भावः ॥ १० ॥

कथं तत्राह,—रावणेति। उत्पाट्य संपीड्य ॥ ११ ॥

जितकाशी जिताहवः जितभयो वा त्वाञ्च न मृष्यते पीड़यितु-मिच्छति ॥ १२ ॥

विप्रकुर्वन्ति अपकुर्वन्ति ॥ १३ ॥

तमपकारं दर्शयति। दर्शयन्तीति। बीभत्सैर्जुगुप्सितरूपैरात्मानं दर्शयन्ति इत्यन्वयः ॥ १४ ॥

---

* "जनस्थाननिकेतनात्" इति वा पाठः।

अप्रशस्तैरशुचिभिः संप्रयुज्य च तापसान्।
प्रतिघ्नन्त्यपरान् क्षिप्रमनार्याः * पुरतः स्थितान्॥ १५॥
तेषु तेष्वाश्रमस्थानेष्वबुद्धमवलीय च।
रमन्ते तापसांस्तत्र नाशयन्तोऽल्पचेतसः॥ १६॥
अवक्षिपन्ति स्रुग्भाण्डानग्नीन् सिञ्चन्ति वारिणा।
कलशांश्च प्रमर्द्दन्ति हवने समुपस्थिते॥ १७॥
तैर्दुरात्मभिराविष्टानाश्रमान् प्रजिघांसवः †।
गमनायान्यदेशस्य चोदयन्त्यृषयोद्य माम्॥ १८॥

अप्रशस्तैः पापजनकैरशुचिभिः पदार्थैस्तापसान् संप्रयुज्य विप्रकुर्वन्ति। अपरानपि मृदून् प्रतिघ्नन्त्यपि पीड़यन्त्यपि॥ १५॥

अबुद्धम् अविदितं यथा भवति तथा निशादौ अवलीय च निर्भयमाश्लिष्य च तदालिङ्गनेनाल्पचेतसो विचेतसस्तापसान् नाशयन्तो रमन्ते॥ १६॥

स्रुग्भाण्डान् स्रुगादियज्ञसम्भारान् अवक्षिपन्ति अवस्कन्दयन्ति। कलशानुदकपात्राणि। प्रमर्दो भङ्गः। हवने होमकर्मणि समुपस्थिते प्रवृत्ते॥ १७॥

प्रजिघांसवः परित्यक्तुमिच्छवः मिथो मिलिताः॥ १८॥

---

* "क्षिप्रं मायया" इति वा पाठः।

† "प्रतिष्ठासवः" इति वा पाठः।

तत् पुरा राम ! शारीरीमुपहिंसां तपस्विषु।
दर्शयन्ति हि दुष्टास्ते त्यक्ष्याम इममाश्रमम् ॥ १९ ॥
बहुमूलफलं चित्रमविदूरादितो वनम्।
अश्वस्याश्रममेवाहं * श्रयिष्ये सगणः पुनः ॥ २० ॥
खरस्त्वय्यपि चायुक्तं पुरा तात ! प्रवर्त्तते।
सहास्माभिरितो गच्छ यदि बुद्धिः प्रवर्त्तते ॥ २१ ॥
सकलत्रस्य सन्देहो नित्ययुक्तस्य राघव ! ।
समर्थस्यापि हि सतो वासो दुःखमिहाद्य ते ॥ २२ ॥

शारीरीमुपहिंसां प्राणवियोगरूपां पुरा दर्शयन्ति दर्शयिष्यन्ति। अत इममाश्रमं त्यक्ष्यामः ॥ १९ ॥

अश्वस्य न विद्यते श्वः सञ्चयो यस्य तस्य महर्षेः पृषोदरादित्वात् साधु। एतेन रक्षोभयनिवारणक्षमत्वं तस्य दर्शितम् ॥ २० ॥

पुरा प्रवर्त्तते प्रवर्त्तयिष्यति। अतस्तव नित्ययुक्तस्यापि सदा सावधानस्यापि रक्षोनिग्रहे समर्थस्यापि सकलत्रस्यापि हेतुगर्भमेतत्। इहाश्रमे सन्देहः सन्देहवानेव वासः। आद्य आद्यच् दुःखो दुःखजनकः। अतस्तवाप्यत्रावस्थानमनुचितमिति व्यङ्ग्यमतस्त्वमपि सहास्माभिरितो गच्छेत्यन्वयः ॥ २१ ॥ २२ ॥

---

* "कण्वस्याश्रममेवाहं" इति वा पाठः।

इत्युक्तवन्तं रामस्तं राजपुत्रस्तपस्विनम्।

न शशाकोत्तरैर्वाक्यैरवबद्धुं समुत्सुकम् ॥ २३ ॥

अभिनन्द्य समापृच्छ्य समाधाय च राघवम्।

स जगामाश्रमं त्यक्त्वा कुलैः कुलपतिः सह ॥ २४ ॥

राम: संसाध्य ऋषिगणमनुगमनात्

देशात्तस्मात् कुलपतिमभिवाद्य ऋषिम्।

सम्यक् प्रीतैस्तैरनुमतउपदिष्टार्थः

पुण्यं वासाय स्वनिलयमुपसम्पेदे ॥ २५ ॥

आश्रममृषिविरहितं प्रभुः

क्षणमपि न जहौ स राघवः।

अवबद्धुम् अहं रक्षांसि निवारयिष्यामि माभैष्टेत्यादिवचनैर्निवारयितुं न शशाक। तत्र हेतुः समुत्सुकमिति। कार्य्यशेषस्य स्वीयान्यदेशगमनसाध्यत्वाच ॥ २३ ॥

अभिनन्द्य स्तुत्वा समाधाय स्ववियोगखिन्नं समाश्वास्य कुलैर्ऋषिसङ्घैः ॥ २४ ॥

रामस्तस्माद्देशादपयान्तम् ऋषिगणमनुगमनात् अनुव्रजनेन संसाध्य प्रस्थाप्य कुलपतिमृषिमभिवाद्य सम्यक् प्रीतैस्तैरनुमतः कृतानुमतिक उपदिष्टार्थः रक्षःसन्देहादत्रावस्थानमनुचितमितिकृतोपदेशः। पुण्यं स्वनिलयं वासायोपसम्पेदे ॥ २५ ॥

क्षणमपि न जहौ सीतारक्षणार्थमिति भावः। आर्षम् ऋषि-

राघवं हि सततमनुगता-

स्तापसाश्चार्षचरिते धृतगुणाः ॥ २६ ॥

इत्यार्षे रामायणे वाल्मीकीये अयोध्याकाण्डे खरोप-
द्रववर्णनं नाम षोड़शोत्तरशत-
तमः सर्गः ॥ ११६ ॥

सम्बन्धिचरितं वृत्तं यस्य तादृशे राघवे धृतगुणाः निश्चितनिजरक्षा-
सामर्थ्यगुणाः केचित्तापसाः सततं निरन्तरं राघवमनुगता हि अनुगता
एव नाश्रमान्तरं जग्मुः ॥ २६ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके
अयोध्याकाण्डे षोड़शाधिकशततमः
सर्गः ॥ ११६ ॥

---

## सप्तदशोत्तरशततमः सर्गः ।

राघवस्त्वपयातेषु तपस्विषु विचिन्तयन् ।
न तत्रारोचयद्वासं कारणैर्बहुभिस्तदा ॥ १ ॥
इह मे भरतो दृष्टो मातरश्च सनागराः ।
सा च मे स्मृतिरन्वेति तान्नित्यमनुशोचतः ॥ २ ॥
स्कन्धावारनिवेशेन तेन तस्य महात्मनः ।
हयहस्तिकरीषैश्च उपमर्दः कृतो भृशम् ॥ ३ ॥
तस्मादन्यत्र गच्छामि इति सञ्चिन्त्य राघवः ।
प्रातिष्ठत स वैदेह्या लक्ष्मणेन च सङ्गतः ॥ ४ ॥
सोऽत्रेराश्रममासाद्य तं ववन्दे महायशाः ।

अनुचिन्तयन् वक्ष्यमाणलक्षणमुपाधिम् ॥ १ ॥

तमेवाह,—इहेति । मे मया संबन्धसामान्ये षष्ठी । सा मे स्मृतिर्मां नित्यमनुशोचतस्तानन्वेति विषयीकरोति । एवञ्च तादृशतत्स्मरणेन ममापि शोको वर्द्धत इति भावः ॥ २ ॥

राजधानीतो निर्गतायाः सेनाया निवासस्थानं स्कन्धावारः । तस्य भरतस्य । तेन पुरतो दृश्यमानेन अनेन स्मृत्युद्बोधकमुक्तम् उपमर्दः भूमेरशुचिता ॥ ३ ॥ ४ ॥

तत्रापि भगवानत्रिः पुत्रवत् प्रत्यपद्यत ॥ ५ ॥
स्वयमातिथ्यमादिश्य सर्व्वमस्य सुसत्कृतम् ।
सौमित्रिञ्च महाभागं सीताञ्च समसांत्वयत् ॥ ६ ॥
पत्नीञ्च तमनुप्राप्तां वृद्धामामन्त्र्य सत्कृताम् ।
सान्त्वयामास धर्मज्ञः सर्वभूतहिते रतः ॥ ७ ॥
अनसूयां महाभागां तापसीं धर्मचारिणीम् ।
प्रतिगृह्णीष्व वैदेहीमब्रवीदृषिसत्तमः ॥ ८ ॥
रामाय चाचचक्षे तां तापसीं धर्मचारिणीम् ।
दशवर्षाण्यनावृष्ट्या दग्धे लोके निरन्तरम् ॥ ९ ॥
यया मूलफले सृष्टे जाह्नवी च प्रवर्त्तिता ।
उग्रेण तपसा युक्ता नियमैश्चाप्यलंकृता ॥ १० ॥

स रामः तमत्रिं तमपि जगत्कारणमपि रामं लोकव्यवहारानुसरणेन पुत्रवत् अङ्गीचकार । आलिङ्गनमूर्धाघ्राणादिभिः ॥ ५ ॥

स्वयमादिश्य विज्ञाप्यास्य सर्वमातिथ्यं सुसत्कृतं कृत्वा समसांत्वयत् प्रीतियुक्तेन चक्षुषापश्यत् ॥ ६ ॥

तं देशमनुप्राप्तां वृद्धां पत्नीम् अनसूयानाम्नीं तापसीत्वादिगुणयुक्तां वाचा सत्कृतां सर्वैः सत्कृतां वा आमंत्र्य संबोध्य सांत्वयामास प्रीत्या सीतां दर्शयामास अनन्तरं वैदेहीं प्रतिगृह्णीष्वेत्यब्रवीदित्यर्थः ॥ ७ ८ ॥

तामाचचक्षे तद्वैभवं कथितवान् । तदेव दर्शयति,—दशेत्यादि ॥९॥
मूलफले ऋषीणां जीवनायेति शेषः । जाह्नवी गङ्गा च प्रव-

दशवर्षसहस्राणि यया तप्तं महत्तपः।
अनसूयाव्रतैस्तात! प्रत्यूहाश्च निवर्त्तिताः॥ ११॥
देवकार्य्यनिमित्तञ्च यया संत्वरमाणया।
दशरात्रं कृता रात्रिः सेयं मातेव तेऽनघ!॥ १२॥
तामिमां सर्वभूतानां नमस्कार्य्यां तपस्विनीम्।
अभिगच्छतु वैदेही वृद्धामक्रोधनां सदा॥ १३॥
एवं ब्रुवाणं तमृषिं तथेत्युक्त्वा स राघवः।
सीतामालोक्य धर्मज्ञामिदं वचनमब्रवीत्॥ १४॥
राजपुत्त्रि! श्रुतं त्वेतन्मुनेरस्य समीरितम्।
श्रेयोऽर्थमात्मनः शीघ्रमभिगच्छ तपस्विनीम्॥ १५॥

र्त्तिता। दशवर्षमनावृष्ट्या भूमेर्निर्जलत्वात्। तेषां स्नानार्थं मन्त्रसिद्धि-वैभवेनावाहितां स्वाश्रमे इति शेषः॥ १०॥

अनसूयाव्रतैः तत्कृतैर्व्रतैः प्रत्यूहाः ऋषीणां तपोविघ्नाः॥ ११॥

देवकार्य्यनिमित्तमिति माण्डव्यऋषिणा प्रातर्विधवा भवेति शप्तां-चिदृषिपत्नीमनसूयासख्यां समायाम् प्रातरेव माभूदिति तया प्रति-शापे दत्ते तत्प्रतिशापेन व्याकुलैर्देवैः प्रार्थितानसूया दशरात्रावधि-कालं एकरात्रित्वेन कृत्वा देवकार्य्यं कृतवती सख्या वैधव्यञ्च परिहृत-वतीति पाद्मेति कतकः। सेयं मातेव ते पूज्येति शेषः॥ १२॥

अभिगच्छतु दर्शनार्थमिति शेषः। ननु वैदेह्या अल्पवयस्त्वेन व्यवहारानभिज्ञत्वात् क्वचिद् व्यवहारे स्खलनेऽनर्थः स्यादत आह-क्रोधनां सदेति॥ १३॥ १४॥

अनसूयेति या लोके कर्मभिः ख्यातिमागता।
तां शीघ्रमभिगच्छ त्वमभिगम्यां तपस्विनीम्॥ १६॥
सीता त्वेतद्वचः श्रुत्वा राघवस्य यशस्विनी *।
तामत्रिपत्नीं धर्मज्ञामभिचक्राम मैथिली॥ १७॥
शिथिलां वलितां वृद्धां जरापाण्डुरमूर्धजाम्।
सततं वेपमानाङ्गीं प्रवाते कदलीमिव॥ १८॥
तां तु सीता महाभागामनसूयां पतिव्रताम्।
अभ्यवादयदव्यग्रां स्वं नाम समुदाहरत्॥ १९॥
अभिवाद्य च वैदेही तापसीं तां दमान्विताम् †।
बद्धाञ्जलिपुटा हृष्टा पर्य्यपृच्छदनामयम्॥ २०॥
ततः सीतां महाभागां दृष्ट्वा तां धर्मचारिणीम्।

अस्य मुनेः समीरितं वचनं यतः श्रुतमत आत्मनः श्रेयोर्थमित्यादि॥ १५॥

तामनसूयेत्यन्वर्थनामाम् अभिगम्यामक्रोधनत्वात्॥ १६॥ १७॥

शिथिलां श्लथसन्धिबन्धां वलितां संजातवलिं वृद्धामिति सर्वोपपादकं विशेषणं प्रवाते कदलीमिव वेपमानाङ्गीं स्थिताम्॥ १८॥

समुदाहरत् अभिवादनाङ्गत्वेनेति शेषः॥ १९॥

अनामयमिति तपस्विनां स्वायत्तकुशलतयाशिष्यप्रश्नएवोचित इति भावः॥ २०॥

---

* "हितैषिणा:" इति वा पाठः।

† "अनिन्दिताम्" इति वा पाठः।

सान्त्वयन्त्यब्रवीद् दृष्ट्वा दिष्ट्या धर्ममवेक्षसे॥ २१ ॥
त्यक्त्वा ज्ञातिजनं सीते! मानवृद्धिञ्च मानिनि!।
अवरुद्धं वने रामं दिष्ट्या त्वमनुगच्छसि॥ २२ ॥
नगरस्थो वनस्थो वा शुभो वा यदि वाऽशुभः।
यासां स्त्रीणां प्रियो भर्त्ता तासां लोका महोदयाः॥२३॥
दुःशीलः कामवृत्तो वा धनैर्वा परिवर्जितः।
स्त्रीणामार्य्यस्वभावानां परमं दैवतं पतिः॥ २४ ॥
नातोविशिष्टं पश्यामि बान्धवं विमृशन्त्यहम्।
सर्वत्रयोग्यं वैदेहि! तपःकृतमिवाव्ययम्॥ २५ ॥
नत्वेवमवगच्छन्ति गुणदोषमसत्स्त्रियः।
कामवक्तव्यहृदया भर्तृनाथाश्चरन्ति याः॥ २६ ॥

धर्मचारिणीं भर्तृसमानधर्मचारिणीम्। दिष्ट्या दैवयोगेन॥२१॥

मानं राजसुताहं कथं वनं गच्छेयमित्येवं रूपं वने अवरुद्धं वनवासे नियुक्तम्॥ २२ ॥

शुभोऽनुकूलः। अशुभः प्रतिकूलः प्रियः लौकिकालौकिकनिमित्तोऽप्रियत्वानास्पदम्॥ २३ ॥

आर्य्यस्वभावः पूज्यस्वभावः॥ २४ ॥

अतोविशिष्टं भर्तुर्विशिष्टम् बान्धवमिष्टबन्धं सर्वत्रयोग्यमिहामुत्रचेष्टसाधनतया भजनयोग्यम्। तपःकृतम्। भावे निष्ठा। तपोऽनुष्ठानमिति यावत्॥ २५॥

याः कामवक्तव्यहृदयाः कामाधीनहृदयाः। इच्छाधीना तु वक्तव्या।

प्राप्त्वंत्ययशश्चैव धर्मभ्रंशश्च मैथिलि! ।
अकार्य्यवशमापन्नाः स्त्रियो याः खलु तद्विधाः ॥ १७ ॥
त्वद्विधास्तु गुणैर्युक्ता दृष्टलोकपरावराः ।
स्त्रियः स्वर्गे चरिष्यन्ति यथा पुण्यकृतस्तथा ॥ २८ ॥

तदेवमेनं त्वमनुव्रता सती
पतिव्रतानां समयानुवर्त्तिनी ।
भवस्व भर्तुः सहधर्मचारिणी
यशश्च धर्मञ्च ततः समाप्स्यसि ॥ २९ ॥

इत्यार्षे रामायणे वाल्मीकीये अयोध्याकाण्डे जानक्या अनसूयासमागमो नाम सप्तदशोत्तरशततमः सर्गः ॥ ११७ ॥

भर्तृनाथाः भर्तृणां नाथभूतास्तन्नियन्तारः । यद्वा भर्तृन् भोगार्थं नाथन्ते याचन्ते (परपुरुषकाङ्क्षिण्यः) ताः चरन्ति स्वेच्छया इतस्ततो यान्ति ॥२६॥

तद्विधाः उक्तानिकृष्टगुणवत्यः ॥ २७ ॥

दृष्टो लोकः परोवरश्च याभिस्ताः ॥ २८ ॥

समय आचारः ॥ २९ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके अयोध्याकाण्डे सप्तदशोत्तरशततमः सर्गः ॥ ११७ ॥

# अष्टादशोत्तरशततमः सर्गः ।

सा त्वेवमुक्ता वैदेही त्वनसूयानसूयया ।
प्रतिपूज्य वचो मन्दं प्रवक्तुमुपचक्रमे ॥ १ ॥
नैतदाश्चर्य्यमार्य्यायां यन्मां त्वमनुभाषसे ।
विदितन्तु ममाप्येतद् यथा नार्य्याः पतिर्गुरुः ॥ २ ॥
यद्यप्येष भवेद्भर्त्ता अनार्य्यो वृत्तिवर्जितः * ।
अद्वैधमत्र वर्त्तव्यं तथाप्येष मया भवेत् ॥ ३ ॥
किं पुनर्यो गुणश्लाघ्यः सानुक्रोशो जितेन्द्रियः ।

अनसूया असूयारहिता अनसूयया अन्वर्थतन्नाम्न्या वचः अनसूयायाः ॥ १ ॥

अनुभाषसे शिक्षयसि नार्य्या गुरुः पतिरिति यथा भवत्योपदिष्टं एतद्विदितम् एतद्विषयकं ज्ञानं ममापि ॥ २ ॥

तदेव दर्शयति,—यद्यपीति । एष भर्त्ता यद्यप्यनार्य्यः पूज्यचरित्रहीनः, वृत्तिवर्जितः जीवनरहितो दरिद्रश्च भवेत् । तथापि मया मद्विधया अत्र भर्त्तरि अद्वैधं प्रकारद्वयरहितं यथा भवति तथा वर्त्तव्यं वर्त्तितव्यं प्रीतिप्रकारेणैव वर्त्तितव्यमित्यर्थः । (गुणवत्त्वनिर्गुणत्वभेदं विहाय सम्यक् उपचरणीयम्) ॥ ३ ॥

---

* "वृत्तवर्जितः" इति वा पाठः ।

स्थिरानुरागो धर्मात्मा मातृवत् पितृवत् प्रियः ॥ ४ ॥
यां वृत्तिं वर्त्तते रामः कौशल्यायां महाबलः।
तामेव नृपनारीणामन्यासामपि वर्त्तते ॥ ५ ॥
सकृद्दृष्टास्वपि स्त्रीषु नृपेण नृपवत्सलः।
मातृवद्वर्त्तते वीरो मानमुत्सृज्य धर्मवित् ॥ ६ ॥
आगच्छन्त्याश्च विजनं वनमेवं भयावहम्।
समाहितं हि मे श्वश्र्वा हृदये यत् स्थिरं मम ॥ ७ ॥
पाणिप्रदानकाले च यत् पुरा त्वग्निसन्निधौ।
अनुशिष्टं जनन्या मे वाक्यं तदपि मे धृतम् ॥ ८ ॥

गुणश्लाघ्यत्वादिविशिष्टे सा वृत्तिरिति किं पुनर्वक्तव्यम्। मातृवत् पितृवत् प्रियः मयीति शेषः। प्रियः प्रीतिमान् ममेति वा शेषः। प्रीतिविषय इत्यर्थः। मातृवर्त्ती पितृप्रिय इति पाठे मातृवर्त्ती मातृसेवारतः पितुः प्रीतिविषय इत्यर्थ इति तीर्थः ॥ ४ ॥

अन्यासामपि नृपनारीणां सुमित्रादीनां विषयेऽपीत्यर्थः। तथा अन्यासामपि विषये मदतिरिक्तस्त्रीमात्रविषयेऽपि तामेव वृत्तिं कुरुते इत्यर्थः। नृपनारीणामित्यनेनैव सुमित्रादीनां लाभादित्यन्ये ॥५॥

नृपेण दशरथेन मानं अहं महाप्रभुरित्यभिमानं त्यक्त्वेत्यर्थः। अन्यमते उक्तार्थे सत्यत्वप्रत्यायनायैतदुक्तिरिति बोध्यम् ॥ ६ ॥

यन्मे श्वश्र्वा समाहितं त्वदुक्तार्थकमेव वाक्यं शिक्षितं तन्मे हृदि स्थिरं वर्त्तते ॥ ७ ॥

तदपि मे धृतं मात्रनुशासनमपि मे हृद्गतमेवास्ति ॥ ८ ॥

न विस्मृतन्तु मे सर्व्वं वाक्यैः स्वैर्धर्म्मचारिणि ! ।
पतिशुश्रूषणान्नार्य्यास्तपो नान्यद्विधीयते ॥ ९ ॥
सावित्री पतिशुश्रूषां कृत्वा स्वर्गे महीयते ।
तथावृत्तिश्च याता त्वं पतिशुश्रूषया दिवम् ॥ १० ॥
वरिष्ठा सर्व्वनारीणामेषा च दिवि देवता ।
रोहिणी न विना चन्द्रं मुहूर्त्तमपि दृश्यते ॥ ११ ॥
एवंविधाश्च प्रवरा स्त्रियो भर्तृदृढव्रताः ।
देवलोके महीयन्ते पुण्येन स्वेन कर्म्मणा ॥ १२ ॥
ततोऽनसूया संहृष्टा श्रुत्वोक्तं सीतया वचः ।
शिरस्याघ्राय चोवाच मैथिलीं हर्षयन्त्युत ॥ १३ ॥
नियमैर्विविधैराप्तं तपो हि महदस्ति मे ।

यच्च स्वैः आत्मीयैः वन्धुवर्गैः पतिशुश्रूषणादिप्रकारैर्बोधितमच-जातं तच्च मे न विस्मृतन्तु इत्यर्थः ॥ ९ ॥

सावित्री सत्यवतः स्त्री तथावृत्तिः सावित्रीसमानवृत्तिः । त्वं अनसूया यातेत्युक्तिः पातिव्रत्यमहिम्ना स्वर्गस्य हस्तगतत्वात् इति तीर्थः । तपोऽर्थमिहवर्त्तमानापि पतिसेवया मृत्यन्तरेण दिवं यातेत्यर्थ इति कतकः ॥ १० ॥

रोहिणी विना चन्द्रं मुहूर्त्तमपि न दृश्यते । पूर्व्वकृतपतिशुश्रूषा-वशादेवं पतिसाहित्यं प्राप्तमिति भावः ॥ ११ ॥

प्रवराः स्त्रियोऽरुन्धत्यादयः ॥ १२ ॥

हर्षयन्त्युत हर्षयन्त्यपीत्यर्थः । उताप्यर्थविकल्पयोः ॥ १३ ॥

तत् संश्रित्य बलं सीते! छन्दये त्वां शुचिव्रते! ॥ १४ ॥
उपपन्नञ्च युक्तञ्च वचनं तव मैथिलि!।
प्रीता चास्म्यनुगृह्यतां सीते!*करवाणि प्रियञ्च किम् †॥१५॥
तस्यास्तद्वचनं श्रुत्वा विस्मिता मन्दविस्मया।
कृतमित्यब्रवीत् सीता तपोबलसमन्विताम् ॥ १६ ॥
सा त्वेवमुक्ता धर्मज्ञा तया प्रीततराभवत्।
सफलञ्च प्रहर्षन्ते‡ हन्त सीते! करोम्यहम् ॥ १७ ॥
इदं दिव्यं वरं माल्यं वस्त्रमाभरणानि च।

तद्बलं संश्रित्य आश्रित्य छन्दये वरं वृणीष्वेति प्रार्थयामि ॥ १४ ॥ १५ ॥

विस्मिता जाताश्चर्या अहो तपसो माहात्म्यं यन्ममापि वरदाने सामर्थ्यं मन्दविस्मया मन्दस्मिता कृतं भवत्या अनुग्रहेणैव सर्वं मे पूर्णं न किञ्चित् कर्त्तव्यमस्तीति भावः ॥ १६ ॥

तया लोभरहितवाचा प्रहर्षं लोभराहित्यजं त्वन्निष्ठं ते त्वद्विषयम् ॥ १७ ॥

अङ्गरागः उद्वर्त्तनेनाङ्गानि रञ्जयतीत्यङ्गरागः केसरचन्दनादिजः । अनुलेपनन्तु कर्पूरागुरुकस्तूरीकङ्कोलैर्यक्षकर्दमइत्युक्तप्रकारो दिव्यगन्ध-

---

* "प्रीता चास्म्यनुचितं किन्ते" इति वा पाठः।

† "ब्रवीहि तत्" इति वा पाठः।

‡ "प्रकर्षम्" इति पाठे त्वन्निष्ठमेव दिव्यवैभवं त्वत्पूजने स्वात्मनि सफलं करोमीत्यर्थमाङ्गः।

अङ्गरागश्च वैदेहि ! महार्हमनुलेपनम् ॥ १८ ॥
मया दत्तमिदं सीते ! तव गात्राणि शोभयेत् ।
अनुरूपमसंक्लिष्टं नित्यमेव भविष्यति ॥ १९ ॥
अङ्गरागेण दिव्येन लिप्ताङ्गी जनकात्मजे ! ।
शोभयिष्यसि भर्त्तारं यथा श्रीर्विष्णुमव्ययम् ॥ २० ॥
सा वस्त्रमङ्गरागञ्च भूषणानि स्रजस्तथा ।
मैथिली प्रतिजग्राह प्रीतिदानमनुत्तमम् ॥ २१ ॥
प्रतिगृह्य च तत् सीता प्रीतिदानं यशस्विनी ।
श्लिष्टाञ्जलिपुटा धीरा समुपास्त तपोधनाम् ॥ २२ ॥
तथा सीतामुपासीनामनसूया दृढव्रता ।
वचनं प्रष्टुमारेभे कथां काञ्चिदनु प्रियाम् ॥ २३ ॥
स्वयंवरे किल प्राप्ता त्वमनेन यशस्विना ।

द्रव्यकल्कः इति तीर्थः । कतकस्तु अङ्गरागं अङ्गरञ्जनकरम् अनुलेपनं दिव्यगन्धद्रव्यं कल्कमित्यर्थ इत्याह । इदमेवयुक्तम् ॥ १८ ॥

शोभयेत् शोभयिष्यति । अनुरूपं त्वदेकोचितं नित्यमेवासंक्लिष्टम् उपभोगेऽपि अशुचित्वम्रदितत्वादिदोषरहितं भविष्यति ॥ १९ ॥

शोभयिष्यसीत्यनेन त्वत्पूजया भर्तुरपि पूजाकृतेति सूचितम् ॥२०॥

क्षत्रियत्वात् प्रतिग्रहानधिकारेण प्रीतिदानमित्युक्तम् । तथान्-देशेन आश्रयादिभ्यो दत्तमत्ययश्चेत् साक्षात्सम्बन्ध प्रीत्या दत्तं तथेति किं वक्तव्यमिति देव्यै तद्दानमनसूयाया इति बोध्यम् ॥ २१ ॥

श्लिष्टाञ्जलिपुटा रचिताञ्जलिपुटा ॥ २२ ॥

राघवेणेति मे सीते ! कथाश्रुतिमुपागता ॥ २४ ॥
तां कथां श्रोतुमिच्छामि विस्तरेण च मैथिलि ! ।
यथाभूतञ्च कार्त्स्न्येन तन्मे त्वं वक्तुमर्हसि ॥ २५ ॥
एवमुक्ता तु सा सीता तापसीं धर्मचारिणीम् ।
श्रूयतामिति चोक्त्वा वै कथयामास तां कथाम् ॥ २६ ॥
मिथिलाधिपतिर्वीरो जनको नाम धर्मवित् ।
क्षत्रकर्मण्यभिरतो न्यायतः शास्ति मेदिनीम् ॥ २७ ॥
तस्य लाङ्गलहस्तस्य कृषतः क्षेत्रमण्डलम् ।
अहं किलोत्थिता भित्त्वा जगतीं नृपतेः सुता ॥ २८ ॥
स मां दृष्ट्वा नरपतिर्मुष्टिविक्षेपतत्परः ।
पांसुगुण्ठितसर्वाङ्गीं विस्मितो जनकोऽभवत् ॥ २९ ॥

अथ अनन्तरं प्रियां काञ्चित् कथां श्रोतुकामा वचनं प्रष्टुमारेभे ॥ २३ ॥

अनेन रामेण श्रुतिं मम श्रोत्रपथम् ॥ २४ ॥

विस्तरेण च विस्तरेणैव ॥ २५ ॥ २६ ॥ २७ ॥

क्षेत्रमण्डलं यज्ञयोग्यक्षेत्रम् । चयनप्रकरणे षड्गवेन कर्षतीति श्रुतेः । कृषतस्तस्य पुरः जगतीं भुवं भित्त्वोत्थिता एतावन्मात्रेणाहं नृपतेर्जनकस्य सुता ॥ २८ ॥

मुष्टिविक्षेपतत्परः । या जाता ओषधयो देवेभ्य इत्यादिमन्त्रोक्तप्रकारेणौषधिमुष्टिविकिरणतत्पर इति तीर्थः । निम्नोन्नतसमीकरणाय मृत्तिकामुष्टिविक्षेपतत्पर इति कतकः ॥ २९ ॥

अनपत्येन च स्नेहादङ्कमारोप्य च स्वयम्।
ममेयं तनयेत्युक्त्वा स्नेहो मयि निपातितः॥ ३० ॥
अन्तरिक्षे च वागुक्ता प्रतिमामानुषी किल।
एवमेतन्नरपते! धर्मेण तनया तव॥ ३१ ॥
ततः प्रहृष्टो धर्मात्मा पिता मे मिथिलाधिपः।
अवाप्तो विपुलामृद्धिं मामवाप्य नराधिपः॥ ३२ ॥
दत्ता चास्मीष्टवद्देव्यै ज्येष्ठायै पुण्यकर्मणे।
तया सम्भाविता चास्मि स्निग्धया मातृसौहृदात्॥ ३३ ॥
पतिसंयोगसुलभं वयो दृष्ट्वा तु मे पिता।
चिन्तामभ्यगमद्दीनो वित्तनाशादिवाधनः॥ ३४ ॥

अत्र चौ त्वर्थे॥ ३० ॥

प्रतिमामानुषी प्रतिमया स्वरूपेण मानुषी मनुष्यवाक्तुल्या वागन्तरिक्षे उक्ता तां वाचमाह,—एवमिति। एतन्ममेयं तनयेत्येतत्। एवमर्थवदेव यतो हे नरपते धर्मेण न्यायेन एषा त्वत्क्षेत्रजातत्वात् तव तनयैव॥ ३१ ॥

मामवाप्य यज्ञभूमेरिति शेषः मल्लाभोत्तरं तस्य महती समृद्धि-र्जातेति भावः॥ ३२ ॥

इष्टवद्देव्यै इष्टायै देव्यै राज्ञे इष्टमिति भावे क्त इष्टमिच्छातद्वत्यै विषयतासंबन्धेनेति अक्षरार्थः। आर्षं वा साधुत्वमुक्तार्थे। यद्वा सन्तानेच्छावत्यै देव्यै इत्यर्थः। पुण्यकर्मणे इति देवीविशेषणम्। इतीयान्तः पाठः क्वचित्। संभाविता संवर्द्धिता॥ ३३ ॥

सदृशाच्चापकृष्टाच्च लोके कन्यापिता जनात्।
प्रधर्षणमवाप्नोति शक्रेणापि समो भुवि ॥ ३५ ॥
तां धर्षणामदूरस्थां संदृश्यात्मनि पार्थिवः।
चिन्तार्णवगतः पारं नाससादाश्रवो यथा ॥ ३६ ॥
अयोनिजां हि मां ज्ञात्वा नाध्यगच्छत् स चिन्तयन्।
सदृशं चानुरूपञ्च महीपालः पतिं मम ॥ ३७ ॥
तस्य बुद्धिरियं जाता चिन्तयानस्य सन्ततम्।
स्वयंवरं तनूजायाः करिष्यामीति धर्मतः ॥ ३८ ॥
महायज्ञे तदा तस्य वरुणेन महात्मना।
दत्तं धनुर्वरं प्रीत्या तूणी चाक्षय्यसायकौ ॥ ३९ ॥

पतिसंयोगसुलभं पाणिग्रहणोचितम् ॥ ३४ ॥

सदृशादपकृष्टाच्च वरवर्गजनात्। कन्यायाः पिता इन्द्रसमोऽपि भुवि स्थितो लोके प्रधर्षणमसंमानादिरूपक्लेशमाप्नोति किमुताधिकादिति शेषः ॥ ३५ ॥

अदूरस्थां निकटप्राप्तां धर्षणां कन्यानिमित्ततिरस्क्रियाम् आत्मनि संदृश्य संभाव्य प्लवः पोतः ॥ ३६ ॥

सदृशं कुलविद्यादिना अभिरूपं वयःसौन्दर्य्यादिना वरमिति शेषः ॥ ३७ ॥ ३८ ॥

महायज्ञे दक्षयज्ञे तस्य मत्पितृपूर्वजस्य देवरातस्य। तदा शत्रुजयसमर्थधनुर्लाभाय तपःकरणकाले दक्षयज्ञे हि शिवेन पीडिता देवाः शिवं संप्रार्थ्य धनुर्याचितवन्तः स च देवेभ्यो दत्तोक्तवान्

असङ्ख्यं मनुष्येश्च यत्नेनापि च गौरवात् ।
तन्नशक्ता नमयितुं स्वप्नेष्वपि नराधिपाः ॥ ४० ॥
तद्धनुः प्राप्य मे पित्रा व्याहृतं सत्यवादिना ।
समवाये नरेन्द्राणां पूर्वमामन्त्र्य पार्थिवान् ॥ ४१ ॥
इदञ्च धनुरुद्यम्य सज्यं यः कुरुते नरः ।
तस्य मे दुहिता भार्य्या भविष्यति न संशयः ॥ ४२ ॥
तच्च दृष्ट्वा धनुःश्रेष्ठं गौरवाद्गिरिसन्निभम् ।
अभिवाद्य नृपा जग्मुरशक्तास्तस्य तोलने ॥ ४३ ॥
सुदीर्घस्याथ कालस्य राघवोऽयं महाद्युतिः ।
विश्वामित्रेण सहितो यज्ञं द्रष्टुं समागतः ॥ ४४ ॥
लक्ष्मणेन सह भ्राता रामः सत्यपराक्रमः ।
विश्वामित्रस्तु धर्मात्मा मम पित्रा सुपूजितः ॥ ४५ ॥
प्रोवाच पितरं तत्र राघवौ रामलक्ष्मणौ ।
सुतौ दशरथस्येमौ धनुर्दर्शनकाङ्क्षिणौ ॥ ४६ ॥

इदं देवराताय दीयतामिति । ततो देवैर्वरुणद्वारा देवराताय दत्तम् । यद्वा व्रियते सर्वदेवैरिति व्युत्पत्त्या वरुणः शिव एव ॥ ३९ ॥

गौरवाद्भारवत्त्वात् ॥ ४० ॥ ४१ ॥

न संशय इति पित्रा व्याहृतमिति पूर्वेण संबन्धः ॥ ४२ ॥

तोलने चालने अभिवाद्य नमस्कृत्य ॥ ४३ ॥ ४४ ॥ ४५ ॥

इत्युक्तस्तेन विप्रेण तद्धनुः समुपानयत् ।
तद्धनुर्दर्शयामास राजपुत्राय दैविकम् ॥ ४७ ॥
निमेषान्तरमात्रेण तदानम्य महाबलः ।
ज्यां समारोप्य झटिति पूरयामास वीर्य्यवान् ॥ ४८ ॥
तेनापूरयता वेगान्मध्ये भग्नं द्विधा धनुः ।
तस्य शब्दोऽभवद्भीमः पतितस्याशनेर्यथा ॥ ४९ ॥
ततोऽहं तत्र रामाय पित्रा सत्याभिसन्धिना ।
उद्यता दातुमुद्यम्य जलभाजनमुत्तमम् ॥ ५० ॥
दीयमानां नतु तदा प्रतिजग्राह राघवः ।
अविज्ञाय पितुश्छन्दमयोध्याधिपतेः प्रभोः ॥ ५१ ॥
ततः श्वशुरमामन्त्र्य वृद्धं दशरथं नृपम् ।
मम पित्रा त्वहं दत्ता रामाय विदितात्मने ॥ ५२ ॥
मम चैवानुजा साध्वी ऊर्मिला शुभदर्शना ।
भार्य्यार्थे लक्ष्मणस्यापि दत्ता पित्रा मम स्वयम् ॥ ५३ ॥
एवं दत्तास्मि रामाय तथा तस्मिन् स्वयंवरे ।

इमौ धनुर्दर्शनकाङ्क्षिणौ अतो रामाय दैविकं देवदत्तं धनुर्दर्शयेति विश्वामित्रः पितरं प्रोवाचेति संबन्धः ॥ ४६ ॥ ४७ ॥
पूरयामास सज्यं कृत्वाकृष्टवान् ॥ ४८ ॥ ४९ ॥

अनुरक्तास्मि धर्मेण पतिं वीर्य्यवतां वरम् ॥ ५४ ॥

इत्यार्षे रामायणे वाल्मीकीये अयोध्याकाण्डे अनसूया-
सीतासंवादो नाम अष्टादशोत्तरशत-
तमः सर्गः ॥ ११८ ॥

उत्तमं जलभाजनमुद्यम्य पित्राहं रामाय दातुमुद्यतेति संबन्धः ॥५०॥
छन्दमभिप्रायम् ॥ ५१ ॥ ५२ ॥ ५३ ॥ ५४ ॥

इति श्री रामाभिरामे श्रीरामीये रामायणतिलके
अयोध्याकाण्डे अष्टादशोत्तरशततमः
सर्गः ॥ ११८ ॥

## एकोनविंशोत्तरशततमः सर्गः ।

अनसूया तु धर्मज्ञा श्रुत्वा तां महतीं कथाम् ।
पर्य्यष्वजत बाहुभ्यां शिरस्याघ्राय मैथिलीम् ॥ १ ॥
व्यक्ताक्षरपदं चित्रं भाषितं मधुरं त्वया ।
यथा स्वयंवरं वृत्तं तत् सर्वञ्च श्रुतं मया ॥ २ ॥
रमेऽहं कथया ते तु दृढ़ं मधुरभाषिणि ! ।
रविरस्तं गतः श्रीमानुपोह्य रजनीं शुभाम् ॥ ३ ॥
दिवसं परिकीर्णानामाहारार्थं पतत्त्रिणाम् ।
सन्ध्याकाले निलीनानां निद्रार्थं श्रूयते ध्वनिः ॥ ४ ॥
एते चाप्यभिषेकार्द्रा मुनयः कलशोद्यताः ।
सहिता उपवर्त्तन्ते सलिलाप्लुतवल्कलाः ॥ ५ ॥
ऋषीणाम् अग्निहोत्रेषु हुते च विधिपूर्वकम् ।

अनसूयेति ॥ १ ॥

स्वयंवरं वृत्तं स्वयंवरो वृत्तः । अर्धर्चादिः स्वयंवरः ॥ २ ॥

उपोह्य समीपं प्रापय्य ॥ ३ ॥

दिवसं व्याप्याहारार्थं परितः कीर्णानां सञ्चरतां निलीनानां निलीयमानानाम् ॥ ४ ॥

कलशोद्यताः उद्यतकलशाः । सहिताः परस्परं मिलिताः ॥ ५ ॥

कपोताङ्गारुणो धूमो दृश्यते पवनोद्धतः ॥ ६ ॥
अल्पपर्णा हि तरवो घनीभूताः समन्ततः ।
विप्रकृष्टेन्द्रिये देशे न प्रकाशन्ति वै दिशः ॥ ७ ॥
रजनीचरसत्वानि प्रचरन्ति समन्ततः ।
तपोवनमृगाह्येते वेदितीर्थेषु शेरते ॥ ८ ॥
संप्रवृत्ता निशा सीते ! नक्षत्रसमलंकृता ।
ज्योत्स्नाप्रावरणश्चन्द्रो दृश्यतेऽभ्युदितोऽम्बरे ॥ ९ ॥
गम्यतामनुजानामि रामस्यानुचरी भव ।
कथयन्त्या हि मधुरं त्वयाहमपि तोषिता ॥ १० ॥
अलंकुरु च तावत्त्वं प्रत्यक्षं मम मैथिलि ! ।
प्रीतिं जनय मे वत्से ! दिव्यालङ्कारशोभिनि ! ॥ ११ ॥

कपोताङ्गवत् पारावतकण्ठवदरुणः मेचकः श्यामे रक्तेऽरुणोऽर्के च ॥ ६ ॥

अल्पपर्णा अपि तरवस्तमसाऽव्यक्तपर्णान्तरत्वात् घनीभूता इव विप्रकृष्टेन्द्रिये देशे इन्द्रियविप्रकृष्टे दूरे देशे इत्यर्थः । न प्रकाशन्ति न प्रकाशन्ते ॥ ७ ॥

वेदितीर्थेषु अग्निहोत्रवेदिसंवन्धात् पुण्यक्षेत्ररूपाश्रमप्रदेशेषु तीर्थशब्दः पुण्यक्षेत्रवाची ॥ ८ ॥

चन्द्रो दृश्यते इत्यनेन कार्त्तिक्युत्तरं प्रतिपदि यात्रेति सूचितम् ॥९॥

अनुचरी भव शुश्रूषुर्भव ॥ १० ॥

सा तदा समलंकृत्य सीता सुरसुतोपमा ।
प्रणम्य शिरसा पादौ रामं त्वभिमुखी ययौ ॥ १२ ॥
तथा तु भूषितां सीतां ददर्श वदतांवरः ।
राघवः प्रीतिदानेन तपस्विन्या जहर्ष च ॥ १३ ॥
न्यवेदयत्ततः सर्वं सीता रामाय मैथिली ।
प्रीतिदानं तपस्विन्या वसनाभरणस्रजाम् ॥ १४ ॥
प्रहृष्टस्त्वभवद्रामो लक्ष्मणश्च महारथः ।
मैथिल्याः सत्क्रियां दृष्ट्वा मानुषेषु सुदुर्लभाम् ॥ १५ ॥
ततः स शर्वरीं प्रीतः पुण्यां शशिनिभाननाम् ।
अर्चितस्तापसैः सर्वैरुवास रघुनन्दनः ॥ १६ ॥
तस्यां रात्र्यां व्यतीतायामभिषिच्य हुताग्निकान् ।
आपृच्छेतां नरव्याघ्रौ तापसान् वनगोचरान् ॥ १७ ॥

अलंकुरु आत्मानमिति शेषः । प्रीतिं जनय अलंकृत्य दिव्यस्वरूपानुभावनेनेति शेषः ॥ ११ ॥ १२ ॥ १३ ॥

सर्वं न्यवेदयदित्यस्यैव प्रपञ्चः । प्रीतिदानमित्यादि । अत्र कर्मणि ल्युट् ॥ १४ ॥

मानुषेषु मनुष्यलोकेषु ॥ १५ ॥

पुण्याम् अनसूयया पुण्यया कृतालङ्कारां सीतां दृष्ट्वा शर्वरीमुवास ॥ १६ ॥

आपृच्छेतां वनान्तरगमनार्थमिति शेषः ॥ १७ ॥

तावूचुस्ते वनचरास्तापसा धर्मचारिणः ।
वनस्य तस्य सञ्चारं राक्षसैः समभिप्लुतम् ॥ १८ ॥
रक्षांसि पुरुषादानि नानारूपाणि राघव ! ।
वसन्त्यस्मिन् महारण्ये व्यालाश्च रुधिराशना ॥ १९ ॥
उच्छिष्टं वा प्रमत्तं वा तापसं ब्रह्मचारिणम् ।
अदन्त्यस्मिन् महारण्ये तान्निवारय राघव ! ॥ २० ॥
एष पन्था महर्षीणां फलान्याहरतां वने ।
अनेन तु वनं दुर्गं गन्तुं राघव ! ते क्षमम् ॥ २१ ॥
इतीरितः प्राञ्जलिभिस्तपस्विभिर्द्विजैः कृतस्वस्त्ययनः परन्तपः ।
वनं सभार्य्यः प्रविवेश राघवः सलक्ष्मणः सूर्य्य इवाभ्रमण्डलम् ॥ २२ ॥

## इत्यार्षे रामायणे वाल्मीकीये अयोध्याकाण्डे रामादीनां वनान्तरप्रवेशो नाम एकोनविंशोत्तरशततमः सर्गः ११९॥

सञ्चारं देशं वृद्धिरार्षी । समभिप्लुतं सम्यगुपद्रुतम् ॥ १८ ॥
व्याला हिंस्रपशवः । सर्पो हिंस्रः पशुर्व्याल इत्यमरः उच्छिष्टमशुचिं प्रमत्तमसावधानम् । तान् रक्षोव्यालान् क्षमं युक्तम् ॥ १९ ॥२०॥ २१ ॥
इतीरितः एवमुपदिष्टमार्गः कृतस्वस्त्ययनः कृतमङ्गलाशीर्वादः ॥२२॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके अयोध्याकाण्डे एकोनविंशोत्तरशततमः सर्गः ॥ ११९ ॥

## अयोध्याकाण्डं सम्पूर्णम् ।